रमणीयम् । चतस्रोऽपि हि नरकतिर्यङ्मनुष्यदेवगतयो दाहक्षुदामयाभियोग्यादिदुःखमय्यः, काऽत्र सारवत्तेति अभिसमीक्ष्य किं कृतमित्याह—स्फीतमित्यादि, स्फीतं समृद्धमकण्टकं, अपहाय त्यक्त्वा, राज्यं जनपदं, शमाय धीमान् प्रवव्राज, शमाय मोक्षाय, न परलोकार्थं, उत्तमस्य निरनुबन्धं कर्मेति । धीमानिति, निष्क्रमणानन्तरमेवास्य चतुर्थं मनःपर्यायज्ञानमाविर्बभूव, अन्यथा तूक्तमेव धीमत्त्वं, न चेयं स्वमनीषा । उक्तं हि प्रवचने—चारित्रप्रतिपत्त्यनन्तरमेव प्राक्केवलोत्पत्तेश्चतुर्ज्ञानिनस्तीर्थकराः प्रवव्रजुः ॥ १५ ॥

अतः प्रव्रज्याबहुत्वे कतरामभ्युपेतवान् इत्याह—

**प्रतिपद्याशुभशमनं, निःश्रेयससाधनं श्रमणलिङ्गम् ।**
**कृतसामायिककर्मा, व्रतानि विधिना समारोप्य ॥ १६ ॥** आर्या

**व्या०—प्रतिपद्येत्यादि ।** प्रतिपद्य गृहीत्वा, अशुभकर्मक्षपणोपायभूतं अशुभशमनं, न च पुण्योपादानमन्यभवानाकाङ्क्षत्वात्, अतो निःश्रेयससाधकं मोक्षप्रापकं, किं तत्, श्रमणलिङ्गं श्रमणचिह्नं प्रायः श्रमणत्वगमकं, तच्च स्वकरपञ्चमुष्टयवतारितनिःशेषकेशं अष्टादशशीलाङ्गसहस्रानुष्ठानाभ्युपगतप्रतिज्ञममरोपहितसितैकदुकूलकृतवैकक्ष्यं अत्यन्तसर्वसत्त्वानुद्वेजनमसङ्गपदप्रापकं प्रतिपद्य । अन्येष्वपि च श्रमणलिङ्गोपचाराद्विशेषमार्ययैवाह—**कृतसामायिककर्मा** कृतं सामायिकं कर्मानेन कृतसामायिककर्मा, करोमि भदन्त ! सामायिकं सर्वान् सावद्यान् योगान् प्रत्याचक्षे इत्येवं, न चास्यान्यो भदन्तोऽन्यत्र सिद्धेभ्यः आचारार्थं त्वनेन सिद्धान् वा प्रयुक्तम् । व्रतानि विधिना समारोप्य । अयं व्रतशब्दोऽस्ति भोजने पयोव्रत इति, अस्ति निवृत्तौ वृषलान्नं व्रतयति, अस्त्याचारे इदं वः कुलव्रतम्, अस्ति प्रतिज्ञायां स्थण्डिलशायिव्रतो यतिः, इह तु निवृत्तिप्रतिज्ञयोः, हिंसादिनिवृत्तिमातापनादिप्रतिज्ञां चाभ्युपगम्य, तानि व्रतान्यहिंसादीनि वक्ष्यन्ते । विधिना वक्ष्यमाणानुपूर्व्या, आचारव्यवस्थार्थमत एव व्रतानीत्युक्तं, इतरथा हि वक्ष्यमाणसूत्रीनिर्देशाद् व्रतमिति ब्रूयात् । चातुर्यामिकनिवृत्त्यर्थं च व्रतग्रहणम्, आगमो ह्ययमाद्यन्तयोस्तीर्थकरयोः सत्वाशयापेक्षया पञ्चमहाव्रतो धर्म इति । समारोप्यात्मस्थानि कृत्वा, किं प्रवव्राजेति वर्तते । यथा हि नाम राजा हस्त्यादिबलयुक्तोऽरीन् निहत्य राज्यं प्राप्नुयादेवमस्य मुख्या प्रवृत्तिरिति ॥ १६ ॥

'व्रत'शब्दस्यार्थवैविध्यम्

**सम्यक्त्वज्ञानचारि-त्रसंवरतपः समाधिबलयुक्तः ।**
**मोहादीनि निहत्या-शुभानि चत्वारि कर्माणि ॥ १७ ॥** आर्या

**व्या०—सम्यक्त्वेत्यादि ।** सर्वे इमे धर्माः सकलशास्त्रार्थनिबन्धना वक्ष्यमाणास्तथापि तस्य विशेष उच्यते, सम्यक्त्वं क्षायिकं, ज्ञानं केवलादृते, चारित्रं छेदोपस्थाप्यपरिहारविशुद्धि-

१—'मुद्वेगजननसङ्ग—' इति क-पाठः ।

वर्जं, एते ह्यतिचारवशेन भवतः, निरतिचारश्चायं शेषत्रयं त्ववस्थाविशेषवशेन सम्भवेत्। संवरो निरुद्धसर्वाश्रवत्वात् कृत्स्नः । तपो बाह्यं षड्विधमपि, अन्तस्तपसस्तु विनयव्युत्सर्गे यथासम्भवम् । ध्यानं तु प्रधानकर्मक्षयकारणत्वात् समाधिरिति कण्ठोक्तमेव । अनेन बलेन युक्तः । मोहादीत्यादि, मोहज्ञानदर्शनावरणान्तरायान्निहत्य प्रक्षपय्य, अशुभानि, गतार्थत्वेऽप्यशुभग्रहणमन्यकर्मभ्योऽशुभतरतमख्यापनार्थं, चत्वारि कर्माणीतिव्युत्क्रान्त्यानुपूर्व्या केवलोत्पत्तिसूत्रसम्बन्धसङ्ख्याख्याज्ञापनार्थमुक्तम्, ते हि चत्वारोऽपि संसारदुःखप्रतिभयप्रदाः शत्रवः ॥ १७ ॥

किं फलमित्याह—

**केवलमधिगम्य विभुः, स्वयमेव ज्ञानदर्शनमनन्तम् ।**
**लोकहिताय कृतार्थो-ऽपि देशयामास तीर्थमिदम् ॥ १८ ॥** आर्या

व्या०—केवलमित्यादि । केवलममिश्रमसाधारणमधिगम्य प्राप्य, विभवीति विभुः सर्वगतज्ञानात्मेत्यर्थः । स्वयमेव स्वशक्त्यैव, न राजेव सामन्तादिमिश्रः । किं तत्, केवलं ज्ञानं दर्शनं च वक्ष्यमाणम्, अनन्तं न क्वचित्प्रतिहतं सर्वत्रगमत एव विभुरित्युक्तम्। अधिगम्य किं कृतमित्याह—लोकहितायेत्यादि, सर्वमेतद्गतार्थम्, इदमिति यदेवेदमधुना प्रवर्तते ॥१८॥

कियत् पुनस्तदित्याह—

**द्विविधमनेकद्वादश-विधमहाविषयममितगमयुक्तम् ।**
**संसारार्णवपारग-मनाय दुःखक्षयायालम् ॥ १९ ॥** आर्या

व्या०—द्विविधमित्यादि । वक्ष्यमाणमेतन्महाविषयं सर्वद्रव्याण्यसर्वपर्यायाणि त्रैकाल्यमस्येति । अमितगमयुक्तं, गमाः पन्थानो नयाः वक्ष्यमाणास्तैरसङ्ख्येयैर्युक्तमभिसन्ततम् । कियद्गुणमित्याह–संसारेत्यादि, संसृतिः संसारः, संसरणं वा संसारः, स नामादिश्चतुर्विधो वक्ष्यते, स एव अर्णवः संसारार्णवः । कथं चासावर्णवः, नरकतिर्यग्मनुष्यामरगतिचतुष्टयदुस्तरविपुलपात्रः । प्रियाप्रियविरहसम्प्रयोगक्षुदभिघातादिसन्निपातप्रतिभयानेकदुःखागाधसलिलः परोपघातिक्रूरानार्यजनानेकमकरविचरितविषमः मोहमहानिलप्रेरणाध्मायमानगम्भीरभीषणप्रमादपातालः नरकादिविकृतभीमवडवामुखग्रस्यमानानेकपापकर्मसत्त्वः रागद्वेषप्रबलानिलोद्धतसंजायमानवीचीप्रसृताशयवेलः तदेवमस्य भगवन्तो यतयो द्वादशाङ्गविपुलशरीरं सम्यग्दर्शनायोपबद्धसन्धिः प्राणिदयादिव्रतसम्पन्नकनिरुद्धाश्रवद्वारं सन्तोषमितस्वादूदकाद्युपहितपावनं विशुद्धज्ञानसन्निहितनिर्यामकं सकलचारित्रविधानानुकूलपवनप्रेरितं विशुद्धध्यानबलोपहितसर्वमङ्गलरक्षं प्रवचनयानपात्रमारुह्य संसारार्णवस्य पारप्राप्तिफलं शिवमक्षयमनामयं मोक्षमवाप्नुवन्तीत्येवमेतत् अलं पर्याप्तं संसारार्णवपारगमनायेत्युच्यते. अत

एव तरन्त्यनेन तद्वाधिगम्येति तीर्थमित्युक्तं, अन्येऽपि पृथिवीकायिकादयः सत्त्वाः संसारस्य लोकस्य कर्मप्रेरिताः पारं गच्छन्तीति ज्ञापनार्थं दुःखक्षयायालमिति विशेषितम् ॥ १९ ॥

किमस्य माहात्म्यमित्याह—

**ग्रन्थार्थवचनपटुभिः, प्रयत्नवद्भिरपि वादिभिर्निपुणैः।**
**अनभिभवनीयमन्यै-र्भास्कर इव सर्वतेजोभिः ॥ २० ॥** आर्या

व्या०—**ग्रन्थार्थेत्यादि**। प्रत्येकं पटुशब्दः, सन्ति हि केचित् यथाऽधीतग्रन्थपटवो नार्थपटवः, केचिच्चानधीतग्रन्था अप्यर्थपटवः, केचिदप्यनधिगतग्रन्थार्था अपि स्वविकल्पितवचनपटव इत्यतो विशेषयति त्रिष्वपि ये पटवः। एवंविधा अपि केचिदुदासीना भवन्तीत्याह। प्रयत्नवद्भिरपि विजगीषोद्यतैः, वादिभिर्निपुणैः न्यायकुशलैः, अनभिभवनीयमन्यैरधृष्यमन्यैर्वादिभिरन्यैस्तीर्थिकैः। किमिव, भास्कर इव सर्वतेजोभिः। भास्कर इव मणिप्रदीपादिभिः सर्वतेजोभिरनभिभवनीयः इदं तीर्थं देशयामास ॥ २० ॥

'पटु'शब्दस्यार्थ-नानात्वम्

किमर्थं पुनरयमुपन्यास इत्याह—

**कृत्वा त्रिकरणशुद्धं, तस्मै परमर्षये नमस्कारम्।**
**पूज्यतमाय भगवते, वीराय विलीनमोहाय ॥ २१ ॥** आर्या
**तत्त्वार्थाधिगमाख्यं, बह्वर्थं सङ्ग्रहं लघुग्रन्थम्।**
**वक्ष्यामि शिष्यहितमिम-मर्हद्वचनैकदेशस्य ॥ २२ ॥"**—युग्मम्[1]

व्या०—**कृत्वेत्यादि**। कायवाङ्मनांसि त्रीणि करणानि, तैः शुद्धं अकलङ्कं, शुद्धानि वा त्रीणि करणान्यस्मिन्निति त्रिकरणशुद्धम्। शारङ्गजग्धादिज्ञापकात् तु निष्ठापरनिपातः। तस्मै इति यः शुभकर्मासेवन इत्युक्तं सम्बध्यते परमर्षये नमस्कारं कृत्वेति वर्तते, पूज्येत्यादि, पूज्यतमाय भगवते, गतमभिदेवादिभ्योऽपि नमस्कारमर्हति किमुत मत्त इति स्मारयति। भजनं भजन्ते वा तमिति भगः श्रीरित्यर्थः, सा च सर्वातिशयमयी वर्णिता वक्ष्यति च, सोऽस्यास्तीति भगवान् तस्मै भगवते। **वीराय विलीनमोहाय**, गतमप्याचार्यः परमभक्त्याविर्भावितचेताः पुनः पुनः कण्ठोक्तं नाम करोति, अथवा स्वयमेव बुद्धतत्त्व इत्यतः प्रभृति सामान्यतीर्थकरलक्षणसद्भावात् तद्वचनसञ्जिघृक्षुर्विशिष्य वीरायेत्याह। न च मन्तव्यमिदमिति वर्तमानतीर्थप्रणेतृत्वाद्विशेषितमिति, तदपि हि सामान्यार्थमेवातीता अपि इदमेव द्वादशाङ्गं देशयामासुः तथा अनागता देशयिष्यन्ति अवस्थितत्वादर्थानां अन्यथा केवलज्ञानहीनोत्क-

१ युग्मस्य लक्षणम्—
"द्वाभ्यां युग्ममिति प्रोक्तं, त्रिभिः श्लोकैर्विशेषकम्।
कलापकं चतुर्भिः स्यात्, तदूर्ध्वं कुलकं स्मृतम् ॥"

ष्टताप्रसङ्गः स्यात् । न चेयं स्वमनीषिका । उक्तं हि प्रवचने, इत्येतद् द्वादशाङ्गं गणिपिटकं न कदाचिन्नासीन्न कदाचिन्न भवति न कदाचिन्न भविष्यति बभूव भवति भविष्यति चेति । विलीनमोहाय ध्वस्तसंसारबीजायेत्यर्थः ॥ २१ ॥ कृत्वोत्तरकालं किमाह—

व्या०—**तत्त्वार्थेत्यादि** । तत्त्वार्थोऽधिगम्यतेऽनेनास्मिन् वेति तत्त्वार्थाधिगमः इयमेवास्य गौण्याख्या नामेति तत्त्वार्थाधिगमाख्यस्तं, बह्वर्थं स च बह्वर्थः बहुर्विपुलोऽर्थोऽस्येति बह्वर्थः सप्तपदार्थनिर्णय एतावांश्च ज्ञेयविषयः । सङ्ग्रहं समासं, लघुग्रन्थं श्लोकशतद्वयमात्रं, वक्ष्यामीति वचोरूपं, अन्यथा हि ब्रूतेः क्रियाफललक्षणमात्मनेपदं स्यात् । शिष्यहितमल्पग्रन्थं ह्यलसा अप्यधीयन्ते, अधुना हि कालपरिहाणेरलसत्वात् सत्त्वानामशक्यः सकलप्रवचनाधिगमस्तदनधिगमे च दीर्घः संसारः तस्मादिममल्पग्रन्थं सङ्ग्रहमधीत्य बीजमात्रमपि तावल्लभन्तां शिष्या इत्यतः शिष्यहितं वक्ष्यामीति अभिप्रायः । इममिति, अनन्तरमेव वक्ष्यामीति । कस्य सङ्ग्रहमित्याह—**अर्हद्वचनैकदेशस्य**, अर्हतामर्हद्भ्यो वा वचनं द्वादशाङ्गं गणिपिटकं तस्याप्येकदेशस्य सङ्ग्रहं वक्ष्यामि न सर्वस्य महत्त्वादित्यर्थः ॥ २२ ॥

एवं तीर्थमहिमाक्षिप्तबुद्धिराचार्यशक्तिमसम्भावयन्नाचार्यदेशीयः प्राह—

**महतोऽतिमहाविषय-स्य दुर्गमग्रन्थभाष्यपारस्य ।**
**कः शक्तः प्रत्यासं-जिनवचनमहोदधेः कर्तुम् ॥ २३ ॥** आर्या

'महत्'शब्दस्यानेकार्थाः

व्या०—**महत इत्यादि** । अयं महच्छब्दोऽस्ति प्रायः प्रांशुत्वे महावृक्षः, अस्ति वैपुल्ये महोदधिः, अस्ति पूजने महापुरुषः, अस्ति भूयस्त्वे महौजा आदित्यः, अस्ति प्राधान्ये महादेवः, अस्ति संज्ञायां महाजनः, अस्ति प्रशस्ये महोदयो भूयाः, इह तु भूयस्त्वे, बहुग्रन्थविषयस्येति, प्राधान्यपूजितत्वे तूक्ते, एवं वैपुल्यमपि महोदधेरेव वक्ष्यति । दुर्गमग्रन्थभाष्यपारस्य, दुर्गमो ग्रन्थभाष्ययोः पारो निष्ठाऽस्येति दुर्गमग्रन्थभाष्यपारः । तत्रानुपूर्व्या पदवाक्यसन्निवेशो ग्रन्थः, तस्य महत्त्वादध्ययनमात्रेणापि दुर्गमः पारः, तस्यैवार्थविवरणं भाष्यं, तस्यापि नयवादानुगमत्वादलब्धपारः, अयं ह्यागमः सर्वशक्त्यन्वितेन महतापि पुरुषेण सकलप्रवचनार्थः अशक्यो व्यावर्णयितुमिति । तदित्थमस्य कः शक्त इत्यादि, अयं किंशब्दोऽस्ति क्षेपे किंसखा योऽभिद्रुह्यति, अस्ति प्रश्ने किं ते प्रियं, अस्ति निवारणे किं ते रुदितेन, अस्त्यपलापे किं तेऽहं धारयामि, अस्त्यनुनये किं तेऽहं करोमि, अस्त्यवज्ञाने कस्त्वामुल्लापयते, इह त्वपलापे, नास्त्यसौ योऽस्य जिनवचनमहोदधेः प्रत्यासं कर्तुं समर्थ इत्यभिप्रायः ॥ २३ ॥

'किं'शब्दस्य विविधार्थाः

यश्चैतत्प्रधारयेदसाविदमप्यध्यवस्येदित्याह—

**शिरसा गिरिं बिभित्से-दुच्चिक्षिप्सेच्च स क्षितिं दोर्भ्याम् ।**
**प्रतितीर्षेच्च समुद्रं, मित्सेच्च पुनः कुशाग्रेण ॥ २४ ॥** आर्या

व्योम्नीन्दुं चिक्रमिषेन्, मेरुगिरिं पाणिना चिकम्पयिषेत् ।
गत्याऽनिलं जिगीषे-च्चरमसमुद्रं पिपासेच्च ॥ २५ ॥ आर्या

किञ्च,

खद्योतकप्रभाभिः, सोऽभिबुभूषेच्च भास्करं मोहात् ।
योऽतिमहाग्रन्थार्थं, जिनवचनं संजिघृक्षेत ॥२६॥ "—विशेषकम्

व्या०—शिरसेत्यादि। भेत्तुमिच्छेत्, उच्चिक्षिप्सेच्च स क्षितिं दोर्भ्यां, तमेव गिरिं सह क्षित्योत्क्षेप्तुमिच्छेत्, दोर्भ्यां बाहुभ्यां, प्रतितीर्षेच्च समुद्रम् तरीतुमिच्छेत्, दोर्भ्यामिति वर्तते, मित्सेच्च पुनः कुशाग्रेण, तमेव समुद्रमुदबिन्दुपरिमाणाधिगमाय कुशाग्रेण मातुमिच्छेत् ॥२४॥

व्या०—खद्योतकेत्यादि। खद्योतकैर्भास्करमभिभवामीति भास्करोऽहमित्येवमिच्छेत्, मोहात् मूढो निरर्थकमुन्मत्तोऽनात्मज्ञः, मोहादिति च गिरिभेदादिषु सर्वत्र सम्बध्यते, योऽतीत्यादि, अतिमहाग्रन्थार्थं जिनवचनं यः संग्रहीतुमिच्छति स इदं प्रक्रान्तं सर्वमध्यवस्येदित्यर्थः ॥ २६ ॥

एवं चोदित आचार्यः सर्वमेतदेवमित्यनुज्ञापवादमाह—

एकमपि तु जिनवचनाद्, यस्मान् निर्वाहकं पदं भवति ।
श्रूयन्ते चानन्ताः, सामायिकमात्रपदसिद्धाः ॥ २७ ॥ आर्या

व्या०—एकमपीत्यादि। एकमपि पदं, किं पुनरियान् सप्तपदार्थसंग्रह इति तुशब्दो विशेषयति, जिनवचनादित्यवच्छेदे पञ्चमी, यथा समूहाच्छुक्लं प्रकाशते । यस्मादिति कारणे पञ्चमी । यस्मात् कारणान्निर्वाहकं सुगृहीतमप्यभ्यस्यमानमुत्तरोत्तरज्ञानकारणत्वाद् भवोत्तारकमित्यर्थः । न चेयं स्वमनीषिका इत्याह, श्रूयन्ते इत्यादि, श्रूयन्ते चानन्ता इति चशब्दः समुच्चये, बीजलाभात् तदविनाशादुत्तरोत्तरवृद्धिसम्भवोऽवसीयते । श्रूयन्ते चेत्यभिप्रायमात्राऽवधारणे, एवं श्रूयन्ते प्रवचने-'करोमि भदन्त ! सामायिकमित्येतावतैव पदेन भावतः सुगृहीतेनानन्तकालेन अनन्ताः सिद्धा' इत्युक्तं प्रवचने, उदाहरणमात्रं तुषमाषैः स्वाध्याय इति ॥२७॥

यस्माच्चैवमागमो निर्वाहकमिति चावसीयते—

तस्मात् तत्प्रामाण्यात्, समासतो व्यासतश्च जिनवचनम् ।
श्रेय इति निर्विचारं, ग्राह्यं धार्यं च वाच्यं च ॥ २८ ॥ आर्या

व्या०—तस्मादित्यादि। तस्मादागमप्रामाण्यात्, समासतः संक्षेपेण, व्यासतो विस्तरेण, यथाशक्त्याऽध्येयं जिनवचनं, न पुनरवमन्तव्यमिति दर्शयति, श्रेय इति, इदमेव हि

श्रेयो नान्यदिति, निर्गतविचारं निःशङ्कमित्यर्थः । ग्राह्यमध्ययनश्रवणाभ्यां, धार्यमनुप्रेक्षणादिभिः, वाच्यमर्थविचारणादिभिः । ग्रहणधारणे तावदात्मोपकारिणी ॥ २८ ॥

किं पुनर्वाचनयेति चोदितेऽध्यापनस्यैव गौरवख्यापनार्थं आत्मप्रयत्नदृढीकरणार्थं चाह—

**न भवति धर्मः श्रोतुः, सर्वस्यैकान्ततो हितश्रवणात् ।**
**ब्रुवतोऽनुग्रहबुद्ध्या, वक्तुस्त्वेकान्ततो भवति ॥ २९ ॥** आर्या

व्या०—**न भवतीत्यादि** । श्रोता हि कदाचिदन्यमनस्को दुष्टान्तरात्मा वा शृणुयाद्, एवंविधस्य श्रोतुर्न हितश्रवणमात्रादेवैकान्तेन धर्मोऽस्तीति दर्शयति । हितग्रहणमाम्रेडनार्थं, हितमपि तावत् शृण्वतां न सर्वेषां धर्मः किं पुनरहितमिति । ब्रुवत इत्यादि, वक्ता हि यदा स्तुतिमानलाभादिनिरीहः कथममी श्रोतारोऽनुगृहीताः प्रतिबुध्येरन्नित्यवाप्तबुद्धिर्हितमुपदिशति तदाऽस्यैकान्ततो भवति धर्मः । एवं च कृत्वा स्वपरिणामो नः प्रवचनेषु शुभाशुभोपचयं प्रति परं प्रमाणमिति दर्शितम् । न चात्रात्मनेपदाशङ्का, निराकृतं हि स्तुत्यादिक्रियाफलं, निरनुबन्धाभिप्रायात्, न च धर्मोऽप्यभिप्रेतः, अवश्यंभावी त्वसावित्युक्तः ॥ २९ ॥

एवं निश्चित्याह—

**श्रममविचिन्त्यात्मगतं, तस्माच्छ्रेयः सदोपदेष्टव्यम् ।**
**आत्मानं च परं च (हि), हितोपदेष्टाऽनुगृह्णाति ॥ ३० ॥** आर्या

व्या०—**श्रममित्यादि** । यो हृदयशोषादिरात्मगतः श्रमस्तमविगणय्य-नैतन्मम दुःखमिहैव चैतत्सूपयुक्तं शरीरमिति परिचिन्त्योपदेष्टव्यं, तस्मादिति प्रक्रान्तप्रयोजनमुपसंहृत्य निश्चिनोति, अयं विनिश्चयो यदुत श्रेयो मोक्षमार्गः सर्वकालमुपदेष्टव्यः, न पुनरश्रेयः सावद्यमिथ्याश्रुतमात्मपरोपघातीति । इदं च पुनः श्रेयस उपदेशप्रयोजनं निर्धार्य आह, आत्मानमित्यादि, यदयं श्रुत्वा पापेभ्यो निवृत्त्य हितेषु प्रवर्तमानः कल्याणभागी भवति स तत्रोपदेष्टा हेतुरित्युभावपि हितोपदेशेनानुगृह्येते इति ॥ ३० ॥

विद्याशिल्पकलाद्युपदेशेष्वपि हितबुद्धिस्तदर्थिनामित्यादिनिराकरणार्थमाह—

**नर्ते च मोक्षमार्गाद्, हितोपदेशोऽस्ति जगति कृत्स्नेऽस्मिन् ।**
**तस्मात् परमिदमेवे-ति मोक्षमार्गं प्रवक्ष्यामि ॥ ३१ ॥** आर्या

व्या०—**नर्ते चेत्यादि** । विगतद्वन्द्वसन्निपाताव्ययपदप्रापणहेतोर्मोक्षमार्गादृते नान्यो हितोपदेशः कृत्स्नेऽप्यस्मिन् जगति विद्यते । ये त्वन्ये रागबुद्धिविकल्पवशेन हितोपदेशत्वेन गृहीतास्ते भवबीजानुबन्धित्वाद्धितोपदेशाभासा अपि न भवन्ति, कुतो हितोपदेशाः ? । यतश्चैवं, तस्मादित्यादि, तस्मादित्युपसंहरति । परमुत्कृष्टं इदमेव हि हितोपदेशम्, अनन्तरं मोक्षमार्गः, इति एवमर्थे, एवं निर्धार्य वक्ष्यामि, समासौ वा, अलमतिप्रसङ्गेन ॥ अधुनोपन्यासप्रयोजनं-मोक्षस्य मार्गं आदौ वक्ष्यामि प्रवक्ष्यामीति । एतावत्य एता आर्याश्चात्र नाभि-

लिखिताः तासु न श्रमोऽभिशङ्क्यः, प्रसङ्गभयात् प्रायो निगदोक्तार्थत्वाच्च न विमर्दः । अतः परं शास्त्रं भवतीति ॥ ३१ ॥

इतीयं कारिकाटीका, शास्त्रटीकां चिकीर्षुणा ।
सन्दब्धा देवगुप्तेन, प्रीतिधर्मार्थिना सता ॥ अनुष्टुप्

---

## श्रीवर्द्धमानस्वामिने नमः ।

अथ श्रीसिद्धसेनगणिप्रणीता द्वितीया टीका प्रारभ्यते ।

अवतरणम्—

जैनेन्द्रशासनसमुद्रमनन्तरत्न—मालोडच भव्यजनतोषविधायि येन ।
रत्नत्रयं गुरु समुद्धृतमिद्धबुद्धया, तत्त्वार्थसङ्ग्रहकृते प्रणमामि तस्मै ॥१॥ वसन्ततिलका[1]
स एव धीपो[2] विधुरां धियं मे, नयप्रमाणादिविचारनीतौ ।
पटुं विधत्तां व्यसनावमग्ने, कुर्वन्ति सन्तः करुणामवश्यम् ॥ २ ॥ उपजाति[3]ः
सङ्क्षिप्तविस्तीर्णरुचिप्रबोधैः, पूर्वैर्मुनीशैर्विवृतेऽपि शास्त्रे ।
यातुं पथा वाञ्छति मध्यमेन, बुद्धिर्मदीया परिपेलवापि ॥ ३ ॥ इन्द्रवज्रा
उक्तं जिनेन्द्रैर्जगदेकनाथैः, सर्वं नयद्वैतमतानुसारि ।
ज्ञेयस्वरूपं प्रविभज्य सम्यक्, संयोजनं केवलमेव चिन्त्यम् ॥ ४ ॥"
विमुक्तिमार्गे मुनिनाथदेशिते, व्यधायि मौढ्याद् यदसाम्प्रतं मया ।
तितिक्षतां तत् सुजनः समाधिना, विलोक्य रन्ध्रैषितया विना कृतः ॥ ५ ॥ उपेन्द्रवज्रा

मोक्षमार्गोपदेशः श्रेयान् परिनिर्वाणस्य पुरुषार्थप्राधान्यात्, दुःखोद्वेगाद्धि जीवलोकः सुखप्रेप्सया च क्लेशार्तिहेतून् परिजिहीर्षन् सुखानन्दनिमित्तोपादित्सया च सर्वक्रियासु प्रवर्तते । सुखदुःखप्राप्त्यभावश्च लोके तन्त्रान्तरेषु च सन्निकृष्टकारणभावोऽभीप्स्यते धर्मस्यार्थकामयोश्च । सुखं हि द्विविधं वैषयिकभेदान्निर्वाणप्राप्तिलब्धात्मस्थसुखभेदाच्च, तत्र यन्मौक्षं सुखं तदात्यन्तिकमैकान्तिकमनतिशयमनाबाधकं केवलं निराबाधं स्वाधीनं च, शश्वदप्रतिपातादात्यन्तिकं, व्यतिकीर्णसुखदुःखहेतुभावार्थान्तरानपेक्षत्वादैकान्तिकम्, प्रकर्षकाष्ठावस्थानादनुत्तरत्वादनतिशयम्, प्राण्युपमर्दनजलौकिकसौख्यवैपरी-

---

१ वसन्ततिलका—लक्षणम्—
"उक्ता वसन्ततिलका तभजा जगौ गः" ।

२ 'धीरो विकलां' इति क-पाठः ।

३ उपजाति—लक्षणम्—
"स्यादिन्द्रवज्रा यदि तौ जगौ गः, उपेन्द्रवज्रा जतजास्ततो गौ ।
अनन्तरोदीरितलक्ष्मभाजौ, पादौ यदीयावुपजातयस्ताः" ॥

त्यादनाबाधकम्, सर्वद्वन्द्वस्पर्शविषयातिक्रमाद् दुःखलेशाकलङ्कितं केवलम्, निष्प्रतिद्वन्द्वमिति निराबाधम्, आत्मतादात्म्याविर्भावान्मनोज्ञविषयसंसर्गायत्ता नोत्पत्तिरस्येति स्वाधीनमिति। तच्चैतच्चैतन्यवीर्यप्रशमादिगुणतत्त्वस्यात्मनः संसर्गप्रतिबन्धोपरागविगमात् पुनर्भवप्रबन्धोच्छेदात् दुःखानामत्यन्तनिवृत्तेः ज्ञानादिस्वतत्त्वावस्थाननिःश्रेयसावाप्तेरधिगम्यत इति तत्साधनशासनमुख्यप्रयोजनः कृत्स्न उपदेशः परमर्षेः, तदनुषङ्गतः शेषव्याख्यानात्, अतश्च मुख्यपुरुषार्थसाधनसाध्याव्यभिचारशासनाच्छास्त्रमेतत्, विषयर्द्धिसंयोगसमुत्थस्य तु सुखस्यात्यन्तिकादिविपरीतविशेषणानुगतत्वात् दुःखोत्तरत्वात् दुःखप्रतिकारमात्रत्वाच्च, तदर्थं शास्त्रमशास्त्रं स्यात्, तदुपायोपदेशविधिमन्तरेणापि तत्सिद्ध्युपपत्तेश्चेति, अभ्युदयप्राप्त्युत्सवफलो धर्मः प्रतिषेध्यपक्षक्षिप्तः प्रतिमन्तव्यः, अर्थकामौ च, यस्माच्चैते दुःखाभावार्थिनां नात्यन्ताभावहेतवः तस्मादभ्युदयफलधर्मार्थकामोपदेशो न हितोपदेश इति सर्वेणापि तदर्थः प्रयासो नास्थेय इत्यर्थः। सर्वस्यास्य विषयसुखर्द्धिफलत्वात् तद्दोषदुष्टत्वादिति, परमर्षेः प्रवक्तुर्निसर्गादेव लोकानुग्रहकारितायां प्राणिनां च हिताहितविभागोपदेशविशिष्टानुग्रहहेत्वभावान्निःश्रेयसावाप्तिहेतूपदेशप्रवृत्त्युपपत्तेः, सदाचार्ययुक्तितो हिताहितप्राप्तिपरिहारार्थिनां च कामादिषु दोषदर्शनान्निःश्रेयसार्थित्वान्निःश्रेयसमार्गोपदेशः शास्त्रे प्रवर्तते इत्ययं शास्त्रप्रवृत्तिहेतुकृतः शास्त्रसम्बन्धः। स चायं भाष्यकारिकाभिः प्रकाश्यते—पुरुषार्थसिद्धिं प्रत्यागूर्णानां हिताहितप्राप्तिपरिहारार्थिनां विधेयप्रतिषेध्यविवेकप्रदर्शनार्थं हि कारिकाद्वयमाद्यम्। परमकार्यमभीप्सद्भिः प्रधानपुरुषार्थप्राप्तिकाङ्क्षिभिः परहितप्रेप्सुभिर्निःश्रेयसार्थिभिरित्यर्थः। परमनिर्वृतेरग्र्यत्वात् तत्सिद्धियोग्यताऽप्रतिघसामर्थ्यादेवंप्रकारसाधनगुणसमग्रैर्भाव्यम्, अर्थापास्ततद्विपरीतार्थतत्साधनपरिहारिभिश्चेति अतो विधेयोऽर्थः। कर्मक्लेशानामत्यन्ताभावादनवरताप्रतिपाति मुक्तिसुखं, सम्यग्दर्शनादीनि तत्साधनानि च, अर्थाद् व्युदसनीयः संसारसुखाभिलाषः तत्सुखसाधनानि च, तस्मान्निःश्रेयसावाप्तये यतितव्यम्, तत्सिद्धिसमर्थं च साधनमारोग्यस्येव चिकित्सा सम्यक्श्रद्धानज्ञानसंवरतपांसीति, नृसुरैश्वर्यसुखतत्साधनार्थं च न यतितव्यमिति। यतश्चैवं सम्यग्दर्शनज्ञानतपोगुणसामग्रीयोगयुक्तस्य द्रव्यक्षेत्रकालभावप्रभेदसंसारमहादुःखप्रपञ्चापातमहाभयहेतूनां कार्त्स्न्येन प्रक्षयादात्यन्तिकी दुःखनिवृत्तिर्निष्प्रतिद्वन्द्वाप्रतिपातिपरमसुखलाभश्चोपपद्यते, तस्मादुक्तं "**तेन सुलब्धं भवति जन्म**" (१) इति। कर्मक्लेशा इति च, दुःखानां नैमित्तिकत्वाद् भवेन्निवृत्तिरिति, अनपेक्षपरिणामत्वात् स्वभावत्वे हि नापवृज्येरन् क्लेशाः, प्राक्तनं तु कर्मक्लेशविशेषणं, न प्रधानेश्वरादिकृताः कर्मक्लेशा इति। एवं क्रियान्तरप्रसिद्धिप्रवृत्तिः क्रियान्तरप्रसिद्धिनिवृत्तिश्च कृता, तस्मादित्थमुक्तं भगवता, "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" (१, १) इति (१, २)। नन्वेवमप्रश्वासः कश्चित्, इह हि सम्यग्दर्शनादियुक्तो मुमुक्षुस्तदर्थं सम्यगीहमानोऽपि निःश्रेयसमनवाप्योपरमेत स इदानीं नृसुरसुखप्रतिषेधाद् विफलप्रयासः स्यात्, दृश्यते हि प्रश्वासः

प्रधानकार्यसिद्धिश्च, यथा इतोऽष्टयोजन्यामुज्जयिनी वर्तते तामेकेनाह्ना गच्छ परेण निवर्तेथाः यदि चैकेनाह्ना न प्राप्नुयास्ततोऽमुकस्मिन् ग्रामे सुखमुषित्वा श्वः प्रवेष्टासि[1] तूर्णं चागच्छेरित्येतस्माद् वाक्याद् गन्ता प्रश्वस्तः सन् न गमने विरसीभवति, पूर्वस्मात् तु व्याहन्यते, एवं नृसुरैश्वर्यर्द्धिनिरपेक्ष उपदेशोऽप्रश्वासाय स्यादिति, ततः प्रश्वासार्थमुच्यते "**परमार्थालाभे वा**" ( ३ ) इत्यादि । जन्मान्तरसञ्चितानां हि कर्मणां बन्धनिकाचनाद्यवस्थावैचित्र्यात् तद्धेतुकरागादिदोषाणां च कर्मावाहित्वताच्छील्यात् कश्चित् तद्भवेनैव निःश्रेयसं नाधिगच्छेत्, तथापि तस्य शुद्धप्रयोगहेतुकं कल्याणप्राप्तिकारणं पुण्यं कर्म स्यादिति । स्यान्मतम्[2], नन्वेवमभ्युदयाशंसा कृता स्यात् इष्टशरीरेन्द्रियादिनृसुरविशेषप्रादुर्भावफलत्वात् पुण्यस्य, निषिद्धाभ्युपगमे चाभ्युपेतबाधा[3] स्यादिति । उच्यते, नैष दोषः । नृसुरैश्वर्यसुखप्रतिषेधात् । नृसुरैश्वर्यसुखप्रतिषेधपरं हि मुनेः कृत्स्नं वचनम् ॥ "सल्लं कामा[4]" इत्यादि । स्वर्गलोकगमनसुकुलप्रत्यापत्त्यादिवचनं तु प्रधानार्थनिश्चयदाढर्चापादनार्थम्[5] । यथाऽनुच्छिन्नारिशेषोऽपि विजिगीषुर्भोगेषु न व्यासज्येतेति, तदुच्छेदाद् भोगेषु व्यासङ्गोऽपि स्वनुबन्ध इति तत्प्राधान्यप्रतीतेरितरसुखस्याप्यसुखत्वमुपदिष्टं स्यात्, तन्मात्राभिष्वङ्गपरिहारार्थमित्थं, सर्वत्र प्रियहितनिश्चयसिद्धेः

"सिद्धे वा भवति सासए, देवे वा अप्परए महिड्ढिए" ॥[6]

—दशवैकालिके अ० ९, उ० ४, गा० ७.

"उँउप्पसन्ने[7] विमलेव चंदिमा, सिद्धिं विमाणाणि वयंति ताइणो"[8] ॥

—दश० अ० ६, उ० २, गा० ६८.

"दुक्कराइं करित्ताणं, दुस्सहाइं सहित्तु य ।
केइत्थ देवलोएसु, केवि सिज्झंति नीरया" ॥[9] —दश० अ० ३, गा० १४.

इत्यादि ॥ नृसुरैश्वर्यनिःश्रेयसविषयाणां सर्ववाक्यानां सिद्धिः । ततश्च नेदं यथोक्तप्रश्वासवाक्यतुल्यम्, न ह्यत्र कालाध्वपरिमाणगन्तृशक्तिवन्निवृत्तिकालपरिच्छेद इति । यथा वा सर्वमुपकृप्तं भोजनविधानमुपचर्य ब्रूयात् किन्त्वपथ्यमिति । एवं च तत्प्रसङ्गप्रतिषेधो गम्यते तस्मात्

१ 'प्रवेष्टास्मि' इति **ग**-टी-पाठः । २ 'स्यान्मन्ता' इति **ख**-**ग**-पाठः । ३ 'बाधी' इति **क**-पाठः ।

४ सल्लं कामा विसं कामा कामा आसीविसोवमा ।
कामे पत्थयमाणा अकामा जंति दुग्गतिं ॥ (उत्तराध्ययने अ० ९, गा० ५३.)
[ शल्यं कामा विषं कामाः कामा आशीविषोपमाः ।
कामान् प्रार्थयमाना अकामा यान्ति दुर्गतिम् ॥ ]

५ 'पदार्थोपदानार्थं' इति **ग**-टी-पाठः ।

६ सिद्धो वा भवति शाश्वतः देवो वा अल्परजाः (अल्परतः) महार्द्धिकः ।

७ 'उप्पसन्ने' इति **ख**-पाठः ।

८ ऋतु ( शरत् ) ( काले ) प्रसन्नः विमलश्च चन्द्रमा इव तायिनः ( प्रसन्ना विमलाश्च ) विमानानि सिद्धिं ( च ) व्रजन्ति.

९ दुष्कराणि कृत्वा दुःसहानि सहित्वा च । केचिदत्र देवलोकेषु ( उत्पद्यन्ते ) केचित् सिध्यन्ति नीरजसः ॥

स तस्योपसर्जनमर्थो[१]ऽनभिसंहितानुषक्त इति। नैव चात्र नृसुरैश्वर्यसुखानुज्ञा, निःश्रेयसावाप्तिहेतुत्वेनानवद्यकर्माभ्यनुज्ञानात् पुनर्भवप्रबन्धकरं न भवति मोक्षकरमेव तु भवतीत्यनवद्यं हि कर्म तत्, सर्वत्र हि भगवता निर्निदानत्वमभिप्रशस्तम्, उक्तं हि "भुज्जो निदानकरणं मुक्खमग्गस्स पलिमंथू, सव्वत्थविणं भगवया अणिदाणदा पसत्था[२] (दशाश्रुतस्कंधे)" इति॥ ततो यद्यप्याशु न लभते तथापि तत्सम्यग्दर्शनादिकृत एव स तस्य मोक्ष इति। इदानीं विचित्रप्रस्थानत्वादधमादिषट्पुरुषविशेषनिर्धारणेन मङ्गलपूर्वकत्वाच्छास्त्रप्रवृत्तेर्मङ्गलपूर्वकमिदं शास्त्रम्, तच्चात्रैकान्तिकादिफलयोगात् प्रकृष्टत्वाच्च नमस्कारो भावमङ्गलं प्रवचनसद्धर्मतीर्थप्रणायिने महावीरायेति भगवत एव पूज्यानुत्तरत्वप्रतिपादनार्थम्, तदनुषङ्गतः शास्त्रो[३]पोद्घातार्थं प्रवक्तृशुद्धेः प्रवचने शुद्धिराख्याता स्यादिति भगवति जातप्रसादबहुमानो गुणज्ञः सङ्ग्रहकारः श्रोतॄणां शास्त्रे गौरवोत्पादनार्थं चाह—"**कर्मोहितं**" (४) इत्यादि। पुरुषार्थानां चतुर्णामुभयस्मिन्नपि लोके यो विपरीतानुष्ठायी अत्यन्तमुभयलोकगर्हितपरदारचौर्याद्यासेवमानः सोऽधमाधमः॥ १॥ ऐहलौकिकसुखप्रार्थनापरः परलोकसुखविमुखः ऐहिकप्रत्यपायभयादत्यन्तनिन्द्यचौर्यपरदारादि परिहरन् विषयसुखासक्तः पुरुषोऽधम इत्यनुमीयते॥ २॥ स्वप्रस्थानात् य उभयलोकार्थं प्रयतते दानाध्ययनाद्यासेवमानः सत्कारलाभयशोमित्राद्यैहिकं फलं परलोकेऽपि नृसुरैश्वर्यप्राप्तिमभिकाङ्क्षन् स विमध्यमोऽनुमीयते॥ ३॥ यः पुनरिहसुखनिरपेक्षोऽभिषेचनोपवासब्रह्मचर्यगुरुकुलवासभैक्ष्याद्यासेवमानः परतीर्थिको लोकोत्तरमार्गप्रतिपन्नो वा देवेन्द्रचक्रवर्तिमहामाण्डलिकाद्यैश्वर्यसमाकृष्टमानसः सौभाग्यादि वा प्रार्थयमानो निदानपरस्तपोविक्रयेण परलोकसुखमेव प्रधानीकुर्वन् मध्यम इत्यनुमीयते॥ ४॥ दृष्टानुश्रावि[४]केष्वर्थेषु शुद्ध्यतिशयदर्शनादपरितुष्यन् संसारभयोद्वेगात् सर्वसङ्गत्यागो लोकद्वयनिःश्रेयससुखावह इति मत्वा न पुनर्विषयाभिष्वङ्गे मन आधेयमिति निःश्रेयसावाप्तिप्रधानः सर्वथा पुनर्भवप्रबन्धोच्छित्तये प्रयतितव्यम् इत्येवंपरानुष्ठानः "**कर्मक्लेशाभावो यथा भवत्येष परमार्थः**" (२) इति तत्प्राप्तियो[६]ग्यानि साधनानि सम्यग्दर्शनज्ञानचारित्राणि सर्वातिचारविशुद्ध्या समाचरन् उत्तमोऽनुमीयते, ऐकान्तिकात्यन्तिकनिरतिशयानाबाधनिःश्रेयसफलप्रधानकृतार्थत्वप्रार्थनात्॥ ५॥ यः पुनः प्रार्थनीयात्यन्तविशुद्धफलप्राप्तावत्यन्तकृतार्थोऽपि प्रार्थनीयफलाभावात् परनिमित्तोपकारफलनिरपेक्षः सत्त्वानामनुपयाचितनिष्कारणवत्सलः अत्यन्तहितपरः परोपदेशे वर्तते निसर्गत एव सोऽत्यन्तशुभतीर्थकरनामकर्मोदयप्रभावात् वक्तव्य एवोपदेश इति तीर्थकृत्त्वस्वाभाव्यात् प्रयतते, भास्करे प्रकाशनप्रवृत्तिवत्प्रकृष्टतमत्वात् सर्वलोकोत्तमः ततश्च पूज्यानामपि पूज्यतमत्वाद् देवाधिदेव इत्यभिलषितार्थप्रेप्साकृता-

१ 'मर्थोनभि' इति क-पाठः।
२ भूयो निदानकरणं मोक्षमार्गस्य परिमन्थः ( विघ्नः ),
सर्वत्रापि च भगवता अनिदानता प्रशंसिता।
३ 'शास्त्रेप्यायान्तार्थं' इति क-ख-पाठः। ४ 'श्राविकेष्टार्थेषु' इति ग-पाठः। ५ 'शुद्धयन्न इति शुद्धयन्ना वा' इति क-पाठः। ६ 'योग्यानि सम्यक्' इति ग-पाठः।

दरैः स एवातिशयादर्चनीयः ॥ ६ ॥ (३-६) स कः, अर्हन्निति सामान्योक्तं विशेषे व्यवस्थाप्यते यावत् "**तस्मादर्हति पूजामर्हन्नेवोत्तमोत्तमो लोके**" (७) इति ॥ स किमर्थं कृपाप्रसादयोरभावादर्थ्यनुग्रहाऽप्रवणः सर्वजगता सेव्यत इति चेत्, प्रक्षीणाशेषरागादिदोषव्रातस्य प्रसादद्रविणाभावेऽपि तत्सेवातो निःश्रेयसलाभस्य ध्रुवत्वात्, तदाह—"**अभ्यर्चनादर्हतां**" (८) इत्यादि ॥ कृतकृत्यस्य प्रयोजनोद्देशाभावादप्रेक्षितकार्यचेष्टानाप्तत्वात् परानुग्रहप्रवृत्तिरेव तर्हि न स्यादिति चेत्, न, तीर्थकृन्नामकर्मानुभावाज्जगद्धितकारित्वशैल्युपपत्तेः, अनपेक्षितप्रयोजनभास्करप्रकाशनादिवदित्याह—"**तीर्थप्रवर्तनफलं**" (९) इत्यादि ॥ अथवाऽनुत्तरपारमर्षज्ञानबुद्धातिशयाद्यप्रमेयर्द्धिनिःश्रेयसाभ्युदयार्थगमनमपेक्ष्य कृतार्थत्वविशेषणात् अवश्यवेद्यतीर्थकरनामकर्मवेदनाद्यायुष्कतन्तुबन्धादिक्षपणमात्रकार्यशेषापेक्षमकृतार्थतापि स्याद्वादिनो न दोषायेति (१०) ॥ अत्राह-संसारान्तर्वर्तिजनसामान्यात् तस्येयं कुतोऽनुत्तरगुणसम्पत्, कृतार्थत्वं वा ?, नहीष्टः सः स्वयम्भूरिति, उच्यते, अनुभावविशेषजनिततारतम्यकुशलाकुशलप्रपञ्चैः कर्मभिरेवापादितप्रकर्षनिकर्षभेदवैश्वरूप्यो जीवलोको दृष्टो, नहि कर्मणामलङ्घ्यमस्तीति, अतोऽनेकजन्मान्तराभ्यासात् तीर्थकृत्त्वाभिनिर्वर्तिकाभिः दर्शनतपोयोगाद्युत्तमविशुद्धाभिर्भावनाभिरुपचितस्फातीकृतपरमप्रकृष्टपुण्य[2]सम्भारातिशयाद्दोषाणामत्यन्तव्यावृत्तेः अनर्घ्यगुणरत्नमहानिधीनां (१) परमेश्वरत्वमुपपन्नं भगवत इत्याह—"**यः शुभकर्मासेवन**" (११) इत्यादि यावत् "**कृत्वा त्रिकरणशुद्धं तस्मै परमर्षये नमस्कारम् । पूज्यतमाय भगवते वीराय विलीनमोहाय**" (२१) इति ॥ अतोऽपरिमेयानुत्तरानन्तगुणस्वार्थसम्पद्युक्तः सद्धर्मतीर्थस्यास्य प्रणायको भगवान् जगत्परमेश्वरः प्रत्यासन्नोऽस्मत्परमबान्धवो महावीरोऽभिप्रणम्य इत्यस्यैव नमस्कारः इत्येवं नमस्कारभावमङ्गलपुरस्सरत्वं तत्त्वार्थाधिगमसङ्ग्रहस्याविष्कृतम् । शुद्धिश्च यथोक्तमौनीन्द्रप्रवचनानपेतत्वादिति (११-२१) ॥ इदानीं सङ्ग्रहविवक्षाप्रयोजनमाह—"**वक्ष्यामि शिष्यहितमिमं**"इति । कथं "**बह्वर्थसङ्ग्रहं लघुग्रन्थं**" (२२) इति वचनात्, कालानुभावादल्पसामर्थ्या भव्याः कथं नामाऽल्पीयसा वाक्प्रबन्धेन महतोऽर्थराशेरधिगन्तारः स्युरिति । स्यान्मतं[3] किमयं कृत्स्नस्य प्रवचनस्य सङ्ग्रह उत तदेकदेशस्येति, एकदेशसङ्ग्रहोऽयमित्याह—"**अर्हद्वचनैकदेशस्य**" (२३) इति ऐदंयुगीनभव्यलोकानुग्रहमभिसन्धाय किमर्थं पुनः समस्तश्रुतसङ्ग्रहादर एव न कृत इति चेत् कृत्स्नश्रुतार्णवसङ्ग्रहकरणाशक्यत्वादर्थ्यमपि हि नैवाशक्यमारभ्यते इत्यशक्यताप्रतिपादनार्थमाह—"**शिरसा**" (२४-२६) इत्यादि । स्याद्बुद्धिर्जिनवचनैकदेशसङ्ग्रहत्वात् शिष्यहितप्रतिज्ञा वितथा स्यात्, सर्वजगत्स्वभावनिर्णयात् हिताहितप्राप्तिपरिहारार्थिनामनुग्रहः स्यात्, सकलजगत्तत्त्वं च समस्तश्रुतौघप्रतिपाद्यमिति । उच्यते, नायं नियमः श्रुतार्णवस्य पारं गतवत एव श्रेयःप्राप्तिरिति, किन्त्वेतदपि दृष्टं प्रव-

१ 'स्वातीकृत' इति क-पाठः । २ 'पुण्यपुण्य' इति क-पाठः । ३ 'स्यान्मन्ता' इति ख-ग-पाठः ।

चने धर्मस्यैकस्यापि पदस्योपयोगः संसारनिर्वाहकः किमङ्ग पुनरेवंविधार्थविस्तारविषयस्येति, तस्मात् सङ्क्षेपाद् विस्तराच्च जिनवचनं श्रेयस्करमिति। तदाह–" एकमपि तु जिनवचनाद् " इत्यादि यावत् "धार्यं च वाच्यं च" (२७-२८) इति ॥ किञ्च जिनमतानभिज्ञस्य परस्येदं चोद्यं-लोकानुग्रहासम्पादनाद्व्यर्थ[1] एकदेशसङ्ग्रह इति, कथं ?, संसारदुःखार्तसत्त्वाऽनुकम्पाद्रवीकृतात्मा परानुग्रहप्रवणो विधिप्रवृत्तोऽसपरोपकारोऽपि तत्प्रयोगशुद्धित एव स्वयं तावन्निःश्रेयसभाग् भवतीति नियमादस्माकं यतिधर्मो देशनीयः सद्धर्म इति हेतोः। प्रोक्तं हि भगवद्भिः–

"उट्ठिएसु वा अणुट्ठिएसु वा सुस्सूसमाणेसु पवेअएय अज्जवयं[2]" इत्यादि यावत् "बुज्झमाणाणं जहा से दीवे असंदीणे एवं सरणं भवइ महामुणी"।[3]

—आचाराङ्गे, श्रु० १ अ० ६ उ० ५.

तथा।

"भवसयसहस्समहणो, विबोहओ भविय पुंडरीयाणं।
धम्मो जिणपन्नत्तो, पकप्पजइणा कहेयव्वो" ॥[4]—आर्या

इति, तदाह–" न भवति धर्म" इत्यादि ( २९-३१ )।

इति स्वोपज्ञसम्बन्धकारिकाः टीकाद्वयसमेताः समाप्ताः ॥



१ 'द्व्यर्थं' इति ख–पाठः।

२ उत्थितेषु ( उपस्थितेषु) अनुपस्थितेषु प्रवेदयेत्—आर्जविताम्।

३ उह्यमानानां यथा स द्वीपः अस्यन्दनः एवं शरणं भवति महामुनिः।

४ भवशतसहस्रमथनो विबोधनो भव्यपुण्डरीकाणाम्।
धर्मो जिनप्रज्ञप्तः *प्रकल्पयतिना कथयितव्यः ॥

* प्रकल्पः—आचारप्रकल्पः निशीथसूत्रमित्यर्थः।

# तत्त्वार्थाधिगमसूत्रम्

श्री'उमास्वाति'वाचकवर्यविरचितं स्वोपज्ञभाष्यालङ्कृतम्

श्री' सिद्धसेन 'गणिप्रणीतटीकायुतम् ।

## प्रथमोऽध्यायः १

हितोपदेशे च कर्तव्ये निःश्रेयसावाप्त्युपायोपदेशान् नान्यः कश्चिद्धितोपदेश इत्युक्तम्-

**सूत्रम्—सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १-१ ॥**

टीका—इदमाद्यमनवद्यं मुक्तिपथोपदेशसूत्रं सकलतत्त्वार्थशास्त्राभिधेयमुररीकृत्य प्रावृतत्, द्वादशाङ्गप्रवचनार्थसङ्ग्राहिसामायिकसूत्रवत् । यत इह हि शास्त्रे प्रसङ्गानुप्रसङ्गतस्त्रय एव पदार्थाः सम्यग्दर्शनादयो विमुक्तेः कारणत्वेन निरूप्यन्ते । अथ कस्मात् हेतव एव मोक्षस्य कथ्यन्ते ? न पुनः स एव प्रधानत्वादादौ प्रदर्श्यत इति । उच्यते—कारणायत्तजन्मत्वात् कार्याणां कारणमेवोपाददते प्राक् प्रेक्षापूर्वकारिणः । अथवा सत्यमसौ प्रधानः तथापि तु तत्र प्रायो वादिनां नास्ति विप्रतिपत्तिः । यद्यपि भावाभावादिरूपेणास्ति विगानं, तथाऽप्यस्ति तावन् मोक्ष इत्यनादृत्य भावादिरूपतां तद्धेतुषु प्रायो विसंवाद इति मन्यमानः परपरिकल्पितांश्चाहेतूनेव मुक्तेः पश्यन् सम्यग्दर्शनादित्रयमेवोपन्यस्तवान् । अत्र चावधारणमवश्यं दृश्यं, सम्यग्दर्शनादीन्येव मोक्षमार्ग इति । अनवधारणे हि सति अन्यस्यापि मुक्तिपथस्य सद्भावादनर्थकमेवोपदेशदानं स्यात्, तेनैव सिद्धत्वादिति । सम्यक्शब्दश्च दर्शनशब्दसन्निधौ श्रूयते अतस्तेनैव सहास्याभिसम्बन्धो न ज्ञानचारित्राभ्यामिति कश्चिदाशङ्केत,अतस्तन्निवारणायाह भाष्यकारः—

भाष्यम्—सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रमित्येष त्रिविधो मोक्षमार्गः । तं पुरस्ताल्लक्षणतो विधानतश्च विस्तरेणोपदेक्ष्यामः । शास्त्रानुपूर्वीविन्यासार्थं तूद्देशमात्रमिदमुच्यते । एतानि च समस्तानि मोक्षसाधनानि । एकतराभावेऽप्यसाधनानीत्यतस्त्रयाणां ग्रहणम् । एषां च पूर्वस्य लाभे भजनीयमुत्तरम् । उत्तरलाभे तु नियतः पूर्वलाभः । तत्र

सम्यगिति प्रशंसार्थो निपातः, समञ्चतेर्वा भावः। दर्शनमिति दृशेरव्यभिचारिणी सर्वेन्द्रियानिन्द्रियार्थप्राप्तिः, एतत् सम्यग्दर्शनम्। प्रशस्तं दर्शनं सम्यग्दर्शनम्। सङ्गतं वा दर्शनं सम्यग्दर्शनम्। एवं ज्ञानचारित्रयोरपि ॥ १ ॥

टी०—अर्हदभिहिताशेषद्रव्यपर्यायप्रपञ्चविषया तदुपघातिमिथ्यादर्शनाद्यनन्तानुबन्धिकषायक्षयादिप्रादुर्भूता रुचिर्जीवस्यैव **सम्यग्दर्शनमुच्यते**, **सम्यग्ज्ञानं** तु लक्ष्यलक्षणव्यवहाराव्यभिचारात्मकं ज्ञानावरणकर्मक्षयक्षयोपशमसमुत्थं मत्यादिभेदं, **सम्यक्चारित्रं** तु ज्ञानपूर्वकं चारित्रावृतिकर्मक्षयक्षयोपशमोपशमसमुत्थं सामायिकादिभेदं सदसत्क्रियाप्रवृत्तिनिवृत्तिलक्षणं मूलोत्तरगुणशाखाप्रशाखम् ॥ अत्र भाष्ये चोदयति—अथ किमर्थं प्रत्येकं सम्यक्शब्दः प्रयुज्यते? यावता सम्यग्दर्शने सति यज् ज्ञानं चरणं वा तत्सम्यगेव भवतीत्यतो न सम्यक्शब्दोऽनयोर्विशेषणतयोपादेयः। उच्यते—सत्यमेतत्, किन्तु न ज्ञानमात्रमत्र विवक्षितं, चारित्रमात्रं वा, किन्तु विशेषरूपे उभे अपि, इतरथा हि सम्यग्दर्शनसम्पन्ने विद्येते सम्यग्ज्ञानसम्यक्चारित्रे न तु ते साक्षान्मोक्षमार्गतां बिभृत इति एतत्[1], नैव तत्र सम्यक्चारित्रसम्भव इति। तच्च न, यतो देशरूपेऽपि चारित्रे चारित्रशब्दो वर्तत एव-तच्चाज्ञाभिमतचारित्रात् सम्यक्शब्दविशेषणेन व्यावर्त्यत इति। स्यादेवं तत्राशङ्का—किं ते भवतो मोक्षकारणे उत मा भूतां? तदाशङ्कानिरासार्थं सम्यगिति ज्ञानचरणयोरुपाधित्वेनोपादायि सूरिणा। अथवा दर्शनज्ञानचारित्राणां त्रयाणामपि व्यभिचार उपलभ्यते, यतो मिथ्यादर्शनपुद्गलोदये जीवस्य मिथ्यादर्शनं मिथ्याज्ञानं मिथ्याचारित्रमिति मुक्तेरसाधकत्वान् मिथ्याशब्देन विशेष्यन्ते, तान्येव सम्यग्दृष्टेर्मुक्तिसाधनत्वाद् यथार्थग्राहित्वाच्च सम्यक्शब्देन विशेष्यन्ते, दर्शनं च ज्ञानं च चारित्रं च दर्शनज्ञानचारित्राणि सम्यक् च तानि दर्शनादीनि चेति सम्यग्दर्शनज्ञानचारित्राणीति, अतो व्यभिचाराद् युक्तं यत् सम्यक्शब्देन सर्वाणि दर्शनादीनि विशेषयति। **चारित्रमिति**, योऽयमितिशब्दः स इयत्तां दर्शयति, एतावन्त्येव मुक्तेर्मार्गो नातोऽन्योऽस्ति। एष इत्यनेन तु इतिना इयत्ताऽवधृतस्वभावमन्तर्विपरिवर्तमानं स्वप्रत्यक्षं परस्मै वा सामान्येन प्रतिपादितं परप्रत्यक्षं निर्दिशति। तिस्रो विधाः-प्रकारा अनन्तरप्रदर्शिता यस्य स त्रिविधः, कोऽसौ?, उच्यते–सूत्रोपन्यस्तो मोक्षमार्ग इति। **मोक्ष** इति च ज्ञानावरणाद्यष्टविधकर्मक्षयलक्षणः केवलात्मस्वभावः कथ्यते स्वात्मावस्थानरूपो, न स्थानम्, यतो मोक्षस्य मार्गः, शुद्धिरुच्यते, न पुनर्धाम्नः शुद्धिर्विवक्षिता, या त्वसौ कर्मणां मुच्यमानावस्था तच्छोधनायैतानि प्रवर्तन्ते,

सम्यक्शब्दफलम्

---

१ ज्ञानचारित्रयोरपि सम्यक्त्वयोपादानमित्यर्थः।

अथवेषत्प्राग्भारधरणी मोक्षशब्देनाभिधातुमिष्टा, यस्मात् तदुपलक्षितोपरियोजनक्रोशषड्भागो भगवतामाकाशदेशः प्रादेशि दिव्यदृश्वभिराधारः, तस्यायं सूत्रोपन्यासफलम् **मार्गः**—पन्थाः, समस्तप्रत्यपायवियुतः पाटलिपुत्रगामिमार्गवन्मोक्षमार्ग इत्यस्य एष त्रिविध इत्येतद्विवरणम्, एवं सामान्येन सूत्रप्रकाशः प्रत्यपादि ॥ अधुना परः प्रश्नयति—किमेतावदेव मोक्षमार्गोपदेशनमुत विस्तरेणाप्यस्ति किञ्चिदिति? अस्तीत्याह। यद्यस्ति किमिति नोच्यते? आह—**तं पुरस्ताल्लक्षणतो विधानतश्च** इत्यादि। **तमिति** मोक्षमार्गमनन्तरश्रुतं निर्दिशति, **पुरस्तादिति** अस्मात् सूत्रादुपरितनसूत्रेषु, **लक्षणत** इति, लक्ष्यतेऽनेनेति लक्षणं, तद् द्विधा आन्तरबहिर्भेदेन, रुचिपरिच्छेदानुष्ठानाख्याः पौरुषेय्यः शक्तयो जीवस्य याः समासाद्य व्यपदिश्यते सम्यग्दर्शनीत्याद्यान्तरम्। बाह्यं तु तत्प्ररूपणप्रवणसूत्रशब्दराशिः अन्तर्लक्षणोपकारितया प्रवर्तमानः "तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् (१-२)" इत्यादि। **विधानत** इति भेदतः। ननु च सर्वद्रव्यभावविषया रुचिरेकैव कुतस्तस्याः प्रभेदसम्भवः?। उच्यते—सत्यमेका रुचिः, सा तु निमित्तभेदाद् भेदमश्नुते, क्षयक्षयोपशमोपशमलक्षणं सास्वादनवेदकलक्षणं च। तथा चैवोत्पत्तिकारणवशादेकरूपाया अप्युपरिष्टाद् भेदो निदर्शयिष्यते। यतः कस्याश्चित् स्वभाव एव निमित्तम् उत्पद्यमानायाः, कस्याश्चिच्चोपदेशो निमित्तम्, इत्यमुं च पाश्चात्यभेदमाश्रित्य भेदद्वयं विधानतो वक्ष्यति। चकारः समुच्चये। **विस्तरेण** इति सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रमित्येष त्रिविधो मोक्षमार्ग इत्यमुं समासव्याख्याभेदमङ्गीकृत्य इहैव सूत्रे वक्ष्यमाणं, तत्र सम्यगिति प्रशंसार्थो निपात इत्यादिकं सङ्क्षेपमाश्रित्य वक्ष्यमाणो विस्तीर्णोऽभिमतस्तत्त्वार्थश्रद्धानं सम्यग्दर्शनं इत्यादिरतो विस्तरेणेत्याह। **उपदेक्ष्याम** इति भणिष्यामः स्वपरानुग्रहार्थम्। यदि तं हि लक्षणविधानाभ्यामुत्तरत्रोपदेक्ष्यसि ततस्तमेव ब्रूहि किमनेनाद्यसूत्रोपन्यासेन सङ्क्षेपार्थाभिधायिनाऽनर्थकेनेति चोदितः प्रत्याह-**शास्त्रानुपूर्वीविन्यासार्थ**मित्यादि। मुख्यपुरुषार्थसाधनसाध्याव्यभिचारशासनात् शास्त्रमिष्टं प्रमाणप्रमेयसिद्धिनिरूपणं च, तस्यानुपूर्वी—क्रमः—परिपाटी, तस्या विन्यासो रचना, तत्प्रयोजनार्थम्, तुशब्दाल्लाभक्रमप्रदर्शनार्थं च। शुश्रूषूणां चादरप्रतिपादनार्थमिदमुच्यते। अविशिष्टपदार्थाभिधानं उद्देशः, तन्मात्रमिदं सम्यग्दर्शनादिसूत्रमभिधीयते सङ्ग्रहप्रतिज्ञानात्, एतत् कथयत्यादौ सम्यग्दर्शनं लक्षणविधानाभ्यां निर्धारयिष्यामि, ततो ज्ञानं, ततश्चारित्रमित्येषा वक्ष्यमाणरचनेति प्रतिपद्यस्व। अयं च लाभक्रमः सम्यग्दर्शनादीनां, पूर्वं सम्यग्दर्शनज्ञाने, ततश्चारित्रमुत्पत्ताविति। शिष्याणां चात्र ग्रहणादिषु प्रवर्तमानानां न शक्यं वचनमन्तरेणादराधानमित्यतः सकलशास्त्रसङ्ग्राहीदमादावुच्यते सूत्रम्। आह परः, उच्यतां नाम तथा, किं तूच्यमानेऽस्मिन्नन्वेवं भवितव्यम्—सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गा इति, अभिधानस्याप्यभिधेयमाश्रित्य वचनं प्रवर्तते, मोक्षमार्गशब्दस्य सम्यग्दर्शनादीन्यभिधेयानि तेषां

च बहुत्वात् बहुवचनेनैव भवितव्यमिति। उच्यते—प्रेक्षापूर्वकारितानुमीयते सूत्रकारस्यैवमभिदधतः, यतो मोक्षमार्गा इत्युक्ते एकैकस्यैतत्परनिरपेक्षस्य मोक्षं प्रति साधनभावो गम्येत, न चैतदिष्टम्, यतः समुदितैरेव दर्शनादिभिः साध्या मुक्तिः न व्यस्तैरिति, एतदाह—**एतानि च समस्तानि मोक्षसाधनानीत्यादि,** । **एतानि** प्राक् प्रत्यक्षीकृतानि सम्यग्दर्शनादीनि व्यपदिश्यन्ते, **चशब्दो** हिशब्दार्थे निपातानामनेकार्थत्वात् हिशब्दश्च यस्मादर्थः । **समस्तानि** इति सर्वाणि, सम्यग्दर्शने सत्यपि यदि ज्ञानं न भवति तयोश्च सतोर्यदि क्रिया न विद्यते तत इष्टमर्थं न साधयति, रोगापनयनलक्षणमारोग्यमिव रोगिणः । यथा ह्यारोग्यार्थिरोगिणः भेषजे रुचिस्तद्विषयं च परिज्ञानमिदमेवौषधमस्य व्याधेरपनयनकारि, सति चैतस्मिन् द्वये यदि सम्यग्ज्ञानपूर्विकायां पथ्याद्यभ्यवहरणक्रियायां विशेषेण वा प्रवर्तते ततोऽस्य रोगाः प्रणश्यन्ति नान्यथा, एवमिहापि त्रितयं समुदितं त्रिफलाद्युपदेशवत्सिद्धेः सकलकर्मक्षयलक्षणायाः साधनभावं बिभर्ति ॥ अर्थापत्त्या सिद्धेऽप्याह वचसा स्पष्टं अर्थापत्तिलभ्यफलप्रदर्शनाय । यथा—**एकतराभावेऽप्यसाधनानीत्यतस्त्रयाणामित्यादि** । सम्यग्दर्शनादीनां त्रयाणां **एकतरस्याप्यभावे**ऽलाभे, **असाधनानि**—अनिर्वर्तकानि, अस्मात् कारणात् त्रीण्यपि मोक्षमार्गशब्दः समुदितान्यभिधेयीकृत्य प्रवृत्त इत्येकत्वात् तस्य समुदायस्यैकवचनमेव न्याय्यमिति, **अतस्त्रयाणां** सम्यग्दर्शनादीनां **ग्रहणमाश्रयणं मोक्षार्थिना कार्यमिति** । एकतराभावेऽप्यसाधनानीत्यमुं ग्रन्थमपुनरुक्तं मन्यमाना गुरवः कथयन्त्येवं—उपात्तं साध्यं मोक्षं न साधयन्ति व्यस्तानि, यत्पुनः प्रत्येकमेषां साध्यम् तत्साधयन्त्येव, यथा सम्यग्दर्शनस्य देवलोकप्रापणसामर्थ्यं, ज्ञानस्य ज्ञेयपरिच्छेदः, क्रियायाः शुभाशुभकर्मादानं देशक्षयो वा कर्मणामिति । अथवा विवरणग्रन्थेषु न गुरुलाघवं प्रत्याद्रियन्ते सूरयः, अर्थापत्त्यनभिज्ञानामप्युपदेशप्रवृत्तेः ।

मार्ग इति एकवचने फलम्

बहूनां कारणता

अथवा एतानि चेत्यन्यथा व्याख्यायते, य एवं चोदयन्ति किमर्थमिति बहु मोक्षकारणतयाऽभ्युपेयन्ते सम्यग्दर्शनादीनि, न पुनर्यथा साङ्ख्यादिभिर्ज्ञानमेव केवलं मुक्तिकारणमभ्युपगम्यते, यतः "पञ्चविंशतितत्त्वज्ञ" इत्यादि कथयन्ति । उच्यते—न केवलं ज्ञानं मुक्तेः कारणं पर्याप्तं, क्रियारहितत्वात् पङ्गुवत्, न च क्रियामात्रम्, विशिष्टज्ञानरहितत्वात् अन्धवत्, अतोऽभ्युपेहि समस्तानि सम्यग्दर्शनादीनि मोक्षकारणान्येकतराभावेऽप्यसाधनानि अतः कारणात् त्रयाणां ग्रहणं कृतम् ॥ अथ यदा दर्शनादीनामेकं प्राप्तं भवति तदा परस्यावस्थानमस्ति ? नास्तीत्याह—भजना कार्या। अत्र तां दर्शयति—**एषां च पूर्वस्य लाभे भजनीयमुत्तरं, उत्तरलाभे तु नियतः पूर्वलाभ** इत्यादि । एषामिति, दर्शनादीनां सूत्रोक्तानाम्, चशब्दः समुच्चये । कथमिति चेत् , यथैव समस्तानां मुक्तिहेतुता प्रतिपन्ना एवमिदमपि

---

१ 'एकैकस्येतरनि०' इति ख–पाठः । 'एकैकस्यैतस्य तत्परनि०' इति ग–पाठः । २ 'साधयन्ति' इति ग–पाठः । ३ 'विशेषणे' इति ग–टी–पाठः ।

च प्रतिपत्तव्यम् । किं तदिति चेत्, उच्यते-लाभनियम इति। **पूर्वस्य लाभ** इति सूत्रक्रममङ्गीकृत्य **पूर्वस्य**-सम्यग्दर्शनस्य **लाभे**-प्राप्तौ **भजनीयं**-विकल्पनीयं स्यात् वा न वेति, उत्तरं, ज्ञानं चारित्रं च, यतः देवनारकतिरश्चां मनुष्याणां च केषाञ्चिदाविर्भूतेऽपि सम्यग्दर्शने न भवत्याचारादिकमङ्गप्रविष्टं ज्ञानम्, न वा देशसर्वचारित्रमिति। तथा प्राप्तेऽपि ज्ञाने केनचित् न चारित्रं नियमत एव प्राप्तव्यम्, तदावरणीयकर्मोदयादिति, अतः कैश्चिदेवं भाष्यमेतद् व्याख्यायि-परमार्थतो यस्मात् त्रीण्यपि सम्यग्दर्शनादीनि भिन्नानीति । कथं हि भेदः सम्यग्दर्शनस्य ज्ञानादिति चेत्, त एवं वर्णयन्ति पृष्टाः[1], कारणभेदात् स्वभावभेदादित्यादिना, कारणभेदस्तावदयम्, यतः सम्यग्दर्शनस्य त्रितयं कारणं समुत्पत्तौ, क्षयोपशमः क्षयः उपशमश्चेति । ज्ञानस्य तु क्षयः क्षयोपशमो वा, यदि च न तयोर्भेदः किमिति दर्शनस्य त्रिविधं कारणम् इतरस्य द्विविधम् ? । तथा स्वभावभेदोऽप्यस्ति, यज्जैनेषु पदार्थेषु स्वतः परतो वा रुचिमात्रमुपपादि 'तदेव सत्यं निःशङ्कं यज्जिनैः प्रवेदितमुपलब्धं चे'ति । तथा विषयभेदोऽप्यस्ति, सर्वद्रव्यभावविषया रुचिः सम्यक्त्वं "सव्वगयं[2] सम्मत्तं" इति वचनात्, श्रुतज्ञानं तु सकलद्रव्यगोचरं कतिपयपर्यायावलम्बि चेत्येवं किल पारमार्थिकं भेदं पश्यद्भिर्भाष्यं व्याख्यातम् । अपरे तु, ज्ञानदर्शनयोः समीचोर्भेदमप्रेक्षमाणाः प्रभाषन्ते, **एषां च पूर्वस्य** द्वयस्य सम्यग्दर्शनस्य सम्यग्ज्ञानस्य च **लाभे**-प्राप्तौ, **भजनीयं** स्याद् वा न वेति, **उत्तरं** चारित्रम्, **उत्तरस्य** तु सूत्रक्रमोपन्यस्तस्य सम्यक्चारित्रस्य **लाभे नियतो** निश्चितः **पूर्वलाभ** इति-पूर्वयोः सूत्रक्रमव्यवस्थितयोः सम्यग्दर्शनसम्यग्ज्ञानयोर्लाभः-प्राप्तिरिति, अन्यथा तत् सम्यक्चारित्रमेव न स्याद् यदि ताभ्यामनुगतं न स्यादिति ॥ ननु कथं कारणादिकं भेदं न पश्यन्ति ? । उच्यते-मतिज्ञानस्यैव रुचिरूपो योऽपायांशस्तत् सम्यग्दर्शनम्, ज्ञानादृतेऽन्यत् सम्यग्दर्शनं न समस्ति। कारणादिभेदस्त्वन्यथा व्याख्यायते[3], योऽसावुपशमोऽनन्तानुबन्ध्यादीनां स तस्य सम्यग्दर्शनस्योत्पत्तौ निमित्तं भवति, यथा केवलज्ञानस्योत्पत्तौ मोहनीयक्षयः, न पुनस्तदेव मोहनीयं केवलस्यावरणमिति शक्यमभ्युपगन्तुं, निमित्तं तु मोहनीयक्षयः तेनाक्षीणेन केवलस्यानुत्पत्तेः, एवमिहापि यावदसावनन्तानुबन्ध्यादीनामुपशमो न भवति न तावत् सम्यग्दर्शनपर्यायस्याविर्भावः, न पुनस्तदेवानन्तानुबन्ध्याद्यावरणं सम्यग्दर्शनस्य। किं पुनरावरणमिति चेत्, ज्ञानावरणमेव, तावच्चेदं क्षयोपशमं न प्रतिपद्यते यावदनन्तानुबन्ध्यादीनां नोपशमः समजनीति । अनन्तानुबन्ध्याद्युपशमे सति तदुपजायत इत्युपशमसम्यग्दर्शनं भण्यते, स्वावरणक्षयोपशममङ्गीकृत्य क्षयोपशमजमेतदुच्यते, तस्मात् परत उपशमव्यपदेशो न स्वावरणापेक्षया इति । तथा स्वभावभेदः पूर्वपक्षवादिना योऽभ्यधायि तत्राप्येवं पर्यनुयोगः कर्तव्यः-कोऽयमभिलाषो

सम्यग्दर्शनात् सम्यग्ज्ञानस्य भिन्नता

---

१ 'श्रेष्ठाः' इति क-ख-पाठः । २ सर्वगतं सम्यक्त्वं (आव० नि०) । ३ 'प्रकाश्यते' इति क-ख -पाठः ।

रुचितत्त्वलक्षणोऽन्यो मत्याद्यपायांशं विरहय्येति । एवं विषयभेदोऽपि निराकार्य इति । तस्मात् ज्ञानस्यैव विशिष्टावस्थाऽन्यमतपरिकल्पिततत्त्वनिरासतो जिनवचनोन्नीतपदार्थश्रद्धानलक्षणा सम्यग्दर्शनव्यपदेशं प्रतिलभत इति न्याय्यम् । इदानीं सूत्रोपन्यस्तसम्यग्दर्शनाद्यवयवानां प्रतिविभागतः करोत्यर्थप्रतिपादनम्–तत्र **सम्यगिति प्रशंसार्थो निपात** इत्यादिना । तत्रेत्यनेन सम्यग्दर्शनशब्दे ज्ञानादिषु च यः सम्यक्शब्दः स किमर्थान्तरमुररीकृत्य प्रवृत्तः ? नामाख्यातादीनां किमेतत् पदमिति पर्यनुयोगे सत्याह–**सम्यगिति** । इतिशब्दोऽर्थाद्व्युदस्य स्वरूपे स्थापयति, सम्यक्शब्द इत्यर्थः । प्रशंसा, अविपरीतता यथावस्थितपदार्थपरिच्छेदिता, साऽभिधेया वाच्याऽस्येति **प्रशंसार्थः**, निपात्यतेऽर्थाविद्योतकतया **निपातः** । इदं च किल निसर्गसम्यग्दर्शनाङ्गीकरणाद् व्याख्यानमव्युत्पत्तिपक्षाश्रयं परिगृह्यते, यतस्तत्पूजिततरं स्वत एवोपजायमानत्वात्, तदितरत् तु यद्यपि तथैवाविपरीतार्थतया विषयमवच्छिनत्ति तथापि तत्र परसाहायिकमस्ति तदस्मिन् पक्षे नावश्यतया श्रितम् ।एवं तावत् प्रकृतिप्रत्ययमनालोच्य सम्यक्शब्दार्थो निरूपितः, व्युत्पत्तिपक्षेऽप्यर्थप्रदर्शनायाह—**समञ्चतेर्वा** । सम्पूर्वादञ्चतेः साध्यमेतद्रूपमिति, अर्थः पुनः गतिः पूजा वाश्रयणीयेति, तत्र पूजा पूर्वव्याख्यानेन दर्शिता, इह तु गत्यर्थो वर्ण्यते, समञ्चति गच्छति व्याप्नोति सर्वान् द्रव्यभावानिति सम्यक् । कः कत्रर्थ इति चेत् यदेतद् दर्शनं रुचिरूपं तत् समञ्चति व्याप्नोति एवमेते जीवादयोऽर्थाः यथा नयसामग्र्या जैनैराख्यायन्ते, न पुनरेकनयावलम्बिसाङ्ख्यवत् प्रतिपद्यन्ते, नित्या एवैते, अनित्या इति वा शाकलिकचीवरकवत् , न सन्ति वा लौकायतिकवदिति, कथञ्चित्सन्ति (कथञ्चिन् न सन्ति )[1] कथञ्चिन्नित्याः कथञ्चिदेवानित्याः द्रव्यपर्यायनयद्वयप्रपञ्चापेक्षयेत्या[2]विष्करिष्यामः पञ्चमाध्याये । एवं च तत्र यदा दृष्टिः प्रवर्तते तदा सम्यगिति कथ्यते । वाशब्दो विकल्पप्रदर्शनाय । एतस्मिंश्च पक्षे किलाधिगमसम्यग्दर्शनं कथितम्, यतस्तदेव प्रायोवृत्त्या द्रव्यपर्यायनयसमालोचनेन गुरूपदेशपूर्वकमितिकृत्वा यथावदवगच्छति शास्त्राद्यभ्यासादिति । एवं सम्यक्शब्दं निरूप्य सम्प्रति दर्शनशब्दार्थकथना, यतः अनेकस्मिन् कारके च ल्युट् सम्भाव्यते करणादिके पश्यति स तेन तस्मिंस्तस्मादित्यादि, अतो विशिष्ट एव कारके भावाख्ये दृश्यत इत्यादि—**भावो दर्शनमिति** । दृष्टिर्या अविपरीतार्थग्राहिणी जीवादिकं विषयमुल्लिखन्तीव प्रवृत्ता सा सम्यग्दर्शनम् । अथ किमर्थमन्यानि कारकाणि निरस्य भावकारकमादिदेश भाष्यकारः ? उच्यते–ज्ञानमेव तत् तादृशं मुख्यया वृत्त्या तथाऽवस्थितं, ये तु तत्र करणादिव्यपदेशास्त उपचरिता इति कृत्वा न तेष्वादर इति भावं दर्शितवान् । **दृशेरिति** । एतत्पूर्वेण वा सम्बन्धमुपयाति दृशेर्यदेतद्दर्शनमिति रूपमेतत् भावे भावाभिधायि प्रतिपत्तव्यम्, अथवा परेण दृशेः प्राप्तिरुपलब्धिर्वाच्या सा चैवंरूपा, **अव्यभिचारिणीत्या**दि । व्यभिचरत्यवश्यमिति—

सप्रत्ययसम्यक्शब्दार्थः

---

१ धनुश्चिह्नितः अयं **ख**—पाठः । २ 'नयप्रपञ्चा' इति **क**–**ख**–पाठः ।

व्यभिचारिणी, सा च एकनयमतावलम्बिनी, सामान्यमेवास्ति न विशेषाः सन्ति, विशेषमात्रं वा समस्ति न सामान्यमित्यादिका, यतः सा नयान्तरेणापक्षिप्यते असत्यत्वात्, अतो व्यभिचारिणी, न व्यभिचारिणी अव्यभिचारिणी, का, या सर्वान्नयवादान् साकल्येन परिगृह्य प्रवृत्ता कथञ्चित् सामान्यं द्रव्यास्तिकाज्ञाच्छन्दतः सत्यं विशेषाश्च पर्यायावलम्बनमात्रसत्या इत्यादिप्रपञ्चेनाव्यभिचारिणी, तां कथयति—**सर्वेन्द्रियानिन्द्रियार्थप्राप्तिरिति** ।

इन्द्रियानिन्द्रियप्राप्तिस्वरूपम्

**सर्वाणि** निरवशेषाणि, **इन्द्रियानिन्द्रियाणि**, इन्द्रस्याजीवस्य लिङ्गानि श्रोत्रादीनि पञ्च, अनिन्द्रियं, मनोवृत्तिरोघज्ञानं चेति । श्रोत्रादीनां पञ्चानां द्वयोश्चानिन्द्रिययोरर्थो विषयः शब्दादिः परिच्छेद्यः, श्रोत्रादिपरिच्छिन्नार्थानुसन्धायि च मनोविज्ञानमनुप्रवृत्तेः । ओघज्ञानमनिन्द्रियजमेवेन्द्रियानुसारिविज्ञाननिरपेक्षं, 'पृष्ठत उपसर्पन्तं सर्पं बुद्ध्यैव पश्यन्ती'ति वचनात्, वल्ल्यादीनां नीव्राद्यभिसर्पणज्ञानं क्वचिन्मनोनिरपेक्षमिति, अतस्तेषामिन्द्रियानिन्द्रियार्थानामुपलब्धिः–प्राप्तिः स्वतः परतो वा तदर्थप्रकाशनोत्तरकालभाविनी ग्राह्या, न तु तेषां सर्वेन्द्रियाद्यर्थानां सन्निकर्षमात्रप्राप्तिरभिप्रेता, न च सर्वेन्द्रियाणां स्वेन विषयेण सहाश्लेषः समस्ति, यतश्चक्षुः स्वदेशस्थं योग्यदेशव्यवस्थितं रूपमारूपयति, नास्य गमने सामर्थ्यमस्ति, अप्राप्यकारित्वात् । श्रोत्रादीनि तु प्राप्तार्थग्राहीणि, प्राप्यकारित्वात् चत्वारि, मनोविज्ञानं तु तत्पृष्ठानुसारिविकल्पकम्, अतोऽव्यभिचारिणी सर्वेन्द्रियाद्युपलब्धिः, इदमेव तत्त्वं परमार्थः शेषः परमार्थो न भवति । **एतत्सम्यग्दर्शनम्** । सम्प्रति निपाते सम्यक्शब्दे गृहीते योऽर्थस्तं भावार्थं च दर्शयति—**प्रशस्तं दर्शनं सम्यग्दर्शनमिति** । अविपरीतानां द्रव्यभावानां जगन्नाथाभिहितानामालम्बिका प्रवृत्तिः रुचिलक्षणा सा प्रशस्तं दर्शनमिति, प्रशस्तमुक्तिसुखहेतुत्वात् । तथा व्युत्पत्तिपक्षाश्रितो योऽर्थस्तं कथयति—**सङ्गतं वा दर्शनं सम्यग्दर्शनमिति** । नित्यानित्यसदसत्सामान्यविशेषेषु जैनप्रवचनानुसारात् तस्यैव विज्ञानस्य नयद्वयसमारोपणेन च प्रवृत्तिः सा सङ्गतमिति व्यपदिष्टा । एवं सम्यग्दर्शनशब्दावयवान्वाख्यानं कुर्वता भाष्यकृता सम्यग्ज्ञानचारित्रयोरपि काका कृतम् । सम्यग्ज्ञानशब्देऽपि सम्यक्शब्दः प्रशंसार्थो निपातः समञ्चतेर्वा, ज्ञानमिति च भाव एव, एवं चारित्रमपि, स्वस्थाने च विशेषमाविष्करिष्याम इति ॥ १ ॥

सम्प्रति सम्यग्दर्शनादीनां यथाक्रमसन्निविष्टानामाद्यस्यैव लक्षणं **यथोद्देशस्तथा निर्देश** इत्यभिधातुकाम आह—"तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्" (१–२)। '**पदाक्षरवचनवाक्यानामभिप्रायविवरणं व्याख्ये**'ति वचनात् । प्रागवाचि वाचकमुख्येन "लक्षणतो विधानतश्चोपदेक्ष्यामः" ( १–१ ) इति, सत्यपि प्रमाणनयनिर्देशसदसदाद्यनेकानुयोगद्वारव्याख्याविकल्पे पुनः पुनस्तत्र तत्रैतदेव द्वयमुपन्यस्यन् भाष्याभिप्रायमाविष्करोति सूरिः लक्षणविधाने एवास्मिन् शास्त्रे च प्रधानाधिकारिके इत्यतो लक्षणमुपन्यस्यति । अत्र पर्यायनि-

भेदप्रभेदादिभिः पदाद्यभिप्रायः प्रकाशनीयः, तत्र प्रधानशब्दस्य तदर्थशब्दान्तराणि पर्यायाः, प्रकृतिप्रत्ययादिनिर्भेदेन तथा गृहीतान्वर्थशब्दविवरणं निर्भेदः, तथा वाक्यान्तरेण निरूपणं प्रभेदः, तत्रेदं सूत्रं वाक्यान्तरनिरूपणद्वारेण प्राणायि सूरिणा। अथवा समुदायो मुक्तेः कारणतया निरूपित इति, न च समुदायिष्वपरिज्ञातेषु तत् परिज्ञानमस्तीत्याद्यस्य लक्षणप्रचिकासयिषया सूत्रं पपाठ ॥

## सूत्रम्—तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ १-२ ॥

**टी०—तत्त्वार्थेत्यादि**। अनेकसमासकल्पनासम्भवे यत्र सुखेन बुद्धिराधातुं शक्यते प्रतिपिपादयिषितार्थप्रवणा तां कल्पनामुपन्यस्यति ॥

**भा०—तत्त्वानामर्थानां श्रद्धानं, तत्त्वेन वा अर्थानां श्रद्धानं तत्त्वार्थश्रद्धानं, तत् सम्यग्दर्शनम्। तत्त्वेन भावतो निश्चितमित्यर्थः। तत्त्वानि जीवादीनि वक्ष्यन्ते ( १-४ )। त एव चार्थाः, तेषां श्रद्धानं तेषु प्रत्ययावधारणम्। तदेवं प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं तत्त्वार्थश्रद्धानं सम्यग्दर्शनमिति ॥ २ ॥**

**टी०—तत्त्वानामर्थानामिति**। **तत्त्वानाम्** अविपरीतानां, के वा अविपरीताः? ये स्याद्वादकेसरिगोचरमनतिक्रम्य स्थिताः, ये त्वेकनयकल्पकविलोकितास्ते विपरीताः। **अर्थानामिति**, अर्यमाणानां स्वैः स्वैर्ज्ञानविशेषैः परिच्छिद्यमानानां, **श्रद्धानं** रुचिरभिप्रीतिः सम्यग्दर्शनं, यथाऽर्हता विगतरागद्वेषप्रपञ्चेन जगदे जगदेकबन्धुना तथेदं सत्यं जीवादिवस्तु।

तत्त्वार्थस्यार्थः

ननु च व्यभिचारे सति विशेषणविशेष्यकल्पना न्याय्या यथा नीलोत्पलादिषु, इह तु यत् तत्त्वं तन्नार्थं विहायान्यद् भवितुमर्हति अर्थो वा तत्त्वमन्तरेणेति यदेव तत्त्वं स एवार्थो य एव चार्थस्तदेव तत्त्वमिति पुनरुक्तारेका। उच्यते। परमतापेक्षं विशेषणमित्यर्थस्य तत्त्वमुपात्तं, यतः काणभुजमतनिरूपितो बुद्धकपिलाद्युक्तश्चार्थो व्यभिचारी, सत्ताद्रव्यत्वादिसामान्यविशेषरूपं परित्यक्तपरस्परस्वात्मा खपुष्पवदसन्नेवेष्यते, नहि विशेषाः सम्भावयितुं शक्याः अन्वयिनैकेन शून्याः, न चास्ति सामान्यं, निर्विशेषत्वात् इत्यादिदोषसंस्पर्शपरिजिहीर्षया विशेषणमाश्रीयते, तस्यानर्थत्वादेकनयाभिप्रायमात्रत्वादिति, अतो व्यभिचाराद् युक्तं तत्त्वशब्दोपादानम्, स्वमतमप्यङ्गीकृत्यैकनयावलम्बनमनर्थ एव तत्त्वशब्देन व्युदस्यते ॥ अथवा किमस्माकं परमतेनैकनयावलम्बनेन च यदेव निःशङ्कं तदेवाश्रयाम इति विग्रहान्तरं दर्शयन्नाह—**तत्त्वेन वाऽर्थानां श्रद्धानमिति**। इदमप्यर्थकथनं न तु त्रिपदस्तृतीयातत्पुरुषः सम्भवति, एवं च दृश्यम्-अर्थानां श्रद्धानमर्थश्रद्धानं तत्त्वेनार्थश्रद्धानं तत्त्वार्थश्रद्धानमिति, वाशब्दः पक्षान्तरप्रदर्शनार्थः, अयं वा पक्ष आस्थेय इति। तत् इति पूर्वसूत्रोक्तं निर्दिशति

**सम्यग्दर्शन**मिति लक्ष्यं लक्षति, तत्त्वेनेति कोऽर्थ इत्यत आह—**तत्त्वेन भावतो निश्चितमित्यर्थ** इति। तत्त्वेनेत्यस्य विवरणं, भावेनेति चोपयुक्तस्य निश्चयनयमताल्लभ्यत इति कथयति। अथवा भावेनेति स्वप्रतिपत्त्या, नो मातापित्रादिदाक्षिण्यानुरोधात् न वा धनादिलाभापेक्षकृतकमात्रश्रद्धानं निश्चितपरिज्ञानं तदेव तथ्यं यज्जिनैर्भाषितमुपलब्धं वा, इत्येवं समासकल्पनाद्वयं निर्दिश्यावयवार्थं दर्शयन्नाह—**तत्त्वानी**त्यादि। **तत्त्वानि** इत्यविपरीतभावव्यवस्थानि नियतानि **जीवादीनि** इति। जीवा उपयोगलक्षणा (२-८) आदिर्येषां सूत्रक्रममाश्रित्य तानि जीवादीनि। तत्त्वार्थशब्दयोर्विशेष्यकल्पनामाश्रित्याह—**त एव चार्था** इति। त एव चेति अर्थापेक्षया पुंल्लिङ्गनिर्देशः, **त एव** जीवादयः, **अर्था** अर्यमाणत्वाद् अनादिसादिपारिणामिकादिना भावेन जीवपुद्गला अनादिपारिणामिकेन च जीवत्वेनोपयोगस्वरूपेण सादिपारिणामिकेन च मनुष्यनारकतिर्यग्देवादिना, पुद्गला अप्यजीवत्वेनानुपयोगस्वरूपेणानादिपारिणामिकेन च सादिपारिणामिकेन कृष्णनीलादिना परिच्छिद्यमानत्वात् अर्था इत्युच्यन्ते। धर्माधर्माकाशास्तु अनादिपारिणामिकेनैव गतिस्थित्यवगाहस्वभावेन परिच्छिद्यन्ते, यतो न कदाचित् तामवस्थामत्याक्षुस्त्यजन्ति त्यक्ष्यन्ति वा। परतस्तु सादिपारिणामिकेनापि परिच्छिद्यन्त एव, यथोक्तमाकाशादीनां त्रयाणां परप्रत्ययो नियमत इत्यतः परिच्छिद्यमानत्वादर्था इत्युच्यन्ते॥ श्रद्धानमित्यस्यार्थं निरूपयति—**श्रद्धानं तेषु प्रत्ययावधारण**मिति। अनेन श्रद्धानमित्येतल्लक्षणं तेषु प्रत्ययावधारणमिति कथयति। तेषु इति जीवादिषु॥ ननु च षष्ठ्यर्थं प्राक् प्रदर्श्य सप्तम्यर्थकथनमिदानीमसाम्प्रतमिति। उच्यते—एतत् कथयति, प्रायः षष्ठीसप्तम्योरभेद एव दृश्यते, यथा गिरेस्तरवः गिरौ तरव इति, ये हि तस्यावयवास्ते तस्मिन् भवन्ति, एवमत्रापि यज्जीवादीनां श्रद्धानं तज्जीवादिषु विषयेषु भवतीति न दोषः। **प्रत्ययावधारणमिति**, प्रत्ययेन प्रत्ययात् प्रत्यये प्रत्ययस्यावधारणमिति। यदा तावत् प्रत्ययेनावधारणं, तदा आलोचनाज्ञानेन श्रुताद्यालोच्य एवमेतत् तत्त्वमवस्थितमित्यवधारयति। अवधारणमिति च कर्तरि भावे वा, जीवोऽवधारयति, तस्य चावधारणं रुचिरिति। अथवा प्रत्ययेनेति कारणेन निमित्तेनावधारणम्। किं निमित्तमिति चेत्, तदावरणीयकर्मणां क्षयः क्षयोपशमो वा, तेन निमित्तेनावधारयति एतदेव तत्त्वम्। अथवा उत्पत्तिकारणं प्रत्ययः, स्वभावोऽधिगमो वा, तेन प्रत्ययेन कारणेनेति, एवं तत्त्वमवस्थितमित्यवधारयति। तस्माद् वा क्षयादिकादवधारणम्। सति वा तस्मिन्नवधारयति। षष्ठीपक्षेऽपि प्रत्ययस्य-विज्ञानस्यावधारणं अन्यमतपरिकल्पिततत्त्वादपास्य तद्विज्ञानं जैन एव तत्त्वेऽवधारयति, एतदेव तत्त्वं शेषोऽपरमार्थ इति। एवं तत्त्वार्थश्रद्धानमिति विवृतं पदं, सम्यग्दर्शनमिति तु पूर्वयोग एव विवृतं न तद् विवृणोति। एतत् पुनः सम्यग्दर्शनं कथमुत्पन्नं सत् परेण ज्ञायते किं चिह्नमस्योत्पन्नस्येति? चिह्नं दर्शयति—**तदेवमित्यादि**। तद् इति तत्त्वार्थश्रद्धानं निर्दिशति। एवमित्यवय-

षष्ठीसप्तम्योः कथंचिद्भेदः

वप्रतिभागेन निर्धारितं प्रशमादिचिह्नमवबुध्यस्व । सुपरीक्षितप्रवक्तृप्रवाच्यप्रवचनतत्त्वाभिनिवेशाद् दोषाणामुपशमात् **प्रशम** इत्युच्यते, इन्द्रियार्थपरिभोगव्यावृत्तिर्वा प्रशमः, तस्य प्रशमस्याभिव्यक्तिः–आविर्भावश्चिह्नं लक्षणं भवति सम्यग्दर्शनस्य। यो ह्यतत्त्वं विहायात्मतातत्त्वं प्रतिपन्नः स लक्ष्यते सम्यग्दर्शनसम्पन्न इति। **संवेगः**–सम्भीतिः जैनप्रवचनानुसाराद् यस्य भयं नरकादिगत्यवलोकनाद् भवति, त एव जीवाः स्वकृतकर्मोदयान्नरकेषु तिर्यक्षु मनुजेषु महद् दुःखं शारीरमानसशीतोष्णादिद्वन्द्वापातजनितं भारारोपणाद्यनेकविधं दारिद्र्यदौर्भाग्यादि चानुभवति तद् यथैतन्न न भविष्यति तथा यत्नं करोमीत्यनेनापि संवेगेन लक्ष्यते, समस्त्यस्य सम्यग्दर्शनमिति । **निर्वेदो**–विषयेष्वनभिषङ्गोऽर्हदुपदेशानुसारितया यस्य भवति, यथेहलोक एव प्राणिनां दुरन्तकामभोगाध्यवसायोऽनेकोपद्रवफलः परलोकेऽप्यतिकटुकनरकतिर्यग्मनुष्यजन्मफलप्रद इत्यतो न किञ्चिदनेन उज्झितव्य एवायमतिप्रयत्नेनेत्येवंविधनिर्वेदाभिलक्ष्यं सम्यग्दर्शनमिति। **अनुकम्पा**–घृणा कारुण्यं सत्त्वानामुपरि, यथा सर्व एव सत्त्वाः सुखार्थिनो दुःखप्रहाणार्थिनश्च, नैतेषामल्पाऽपि पीडा मया कार्येति निश्चित्य चेतसाऽऽर्द्रेण प्रवर्तते स्वहितमभिवाञ्छन्नित्यनेनापि चिह्नयते रुचिस्तत्त्वप्रवणा। **आस्तिक्यमिति** अस्त्यात्मादिपदार्थकदम्बकमित्येषा मतिर्यस्य स आस्तिकः तस्य भावः तथापरिणामवृत्तिता आस्तिक्यम्, सन्ति खलु जैनेन्द्रप्रवचनोपदिष्टा जीवपरलोकादयः सर्वे[1]ऽर्था अतीन्द्रिया इति, एवंरूपेणाप्यास्तिक्येन ज्ञायते सम्यग्दर्शनयुक्तोऽयमिति । अत एवैषां प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यानां **अभिव्यक्तिः**–उद्भवो–जन्म सैव लक्षणं–चिह्नमस्योत्पन्नस्येति। मौनीन्द्रप्रवचनानुसाराच्च, यदा प्रशमादय आश्रीयन्ते तदा यदपरे चोदयन्ति मिथ्यादृष्टेरप्येवं सम्यग्दर्शनं चिन्हयेतेति तद् दूरो[2]पास्तं भवति। नहि तेषामर्हदुपदेशानुसारात् प्रशमादयो जायन्ते, तद्विपरीतमिथ्याज्ञानसमन्वयात् तु यथाकथञ्चिदविदितपरमार्थाः प्रवर्तमानाः प्रशमादिवातेन पीड्यन्ते। सम्प्रति व्याख्याय रुचेर्लक्षणं निगमयति—**तत्त्वार्थश्रद्धानं सम्यग्दर्शनमिति**। सामानाधिकरण्यं चातः कृतवान्, न यतोऽस्त्यनयोरन्यत्वरूपो भेद इति यथाग्नेर्भिन्नरूपो धूमः, यथाऽग्निरुष्ण इत्येवं तत्त्वार्थश्रद्धानं सम्यग्दर्शनमिति ॥ २ ॥

एवं निर्धारिते सम्यग्दर्शनस्वरूपे आह–सर्वं ह्युत्पद्यमानं वस्तु हेतुमपेक्ष्योत्पद्यते घटादय इव मृदादिना, एवमिदं प्रागवस्थायां मिथ्यादृष्टेरप्रकटीभूतमुत्तरकालमुपजायमानं प्रशमादिना लक्ष्यते, तस्य पुनरुत्पत्तौ को हेतुरित्युच्यते—

## सूत्रम्—तन्निसर्गादधिगमाद् वा ॥ १–३ ॥

**टी०**–तच्छब्द एतच्छब्दार्थे मत्वेत्याह—

१ 'सर्वेषामतीन्द्रियाः' इति ख–पाठः। २ 'दूरादपास्तं' इति क-ख-पाठः।

निसर्गाधिगम-वर्णनम्

**भा०—तद् एतत् सम्यग्दर्शनं द्विविधं भवति। निसर्गसम्यग्दर्शनम् अधिगमसम्यग्दर्शनं च। निसर्गादधिगमाद् वोत्पद्यत इति द्विहेतुकं द्विविधम्। निसर्गः परिणामः स्वभावः अपरोपदेश इत्यनर्थान्तरम्। ज्ञानदर्शनोपयोगलक्षणो जीव इति वक्ष्यते (२-८)। तस्यानादौ संसारे परिभ्रमतः कर्मत एव कर्मणः स्वकृतस्य बन्धनिकाचनोदयनिर्जरापेक्षं नारकतिर्यग्योनिमनुष्यामरभवग्रहणेषु विविधं पुण्यपापफलमनुभवतो ज्ञानदर्शनोपयोगस्वाभाव्यात् तानि तानि परिणामाध्यवसायस्थानान्तराणि गच्छतोऽनादिमिथ्यादृष्टेरपि सतः परिणामविशेषादपूर्वकरणं तादृग् भवति येनास्यानुपदेशात् सम्यग्दर्शनमुत्पद्यत इत्येतत् निसर्गसम्यग्दर्शनम्॥ अधिगमः अभिगम आगमो निमित्तं श्रवणं शिक्षा उपदेश इत्यनर्थान्तरम्। तदेवं परोपदेशाद् यत् तत्त्वार्थश्रद्धानं भवति तदधिगमसम्यग्दर्शनमिति॥**

**टी०—तदेतदिति**। एतदित्युक्तेऽप्यनेकस्य विषयस्य प्रत्यक्षस्य एतच्छब्दवाच्यस्य सम्भवात् प्रकृतेन व्यवच्छेदं करोति—**सम्यग्दर्शन**मिति। निमित्तद्वयेनोपजायमानत्वाद् **द्विविध**मित्याह, न पुनरत्र मुख्यया वृत्त्या भेदः प्रतिपादयितुमिष्टः, कारणस्य पृष्टत्वादिति, तेनैव निमित्तद्वयेन व्यपदिशन्नाह—**निसर्गसम्यग्दर्शनं अधिगमसम्यग्दर्शनं** चेति। आत्मनस्तीर्थकराद्युपदेशदानमन्तरेण स्वत एव जन्तोर्यत् कर्मोपशमादिभ्यो जायते तत् **निसर्गसम्यग्दर्शनम्**, यत् पुनस्तीर्थकराद्युपदेशे सति बाह्यनिमित्तसव्यपेक्षमुपशमादिभ्यो जायते तत् **अधिगमसम्यग्दर्शन**मिति, **च** शब्दो भिन्ननिमित्तप्रदर्शनपरो निसर्गसम्यग्दर्शनस्य निसर्ग एव प्रयोजनमितरस्य त्वधिगम एव, न पुनरेकस्यैव सम्यग्दर्शनोत्पत्तौ द्वयं निमित्तं भवतीति एतदेव वाऽ(चा?) समासकरणे प्रयोजनं चशब्देन द्योतितमिति, इतरथा ह्येवं वक्तव्यं स्यात् निसर्गाधिगमाभ्यामिति, वाशब्दोऽपि च न कर्तव्यो भवति एकस्यैवोभयरूपस्य निमित्तस्याश्रितत्वादिति। तदेवं लघुनोपायेन सिद्धेऽर्थे यद् भिन्नविभक्तितां शास्ति तत् कथयति—भिन्ने खल्वेते[1] कारणे। अथ कथं तदेवं व्यपदिश्यते निसर्गसम्यग्दर्शनं कथं वाऽधिगमव्यपदेशं प्रतिपद्यत इत्यत आह—**निसर्गादधिगमाद् वोत्पद्यत** इति। **इति** तस्मादित्यस्यार्थे, यच्छब्दस्तु यत्तदोर्नित्यसम्बन्धादेव नीयते, यस्मान्निसर्गादधिगमाच्च कारणादुपजायते तस्मात् तेनैव व्यपदिश्यते यवाङ्कुरवत्, यत्तदपूर्वकरणानन्तरभाव्यनिवृत्तिकरणं तत् निसर्ग इति भण्यते। तस्माच्च कारणात् निसर्गाख्यादुत्पद्यते याऽसौ रुचिः सा कार्याख्या[2]। तथा योऽसौ बाह्य उपदेशः स त(य?)त्र हेतुर्भवति तत उत्पद्यते या रुचिः सा तत्कार्या भवतीत्येवं कार्या रुचिः कारणं

१ 'खल्वेव' इति क-ख-पाठः। २ 'सा तत्कार्याख्या' इति ग-पाठः।

निसर्गोऽधिगमो वेति । एवं च कार्यकारणभावे दर्शिते चोदक आह–यदि मुख्यया वृत्त्या हेतुः प्रतिपाद्यते सूत्रेण तथा सति किमेवं पुरस्ताद् व्यपादेशि[1] भवता तदेतत् सम्यग्दर्शनं द्विविधमिति ? एवं तु वाच्यमासीत्–तस्य सम्यग्दर्शनस्य द्वौ हेतू इति, तावेव सूत्रप्रतिपाद्यौ हेतू प्रदर्शनीयौ, न पुनः सूत्रेणानभिसमीक्षितं द्विविधत्वमित्येवं पर्यनुयुक्तः[2] स्माह–**द्विहेतुकं द्विविधमिति** । द्वौ निसर्गाधिगमाख्यौ प्रत्येकं असमासकरणज्ञापितौ हेतू यस्य तद् द्विहेतुकम्, स तु द्विविधमिति मया व्यपदिष्टं, एतत् कथयति कारणद्वैरूप्यात् कार्यद्वित्वं न पुनर्मुख्यभेदप्रतिपादनं प्रेप्सितं, इह तु सूत्रे निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानत इति ( १-७ ) । विधानग्रहणात् क्षयसम्यग्दर्शनादिविधानं प्रतिपादयिष्यते । यदि तदुत्पत्तौ निसर्गः कारणमभ्युपेयते तथा सति वाच्यो निसर्गः किमात्मकोऽसाविति ? उच्यते–**निसर्गः परिणामः स्वभावः अपरोपदेश इत्यनर्थान्तरमित्यादि** । निसृज्यते–त्यज्यतेऽसौ कार्यनिर्वृत्तौ सत्यामिति **निसर्गः**, नहि कार्ये उत्पन्ने कारणेनापेक्षितेन किञ्चित् प्रयोजनमस्ति, उत्पन्ने हि सम्यग्दर्शने अनिवृत्तिकरणं त्यज्यते, प्रयोजनाभावात्, न चात्यन्तं तस्य त्यागमभ्युपगच्छामो, यतस्तदेव कारणं तेनाकारेण परिणतमिति, उत्फणविफणप्रसारिताकुण्डलितभुजङ्गवत्,(उत्–) फणपरिणामेन योऽहिरजनिष्ट स एव विगतफणो मुकुलमाधाय सन्तिष्ठते, उत्थितासीनशयितनिकुटितपुरुषवद्, वा उत्थितोऽपि पुरुषः पुरुष एव निषण्णः शयितो वा,

परिणामभेदः

नावस्थामात्रभेदादवस्थावतो भेदः शक्योऽभ्युपेतुम्, परिशटितपत्राङ्कारकितपुष्पितपलाशवत् परिणामस्यानेकरूपत्वात् । परिणामिनोऽन्वयिद्रव्यस्य न सर्वथा भेदस्तत्त्वात् । एवमिहाप्यनिवृत्तिरूपो निसर्गः **परिणामः** सम्यग्दर्शनाकारेण वर्तते, पूर्वावस्थां विहाय परिणामः, अन्वयि जीवद्रव्यं तु ध्रुवं परिणामि चोक्तम्, सृजेः परिणामेऽप्रतीतत्वात् स्वभाव इत्याह । यतः परिणामो हि प्रयोगेण घटादीनां विस्रसा चाभ्रेन्द्रधनुरादीनां दृष्ट इत्यतः वैस्रसिकपरिणामं कथयत्यनेन, नासावन्येन प्राणिना तस्य क्रियतेऽनिवृत्तिरूपपरिणाम इति, स्वेनैवात्मनाऽसौ भावो जनित इति **स्वभाव** इत्युच्यते, नार्थान्तरवृत्तित्वमस्ति व्यवहारात्, निश्चयात् तु सर्वशब्दानां भिन्नार्थत्वम् । स पुनरनिवृत्तिस्वरूपपरिणामः कस्य भवति कथं वा प्राप्यते ? इत्युक्ते उत्तरं भाष्यमाह–**ज्ञानदर्शने**त्यादि । येनास्यानुपदेशात् सम्यग्दर्शनमुत्पद्यते इत्येतत्पर्यन्तं यदुक्तं कस्येति ? जीवस्येति ब्रूमः । किंलक्षणो जीव इति ? । नह्यपरिज्ञाते जीवे तस्यैष इति शक्यं प्रतिपत्तुमिति । उच्यते–ज्ञानाद्युपयोगलक्षण इति ।

उपयोगरूपो जीवः

ज्ञानं च दर्शनं च तावेवोपयोगौ लक्षणमस्य स ज्ञानदर्शनोपयोगलक्षण इति, ज्ञानं नाम यज्जीवादीनां पदार्थानां विशेषपरिच्छेदितया प्रवर्तते तद् ज्ञानम्, यत् पुनस्तेषामेव सामान्यपरिच्छेदप्रवृत्तं स्कन्धावारोपयोगवत् तद् दर्शनमभिधीयते । न च कश्चिदेवमात्मकः प्राणी विद्यते य आभ्यां रहित इति,

---

१ 'व्यपादिशि' इति क–ख–पाठः । २ 'युक्तमाह' इति क–ख–पाठः ।

येऽपि हि प्रकृष्टावरणकर्मपटलाच्छादिता निगोदादयः पञ्चैकेन्द्रिया जीवनिकायास्तेऽपि साकारानाकारोपयोगयुक्ता इति। यतः स्पर्शनेन्द्रियं हि तेषामस्ति, तच्च साकारानाकारोपयोगस्वरूपमतो व्यापिलक्षणम्। ज्ञानदर्शनोपयोगौ लक्षणमस्त्येतत् सूक्तमिति। इतिशब्दः एवकारार्थे, जीव एवोपयोगलक्षणो न परमाण्वादय इति। वक्ष्यते-अभिधास्यते, उपयोगलक्षणो जीव इत्यस्मिन् द्वितीयाध्यायवर्तिनि सूत्रे, अतो निर्ज्ञातस्वरूपस्य जीवस्य स निसर्गरूपः परिणाम इति। यदप्युक्तं कथं प्राप्यत इति, तत् कथयति-**तस्यानादावित्यादिना।**

निसर्गप्राप्तिरीतिः

तस्येति निर्धारितस्वरूपं जीवमाह। तस्य जीवस्यानुभवत इत्यनेन सहाभिसम्बन्धः। तथा स्थानान्तराणि गच्छतोऽनादिमिथ्यादृष्टेरपि सत एतानि सर्वाणि जीवविशेषणानि। अनादौ संसार इत्यस्य तु नरकादिभवग्रहणेष्वित्येतद् विशेषणम्, कर्मत एव कर्मणः स्वकृतस्येति त्रयाणां विशेषणविशेष्यता, बन्धनिकाचनोदयनिर्जरापेक्षं विविधं इत्येतद् द्वयं पुण्यपापफलमित्यस्य विशेषणम्, अनुभवत इत्यस्य तु हेतुग्रन्थोऽयं ज्ञानदर्शनोपयोगस्वाभाव्यादिति, तानि तानीत्यादिपदद्वयं गच्छत इत्यस्य व्याप्यं कर्म, एवं सम्बन्धे कथिते विवृणोति—अविद्यमान आदिरस्य सोऽयम् **अनादिः**, न खलु संसारस्यादिर्दृष्टः केवलज्योतिषाऽपि प्रकाशिते समस्तज्ञेयराशौ, अतस्तस्याभावादनुपलब्धिः, न तु ज्ञानस्याशक्तिर्ग्रहणं प्रतीति। सन्धावन्ति यत्र स्वकर्मभिः प्रेर्यमाणा जन्तवः स संसार इति, उत्पत्तिस्थानानि नरकादीनि, निश्चयनयस्य तु सर्वं स्वप्रतिष्ठं वस्त्विवति आत्मैव, त एव वा प्राणिनः सन्धावन्तस्तांस्तान् परिणामान्नारकादीन् संसार इति कथ्यते, अनादौ संसार इति च स्रष्टिं निरस्यति। नहि कश्चिज्जगतः स्रष्टा

जगत्कर्तृत्ववादनिरासः

कर्ता समस्ति पुरुषः, यथैव हि तेन केनचित् सृष्टाः प्राण्यादि (?)-मन्तस्तथाऽन्येऽपि प्राणिनः। कर्त्रन्तराभ्युपगमे चानवस्था। सति चोपकरणकलापे दलिकद्रव्ये च निपुणाः कुम्भकारादयः कार्योत्पादाय यतमानाः फलेन युज्यन्ते नान्यथा, न चाकाशादीनां कारणमुपलभ्यते किञ्चित्, नापि किञ्चित् सर्गे जगतः स्रष्टुः प्रयोजनमस्ति प्रेक्षापूर्वकारिणः। क्रीडाद्यर्थमिति चेत्, कुतः सर्गशक्तिः? प्राकृतत्वात्। सुखितदुःखितदेवनारकसत्त्वोत्पादने चाकस्मिकः पक्षपातो द्वेपिता चेति। एवं कार्यकारणसम्बन्धः समवायपरिणामनिमित्तनिर्वर्तकादिरूपः **सिद्धिविनिश्चय-सृष्टिपरीक्षातो** योजनीयो विशेषार्थिना दूषणद्वारेणेति। **कर्मत** इति पञ्चमी, ज्ञानावरणादिकाष्टविधादुदयप्राप्तात् क्रोधाद्याकारपरिणामहेतुकात् यद्यदन्यत् कर्मोपचितज्ञानावरणादि तस्य **कर्मणः स्वकृतस्येति।** तच्च कर्मतो यदुपादायि कर्म तत् स्वेनात्मना कृतं न पुनः प्रजापतिप्रभृतिना तत् कर्म संश्लेषितमात्मसामर्थ्यात्, एतत् स्याद् यदाऽऽदिकर्म प्रजापतिरकरोत् सर्वप्राणिनां ततोऽन्या कर्मसन्ततिः स्वकृतेतीष्टमेव प्रसाधितमिति, उच्यते-एवमर्थमेवैवकारः प्रयुज्यते, कर्मत एव सर्वं कर्म बध्यते, अनादित्वात्, संसृतेरादिकर्मैव नास्ति,

प्रतिषिद्धश्च कर्ता। तदपि वा कर्मत एव बध्यते कर्मत्वादिदानीन्तनकर्मवत्। एवंविधस्यास्योपात्तस्य कर्मणः फलमनुभवत इति। किमपेक्षं पुनस्तत्फलमाह—**बन्धनिकाचनोदयनिर्जरापेक्षमिति**। **बन्धो** नाम यदाऽऽत्मा रागद्वेषस्नेहलेशावलीढसकलात्मप्रदेशो भवति तदा येष्वेवाकाशदेशेष्ववगाढस्तेष्वेवावस्थितान् कार्मणविग्रहयोग्याननेकरूपान् पुद्गलान् स्कन्धीभूतानाहारवदात्मनि परिणामयति सम्बन्धयतीति[1] स्वात्मा ततस्तानध्यवसायविशेषाज्ज्ञानादीनां गुणानामावरणतया विभजते हंसः क्षीरोदके यथा, यथा वा आहारकाले परिणतिविशेषक्रमवशादाहर्ता रसखलतया परिणतिमानयत्यनाभोगवीर्यसामर्थ्यात्, एवमिहाप्यध्यवसायविशेषात् किञ्चिद् ज्ञानावरणीयतया किञ्चिद् दर्शनाच्छादकत्वेनापरं सुखदुःखानुभवयोग्यतया परं च दर्शन[2]चरणव्यामोहकारितयाऽन्यन्नारकतिर्यङ्मनुष्यामरायुष्केनान्यद् गतिशरीराद्याकारेणाऽपरमुच्चनीचगोत्रानुभावेनाऽन्यद् दानाद्यन्तरायकारितया व्यवस्थापयति। एष **प्रकृतिबन्धः**। स्थितिबन्धस्तु, तस्यैवं प्रविभक्तस्य अध्यवसायविशेषादेव जघन्यमध्यमोत्कृष्टां स्थितिं निर्वर्तयति ज्ञानावरणादिकस्यैष **स्थितिबन्धः**। अनुभावबन्धस्तु, कृतस्थितिकस्य स्वस्मिन् काले परिपाकमितस्य याऽनुभूयमानावस्था शुभाशुभाकारेण घृतक्षीरकोशातकीरसोदाहृतिसाम्यात्सोऽ**नुभावबन्धः**। प्रदेशबन्धस्तु, अनन्तानन्तप्रदेशान् स्कन्धानादायैकैकस्मिन् प्रदेशे एकैकस्य कर्मणो ज्ञानावरणादिकस्य व्यवस्थापयतीत्येष **प्रदेशबन्ध** इति। **निकाचना** तु स्पृष्टानन्तरभाविनी, स्पृष्टता तु नोक्ता भाष्यकारेण पृथग् निकाचनाभेद एवेतिकृत्वा। कथमिति चेत्, भावयामः, बद्धं नामात्मप्रदेशैः सह श्लिष्टं, यथा सूचयः कलापीकृताः परस्परेण बद्धाः कथ्यन्ते, ता एवाग्नौ प्रतिक्षिप्तास्ताडिताः समभिव्यंज्य[3]मानान्तराः स्पृष्टा इति व्यपदिश्यन्ते, ता एव यदा पुनः पुनः प्रताप्य घनं घनेन ताडिताः प्रनष्टस्वविभागा एकपिण्डतामितास्तदा निकाचिता इति व्यपदेशमश्नुवते, एवं कर्माप्यात्मप्रदेशेषु योजनीयम्। तस्यैवं निकाचितस्य प्रकृत्यादिबन्धरूपेणावस्थितस्य उदयावलिकाप्रविष्टस्य प्रतिक्षणमुदयमादर्शयतो याऽवस्था शुभाशुभानुभावलक्षणा स उदयो विपाक इति। उदयानुभावसमनन्तरमेवापेतस्नेहलेशं परिशटत् प्रतिसमयं कर्म निर्जराव्यपदेशमङ्गीकरोतीति। बन्धादयः कृतद्वन्द्वास्ता अपेक्षत इति कर्मण्यण्। बन्धनिकाचनोदयनिर्जरापेक्षं, किं तत् फलं, कथं पुनस्तत्फलं बन्धाद्यपेक्षते? उच्यते—यतो बन्धादिष्वसत्सु न तत्सम्भव इति। क? अ[4]नुभवतो, नन्वभिहितमनादौ संसार इति, स पुनः किंभेद इति एतत् कथयति—**नारकेत्यादि**। नारकतिर्यग्योनिः—उत्पत्तिस्थानम्, तच्च द्वितीये वक्ष्यत इति। मनुष्याश्चामराश्च तेषां **भवः**—प्रादुर्भावस्ते भवन्ति यत्र। **ग्रहणानि**—आदानानि तच्छरीरग्रहणानि इत्यर्थः। तेषु च तेषु भवेषु अनादिसंसारात्मसु, **विविधमित्यनेकविधम्**,

स्थितिबन्धादिस्वरूपम्

---

१ 'तीति ततः' इति ग-पाठः। २ 'दर्शनावरण' इति ख-टी-पाठः। ३ 'समभिपद्यमानान्तरा' इति ख-टी-पाठः। ४ 'क्वानुभवो' इति क-ख-पाठः।

यतः सातसम्यक्त्वहास्यादिकाः प्रकृतयो विविधास्तासां फलमपि विविधमेवेति । तथा ज्ञानावरणाद्या अपि विविधास्तत्फलमपि विविधमुच्यते, पुण्यमनुग्रहकारि सातादि, पापमुपघातकारि ज्ञानादिगुणानाम्, तयोः पुण्यपापयोः **फलं**–स्वरसविपाकरूपं पुण्यपापफलम्, तद**नुभवतो** जीवस्योपभुञ्जानस्य, अनु पश्चादर्थे, पूर्वं ग्रहणं पश्चात् फलोपभोग इति । कथमनुभवत इत्याह–**ज्ञानदर्शनोपयोगस्वाभाव्यात्**, ज्ञानदर्शने व्याख्याते तयोः स्वाभाव्यं तस्मात् ज्ञानदर्शनोपयोगस्वाभाव्यादिति । एतदुक्तं भवति—यदा यदोपभुङ्क्ते तदा तदा चेतयते सुख्यहं दुःखितोऽहमित्यादि, साकारानाकारोपयोगद्वयसमन्वितत्वादवश्यतया चेतयत इति, उत्तरग्रन्थेनापि सम्बन्धोऽस्य । **तानि तानीत्यादि** । ज्ञानदर्शनोपयोगस्वाभाव्यादेव तानि तानि परिणामान्तराणि याति न तु ताभ्यां रहित इति । तानि तानीति मुहूर्ताभ्यन्तरेऽपि मनसश्चलत्वाद् बहूनि गच्छति, तानि चेह शुभानि ग्राह्याणि, यतो दर्शनं सम्प्राप्नोति शुभाज्ञा(?)मास्कन्दन्निति, तेषां बहुत्वाद् वीप्सया निर्दिशति । अथवा यान्येव पूर्वाण्यध्यवसायान्तराणि तान्येव पराध्यवसायतया वर्तन्त इत्यन्वयं दर्शयति—**परिणामश्चानेक**रूपो विज्ञानादिस्वभावः चेतनाचेतनद्रव्यगतः, तत्राचेतनः परमाण्वादीनां शुक्लादिः, चेतनस्य तु विज्ञानदर्शनादिर्विषयस्वरूपपरिच्छेदात्मकः । तथा देवाद्यवस्थाऽपुद्गलात्मिका अविवक्षितचेतनाभावाऽचेतनास्वभावा वेति । अतः परिणामस्य व्यभिचारे विशेषणोपादानमर्थवत्पश्यन्नुवाचेदं परिणामो**ऽध्यवसाय**रूप इति । तस्य **स्थानान्तराणि** मलीमसमध्यतीत्राणि, शुभे जघन्ये वर्तित्वात् ततो विशुद्धतरं स्थानमन्यदारोहति, ततोऽपि विशुद्धतममपरमधिगच्छतः प्राप्नुवतो वर्धमानशुभपरिणतेरित्यर्थः, अनेन च गच्छत इति समस्तमिदं चतुर्विधसामायिकोत्पादकाण्डं सूचितं भवति ॥

"सत्तण्हं पयडीणं अब्भिन्तरओ उ कोडिकोडीए ।
काऊण सागराणं जइ लहइ चउण्णमेगयरं ॥"[1]

—**विशेषावश्यके** गा० ११९२

अत्र बहु वक्तव्यमित्यतः प्रकृतोपयोगि केवलमुच्यते । स खलु जीवस्तानि शुभान्यध्यवसायान्तराण्यास्कन्दन्ननाभोगनिर्वर्तितेन यथाप्रवृत्तिकरणेन तामुत्कृष्टां कर्मस्थितिमवन्हास्य कोटीकोट्याः सागरोपमानामन्तः क्षपयंस्तावत् प्रापयति यावत् तस्या अपि पल्योपमासङ्ख्येयभागः क्षपितो भवति तस्मिन् स्थाने प्राप्तस्यातिप्रकृष्टघनरागद्वेषपरिणामजनितः वज्राश्मवद् दुर्भेदकठिनरूढगूढग्रन्थिर्जायते, तत्र कश्चिद् भव्यसत्त्वस्तं भित्त्वाऽपूर्वकरणबलेन प्राप्तानिवृत्तिकरणस्तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनमासादयति, कश्चिद् ग्रन्थिस्थानादधो निवर्तते, कश्चित् तत्रैवावतिष्ठते, न परतो नाधः प्रसर्पतीति । अत्र चोपदेष्टारमन्तरेण यत् सम्यक्त्वं तन्नैसर्गिकमाचक्षते प्रवचनवृद्धाः ।

निसर्गाध्यवसायप्राप्तिः

१ सप्तानां प्रकृतीनां आभ्यन्तरं तु कोटिकोटयाः ।
कृत्वा सागरोपमाणां यदा लभते चतुर्णामेकतरत् ॥

एनमेव च विप्रकीर्णमर्थमाख्यातवान् तानि तानीत्यादिना भाष्यग्रन्थेनोत्पद्यत इत्येवमन्तेन । **अनादिमिथ्यादृष्टेरपि** [ इति ] । नास्यादिरस्तीत्यनादिः अनादिर्मिथ्यादृष्टिरस्येत्यनादिमिथ्यादृष्टिः—अप्राप्तपूर्वसम्यक्त्वलाभः, न चास्ति कश्चित् तादृक् कालो यस्मिन्नुपदिश्येतायं मिथ्यादर्शनं प्रतिपन्नवानिति । तथा चागमः "अत्थि अणन्ता जीवा जेहिं न पत्तो तसाइपरिणामो"[1] । तस्यानादिमिथ्यादृष्टेः, **अपि**शब्दात् सादिमिथ्यादृष्टेरपि, यो हि भव्यः सम्यक्त्वं प्रतिपद्य प्राक् पश्चादनन्तानुबन्धिकषायोदयाज्जातव्यलीको मनोज्ञपरमान्नबद्धमतिर्जघन्येनान्तर्मुहूर्तं स्थित्वोत्कर्षेणापार्धपुद्गलपरावर्तं पुनः प्रतिपद्यमानः सादिमिथ्यादृष्टिर्भवति, तस्यापि **सतो**—भवतः **परिणामविशेषात्**, परिणामोऽध्यवसायश्चित्तं तस्य विशेषः स एव वा पूर्वं जघन्यमङ्गीकृत्य परः परः शुभो विशेष इत्युच्यते, परिणामविशेषश्चेह यथाप्रवृत्तिकरणमभिमतं, ततः परं अपूर्वकरणं, अप्राप्तपूर्वं तादृशं अध्यवसायान्तरं जीवेनेत्यपूर्वकरणमुच्यते ग्रन्थिं विदारयतः, ततश्च ग्रन्थिभेदोत्तरकालभाव्यनिवृत्तिकरणमासादयति, यतस्तावन्न निवर्तते यावत् सम्यक्त्वं न लब्धमित्यतोऽनिवृत्तिकरणं, ग्रन्थान्तरे प्रसिद्धत्वात् भाष्यकारेणानिवृत्तिकरणं नोपात्तम् । अवश्यतया वा सम्यग्दर्शनं लभमानस्तल्लभत इति काक्काऽभ्युपेतमेव, तदभावेऽभावात्, अतो न कश्चिद् विरोध इति । सम्प्रति निगमयति—य[2]देवमुपजातमेतन्निसर्गसम्यग्दर्शनमिति । जीवस्य उपयोगस्वाभाव्यात् तदधिगमात् प्राप्यते । कोऽधिगम इति चेत् तदुच्यते—**अधिगमोऽभिगम** इत्यादि । गमेर्गत्यर्थत्वाज्ज्ञानार्थता, गमो ज्ञानं रुचिरिति, अधिको गमोऽधिकं ज्ञानम्, कथं वाधिक्यम्? यस्मात् परतो निमित्ताद् भवति तदाधिक्यादधिकमुच्यते, **अभिगमस्तु** गुरुमाभिमुख्येनालम्ब्य यज्ज्ञानं सोऽभिगमः । **आगमस्**त्वागच्छत्यव्य[3]वच्छित्त्या वर्णपदवाक्यराशिराप्तप्रणीतः पूर्वापरविरोधशङ्कारहितस्तदालोचनात्तत्त्वरुचिरागम उच्यते, कारणे कार्योपचारात्, नड्वलोदकं पादरोग इति । **निमित्तं** तु यद् यद् बाह्यं वस्तूत्पद्यमानस्य सम्यग्दर्शनस्य प्रतिमादि तत् तत् सर्वमागृहीतं, ततो निमित्तात् प्रतिमादिकात् सम्यक्त्वं निमित्तसम्यग्दर्शनमुच्यते। **श्रवणं** श्रुतिराकर्णनं ततो यज्जायते। **शिक्षा**—पुनः पुनरभ्यासः, आप्तप्रणीतग्रन्थानुसारी ततो यद् भवति। उपदिशतीत्युप**देशो**—गुरुरेव देववच्छब्दसंस्कारस्ततो यत् प्रादुरस्ति। एवमेते किञ्चिद् भेदं प्रतिपद्यमाना अनर्थान्तरमिति व्यपदिश्यन्ते । एवं पर्यायकथनं कृत्वा सम्पिण्ड्य कथयति—**तदेवमित्यादिना** ॥ तदधिगमसम्यग्दर्शनम्, एवमित्यनेनोक्तेन भेदनिरूपणेन यद् भवति । परोपदेशादित्यनेन तु निमित्तमात्रमाक्षिप्तं ग्राह्यम्, अन्यथोपदेशाच्छब्दादिति [ न ] व्याप्तिराख्याता स्यात्, यतो न केवलं शब्दादेव भवति, किन्तु कस्यचिद् भव्यस्य प्रतिमाद्या-

१ सन्ति अनन्ता जीवा यैः न प्राप्तः त्रसादिपरिणामः ।

२ 'यथेवमुपजातमेव । तन्नि०' इति क-ख-पाठः । ३ 'व्यवस्थित्या' इति ख-पाठः ।

लोक्य भवत्येव । **परोपदेशात्** परोपष्टम्भेन यदुदेति तत्त्वार्थेषु—जीवादिषु श्रद्धानं–रुचिस्तदधिगमसम्यग्दर्शनमिति ॥ ३ ॥

सम्प्रत्युत्तरसूत्रसम्बन्धं स्वयमेव लगयन्नाह—

**भा०—अत्राह तत्त्वार्थश्रद्धानं सम्यग्दर्शनमित्युक्तम् । तत्र किं तत्त्वमिति? । अत्रोच्यते ॥ ३ ॥**

**टी०**—अत्राहेत्यादि । अत्र–एतस्मिंस्तत्त्वार्थश्रद्धानलक्षणे सम्यग्दर्शने विषयस्वरूपोपरक्ते व्याख्याते विषयविवेकमजानंश्चोदकोऽनूनुदत्–भवता तत्त्वार्थश्रद्धानं सम्यग्दर्शनमित्येतदुक्तं, तत्र किं तत्त्वमिति, तत्रेत्यनेन तत्त्वार्थश्रद्धानशब्दे यस्तत्त्वशब्दस्तत्र किं तत्त्वं किं तस्याभिधेयमिति ॥ ननु चायुक्तोऽयं प्रश्नो, भाष्ये तत्त्वस्य पुरस्तान्निर्णयः कृत इति, तत्त्वानि जीवादीनि वक्ष्यन्ते त एवार्था इत्यस्मिन्, अतो निर्ज्ञाते तत्त्वे प्रश्नयतो जाड्यमवसीयते, उच्यते–न जाड्यात् प्रश्नः, सत्यमुक्तं तत्त्वानि जीवादीनि, आदिशब्देन तु अनेकस्याक्षेप इति नास्तीयत्ता, तस्माद् भाष्याद् न निर्णयोऽतः इयत्तापरिज्ञानाय प्रश्नः । सूरिराह–अत्रोच्यते । अत्र भवत्प्रदर्शिते तत्त्वशब्दे यदभिधेयं तदियत्तया निवृत्तस्वरूपमुच्यते—

## सूत्रम्—जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥ १–४ ॥

**टी०**—जीवाजीवास्रव इत्यादिना । समासपदं चैतत्, समासपदे च विग्रहमन्तरेण न सुखेन प्रतिपत्तिः परस्मै शक्या कर्तुं इत्यतो विग्रहयति ।

**भा०—जीवा अजीवा आस्रवा[1] बन्धः संवरो निर्जरा मोक्ष इत्येष सप्तविधोऽर्थस्तत्त्वम् । एते वा सप्त पदार्थास्तत्त्वानि । तान् लक्षणतो विधानतश्च पुरस्ताद् विस्तरेणोपदेक्ष्यामः ॥ ४ ॥**

**टी०—जीवा अजीवा** इत्यादि । **जीवा** औपशमिकादिभावान्विताः[2] साकारानाकारप्रत्ययलाञ्छनाः शब्दादिविषयपरिच्छेदिनोऽतीतानागतवर्तमानेषु समानकर्तृकक्रियाः तत्फलभुजः अमूर्तस्वभावाः । एभिरेव धर्मैर्वियुता **अजीवाः** धर्मादयश्चत्वारोऽस्तिकायाः । आस्रूयते यैर्गृह्यते कर्म त **आस्रवाः** शुभाशुभकर्मादानहेतव इत्यर्थः । **बन्धो नाम**, तैरास्रवैर्हेतुभिरात्तस्य कर्मणः आत्मना सह संयोगः प्रकृत्यादिविशेषितः । तेषामेवास्रवाणां यो निरोधः—स्थगनं गुप्त्यादिभिः स **संवरः** । कर्मणां तु विपाकात् तपसा वा यः शाटः सा **निर्जरा** । ज्ञानशमवीर्यदर्शनात्यन्तिकैकान्तिकाबाधनिरुपमसुखात्मन आत्मनः स्वात्मन्यवस्थानं **मोक्षः** । इतिशब्द इयत्तायाम्, एतावानेव । एष इति भवतः प्रत्यक्षीकृतो वचनेन । सप्त

जीवादितत्त्वसप्तकस्य स्वरूपम् ।

---

१ 'आस्रवः' इति क–ख–घ–टी–पाठः । २ 'उपशमिकादि' इति क–ख–पाठः ।

विधाः सप्त प्रकारा यस्य स सप्तविधः, अर्थोऽर्यमाणत्वात्, एष **सप्तविधोऽर्थ** इति पदत्रयं तत्त्वमित्यस्य विवरणम्, तत्त्वमिति वाऽव्युत्पत्तौ तथ्यं सद्भूतं परमार्थ इत्यर्थः । व्युत्पत्तौ तु जीवादीनामर्थानां या स्वसत्ता सोच्यते, तस्याश्च सत्तायाः प्रतिभेदं प्रतिवस्तु यो भेदस्तमनादृत्यैकत्वमेकत्वाच्चैकवचनमुपात्तवान् ॥

तत्त्वमित्येकवचने हेतुः

अथैवं कश्चित् चोदयेत्—याऽसौ जीवादीनां सत्ता, सा न वैशेषिकैरिवास्माभिर्भिन्ना जीवादिभ्योऽभ्युपेयते-यतोऽभिहितम्–"घडसत्ता घडधम्मो तत्तोऽणन्नो पडाइओ भिन्नो[2] (विशे० १७२२)"। तस्मात् प्रतिवस्तु सा भेत्तव्या, प्रतिवस्तु च भिद्यमाना बहुत्वं प्रतिपद्यत इति बहुत्वाद् बहुवचनेन भवितव्यम् तत्त्वानीति, उच्यते-सामान्येन विवक्षिता सती सैकत्वमिव बिभर्ति, मुख्यया तु कल्पनया वस्तुधर्मत्वात् प्रतिवस्तु भेत्तव्या भवति, तदा च बहुवचनेनैव भवितव्यमेवेति, एतदाह-**एते वा सप्त पदार्थास्तत्त्वानीति** । **एते** प्राक् प्रत्यक्षीकृताः । **वा**शब्दो हि प्रतिवस्तु भिद्यमानं तत्त्वं बहुत्वं प्रतिपद्यत इत्यस्य पक्षस्य सूचकः । सप्त च ते पदार्थाश्च **सप्तपदार्थाः** जीवादयः । **तत्त्वानि** दृश्यानि, पुण्यपापयोश्च बन्धेऽन्तर्भावान्न भेदेनोपादानम् । यद्येवमास्रवादयोऽपि पञ्च तर्हि न जीवाजीवाभ्यां भिद्यन्ते । कथमिति चेत्, उच्यते-आस्रवो हि मिथ्यादर्शनादिरूपः परिणामो जीवस्य । स च कः आत्मानं पुद्गलांश्च विरहय्य ?। बन्धस्तु कर्म पुद्गलात्मकमात्मप्रदेशसंश्लिष्टम् । संवरोऽप्यास्रवनिरोधलक्षणो देशसर्वभेद आत्मनः परिणामो निवृत्तिरूपः । निर्जरा तु कर्मपरिशाटः, जीवः कर्मणां पार्थक्यमापादयति स्वशक्त्या। मोक्षोऽप्ययमात्मा समस्तकर्मविरहित इति । तस्मात् जीवाजीवास्तत्त्वमिति वाच्यम् । उच्यते—सत्यमेतदेवम्, किंतु इह शास्त्रे शिष्यः प्रवृत्तिं कारितोऽस्मात् कारणात् ज्ञानादिकात् सेव्यमानाद् भवतो मोक्षावाप्तिर्भविष्यत्यन्यथा संसार इति, तस्य च यदि मुक्तिसंसारकारणे न भेदेनाख्यायेते ततोऽस्य सम्यक्प्रवृत्तिरेव न स्यात् । यदा त्वेवं कथ्यते, आस्रवो बन्धश्चैतद्द्वयमपि मुख्यं तत्त्वं संसारकारणम्, संवरनिर्जरे च मुख्यं तत्त्वं मोक्षकारणमिति, तदाऽनायासात् संसारकारणानां हेयतया यतिष्यते मुक्तिकारणानां चादेयतयेति, तस्माच्छिष्यस्य हेयादेयप्रदर्शनायाऽऽस्रवादिचतुष्टयमुपात्तम् । यत् तु मुख्यं साध्यं मोक्षः यदर्था प्रवृत्तिस्तत् कथमिव न प्रदर्श्येतेति, तस्माद् युक्तं यत् पश्चाप्युपादीयन्त इति । किं पुनरेषां जीवादीनां लक्षणमग्नेरिवौष्ण्यम् ? के वा भेदा जीवादीनां यथा तस्यैवाग्नेस्तार्णपाण्र्यादय इत्युक्ते **तान् लक्षणत** इत्याद्याह । **तान्** जीवादीन् **लक्षणतः**—स्वचिह्नेन, **विधानतो**—भेदेन, चशब्दाद् भेदानपि सप्रभेदान् वक्ष्यामि, **पुरस्तात्**—उपरिष्टात्, किं सङ्क्षेपेणोत विस्तरेण ? **विस्तरेणे**त्याह । कथमिति चेत्, उच्यते-जीवस्य लक्षणमिदमुपयोगलक्षणो जीव इति ( २-८ ), तदेव लक्षणं विधानतः कथयिष्यति, स द्विविधः, साकारोऽनाकारश्च, पुनस्तावष्टचतुर्भेदाविति ( २-९ ), तथा संसारिणो मुक्ताश्च

आस्रवादीनां तत्त्वानां जीवाजीवयोरन्तर्भावः

---

१ 'चाव्युत्पत्तौ' इति क-ख-पाठः ।

२ घटसत्ता घटधर्मः तस्मादनन्यः पटादितो भिन्नः ।

( २-१० ), पुनर्विस्तरः संसारिणस्त्रसाः स्थावराश्चेत्यादिना ( २-१२ )। तथा अजीवादीनां धर्मादीनां लक्षणं गतिस्थित्यादि ( ५-१७ ), धर्माधर्माकाशानां त्वेकत्वान्नास्ति विधानम् ( ५-५ ), प्रदेशान् वाऽङ्गीकृत्यासङ्ख्येयाः प्रदेशाः धर्माधर्मयोः ( ५-७ ), जीवस्य च ( ५-८ ), आकाशस्यानन्ताः ( ५-९ ) इति स्यादेव विधानम्। आस्रवं लक्षणेन भणिष्यति, कायवाङ्मनःकर्म योगः ( ६-१ ) स आस्रवः ( ६-२ ) इति, पुनस्तस्य भेदं शुभः पुण्यस्येत्यादि ( ६-३,४ )। बन्धस्य लक्षणं भणिष्यति, सकषायत्वात् जीव इत्यादिकम् ( ८-२ ), पुनस्तस्य विधानं प्रकृतिस्थित्यादिकम् ( ८-४ )। तथा संवरलक्षणं आस्रवनिरोधः संवर इति ( ९-१ ), पुनस्तस्यैव विधानं स गुप्तिसमितिधर्मादिकम् ( ९-२ )। निर्जराया लक्षणं वक्ष्यति, तपसा निर्जरा चेति ( ९-३ ), पुनस्तद्भेदा अनशनादयः ( ९-१९ )। मोक्षः कृत्स्नकर्मक्षयलक्षणः ( १०-३ ), प्रथमसमयसिद्धादि विधानम् ॥ ४ ॥

अत्राह—कथं पुनरमी जीवादयोऽधिगन्तव्या इति ? उच्यते—नामादिभिरनुयोगद्वारैस्तथा प्रत्यक्षानुमानाभ्यां ( प्रमाणाभ्यां ) नैगमादिभिश्च वस्त्वंशपरिच्छेदिभिर्नयैस्तथा निर्देशस्वामित्वादिभिः सत्सङ्ख्याक्षेत्रादिभिश्च। तत्र कतिभेदा जीवा इति पृष्टे चतुर्भेदताख्यानायाह—

## सूत्रम्—नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ १–५ ॥

टी०—इति। अथवाऽभिधास्यति भवान् उपयोगलक्षणो जीवः(२-८),तत्र किं सर्वो जीव उपयोगलक्षणः ? । नेत्याह—भावजीव एवोपयोगलक्षण इति। अथ किमन्योऽप्यस्ति यतो भावजीव इति विशेष्यते ? अस्तीत्याह । कतिविधश्चेत्, उच्यते—नामेत्यादि, तृतीयार्थे तसिः, सूत्रार्थं च कथयन्नाह—

**भा०—एभिर्नामादिभिश्चतुर्भिरनुयोगद्वारैस्तेषां जीवादीनां तत्त्वानां न्यासो भवति। विस्तरेण लक्षणतो विधानतश्च अधिगमार्थं[1] न्यासो निक्षेप इत्यर्थः। तद्यथा—नामजीवः स्थापनाजीवो द्रव्यजीवो भावजीव इति । नाम संज्ञाकर्म इत्यनर्थान्तरम्। चेतनावतोऽचेतनस्य वा द्रव्यस्य जीव इति नाम[2] क्रियते स नामजीवः । यः काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते जीव इति स स्थापनाजीवो देवताप्रतिकृतिवदिन्द्रो रुद्रः स्कन्दो विष्णुरिति । द्रव्यजीव इति गुणपर्यायवियुक्तः प्रज्ञास्थापितोऽनादिपारिणामिकभावयुक्तो जीव[3] उच्यते। अथवा शून्योऽयं भङ्गः। यस्य ह्यजीवस्य सतो भव्यं जीवत्वं स्यात् स द्रव्यजीवः स्यात्, अनिष्टं चैतत्। भावतो जीवा औपशमिकक्षायिकक्षायोपश-**

---

१ 'अधिगमाय' इति क-ख-घ-टी-पाठः। २ 'यस्य नाम' इति घ-टी-पाठः। ३ 'द्रव्यजीव' इति घ-टी-पाठः।

मिकौदयिकपारिणामिकभावयुक्ता उपयोगलक्षणाः संसारिणो मुक्ताश्च द्विविधा वक्ष्यन्ते ( २–१० )। एवमजीवादिषु[1] सर्वेष्वनुगन्तव्यम् ॥

पर्यायान्तरेणापि नामद्रव्यं, स्थापनाद्रव्यं, द्रव्यद्रव्यं, भावतो द्रव्यमिति। यस्य जीवस्याजीवस्य वा नाम क्रियते द्रव्यमिति तन्नामद्रव्यम्। यत् काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते द्रव्यमिति तत् स्थापनाद्रव्यम्, देवताप्रतिकृतिवदिन्द्रो रुद्रः स्कन्दो विष्णुरिति। द्रव्यद्रव्यं नाम गुण[2]पर्यायवियुक्तं प्रज्ञास्थापितं धर्मादीनामन्यतमत्। केचिदप्याहुः–यद् द्रव्यतो द्रव्यं भवति तच्च पुद्गलद्रव्यमेवेति प्रत्येतव्यम्। अणवः स्कन्धाश्च, सङ्घातभेदेभ्य उत्पद्यन्त इति वक्ष्यामः ( ५-२५,२६ )। भावतो द्रव्याणि धर्मादीनि सगुणपर्यायाणि प्राप्तिलक्षणानि वक्ष्यन्ते ( ५-३७ )। आगमतश्च प्राभृतज्ञो द्रव्यमिति भव्यमाह। द्रव्यं च भव्ये। भव्यमिति प्राप्यमाह। भू प्राप्तावात्मनेपदी। तदेवं प्राप्यन्ते प्राप्नुवन्ति वा द्रव्याणि। एवं सर्वेषामनादीनामादिमतां च जीवादीनां भावानां मोक्षान्तानां तत्त्वाधिगमार्थं न्यासः कार्य इति ॥ ५ ॥

टी०—एभिरित्यादि। एभिरिति सूत्रोक्तैः, कैः? नामादिभिः, नाम आदिर्येषां ते नामादयस्तैर्नामादिभिरिति, आदिशब्देन च नेयत्ताऽवधृतेत्यतश्चतुर्भिरित्याह। अत एव विग्रहमपि न कृतवान्, चतुर्भिरित्यनेनैव समासाऽव्यक्ताभिधानस्य व्यक्तीकृतत्वादिति। अनुयोगः—सकलगणिपिटकार्थोऽभिधीयते तस्य द्वाराणि–तस्यार्थस्याधिगमोपाया इत्यर्थः। अतस्तैर्नामादिभिर्विरचना कार्या। विरचना विरच्यमानविषयेत्यतस्तन्न्यास इत्याह। अस्य च विवरणं, तेषां इति अनन्तरसूत्रोक्तानाम्। तानेव स्पष्टयति–जीवादीनां तत्त्वानां न्यासो भवति–विरचना कार्येति। स किमर्थं न्यासः क्रियत इत्याह–विस्तरेणेत्यादि। पुरस्तात् त्विदमुक्तं 'तान् जीवादीन् विस्तरेण लक्षणतो विधानतश्चोपदेक्ष्याम' इति (१-१)। तेषु च लक्षणविधानेषु वक्ष्यमाणेषु सर्वत्रैषा नामादिका व्याख्याऽवतारणीया, किमर्थम्? अधिगमार्थं–प्रतिविशिष्टज्ञानोत्पत्त्यर्थमिति। कथं नाम लक्षणादिवाक्येषु सर्वत्रैवंविधां प्रतिपत्तिं कुर्यात् जिज्ञासुः? 'उपयोगश्चतुर्भेदः, जीवश्च' इत्यादि, अतोऽधिगमार्थं न्यासः। न्यास इत्यस्य च प्रसिद्धतरेण शब्देन पर्यायेणार्थमाचष्टे–निक्षेप इत्यर्थः। तन्नामादिचतुष्टयं यथा लक्ष्येऽवतरति तथा कथयति–तद्यथा, नामजीव इत्यादि।

जीवपदार्थे नामादिन्यासः

नामैव जीवो नामजीवः, योऽयं जीव इति ध्वनिः, अयं च यस्य कस्यचिद् वस्तुनो वाचकः स नामजीवोऽभिधीयते, वस्तुस्वरूपप्रतीतिहेतुत्वाच्च, वस्तुस्वरूपं शब्दः, तदनर्थात्मकत्वे वस्तुव्यवहारविच्छेदः, तदात्मकत्वाच्च स्तुतौ रागः स्तुत्यस्य, द्वेषश्च निन्दायां द्वेष्यस्य। स्थापना(त्या अ)पि वस्त्वात्मतां

१ 'दिष्वपि.' इति घ–टी–पाठः। २ 'सर्वगुण' इति घ–टी–पाठः।

दर्शयति-**स्थापनाजीवो** नाम जीवाकारः, प्रतिकृतिसद्भावेऽन्यथाऽसद्भावे, तन्निमित्तकश्रेयोभ्युपगमात्, गन्धपुष्पादिनिमित्तार्थत्यागश्च, तद्भक्तिप्रवृत्तेः, कुम्भवदाकारोऽर्थो वस्तुत्वात्, तथा "जावंति चेइयाइं ति[1]"। **द्रव्यजीवो** नाम, योऽयमस्मिन् शरीरक आत्मा स यदा भावैर्ज्ञानादिभिर्वियुतो विवक्ष्यते स द्रव्यजीवः, अनागतराजत्वराजपुत्रसेवनं हि दृष्टं, तत्र द्रव्यत्वात् ( सिद्धि- ) शिलातलाद्युज्झितातीतयतिशरीरनमस्करणं च, उपयोगक्रिययोरपि ज्ञेयो, येषामर्थानां न च तदुपयोगे वर्तते स तेन भावेनाभावादतीतानागततद्भावापेक्षया तद्भावाप्रवृत्तोऽपि स एवासावध्यवसीयते सुप्तचित्रकरघृतकुम्भादिवत्, तथा च "जं होहिसि तित्थयरो[2]" "वंदामि जिणे चउव्वीसं[3]" इत्यादि। एष एव हि तैर्ज्ञानादिभिर्युक्त आश्रीयमाणो **भावजीव** इति, भावः प्रमत्तदोषमर्षणादेः, त(य)था—

"अन्नत्थ वंजणे निवडियंमि जो खलु मणोगओ भावो।
तत्थ उ मणं पमाणं न पमाणं वंजणच्छलणा॥"[4]—विशे० २५४५

इत्यादि। अत्र चाद्या नामादयस्त्रयो विकल्पाः द्रव्यास्तिकस्य, तथा तथा सर्वार्थत्वात्, पाश्चात्यः पर्यायनयस्य, तथापरिणतिविज्ञानाभ्यामिति। अथवाऽस्मिन्नेव शरीरे य आत्मा तत्रैव ते नामादयश्चत्वारो नियुज्यन्ते, योऽयमस्मिन्नात्मनि जीव इति ध्वनिः प्रवर्तते एष नामजीवः, तस्यैव य आकारो हस्ताद्यवयवसन्निवेशादिः स स्थापनाजीवस्तदेकपरिणामात्, तस्यैव जन्तोः सकलगुणकलापरहितत्वविवक्षा बौद्धव्यवहारानुसारिणी[5] द्रव्यजीवः, स एव ज्ञानादिगुणपरिणतिभाक्त्वेन विवक्षितो भावजीव इति, एतत् कथयति नामजीव इत्यादिना॥

सम्प्रति नामस्थापनाद्रव्यभावानां जीवविशेषणतयोपात्तानां स्वार्थं लक्ष्ये प्रदर्शयन्नाह—**नाम संज्ञाकर्मेत्यनर्थान्तरमित्यादिना**। नामेति किमुक्तं भवति ? उच्यते—**संज्ञाकर्मेत्यनर्थान्तरम्**, संज्ञायाः क्रिया संज्ञाक्रिया संज्ञाकर्म नामकरणं इत्यर्थः, अनेन ध्वनिना वस्त्विदं प्रतिपाद्यत इतियावत्। तत् पुनः प्रतिपाद्यं वस्तु तस्य ध्वनेर्वाच्येनार्थेन युक्तं भवतु मा वा भूदित्येतत् कथयति—**चेतनावत** इत्यादिना। **चेतना**—ज्ञानं सा यस्यास्ति तच्चेतनावत्, तद्विपरीतमचेतनम्। **द्रव्यस्येति** प्रदर्शनमिदं, गुणक्रिययोरपि नामादिचतुष्टयप्रवृत्तेः। अथवा द्रव्यस्य प्राधान्यमाविष्करोति, यतस्तदेव द्रव्यं गुणक्रियाकारेण वर्तते, कोऽन्यो गुणः क्रिया वा द्रव्यमन्तरेण ? वर्णकविरचनामात्रक्रमप्राप्तनानात्वनटवद् द्रव्यमेव तथा तथा विवर्तते अतो न स्तः केचिद् गुणक्रिये द्रव्यास्तिकनयावलम्बने सतीति। अतस्तस्य द्रव्यस्य[6] यस्य कस्यचिन् **नाम क्रियते** व्यवहारार्थं संज्ञासंकेतः क्रियते। कीदृगित्यत आह—**जीव इति**।

---

१ 'यावन्ति चैत्यानि' इति। २ 'यद् भविष्यति तीर्थकरः' ( आवश्यक-निर्युक्तौ )। ३ 'वन्दे जिनान् चतुर्विंशतिं' ( आव-चतुर्विंशतिस्तवः )।

४ 'अन्यत्र निपतिते व्यञ्जने यः खला मनोगतो भावः।
तत्र तु मनः प्रमाणं न प्रमाणं व्यञ्जनं छलना॥

५ 'बौधव्यवहारा' इति **क-ख**-पाठः। ६ द्रव्यस्य इति **क-ख**-पाठः।

इतिना स्वरूपे जीवशब्दः स्थाप्यते, जीव इत्ययं ध्वनिः, नत्वेतद्वाच्यार्थो नामतया नियुज्यते। **स नामजीव** इति, स इत्यनेन तत्र चेतनावत्यचेतने वा यदृच्छया यो जीवशब्दो नियुक्तस्तं व्यपदिशति, स शब्दो नामजीव इति। एतदुक्तं भवति–स एव शब्दो जीव इत्युच्यते तद्वस्तूपाधिक इति, अर्थाभिधानप्रत्ययास्तुल्यनामधेया इति न्यायात् ॥

संप्रति स्थापनाजीवं कथयति–**यः काष्ठपुस्त** इत्यादिना। **यः** स्थाप्यते जीव इति सम्बन्धः, **क्व स्थाप्यते**? **काष्ठपुस्तादिष्वि**त्याह। **काष्ठं**–दारु, **पुस्तं**–दुहितृकादिसूत्रचीवरादिविरचितं, **चित्रं**–चित्रकराद्यालिखितम्, **कर्म**शब्दः क्रियावचनः प्रत्येकमभिसम्बध्यते, काष्ठक्रियेत्यादि। **अक्षनिक्षेप इति** सामयिकी संज्ञा चन्दनकानां निक्षेपो रचना विन्यास इति। एते काष्ठपुस्तचित्रकर्माक्षनिक्षेपा आदिर्येषां रच्यमानानां ते काष्ठपुस्तचित्रकर्माक्षनिक्षेपादयः, आदिशब्द उभाभ्यां सम्बन्धनीयः, काष्ठपुस्तचित्रकर्मादयो ये सद्भावस्थापनारूपास्तथाऽक्षनिक्षेपादयोऽसद्भावस्थापनारूपा ये, तेषु बहुषु **स्थाप्यते**–य उच्यते तेषु काष्ठादिषु बहुष्वाधारेषु य एको रच्यते जीवाकारेण, एतदाह–**जीव इति**। **स** जीवाकारो रचितः सन् **स्थापनाजीवो**ऽभिधीयते। एतदुक्तं भवति–शरीरानुगतस्यात्मनो य आकारो दृष्टः स तत्रापि हस्तादिको दृश्यते इतिकृत्वा स्थापनाजीवोऽभिधीयते॥ ननु चाक्षनिक्षेपे नास्त्यसावाकार इति, उच्यते–यद्यपि बहीरूपतया नास्त्यक्षे निक्षिप्यमाणेऽसावाकारः, तथापि बुद्ध्या स रचयिता तत्र विरचयति तमाकारम्, अत एव स्थापना नामद्रव्याभ्यां सुदूरं भिन्ना, यतो निक्षिप्यमाणं वस्तु न शब्दो भवति, नापि तद्भाववियुतं विवक्ष्यते, किन्त्वाकारमात्रं यत् तत्र तद् विवक्षितमिति। स्थापनाजीवं दृष्टान्तेन भावयति–**देवताप्रतिकृतिवदि**त्यादिना। देव एव **देवता** तस्याः **प्रतिकृतिः**–बिम्बं, सा च न सैव सहस्राक्षवज्रपाणिश्वेतवासोधारिरूपा, नापि ततोऽत्यन्तं भिन्नस्वभावा, अत्यन्तभिन्नस्वभावाभ्युपगमे हि सा प्रतिकृतिरेव न स्यात् कुड्यवत्, अतोऽवश्यं कथञ्चिदसौ ततो भिद्यत इति प्रतिपत्तव्यम्, ये तस्यां मुख्यदेवतायां सहस्रलोचनाद्यवयवा यथा संनिविष्टा दृष्टास्तेऽस्यां काष्ठमय्यां दृश्यन्त इत्येतावता सैव मुख्या देवता इयमिति निगद्यते। ये तु तत्र ज्ञानदर्शनैश्वर्यादयो धर्मा दृष्टास्तेऽस्यां काष्ठमय्यां न दृश्यन्त इति एतावता प्रतिबिम्बमित्यभिधीयते। अतो यथेह कस्यचित् इन्द्रादेः प्रतिकृतिः स्थापिता सती इन्द्र इति व्यपदिश्यते, एवमिह जीवाकृतिः प्रतिमादिषु स्थापिता स्थापनाजीवो व्यपदिश्यते। **रुद्र** उमापतिः, **स्कन्द इति** स्कन्दकुमारः, उत्तरपदलोपात् सत्यभामा सत्येति यथा, **विष्णुरिति** वासुदेवः। एषां च न शास्त्रे देवताख्या समस्ति, लोकानुवृत्त्या भाष्यकृदुवाच। अत एषां रुद्रादीनां प्रतिकृती रचिता रुद्र इत्यादिव्यपदेशं लभते। एवं जीवस्य काष्ठादिषु प्रतिकृतिः कृता स्थापनाजीव इत्यभिधीयते।

**द्रव्यजीव** इति। इतिः प्रकारार्थः। योऽयं प्रकारः प्रागुपादायि द्रव्यजीव इति तं प्रदर्शयामि। योऽयमात्मा स उज्झिताशेषज्ञानादिगुणसमुदायो द्रव्यजीवोऽभिधीयते। एतदेवाह–**गुणपर्यायवियुक्त** इति। **गुणाः**–सहभुवो ज्ञानदर्शनसुखादयः, **पर्यायाः**–क्रमभुवो

मनुष्यादयः, गुणाश्च पर्यायाश्च गुणपर्यायास्तैः **वियुक्तो** रहित इत्यर्थः ।। ननु चैवंविधोऽर्थो नास्त्येव, समस्तधर्मकदम्बकरहितत्वात् मण्डूकजटाभारवदित्युक्ते आह–**प्रज्ञास्थापितः** । **प्रज्ञा**–बुद्धिस्तया **स्थापितो**–वियत्यालिखितः कल्पित इतियावत् । एतदुक्तं भवति–न ते गुणपर्यायास्ततो द्रव्याद् विष्वग् भवन्ति, किं तर्हि ? बुद्ध्या तत्स्था एव विभज्यन्ते, ततश्च द्रव्यमात्रं केवलमवतिष्ठते बुद्धिपरिकल्पनागोचरतामितम्, एतदाह—**अनादिपारिणामिकभावयुक्त** इति । भावशब्दो हि औदयिकादिषु वर्तमानः पारिणामिक इत्यनेन विशेषे स्थापितः । पारिणामिकभावोऽपि सादिरस्त्यभ्रेन्द्रधनुरादीनाम्, किं तादृशोऽयं ? नेत्याह—अनादिपारिणामिकभाव इति । अनादिश्चासौ पारिणामिकभावश्चानादिपारिणामिकभावस्तेन युक्तोऽनादिपारिणामिकभावयुक्त इति । एतदुक्तं भवति–यत्तदनादिकालसन्ततिपतितं द्रव्यं तावन्मात्रं तदिति मैवं मंस्थाः अनादिपारिणामिकभावयुक्त इति, अत्र भावशब्दः श्रूयते इतिकृत्वाऽस्ति द्रव्ये कोऽपि भावांश इति । न खलु कश्चित् तत्र गुणः पर्यायो वाऽस्तीति द्रव्यमात्रं निरस्ताशेषगुणपर्यायव्रातं द्रव्यजीव इत्येवं शब्द्यते ।। ननु च सतां गुणपर्यायाणां बुद्ध्या नापनयः शक्यः कर्तुं, यतो न ज्ञानायत्ताऽर्थपरिणतिः, अर्थो यथा यथा विपरिणमते तथा तथा ज्ञानं प्रादुरस्तीत्यत आह—**शून्योऽयं भङ्गः** । **शून्य** इति न सम्भवति, **अयं** इति द्रव्यजीवविकल्प इति । यतो द्रव्यदेवः कः ?। उच्यते–यो भव्यो देवत्वपर्यायस्य योग्यो न तावद् भवति स मनुष्य एव सन् द्रव्यदेवोऽभिधीयते भविष्यति इतिकृत्वा, एवमिहापि यद्ययमवधीकृतो जीवः स इदानीमजीवः सन्नायत्यां जीवोऽजनिष्यत्[1] ततोऽयं विकल्पः समभविष्यत्, न चैतदस्तीत्येतदाह—**यस्य ह्यजीवस्येत्यादि** । **यस्य** इति वस्तुनः, हिशब्दो यस्मादर्थे, **अजीवस्य** चेतनारहितस्य **सतो** विद्यमानस्य अचेतनावस्थायां सम्प्रति **भव्यं** भविष्यच्चेतनावत्त्वं भवेत् इदानीमचेतनत्वेन वर्तमानः **द्रव्यजीव** इति कारणजीवः, आगामिन्या जीवतायाः कारणमित्यर्थः, एतत् **स्यात्**, इष्यत एवायमर्थः । क्वचिद् वस्तुन्यभूतमिदानीं जीवत्वं भविष्यतीति, तन्न, अनिष्टत्वात्, यथैव ह्यसन्नसौ विशेषो जीवत्वेन सम्प्रति आगामिकाले जीवत्वं प्रतिपत्स्यत इत्यभ्युपगम्येत, एवं योऽयमिदानीं जीवतया वर्तते अयमेवायत्यामजीवत्वं यास्यतीत्यभ्युपगम्यताम्, एवं च सति सिद्धान्तविरोधः, यतो जीवत्वमनाद्यनिधनपारिणामिको भावः समय इष्यते । एतदेवाह—**अनिष्टं चैतत्** इति । चशब्द एवकारार्थे, अनिष्टमेव सिद्धान्तविरोध्येवैतदभ्युपगमान्तरमिति ।। ननु चैवं सति नामादिचतुष्टयस्याव्यापिता प्राप्ता, द्रव्यजीवविकल्पाभावात्, अभ्युपगतं च सिद्धान्ते व्यापित्वेन नामादिचतुष्टयम्, यत एवमाह—

“ जत्थ उ जं जाणिज्जा निक्खेवं निक्खिवे निरवसेसम् ।
जत्थवि नय जाणेज्जा चउक्कयं निक्खिवे तत्थ ॥”—अनुयोगद्वारे

---

१ ‘अजनिष्यत’ इति **क-ख**-पाठः ।

तत्र चतुष्टयं निक्षिपेदिति भणता व्यापिताऽभ्युपगता ?। उच्यते–प्रायः सर्वपदार्थेष्वन्येषु सम्भवन्ति, यद्यत्रैकस्मिन्न सम्भवति नैतावता भवत्यव्यापिता, तत्र निर्युक्तिकारेण **भद्रबाहु-स्वामिना** अविशेषेण प्राणायि नामादीति। अपरे त्वेतद्दोषभयादेवं वर्णयन्ति—अहमेव मनुष्य-जीवो द्रव्यजीवोऽभिधातव्यः उत्तरं देवजीवमप्रादुर्भूतमाश्रित्य, अहं हि तस्योत्पित्सोर्देवजी-वस्य कारणं भवानि, यतश्चाहमेव तेन देवजीवभावेन भविष्यामि, अतोऽहमधुना द्रव्यजीव इति। एतत् कथितं तैर्भवति पूर्वः पूर्वो जीवः परस्य परस्योत्पित्सोः कारणमिति ? अस्मिंश्च पक्षे सिद्ध एव भावजीवो नान्य इति, तस्मादिदमपि परिफल्गु विज्ञायते, एतत्पक्षसमाश्रयणेन च नाव्या-पिता नामादिचतुष्टयस्येति । अथवा जीवशब्दार्थज्ञस्तत्रानुपयुक्तो द्रव्यजीव इति । एवं ह्युक्तं "आगमतो जाणए अणुवउत्तो" जीवशब्दार्थज्ञस्य वा यच्छरीरकं जीवरहितं स द्रव्यजीवः ॥

इदानीं चतुर्थं विकल्पं दर्शयति—**भावजीव** इति। **यः उक्तः** ॥ ननु च भावजीव इत्ये-कवचनेन पूर्वं विन्यस्य व्याख्यावसरे बहुवचनान्तताप्रदर्शनमयुक्तं **भावतो जीवा** इति। उच्यते—मैवं कश्चित् ज्ञासीद् यथा एक एव भावजीवो न भूयांस इति। यथा पुरुषकारणिन आहुः—"पुरुष एवेद"मित्यादि, एतन्निरासाय बहुवचनमुपात्तवान्, बहव एते जीवा इत्यस्य प्रदर्शनार्थम्। **भावत** इति च तृतीयार्थे तसिः, भावैः सह वर्तन्ते इति ते भावजीवाः। के पुनस्ते भावाः यैः सह वर्तन्ते इति ? उच्यते—**औपशमिकादी**त्यादि। तत्रोपशमः पुद्ग-लानां सम्यक्त्वचारित्रविघातिनां करणविशेषादनुदयो भस्मपटलाच्छादिताग्निवत्, तेन निर्वृत्तः **औपशमिकः** परिणामोऽध्यवसाय इत्युच्यते। तथा ज्ञानादिघातिनां पुद्गलानां य आत्यन्ति-कोऽत्ययः स क्षयः तेन निर्वृत्तोऽध्यवसायः **क्षायिक** उच्यते। तथा ज्ञानादिघातिनां पुद्गलानां क्षयोपशमौ, केचित् क्षपिताः केचिदुपशान्ता इति क्षयोपशमावुच्येते, ताभ्यां निर्वृतोऽध्यवसायः **क्षायोपशमिक** इति। ये पुनः पुद्गला गतिकषायादिपरिणामकारिणः तेषामुदयः—अनुभू-यमानता या स उदयस्तेन निर्वृत्तोऽध्यवसाय **औदयिक** इति। परिणमनं परिणामो जीवत्वाद्याकारेण यद्भवनं स **पारिणामिकः**, स्वार्थ एव प्रत्ययः। एत एव **भावा**–अध्य-वसायास्तैर्युक्तः **औपशमिकादिभावयुक्तः**। यथा कश्चिन्मनुष्यः पञ्चभिरपि संयुक्तो भवति। तत्कथमिति चेत् ? उच्यते–कस्यचित् संयतादेरुपशान्तकोपादिकषायस्य औपशमिकः, तस्यैव क्षपितानन्तानुबन्धिमिथ्यादर्शनादेः क्षायिको भावः, तस्यैव क्षीणोपशान्तमतिश्रुता-द्यावरणस्य क्षायोपशमिको भावः, तस्यैव मनुष्यगतिपरिणामकारिपुद्गलोदये औदयिको भावः, तस्यैव जीवत्वभव्यत्वादिपरिणामः पारिणामिक इति, एवं देवादीनां यथासम्भवं बोध्याः। **उपयोगलक्षणा** इति साकारानाकारसंविल्लक्षणा इत्यर्थः। ते च नैकरूपाः, किन्तु **संसारिण** इत्यादि। संसारश्चतुर्विध उक्तः ( १–३ ) स येषामस्ति संसारिणो–मनु-

---

१ आगमतो ज्ञायकः अनुपयुक्तः ( अनुयोग० )।

ष्यादयः । मुक्तास्तु ज्ञानावरणादिकर्मभिः समस्तैर्मुक्ता एकसमयसिद्धादयः । चशब्दात् सप्रभेदा द्विधा वक्ष्यन्ते द्वितीयेऽध्याये ( २–१० ) ॥

एवं जीवपदार्थे नामादिन्यासमुपदर्श्य एकत्र दर्शितोऽन्यत्र सुज्ञान एव भवतीत्यतिदिशति—**एवमजीवादिष्वित्यादि**। अजीवादिषु इति चोक्तेऽपि पुनः सर्वेषु इत्यभिदधद् व्याप्तिं नामादिन्यासस्य दर्शयति, **अनुगन्तव्यं**–नामादिचतुष्टयं दर्शनीयमित्यर्थः। अजीव इति नाम यस्य चेतनस्याचेतनस्य वा क्रियते स नामाजीवः। स्थापनाजीवः काष्ठादिन्यस्तः। द्रव्याजीवो गुणादिवियुतो बुद्धिस्थापितः। भावाजीवो धर्मादिर्गत्याद्युपग्रहकारीति। नामास्रवो यस्यास्रव इति नाम कृतं स नामास्रवः। स्थापनास्रवः काष्ठादिरचितः। द्रव्यास्रवस्तु आत्मसमवेता[1]ः पुद्गलाः अनुदिता रागादिपरिणामेन। भावास्रवास्तु त एवोदिताः। द्रव्यबन्धो निगडादिः, भावबन्धः प्रकृत्यादिः। द्रव्यसंवरोऽपिधानं, भावसंवरो गुप्त्यादिपरिणामापन्नो जीवः। द्रव्यनिर्जरा मोक्षाधिकारशून्या व्रीह्यादीनां, भावनिर्जरा कर्मपरिशाट[2]ः सम्यग्ज्ञानाद्युपदेशानुष्ठानपूर्वकः। द्रव्यमोक्षो निगडादिविप्रयोगः, भावमोक्षः समस्तकर्मक्षयै[3]र्लाञ्छनः। तथा द्रव्यसम्यग्दर्शनं ये मिथ्यादर्शनपुद्गला भव्यस्य सम्यग्दर्शनतया शुद्धिं प्रतिपत्स्यन्ते तद् द्रव्यसम्यग्दर्शनं, एत एव विशुद्धा आत्मपरिणामापन्ना भावसम्यग्दर्शनं। तथा द्रव्यज्ञानमनुपयुक्तावस्था, भावज्ञानमुपयोगपरिणतिविशेषावस्था। द्रव्यचारित्रमभव्यस्य भव्यस्य वाऽनुपयुक्तस्य, उपयुक्तस्य क्रियानुष्ठानमागमपूर्वकं भावचारित्रमिति ॥

येऽपि येषां जीवादीनां सामान्यशब्दास्तेष्वप्यस्य नामादिचतुष्टयस्यावतार इति कथयन्नाह–**पर्यायान्तरेणापी**त्यादि। प्रधानशब्दस्य तदर्थशब्दान्तराणि पर्यायाः, पर्यायादन्यः पर्यायः पर्यायान्तरं, तेनाप्यस्य चतुष्टयस्य न्यासः कार्यः, तदाह–**नामद्रव्यं** इत्यादि। एतद् भाष्यं नामादिजीवव्याख्यानेन भावितमेव यावत् केचिदप्याहुरिति। तथाप्यशून्यार्थमुच्यते–**नामद्रव्यं** यस्य चेतनावतोऽचेतनस्य वा द्रव्यमिति नाम क्रियते, यत् पुनः स्थाप्यते काष्ठादिषु तत् **स्थापनाद्रव्यं** विशिष्टाकारमिति। **द्रव्यद्रव्यमिति** उभाभ्यां द्रव्यशब्दा[4]भ्यां गुणादिभ्यो निष्कृष्य द्रव्यमात्रे स्थाप्यते। एतदेवाह–**गुणपर्यायवियुक्तं** इत्यादिना, तैर्विरहितं, न च परमार्थतः शक्यन्ते तेऽपनेतुं, तत्स्वभावत्वाद्, अतः **प्रज्ञास्थापित**मित्याह। तच्चान्यस्याभावात् षष्ठस्य प्रसिद्धमेव तदेव कथयति—**धर्मादीनामन्यतमत्** इति। यद्यदेव विवक्षितुं इष्यते तत् तदेषां मध्ये ग्राह्यं नात्र नियम इत्येतत् कथयति-**शून्योऽयं विकल्प** इति। पूर्ववत् प्रयोगतो भावना कार्या, एष तावत् तृतीयविकल्पे ग्रन्थकाराभिप्रायः। अपरे तु कथयन्ति विकल्पं तृतीयमन्यथा,

(margin note: नामद्रव्यादि–विचारः)

---

१ शुभाशुभात्मपरिणामकारणभूतपुद्गलापेक्षया। २ सकामनिर्जरामपेक्ष्य। ३ स्वरूपावस्थानस्य तत्त्वात् निश्शेषकर्मक्षयस्य तु तपःसंयमद्वारत्वात्। ४ द्रव्यशब्दद्वयेनेत्यर्थः।

तदाह–**केचिदप्याहुः** इत्यादि। केचित् पुनर्ब्रुवते यदित्यणुकादि[1] **द्रव्यतो द्रव्यं** इति, तृतीयार्थे पञ्चम्यर्थे वा तसिरुत्पाद्यः, द्रव्यैः सम्भूय यत् क्रियते, यथा बहुभिः परमाणुभिः सम्भूय स्कन्धस्त्रिप्रदेशिकादिरारभ्यते तद् द्रव्यद्रव्यम्। अथवा यद् द्रव्यात् तस्मादेव स्कन्धात् त्रिप्रदेशिकादेर्यदैकः[2] परमाणुः पृथग्भूतो भवति तदा तस्माद् भिद्यमानात् त्रिप्रदेशिकात् स्कन्धात् परमाणुश्च निष्पद्यते द्विप्रदेशिकश्च स्कन्ध इति, स परमाणुरपि द्रव्यद्रव्यं द्विप्रदेशिकोऽपि द्रव्यद्रव्यं भवतीति। तच्चैतद् द्रव्यद्रव्यं **पुद्गलमेव भवतीति प्रत्येतव्यम्**। नहि जीवादिद्रव्यमन्यैः सम्भूयारभ्यते, न चान्यस्मात् भिद्यमानात् तन्निष्पद्यत इति, परमाणवस्तु सम्भूयान्यदारभन्ते ततश्च निष्पद्यन्त इति, यतः पञ्चमेऽध्यायेऽभिधास्यते **अणवः स्कन्धाः** (५-२५) इत्यादि, **अणवः**–परमाणवः, **स्कन्धाः**–द्विप्रदेशिकादयः, सङ्घातात् स्कन्धा भेदादणवो निष्पद्यन्त इति॥ भावद्रव्यमिति चैकं विन्यस्य **भावतो द्रव्याणि** बहून्युपक्षिपतोऽयमभिप्रायः,–अन्याभिमतं यदेकं विश्वस्य जगतः कारणं ब्रह्मादि तदपास्यते, बहून्येतानि स्वत एव सत्तां दधतीति प्रतिपादयति, कानि[3] च तानि? **धर्मादीनि पञ्च, सगुणपर्यायाणि** इति, गत्याद्यगुरुलघुप्रभृतिपर्यायभाञ्जीति, एतत् स्याद् यद्येन धर्मेण समन्वितं तं धर्मं न कदाचित्[4] तद् जहाति तेन सदान्वितमास्ते इति, एतच्च न, **प्राप्तिलक्षणानि**—परिणामलक्षणानीतियावत्, अन्यानन्यांश्च धर्मान् प्रतिपद्यन्त इति, जीवास्तावद् देवमनुजादीन्

द्रव्याणां प्राप्तिलक्षणता

पुद्गलाः कृष्णादीन् धर्मादयः पुनस्त्रयः परतोऽन्यानन्यांश्च प्राप्नुवन्ति, यतोऽन्यस्मिन् गच्छति तिष्ठति अवगाहमाने वा जीवे पुद्गले वा गमनादिपरिणामस्तेषामुपचर्यते, अतो हि प्राप्तिलक्षणानि वक्ष्यन्ते। अथवा भावद्रव्यमिति, द्रव्यार्थ उपयुक्तो जीवो भावद्रव्यमुच्यते, एतद् वा कथयत्यनेन भाष्येण आगमतश्चेत्यादिना, अथवा प्राप्तिलक्षणानीति यदुक्तं सा न स्वमनीषिका, यत आगमे आप्त एवमुपदिदेश–प्राप्तिलक्षणान्येतानि, कथमिति चेत्? तदाह–**आगमतश्चे**-त्यादि। तसिः सप्तम्यर्थे, **आगमत** आगमे, पूर्वाख्ये कथ्यमाने, **प्राभृतज्ञ** इति, शब्दप्राभृतं, तच्च पूर्वेऽस्ति, यत इदं व्याकरणमायातं, ततः शब्दप्राभृतं यो जानाति स प्राभृतज्ञो गुरुरेवं ब्रवीति द्रव्यमिति। अस्यार्थं तीर्थकृत् किमाहेति चेत्, तदुच्यते–**भव्यमाह**। भव्यमिति च न ज्ञायते तत् स्पष्टयति–**द्रव्यं च भव्य** इति। अस्यायमर्थः–द्रव्यमिति निपात्यते भव्यं चेद् भवति। **भव्यमिति** सन्देहास्पदमेव केषाञ्चिदिति स्पष्टयति–**प्राप्यमाह**। प्राप्तव्यं तैः स्वगतैः परिणतिविशेषैर्गत्यादिभिः व्याप्यत इत्यर्थः। अतो न स्वमनीषिका प्राप्तिलक्षणानीत्येषाम्॥ ननु चायं भवतिरकर्मकः सत्ताभिधायी कथं प्राप्यमित्यनेन कर्माभिधायिना कृत्येन भव्यमित्यस्यार्थो विवियते?। उच्यते–नैवायं सत्ताभिधायकः, तर्हि? प्राप्त्यभिधायी चुरादावात्मनेपदी, भू प्राप्तावात्मनेपदी। तदाह प्राप्त्यभिधायिना कथ्यते तेन, **तदेवं** इति

१ 'यद् व्यणुकादि' इति **ग**–पाठः। २ 'कदर्युक्तः' इति **ग**–पाठः। ३ 'कानिचित् तानि' इति **क-ख**–पाठः। ४ 'कदाचिद् न जहाति' इति **क-ख**–पाठः।

प्राप्त्यभिधायित्वे सत्ययमर्थो भव्यशब्दस्य, कर्मसाधनपक्षे प्राप्यन्ते स्वधर्मे यानि तानि भव्यान्युच्यन्ते, कर्तृसाधनपक्षे तु प्राप्नुवन्ति तान्येव धर्मादीनीति भव्यानि द्रव्याण्युच्यन्ते इति । एतदाह–**प्राप्यन्ते प्राप्नुवन्तीति वा द्रव्याणि** । सम्प्रति जीवादीनां न्यासं प्रदर्श्य तेषां च पर्यायस्य द्रव्यशब्दस्य अन्येषामप्येवमेव कार्य इत्यतिदिशन्नाह–**एवं सर्वेषामि-** त्यादि । एवं यथा जीवादीनां द्रव्यशब्दस्य च तथा **सर्वेषां** गुणक्रियादिशब्दानाम्, **अना-दीनां** इति भव्याभव्यादीनाम्, **आदिमतां** च मनुष्यादीनां पर्यायाणां, **जीवादीनां भावानां** जीवादिभ्योऽनन्यवृत्तीनाम्, **तत्त्वाधिगमार्थ**मिति तत्त्वस्य परमार्थस्य भावस्य अधिगमः स सर्वत्र, न तु नामस्थापनाद्रव्याणामिति, हेयत्वादेषां, तत्त्वाधिगमप्रयोजनं **न्यासो** निक्षेपो रचना कार्या बुद्धिमता मुमुक्षुणेति ॥ ५ ॥

शिष्य आह–कथं भगवता तत्त्वानां जीवादीनामधिगमः कृतः ? । यदि च केनाप्युपाये-नाधिगतानि भवन्ति ततो युक्तं कथनमन्यस्यायेतानि तत्त्वानीति ? उच्यते–

## सूत्रम्—प्रमाणनयैरधिगमः ॥ १-६ ॥

**टी०—प्रमाणनयैरिति** च करणे तृतीया न कर्तरि, यतस्तत्र षष्ठ्या भवितव्यम् 'कर्तृकर्मणोः कृती' (पाणिनिः अ० २, पा० ३, सू० ६५) इति । प्रमाणे प्रत्यक्षपरोक्षे द्वे, अवधिमनःपर्यायकेवलानि मतिश्रुते च, नैगमादयो नयाः पञ्च, प्रमाणे च नयाश्च प्रमाण-नयास्तैः प्रमाणनयैः साधकतमैः ।

**भा०—एषां च जीवादीनां तत्त्वानां यथोद्दिष्टानां नामादिभिर्न्यस्तानां प्रमाणनयैर्विस्तराधिगमो भवति । तत्र प्रमाणं द्विविधं प्रत्यक्षं परोक्षं च वक्ष्यते** ( १-१०,१२ ) । **चतुर्विधमित्येके नयवादान्तरेण । नयाश्च नैगमादयो वक्ष्यन्ते** ( १-३४ ) ॥ **किञ्चान्यत्** ॥ ६ ॥

**टी०—एषां चे**त्यादि । **एषाम्** इति भवतः प्रकटीकृतानाम्, चशब्द एवकारार्थे, एषामेवान्यस्याभावात्, अथवा समुच्चये, एषां **जीवादीनां**, च-

अधिगम-साधनम्

शब्दान्नामादीनां च, **तत्त्वाना**मिति चानेनोभयं सम्बध्यते, जीवा-दीनां तत्त्वानां नामादीनां च तत्त्वानाम् । **यथोद्दिष्टाना**मिति । यथा परिपाट्या जीवाजीवादिकया सामान्येनाभिहितानामुद्दिष्टानामिति । सामान्येन च जीवाजीवास्रव ( १-४ ) इत्यस्मिन् सूत्रेऽभिधाय पुनर्नामस्थापनादिसूत्रे **नामादिभिर्भेदै-र्न्यस्तानां**, किमर्थं पुनर्जीवाजीवास्रवादिसूत्रे उद्घाट्य ततो नामादिसूत्रे न्यस्तानि ? । उच्यते–परिज्ञानार्थमनेको जीवशब्दवाच्योऽर्थ इत्यस्य । एतदेवाह–**न्यस्ताना**मिति । अधिगमोपायार्थ-

१ 'मन्यस्यायत्तानि' इति ख–पाठः । २ 'यथोपदिष्टानां' इति ख–घ–टी–पाठः । ३ 'न्यस्तानामित्यधिगमो-पायार्थमुपक्षिप्तानामित्यर्थः' इति ख–घ–टी–पाठः । ४ 'नयाश्च पञ्च' इति ख–घ–टी–पाठः ।

मुपक्षिप्तानामित्यर्थः, अतः पूर्वमुद्घट्टितानां न्यस्तानां च इह **प्रमाणनयैर्विस्तराधिगमो भवति।** **विस्तराधिगम** इति। एकैकस्य तत उद्घट्टनादपकृष्टस्य विस्तरेण लक्षणविधानाख्येन वक्ष्यमाणेन (१-१०, १-३५) प्रमाणनयरूपेणाधिगमः—परिच्छेदो भवति। एतत् कथितं—यदा यदाधिगमस्तदा तदा न प्रमाणनयान् विरहय्येति। न चायं पर्यनुयोगः कार्यः—प्रमाणनयैः कथं भवत्यधिगम इति ?। यस्माज्ज्ञानविशेषाः प्रमाणनयाः, अतः प्रकाशस्वभावत्वात् प्रदीपवदधिगमशक्तिता। अथ कतिविधं प्रमाणमिति सङ्ख्यानियमाय प्रश्नयति। आह—**तत्र प्रमाणं द्विविधम्।** **तत्रेति** सिद्धान्तं नन्द्यादिकं व्यपदिशति। **प्रमाण**मिति च प्रमीयतेऽनेन तत्त्वमिति प्रमाणम्, अस्मिन् पक्षे आत्मा सुखादिगुणकलापोपेतस्तेनावबुध्यते साधकतमेन मत्यादिना विषयमिति प्रतिपत्तव्यम्। यदा तु 'कृत्यल्युटो बहुलम्' (पाणिनिः अ० ३, पा० ३, सू० ११३) इति कर्तरि

प्रमाण-द्वैविध्यम्

प्रमाणमित्येतत् तदात्मनोऽविभक्तं मत्यादिज्ञानपञ्चकम्, प्रमिणोत्यवगच्छतीति प्रमाणम्, यदा त्वधिकरणे प्रमाणमित्येतत् तदा प्रमीयतेऽस्मिन् बहिरङ्गोऽर्थ इति प्रमाणम्, आत्मन्येव बहिरङ्गार्थप्रतिबिम्बनात्, नहि विषयाकारानारूषितं[1] तज्ज्ञानं तस्य परिच्छेदे वर्तते, यदा तु तेन विषयाकारेण तज्ज्ञानं परिणतं भवति तदा तस्य वस्तुनः परिच्छेदोऽन्यथा नेति। **द्विविध**मित्यनेन सङ्ख्यानियम इति द्विविधमेव न पुनस्त्रिविधादि। कथं द्वैविध्यमिति चेत् ? उच्यते—इहैवाध्याये प्रत्यक्षं परोक्षं चेति वक्ष्यते (१-११, १२) उपरिष्टात्। पराणि च निर्माणाङ्गोपाङ्गोदयनिर्वृत्त्युपकरणरूपाणीन्द्रियाणि (२-१७) मनश्च मनोवर्गणापरिणतिरूपं द्रव्येन्द्रियं परं तेभ्यो य उपजायते ज्ञानं तन्निमित्तजं तत् परोक्षमुच्यते धूमादग्निज्ञानवत्, प्रत्यक्षं पुनरश्नाति अश्नुते वाऽर्थानित्यक्षः—आत्मा तस्याक्षस्येन्द्रियमनांस्यनपेक्ष्य यत् स्वत एवोपजायते तत् प्रत्यक्षम्। यदि तर्हि **नन्द्यां** द्विविधमुपदिष्टं कथमनुयोगद्वारग्रन्थे चतुर्विधमुपन्यस्तम् ?। यतः केचिन् नैगमादयो नयाः। **चतुर्विधमित्येके नयवादान्तरेण।** एके सूरयश्चतुर्विधं प्रमाणमुपदिशन्ति[2] नयभेदेन प्रत्यक्षानुमानोपमानागमाख्यम्, एतच्च यथा दुःस्थितं चातुर्विध्यं तथा भाष्यकार एवोत्तरत्र दर्शयिष्यति (१-१२)। एवं प्रमाणावयवं निर्भिद्य व्युत्पत्त्यादिद्वारेण नयावयवं विभजन्नाह—**नयाश्चे**त्यादि। नयन्तीति नयाः कारकाः व्यञ्जका इति यतः सूत्रार्थं[3] (यतस्तवार्थं) दर्शयिष्यति भाष्यकारः, ये ह्यनेकधर्मात्मकं वस्त्वेकेन धर्मेण निरूपयन्ति एतावदेवेदं नित्यमनित्यं वेत्यादिविकल्पयुक्तं ते **नया नैगमादयो वक्ष्यन्ते** (१-३४)॥ ननु च प्रमाणमपि सामान्यविशेषात्मकवस्तुपरिच्छेद्येत्र[4], नया अपि चैवंविधविषयोपनिपातिन एवेति नास्ति कश्चिद् विशेषः, ज्ञानात्मकत्वाद्धि नया न भेदेनोपादेयाः प्रमाणादिति, असत्या एव नया इति [ चेदतो ] हेयतया न्याय्यमुपादानमित्येतदपि न, यतो वक्ष्यति—" न विप्रतिपत्तयोऽर्थाध्यवसायाः[5] " इति [ १-३५ ], तथा " नियय-

प्रमाणनयानां भिन्नता

१ 'अपरिणतं' इति ख-टी-पाठः। २ 'मुशन्ति' इति ग-पाठः ३ 'कर्त्रार्थं' इति 'कर्त्रर्थं' इति वा ग-टी-पाठः। ४ 'परिच्छेदे च,' 'परिच्छेदे ब' इति क-ख-पाठौ। ५ 'सायात्' इति क-ख-पाठः।

वयणिज्जसव्वा" इत्यादि। उच्यते-प्रमाणनयानामयं भेदः, प्रमाणं समस्तवस्तुस्वरूपपरिच्छेदात्मकं मत्यादि नयास्तु एकांशावलम्बिन इत्यतो भिन्नविषयता, प्रत्यक्षपरोक्षवत्। एतदुक्तं भवति-सर्वनयांशावलम्बि ज्ञानं प्रमाणम्, यत् तु ज्ञानमनेकधर्मात्मकं सद्वस्तु एकधर्मावधारणेनावच्छिनत्त्येवमात्मकमेवैतदिति तन्नया इति कथ्यन्ते, अतश्च प्रमाणं सम्यग्ज्ञानं, नयास्तु मिथ्याज्ञानम्, यत आह-"एवं सव्वेवि नया मिच्छादिट्ठी" इत्यादि। एवं च कृत्वा प्रमाणशब्दस्याभ्यर्हितत्वात् सूत्रे पूर्वनिपात इति न चोद्यावकाशः॥ अपरे वर्णयन्ति-परस्परापेक्षा नैगमादयो नया इति व्यपदिश्यन्ते अध्यवसायाः, तैः परस्परापेक्षैर्यज्ज्ञानं समस्तवस्तुस्वरूपावलम्बनं जन्यते तदनवगतवस्तुपरिच्छेदाभ्युपायत्वात् प्रमाणम्। ये पुनर्नैगमादयो निरपेक्षाः परस्परेण ते नयाभासा इति॥ ६॥

किञ्चान्यदित्यनेनोत्तरसूत्रं सम्बन्धयति, नैतावतैव विस्तराधिगमस्तत्त्वानां, यतोऽन्यदपि विस्तराधिगतौ कारणमस्ति, किं तत्? निर्देशादि। के पुनः निर्देशादय इत्यत आह-

**सूत्रम्-निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः॥ १-७॥**

**टी०-निर्देशस्वामित्वे**त्यादि। न तावन्निर्देशादीन् व्याचष्टे सम्बन्धवाक्यमेव समर्थयते-

**भा०-एभिश्च निर्देशादिभिः षड्भिरनुयोगद्वारैः सर्वेषां भावानां जीवादीनां तत्त्वानां विकल्पशो विस्तरेणाधिगमो भवति॥**

**टी०-एभिश्चे**त्यादिना। **एभिः**, चशब्दात् प्रमाणनयसदादिभिश्च। एभिश्चेति सामान्यशब्दनिर्देशेन विशेषावगतिरस्ति, अतो विशेषार्थमाह-**निर्देशादिभिः**। आदिशब्देन निर्देशे सति नेयत्तापरिज्ञानमस्तीति समासे चाव्यक्ताभिधानं प्रसिद्धं न सूत्रादपीयत्ता सम्भाव्येत अतः **षड्भिरि**ति। अस्मिन् किमेतानि व्याख्याद्वाराणि नेति या शङ्का तन्निरसनायाह-**अनुयोगद्वारैः**, व्याख्याङ्गैरित्यर्थः। एषां च व्यापिता अस्ति नास्ति इत्याशङ्काव्युदासायाह-**सर्वेषामि**ति। उक्तेऽपि चैतस्मिन्नभावोऽपि सर्वशब्देनोपात्तः तन्निराचिकीर्षयाऽऽह-**भावानामि**ति। अभावे हि व्यर्थत्वात् प्रयासस्य न तद्विषयमेतदिति कथयति। भावा अप्यन्यमनाभिमताः सन्त्यतत्त्वरूपा इत्यतो द्वयमुपादत्ते-**जीवादीनां तत्त्वानामि**त्येतत्। ते च जीवादयः किमेभिः समासेन निरूप्यन्ते उत व्यासेनेत्यत आह-**विकल्पश** इति। शसश्च कारकसामान्याद् विधानमिति तृतीयार्थ एष इत्येतत् कथयति **विस्तरेणे**त्यनेन। उक्तेपि चैतस्मिन्नसम्पूर्णमेव वाक्यं स्याद् यदि पूर्वसूत्रादधिगम इत्येतन्नानुवर्तेत, अतोऽनुवर्तत इति कथयति-**अधिगम** इति। सत्तां च पदार्थो न व्यभिचरति यद्यपि तथाप्यन्यस्याः

(margin: निर्देशादीनां व्याख्या)

१ 'निजकवक्तव्यतासत्याः' ( सम्मति-तर्के )। २ 'एवं सर्वेपि नया मिथ्यादृष्टयः' ( सम्मति० )।

क्रियाया नाध्याहारः कर्तव्यः, ततश्च भवतीत्याह । एवं सम्बन्धं लगयित्वा सूत्रं व्याख्यानयन्नाह—

**भा०—तद्यथा । निर्देशः । को जीवः ? । औपशमिकादिभावयुक्तो द्रव्यं जीवः ॥**

टी०—**तद्यथे**त्यादि । यथैते भाव्यन्ते निर्देशादयः तथा कथ्यन्ते, **निर्देश** इति चोपन्यस्य उद्देशवाक्यमुच्चारयति—**को जीव** इति । न चाप्रस्तुतोपन्यासः, कथमिति चेत् ? उच्यते—उद्देशवाक्यमन्तरेण निर्देशस्य ख्यापनमशक्यं कर्तुम्, यदि हि पूर्वं सामान्यरूपोद्देशचोदना न स्यान्निर्देशवाक्यमप्यसम्बद्धत्वादुन्मत्तवचोवदसङ्गतार्थं स्यात्, सामान्यार्थाभिधानमुद्देशः, तद्विशेषप्रतिपिपादयिषया वचनं निर्देशः । पूर्वं प्रश्नवाक्यमुच्चारयति—निर्दिश्यमानार्थोपकारि, कीदृशः खलु मया जीवः प्रतिपत्तव्यः ? किं द्रव्यरूपो गुणरूपः क्रियास्वभाव इति ?। नामादीनां वा अन्यतम इति पृष्टे निर्देश इति,—निश्चयेन उपयुज्यते प्रस्तुते वस्तुनि स निर्देशः। **औपशमिकादिभावे**त्यादि । औपशमिकादयोऽभिहितास्त एव भावास्तथाभवनादात्मनः तैर्युक्तः औपशमिकादिभावयुक्तः । **द्रव्यं जीव इति**, गुणक्रिया[1]व्युदासद्वारेण निश्चयेन तदादिष्टं द्रव्यं जीव इति । द्रव्यं जीवः स चाप्यौपशमिकादिभावयुक्त इति । ततश्च न केवलं द्रव्यं नापि केवला भावाः किन्तु उभयात्मकं जीववस्तु प्रतिपन्नं भवति । अथवा द्रव्यमेव प्रधानं[2] यतस्तेन तेनौपशमिकादिभावेन द्रव्यमेव तथा तथा विपरिवर्तते १ ॥ स्वामित्वादयो जीवेऽभ्यूह्या अनया दिशेति न दर्शितवान्, वयं तु दर्शयामः—स्वामी-प्रभुः तद्भावः स्वामित्वं, जीवो हि कस्य प्रभुः ? जीवस्य वा के स्वामिनः ? इति, उच्यते—जीव एकोऽवधीकृतः धर्मादीनामस्तिकायानां स्वामी, यतः सर्वेषु मूर्च्छां यात्युपलभते परिभुङ्क्ते शरीरतया वाऽऽदत्तेऽतः सर्वेषां जीवः स्वामी, जीवस्यापि जीवा अन्ये तन्मूर्च्छादिकारिणः स्वामिनो भवन्ति २॥ साध्यते येन तत् साधनम्, केन चात्मा साध्यते ? उच्यते—नान्येनासौ सततं समवस्थितत्वाद् बाह्यान् वा पुद्गलान् अपेक्ष्य देवादिजीवः साध्यत इति तैस्तत्तत्स्थानं नीयत इति यावत् ३ ॥ अधिकरणमाधारः, [3]कस्मिन्नात्मा निश्चयस्य स्वात्मप्रतिष्ठत्वात् स्वात्मनि, व्यवहारस्य शरीराकाशादौ ४॥ स्थितिरात्मरूपादनपगमः । कियन्तं कालमेष जीवभावेनावतिष्ठते ? । भवाननङ्गीकृत्य सर्वस्मिन् काले, देवादींस्तु भवानङ्गीकृत्य यावती यत्र स्थितिस्तावन्तं कालं तत्रावतिष्ठत इति ५॥ विधानं प्रकारः, कतिप्रकारा जीवाः ? त्रसस्थावरादिभेदाः ६॥ एवं शेषा अपि सिद्धान्तानुसारिण्या धियाऽवलोक्य पारमर्षं प्रवचनं वाच्याः, ग्रन्थगौरवभयात् तु नादद्रे भाष्यकारः । तथा यदर्थं शास्त्रप्रवृत्तिस्तत्रापि योजनां निर्देशादीनां कुर्वन्नाह—

**भा०—सम्यग्दर्शनपरीक्षायाम् । किं सम्यग्दर्शनं द्रव्यम् ? । सम्यग्दृष्टिजीवोऽरूपी नोस्कन्धो नोग्रामः ॥**

१ 'गुण्यक्रिया' इति क-ख-पाठः । २ 'प्राधान्यं' इति क-ख-पाठः । ३ 'कस्मिन् वा' इति ख-पाठः ।

**टी०—सम्यग्दर्शनपरीक्षायामित्यादि** । यदा सम्यग्दर्शनं परीक्ष्यते तदापि सम्यग्दर्शनं किं गुणः क्रिया द्रव्यमिति पृष्टे निर्देशो भवति, उच्यते—द्रव्यम्, ये जीवेन शुभाध्यवसायविशेषेण विशोध्य पुद्गलाः प्रतिसमयमुपभुज्यन्ते अतस्ते सम्यग्दर्शनस्य निमित्तम्, तदुपष्टम्भजन्यत्वात् श्रद्धानपरिणामस्य, ततश्च कारणे कार्योपचाराद् द्रव्यं सम्यग्दर्शनम् । मुख्यया तु वृत्त्या रुचिरात्मपरिणामो ज्ञानलक्षणः श्रद्धासंवेगादिरूपः सम्यग्दर्शनं तदप्यात्मद्रव्यमेव द्रव्यनयस्य, पर्यायनयस्य तु गुणमात्रमवसेयमिति । यदि तर्हि पुद्गला द्रव्यस्वभावा रुचिमापादयन्तः सम्यग्दर्शनमिति भण्यन्ते, न तर्हि क्षीणदर्शनमोहनीयस्य छद्मस्थकेवलिसिद्धजीवस्य सम्यग्दर्शनं प्राप्नोतीत्युक्ते आह—**सम्यग्दृष्टिजीव** इति । सम्यक् शोभना दृष्टिर्या सत्पदार्थावलोकिनी सा सम्यग्दृष्टिर्यस्य क्षीणदर्शनमोहनीयस्य स सम्यग्दृष्टिजीवः । एतत्कथयति, क्षीणे दर्शनमोहनीये नैवासौ सम्यग्दर्शनी भण्यते, कस्तर्हि? सम्यग्दृष्टिरेवासौ भण्यते, ततः सिद्धसाध्यता, स पुनः क्षीणदर्शनमोहः किं रूपी? नेत्याह—**अरूपी** । अविद्यमानं रूपमस्येत्यरूपी, सर्वधर्मादिषु क्षेपः । नासौ रूपादिधर्मसमन्वितः अमूर्त आत्मेति । छद्मस्थकेवलिनोर्यद्यपि कर्मपटलोपरागः तथाप्यात्मा न स्वभावमुपजहाति, आगन्तुकं हि कर्मरजो मलिनयत्यात्मानमभ्रादीव चन्द्रमसम् । सिद्धः सर्वथाप्यरूप एव । सम्यग्दृष्टिरिदानीमाशङ्क्यते-किं स्कन्धो ग्राम इति, तन्निरासायाह—**नोस्कन्धः** । अरूपत्वादेव न स्कन्धः, पुद्गलादिरूपस्वप्रदेशाङ्गीकरणात् स्यात् स्कन्धः, अथवा पञ्चास्तिकायसमुदितिः स्कन्धः, नोशब्दस्य तद्देशवाचित्वान्नोस्कन्धः सम्यग्दृष्टिः । एवं **नोग्रामो**ऽपि वक्तव्यः । एवं सम्यग्दर्शिनः सम्यग्दर्शनकारणत्वात् पुद्गलानपादिक्षत् सम्यग्दर्शनं, तैर्वियुतः[1] पुद्गलैः सम्यग्दृष्टिरिति ॥

सम्यक्त्वस्य निर्देशः

**भा०—स्वामित्वम् । कस्य सम्यग्दर्शनमिति? एतदात्मसंयोगेन परसंयोगेन उभयसंयोगेन चेति वाच्यम् । आत्मसंयोगेन जीवस्य सम्यग्दर्शनम् । परसंयोगेन जीवस्याजीवस्य जीवयोरजीवयोर्जीवानामजीवानामिति विकल्पाः । उभयसंयोगेन जीवस्य नोजीवस्य जीवयोरजीवयोर्जीवानामजीवानामिति विकल्पा न सन्ति, शेषाः सन्ति ॥**

आत्मपरोभयसंगमेन सम्यक्त्वम्

**टी०**—सम्प्रति स्वामित्वशब्दोच्चारणे **स्वामित्वम्** इत्यनेन कस्य स्वामिनः सम्यग्दर्शनमित्युद्देशवाक्यमेवं कृत्वा प्रवृत्तम् । किं यत् समवाय्येतत् तस्यैवैतत्, उत तदुत्पत्तिनिमित्तभूतस्यान्यस्यापि व्यवहारार्थमाश्रीयत इति? । उच्यते—मुख्येन तावत् कल्पेन यद्यत्र समवेतं तत् तस्यैवेति, व्यवहारार्थं तु निमित्तभूतमप्याश्रीयते । एतदाह—**आत्मसंयोगेनेत्यादि** । **आत्मसंयोगेना**त्मसम्बन्धेन । यदा हि उत्पद्यमानस्य सम्यग्दर्शनस्य परतोऽपि निमित्तात् प्रतिमादि-

१ 'वियुतैः' इति ग-पाठः ।

कान्नापेक्षा क्रियते प्रतिमादेः तदाऽसौ परिणाम आत्मनि समवेत इतिकृत्वा स एवात्मा तेन परिणामेन तानि तत्त्वान्येवमभिमन्यते, अतः आत्मसंयोगेन जीवस्य सम्यग्दर्शनम्, **जीवस्य स्वामिनः सम्यग्दर्शनं** रुचिरिति । **परसंयोगेनेति** । परं साधुप्रतिमादिवस्तु तन्निमित्ती-कृत्य श्रद्धानपरिणाम उपजायते अतः स परिणामस्तत्कर्तृक इति तस्य व्यपदिश्यते । अत्र च परसंयोगे षड् विकल्पा भवन्ति जीवस्येत्यादयः । यदाऽस्य जन्तोः परमेकं मुनिमालम्ब्य क्रियानुष्ठानयुक्तं सा रुचिरुपजायते, क्षयोपशमो हि द्रव्यादिपञ्चकमुररीकृत्य प्रादुरस्ति, अतो बहिरवस्थितस्य साधोरुत्पादयितुः सा रुचिः, स्वं कुम्भ इव कुम्भकारस्येति । एवमेकम-जीवाख्यं पदार्थं प्रतिमादिकं प्रतीत्य यदा क्षयोपशमः समुपाजनि तदा तस्यैवाजीवस्य सम्यग्दर्शनं नात्मन इति । यदा पुनर्द्वौ साधू निमित्तं क्षयोपशमस्य विवक्षितौ नात्मा तदा जीवयोः सम्यग्दर्शनम् । यदा पुनरजीवौ प्रतिमाख्यावुभौ निमित्तीकृतौ तदा तयोः स्वामि-त्वविवक्षायां तत् सम्यग्दर्शनमिति । यदा पुनर्बहवो जीवाः साधवस्तस्योत्पत्तौ निमित्तं भवन्ति तदा जीवानां सम्यग्दर्शनं नतु यत्र समवेतमिति । यदा पुनर्बह्वीः प्रतिमा भगवतां दृष्ट्वा तत्त्वार्थश्रद्धानमाविर्भवति तदा च तासामेव तत्कर्तृत्वान्नात्मन इति ॥ **उभयसंयोगेनेति** । यदात्मनोऽन्तरङ्गस्य बहिरङ्गस्य च साध्वादेस्तद् विवक्ष्यते तदा उभौ तस्य सम्यग्दर्शनस्य स्वामिनौ भवत इत्युभयसंयोगोऽभिधीयते । अत्र च लाघविक आचार्यो हेयान् विकल्पान् दर्शयति । आदेयाः पुनरुपात्तव्यतिरिक्ताः । अयं तावदत्र विकल्पो न सम्भवति जीवस्य सम्यग्दर्शनमिति, यतोऽनेन षष्ठ्यन्तेन सम्यग्दर्शनस्य यः समवाय्यात्मा स वा भण्यते बाह्यो वा तीर्थकरादिर्यमवलोक्य स तादृशः परिणतिविशेषः समुदभूदिति, तत्र यद्यात्मा समवायी सम्बध्यते, नास्ति तदा परस्य सम्बन्धः, उभयसंयोगेन चैतच्चिन्त्यते, अथ बाह्यस्तीर्थकरादि-भिरभिसम्बध्यते तदा नात्मादिसम्बन्धः अतस्त्याज्य एवायं विकल्पः । एवं **नोजीवस्येति**। अजीवस्येत्यर्थः । एकस्याः प्रतिमाया विवक्षितत्वादुभयसंयोगाभाव इति हेयो विकल्पः । **तथा जीवयोः** सम्यग्दर्शनमिति न सम्भवति यस्माद् द्वावत्र समवायिनौ पुरुषौ स्वामितया विवक्षितौ मम च सम्यग्दर्शनमस्य च सम्यग्दर्शनमुत्पन्नमिति, यतस्तु तदालम्ब्योत्पन्नं विवक्षैव स्वामितया उत्पादकनिमित्तयोश्चोभयसंयोगो विवक्षितः अतस्त्यज्यते । तथा **अजीवयोः** सम्यग्दर्शनमिति द्वयोः प्रतिमयोरालम्बनीकृतयोर्भेदेन तद् विवक्षितम्, यत्र तु सम-वेतं तत्राविवक्षातस्त्यज्यते अयमपि विकल्पः । तथा पञ्चमोऽपि त्याज्यः । **जीवानामिति**। अत्र हि बहव एव सम्यग्दर्शनसमवायिनो विवक्षिता जीवा मम अस्य चास्य चेति न तु येनालम्बनेन तेषामुत्पन्नं तस्यालम्ब्यस्य तत् सम्यग्दर्शनं विवक्षितम्, तस्मादयमपि त्याज्यः। षष्ठोऽपि **अजीवानामिति** त्यज्यते, आलम्ब्यानां बहूनां प्रतिमानामेतत् सम्यग्दर्शनमिति विव-क्षितं, यत्र तूत्पन्नं तत्राविवक्षितं यत्र नोत्पन्नं तत्र विवक्षितमिति त्याज्य एव षष्ठो विकल्पः। **एवमेते उभयसंयोगविवक्षायां षडपि त्यक्ताः ॥ आदेया अपि षडेव, यथा जीवस्य च जीवस्य**

च, यस्य तदुत्पन्नं तस्य तत्परिणन्तुः यं च निमित्तीकृत्य साधुमुपजायते दर्शनं तस्य च तदिति उभयोर्विवक्षितत्वेन जीवस्य च जीवस्य च विकल्पः सम्भाव्यते।१। तथा यस्य तदुत्पन्नं तस्य च विवक्षितम्, याभ्यां च दृश्यमानाभ्यां साधुभ्यां तदुत्पादितं तयोश्च साधुजीवयोस्तत् सम्यग्दर्शनमुभयत्रापि स्वत्वेन विवक्षितत्वात् जीवस्य जीवयोश्च द्वितीयविकल्पः । २ । तथा यस्य तदुत्पन्नं तस्य विवक्षितं यैश्च दृश्यमानैः साधुभिरुत्पादितं तेषां च तत् सम्यग्दर्शनं सम्भवीति विकल्पो जीवस्य जीवानां चेति । ३ । तथा यस्य जीवस्य तदुत्पन्नं तस्य च विवक्षितं यया च दृश्यमानया प्रतिमया अजीवरूपयोत्पादितं तस्याश्च तदिति तदा जीवस्य च तत् तस्याश्च प्रतिमायास्तदिति सम्भाव्यते विकल्पः जीवस्याजीवस्य चेति । ४ । तथा जीवस्य त(य)स्य तदुत्पन्नं याभ्यां च प्रतिमाभ्यां दृश्यमानाभ्यां तदुत्पादितमुभयत्र विवक्षितत्वात् सम्भाव्ययं विकल्पो जीवस्याजीवयोश्चेति ।५। तथा त(य)स्य तदुत्पन्नं याभिश्च प्रतिमाभिः दृश्यमानाभिरुत्पादितं सर्वत्र विवक्षितत्वात् जीवस्याजीवानां चेति भङ्गकः सम्भाव्यते । ६ । एतदाह—**शेषाः सन्ति,** षडित्यर्थः । सम्प्रति तृतीयद्वारं परामृशन्नाह—**साधनम्** इति । साध्यते–निर्वर्त्यते येन तत् साधनम् । अत्र पृच्छ्यमानं, तदाह —

**भा०—साधनम् । सम्यग्दर्शनं केन भवति ? । निसर्गादधिगमाद् वा भवतीत्युक्तम् ( १-३ ) । तत्र निसर्गः पूर्वोक्तः । अधिगमस्तु सम्यग्व्यायामः[1] । उभयमपि तदावरणीयस्य कर्मणः क्षयेणोपशमेन क्षयोपशमाभ्यामिति ॥**

क्षयोपशमादीनां साधनता

**टी०—सम्यग्दर्शनं केन भवति**—याऽसौ रुचिः सुविशुद्धसम्यक्त्वदलिकोपेता सा केन भवतीत्यर्थः । इतर आह—**निसर्गादधिगमाद् वा भवतीत्युक्तम्**, एतत् कथयति–न तावेव निसर्गाधिगमौ तादृशीं रुचिं जनयतः, किन्तु निसर्गाधिगमाभ्यां क्षयोपशमादयः कर्मणां[2] जन्यन्ते, ततः क्षयोपशमादेः सम्यग्दर्शनं सम्भवति, तावपि च निसर्गाधिगमौ कर्मणां क्षयोपशमादेरेव भवतः, ततस्ताभ्यामुत्तरोत्तरक्षयोपशमं विशुद्धं विशुद्धतरमापादयमानाभ्यां यदा प्रतिविशिष्टः क्षयोपशम आपादितो भवति तदा तस्मात् प्रतिविशिष्टात् क्षयोपशमात् सम्यग्दर्शनं भवति इति कथयति । तत्र निसर्गे बहु वक्तव्यमिति प्राक् तद् दर्शितमेव, एकेन च वाक्येन न शक्यं तत् समस्तं दर्शयितुमित्यतिदिशति–**तत्र निसर्गः पूर्वोक्तः** । अधिगमोऽल्पविचारत्वादेकेनैव वाक्येन, समस्ताधिगमोपसंहारभावादाह–**अधिगमस्तु सम्यग्व्यायाम**[3] इति । गुर्वादिसमीपाध्यासिनः शुभा या क्रिया सम्यग्दर्शनोत्पादनशक्ता सा सम्यग्व्यायाम इत्युच्यते । **उभयमपीत्यादि** । **उभयमपीति** निसर्गसम्यग्दर्शनमधिगमसम्यग्दर्शनं च, तौ च निसर्गाधिगमावुभावपि कथं भवतः ? । आह—**तदावरणीयेत्यादि** । तस्य रुचिलक्षणस्य ज्ञानस्य यदावरणीयकं तत् तदावरणीयं, आवरणीयशब्दाच्च निश्चीयते

१ 'व्याख्यायाम' इति क-ख-पाठः । २ 'कर्मणां' इत्यधिकः क-ख-पाठः । ३ 'व्याख्यायाम' इति क-ख-पाठः ।

ज्ञानम्, तदन्यत्र हि ज्ञानदर्शनावरणीयवर्जिते कर्मणि नावरणीयव्यवहारः प्राय इति। किं पुनस्तदावरणीयम्? मतिज्ञानाद्यावरणीयम्, अनन्तानुबन्ध्यादि च निमित्ततया आवरणीयम्, यतस्तस्मिन्नुपशान्तेऽनन्तानुबन्ध्यादिकर्मणि तत् मतिज्ञानावरणीयं क्षयोपशमावस्थां भजते एतावता तदावरणीयं भण्यते। एतच्च पुरस्ताद् भावितमेव, अतः **तदावरणीयस्य कर्मणः क्षयेण**–उक्तलक्षणेन **उपशमेन** च क्षयोपशमाभ्यामिति च प्राप्यत इति॥ ननु च ज्ञानावरणीयस्योपशमो नास्ति, त्वया चैतन्निरूपितं ज्ञानावरणमस्यावरणमिति, तत् कथमेतत्?। उच्यते–सत्यमेतदेवं, किन्तु मोहनीयोपशमादस्य ज्ञानावरणस्य क्षयः क्षयोपशमो वा भवति, ततः क्षयात् क्षयोपशमाच्च सम्यग्दर्शनमिति भावितमेव किं भवता विस्मार्यते?॥ सम्प्रत्यधिकरणद्वारं स्पृशति—

**भा०—अधिकरणं त्रिविधमात्मसन्निधानेन परसंन्निधानेनोभयसन्निधानेनेति वाच्यम्। आत्मसन्निधानमभ्यन्तरसन्निधानमित्यर्थः। परसन्निधानं बाह्यसन्निधानमित्यर्थः। उभयसन्निधानं अभ्यन्तरबाह्ययोः सन्निधानमित्यर्थः। कस्मिन् सम्यग्दर्शनम्?। आत्मसन्निधाने परसन्निधाने उभयसन्निधाने इति। आत्मसन्निधाने तावत् जीवे सम्यग्दर्शनं जीवे ज्ञानं जीवे चारित्रमित्येतदादि। बाह्यसन्निधाने जीवे सम्यग्दर्शनं नाजीवे सम्यग्दर्शनमिति यथोक्ता विकल्पाः। उभयसन्निधाने चाप्यभूताः सद्भूताश्च यथोक्ता भङ्गविकल्पा इति॥**

आत्मपरोभयेषु सम्यक्त्ववृत्तिः

टी०—**अधिकरणमिति**। अधिक्रियते यत्र तदधिकरणम्–आधार आश्रय इति। स चाधारस्त्रिविधः–आत्मा वा यत्समवेतं दर्शनं मुख्यतः, उपचारात् परत्रापि भवति, यद् वस्तु समालम्ब्य तदुपजातं तस्मिन्नपि, तदुभयविवक्षायां चोभयत्र तद् आत्मनि परत्र च। एतदेव त्रैविध्यं दर्शयन्नाह—**आत्मसन्निधानेन**ात्मन्येव स्थितमित्यर्थः, **परसन्निधानेन** परत्र स्थितमिति, आत्मस्थमपि सदस्मिन् पक्षे न विवक्ष्यते, **उभयसन्निधाने**नात्मनि परत्र चेति **वाच्यम्**—व्याख्येयमिति। आत्मसन्निधानमिति चास्यार्थं सुहृद् भूत्वा कथयति–**आत्मसन्निधानमभ्यन्तरसन्निधानमित्यर्थः**। आत्मैवाधार आत्मसन्निधानम्, प्रसिद्धतरेण शब्देनाभ्यन्तरसन्निधानमिति व्यपदिष्टः, आन्तर आसन्नस्तस्य सम्यग्दर्शनस्येति। **परसन्निधानमिति** चास्यार्थं विवृणोति–**बाह्यसन्निधानं**, बाह्यं–प्रतिमादि कल्पितरूपम् इति। एवमुभयभावना कार्या। अधुनाऽऽधारे त्रिविधे कथिते परस्यैतदेव सन्देहकारणं जातम्। क तर्हि सम्यग्दर्शनमिति पृच्छति—**कस्मिन् सम्यग्दर्शनम्?** अथवा अन्यथा प्रश्नः–सम्यग्दर्शनमित्येष गुणः, गुणस्य चावश्यमाश्रयेण भवितव्यम्, स पुनराश्रयः

१ 'अस्य सम्यग्दर्शनस्य' इति क–टी–पाठः। २ 'बाह्याभ्यन्तरसंनिधानं' इति ग–घ–पाठः। ३ 'बाह्यप्रतिमादिः कल्पितरूप' इति क–ख–पाठः।

किमभ्यन्तरमात्मा उत बाह्यं प्रतिमादिवस्तु यदुपष्टम्भेनोपजातमुतोभयमिति प्रश्नित आह— **आत्मसन्निधाने तावदित्यादि** । आत्माधारविवक्षायां **जीवे सम्यग्दर्शनं**, तस्यान्यत्रादर्शनात्, यथा रुचिः, एवं ज्ञानचारित्रे अपीति, एतदाह–**जीवे ज्ञानं जीवे चारित्रमिति** । न च ज्ञानदर्शनचारित्राणि विरहय्यान्यो जीवोऽस्तीति काल्पनिकमपदिशति । कथम् ? यदा तावज्जीवे सम्यग्दर्शनं तदा ज्ञानचारित्रे आधारभावं प्रतिपद्येते, ज्ञानचारित्रात्मनि जीवे सम्यग्दर्शनम् । यदा जीवे ज्ञानं तदा दर्शनचरणयोराधारता, यदा जीवे चारित्रं तदा ज्ञानदर्शनयोराधारता, चारित्रमाधेयमिति । **एतदादि** इति । एतानि ज्ञानादीनि आदिर्यस्य गुणान्तरस्य तदेतदादि, तदपि जीवे आधारे दृश्यम्, भव्याभव्यत्वादि । **बाह्यसन्निधाने जीवे सम्यग्दर्शनमित्यादि** ॥ ननु चात्मन्येवोपलभ्यत इत्युक्तं कथमिदानीं परस्मिन्नपि व्यपदिशति ?। उच्यते–न यदेव यत्राविभागेनावस्थितं तदेव तत्रेत्युच्यते, किन्तु अन्यत्राप्यवस्थितमन्यत्र अपदिश्यते, देवदत्ते धनमिति गेहस्थमेव तत्रेत्युच्यते । जीवे सम्यग्दर्शनमित्यादयो विकल्पाः पूर्वं भाविता एव, इहाप्याधारभेदं केवलमुच्चारयता सर्वं तथैव भावनीयम् । **उभयसन्निधाने चाभूताः सद्भूताश्च** षडेव यथोक्ता भङ्गा एव विकल्पाः भङ्गेषु वा विकल्पा इति ॥ **स्थितिद्वारम्, स्थितिरित्येतद्** विवृणोति—

**भा०—स्थितिः । सम्यग्दर्शनं कियन्तं कालम् ? । सम्यग्दृष्टिर्द्विविधा । सादिः सपर्यवसाना सादिरपर्यवसाना च । सादिसपर्यवसानमेव सम्यग्दर्शनम् । तज्जघन्येनान्तर्मुहूर्तम्, उत्कृष्टेन षट्षष्टिः सागरोपमानि(णि) साधिकानि । सम्यग्दृष्टिः सादिरपर्यवसाना । सयोगः शैलेशीप्राप्तश्च केवली सिद्धश्चेति ॥**

सम्यग्दर्शनस्य सम्यग्दृष्टेश्च द्विधा स्थितिः

**टी०—सम्यग्दर्शनं कियन्तं कालं** सम्पन्नं सदवतिष्ठते ? "कालाध्वनोः" (पाणिनिः अ० २, पा० ३, सू० ५) इति द्वितीया । प्रश्नयितुरयमभिप्रायः–प्रागभूत्वा मिथ्यादृष्टेर्दर्शनमाविश्चकास्ति, यच्चोत्पत्तिमत् त( त्किञ्चि )त् सादि सपर्यवसानं दृष्टं मनुष्यत्वादिवत्, किञ्चित् सादि अपर्यवसानं सिद्धत्वादिवत्, आचार्योऽपि प्रश्नाभिप्रायानुरूपमेवोत्तरमाह— **सम्यग्दृष्टिर्द्विविधेत्यादि** । द्विविधेति सादिः सपर्यवसाना सादिरपर्यवसाना चेत्येवं द्विविधा शोभना दृष्टिः । का च शोभना ? या शुद्धदलिककृता, या च दर्शनमोहनीयक्षयात् त्रयाणां भवति छद्मस्थस्य श्रेणिकादेरिव, अपरा भवस्थस्यापायसद्द्रव्यपरिक्षये केवलिनः, अपरा सिद्धस्येति । तत्र याऽपायसद्द्रव्यवर्तिनी श्रेणिकादीनां सद्द्रव्यापगमे च भवति अपायसहचारिणी सा सादिसपर्यवसाना, यस्मिन् काले श्रेणिकादिभिर्दर्शनमोहसप्तकं क्षपयित्वा रुचिराप्ता स आदिस्तस्याः, यदा त्वपायः–आभिनिबोधिकमपगतं भविष्यति केवलज्ञाने उत्पन्ने सोऽन्तोऽस्याः सम्यग्दृष्टेः, एतदाह–**सादिः सपर्यव-**

---

१ 'अन्यथा' इति पाठान्तरम् । २ 'मन्यत्वं' इति क–ख–पाठः ।

**साने**ति। या तु भवस्थकेवलिनो द्विविधस्य सयोगाऽयोगभेदस्य सिद्धस्य वा दर्शनमोहनीयसप्तकक्षयादपायसद्द्रव्यक्षयाच्चोदपादि सा **सादिरपर्यवसाने**ति। यस्मिन् काले दर्शनमोहनीयं क्षपयित्वा प्राप्ता स आदिः तस्याः । एवमेतत् तत्त्वमित्येवंविधा या रुचिः सा न कदाचित् तस्यापैष्यतीति । एवं यथाक्रममुपन्यस्य स्वयं व्याख्यानयति—सादिसपर्यवसानेति यदुक्तं तस्येदं व्याख्यानम्- **सादिसपर्यवसानमेव सम्यग्दर्शनम्** । यच्चापायसद्द्रव्यवर्ति तच्च सम्यग्दर्शनमितीह भणति । यच्च सद्द्रव्यविगमे अपायसम्भवे श्रेणिकादीनां तच्च भणति । कथं च सादीति? सहादिना वर्तत इति सादि, यस्मिन् काले मिथ्यादर्शनपुद्गलान् विशोध्य स्थापयति सम्यग्दर्शनतया तदा सादि, यदा त्वनन्तानुबन्ध्युदयात् पुनर्मिथ्यादर्शनतया परिणाममानेष्यति क्षपयित्वा वा तान् सम्यग्दर्शनपुद्गलान् केवली भविष्यति तदा सपर्यवसानम् । सह पर्यवसानेन यद् वर्तते तत् सपर्यवसानमेव सम्यग्दर्शनम् । यदा च दर्शनसप्तकं क्षपयित्वा प्राप्नोति श्रेणिकादिः स आदिस्तस्य केवलप्राप्तावन्त इति । तत् पुनः सम्यग्दर्शनं सादिसपर्यवसानम्। शुद्धदलिकसहवर्तिनी रुचिः कियन्तं कालं भवतीति यत् पुरस्ताच्चोदितं तद् भावयन्नाह —**तज्जघन्येने**त्यादि । **तत्**—सम्यग्दर्शनं **जघन्येन अन्तर्मुहूर्तम्, मुहूर्तो घटिकाद्वयं,** मुहूर्तस्य मध्यं अन्तर्मुहूर्तम् । तदवतिष्ठते जघन्येनेति । 'सुप्सुपे'ति समासो भवति । अत्यन्तसंयोगे कालस्य द्वितीया । एतद् भवति तथा कश्चिज्जन्तुः सम्यग्दर्शनं द्विर्घटिकान्तस्तत्परिणाममनुभूय मिथ्यादर्शनी भवति केवली वा परतः, एवं च जघन्यां स्थितिमाख्यायोत्कृष्टां निरूपयन्नाह—**उत्कृष्टेने**त्यादि । उत्कर्षेण कियन्तं कालमास्ते? **षट्षष्टिः सागरोपमाणि साधिकानि**, तद्भावना—**इहाष्टवर्षः** सम्यग्दर्शनमधिगम्य समासादितदीक्षः पूर्वकोटीं विहत्याष्टवर्षोनाम् अपरिच्युतसम्यग्दर्शनो विजयादीनां चतुर्णामन्यतमस्मिन् विमाने उदपादि स्थितावुत्कृष्टायां, त्रयस्त्रिंशत्सागरोपमस्थितिः, तत्क्षयाच्च प्रच्युत्य मनुजेषु सहदर्शनः समजनि, पुनस्तेनैव प्रकारेण संयममनुष्ठाय तदेव विमानं तावत्स्थितिमनुप्रापत्, पुनः स्थितौ क्षीणायामक्षीणतत्त्वार्थश्रद्धानः ( नरत्वमनुगतः )संयमं प्राप्यावश्यन्तया सिद्ध्यति । एवं द्वे त्रयस्त्रिंशतौ षट्षष्टिः पूर्वकोटीत्रयातिरिक्ता, अच्युतकल्पे वा द्वाविंशतिसागरोपमस्थितिस्तिस्रो वाराः समुत्पद्यते, अतः परमवश्यम्भाविनी तस्य सिद्धिरिति । यदुक्तं पुरस्तात्—सम्यग्दृष्टिर्द्विविधा सादिः सपर्यवसानेति सोंऽशो भावितः । स्थितिरेव सादिरपर्यवसानेति योंऽशस्तं भावयत्यनेन—**सम्यग्दृष्टिः सादिरपर्यवसाना सयोग** इत्यादिना । सह योगैर्मनोवाक्कायलक्षणैः सयोगकेवली, उत्पन्ने केवलज्ञाने यावच्छैलेशीं नो प्रतिपद्यते तावत् सयोगकेवली, शैलेशीप्रतिपत्तौ तु निरुद्धयोगत्वादयोगः । एतदेवाह—**शैलेशीप्राप्त** इति । शिलानां समूहाः शैलाः तेषामीशो मेरुस्तस्य भावः शैलेशी अचलतेतियावत् तां प्राप्तः । स चेयान् कालो ज्ञेयः–मध्यमया वृत्त्या पञ्च ह्रस्वाक्षराण्युच्चार्यन्ते यावत्, ततः परं सिद्ध्यत्येव । एष द्विविधोऽपि केवली सयोगायोगाख्यो भवस्थः साद्यपर्यवसानः सम्यग्दृष्टिरुच्यते । सिद्धश्च

सर्वकर्मवियुत इति । यतः सादिरप्यसौ रुचिर्न कदाचिदपैष्यतीति । सम्यग्दृष्टिः सादिरपर्यवसानैवेत्ययं स्त्रीलिङ्गनिर्देशः भवस्थकेवलिनः सयोगायोगस्य च सिद्धस्य च तस्या रुचेरनन्यत्वख्यापनार्थो, नासौ ततोऽन्य इति । अथवा सम्यग्दृष्टिः सादिरपर्यवसाना याऽभिहिता तामनुभवति सयोगादिरिति नेयम् ॥ सम्प्रति विधानद्वारं परामृशन्नाह—

भा०—**विधानम्। हेतुत्रैविध्यात् क्षयादि त्रिविधं सम्यग्दर्शनम्। तदावरणीयस्य कर्मणो दर्शनमोहनीयस्य च क्षयादिभ्यः। तद्यथा–क्षयसम्यग्दर्शनं, उपशमसम्यग्दर्शनं, क्षयोपशमसम्यग्दर्शनमिति। अत्र चौपशमिकक्षायोपशमिकक्षायिकाणां परतः परतो विशुद्धिप्रकर्षः ॥ ७ ॥ किं चान्यत् ॥**

टी०—**विधानमिति**। विधीयते तदिति विधानं भेदः प्रकार इति ॥ ननु च साधनद्वारेऽभिहित एव भेदो निसर्गसम्यग्दर्शनम्, अधिगमसम्यग्दर्शनमिति च, किं पुनर्भेद आख्यायते ?। उच्यते–तत्र न सम्यग्दर्शनस्य भेदः प्रतिपिपादयिषितः, किन्तु निमित्तम्, तत्र क्षयादि यदुत्पत्तौ कारणतां प्रतिपद्यते तद्भेदो विवक्षितः, इह तु तेन निमित्तेन यत् कार्यमुपजनितं तस्य भेदः प्रतिपाद्यत इति, एवं च कृत्वा वक्ष्यमाणस्य सङ्ख्याद्वारस्यास्य च विधानद्वारस्य स्पष्ट एव भेदो निदर्शितः स्यात्। विधानं सम्यग्दर्शनस्य भेदकं, क्षयसम्यग्दर्शनम् उपशमसम्यग्दर्शनं क्षयोपशमसम्यग्दर्शनमिति। सङ्ख्याद्वारेषु तद्वतो भेदः प्रतिपाद्यते, कियत् सम्यग्दर्शनम् ? कियन्तः सम्यग्दर्शनिन इत्यर्थः। निर्णयवाक्येऽपि चासङ्ख्येयानि सम्यग्दर्शनानीत्यस्मिन्नसंख्येयाः सम्यग्दर्शनिन इत्यर्थः, मतुब्लोपादभेदोपचारात् अर्शआदिपाठाद् वा, तस्माद्युक्तं त्रयाणां साधनविधानसङ्ख्याद्वाराणां परस्परेण भेद इति। सम्प्रति भेदकथने प्रवर्तमान एकस्याश्च भेदरूपता रुचेरयुक्तरूपेति मन्यमानः कारणोपाधिकं भेदं दर्शयन्नाह—**हेतुत्रैविध्यात् क्षयादि त्रिविधमित्यादि**। तिस्रो विधा यस्य स त्रिविधो हेतुः अन्यपदार्थः, त्रिविधस्य भावस्त्रैविध्यम्, हेतोस्त्रैविध्यं हेतुत्रैविध्यम्, तस्माद्धेतुत्रैविध्याद् वर्तमानसामीप्यादिवत् समासः। हेतुत्रैविध्यप्रदर्शनायाह–**क्षयादि त्रिविधं सम्यग्दर्शनम् इति**। कार्यनिर्देश एषः, न च त्रिभिः सम्भूयैकं जन्यते मृदुदकगोमयैरिवोपवेशनकं, किन्तु क्षयेणान्यैव रुचिरात्यन्तिकी सकलदोषरहिताऽऽविर्भाव्यते, क्षयोपशमेनापि चान्यादृश्येव, तथोपशमेनेति, अत**स्त्रिविधं सम्यग्दर्शनम्**। यत्कार्यं क्षयादिहेतुभिः। के पुनस्ते हेतव इति ?। उच्यते–क्षयादयः, कस्य ते क्षयादयोऽत आह–**तदावरणीयस्येत्यादि**। तस्य–सम्यग्दर्शनस्य, **आवरणीयम्**–आच्छादकं शशलाञ्छनस्येवाभ्रादि, तस्य चावरणीयं कर्म ज्ञानावरणीयं, मत्याद्यावरणीयमित्यर्थः। तस्य तदावरणीयस्य कर्मणः। तथा दर्शनमोहनीयस्य च इति, कस्येति चेत् ? उच्यते–अनन्तानुबन्ध्यादिदर्शनमोहनीयस्य चेति, अनन्तानुबन्ध्यादिदर्शनसप्तकस्य क्षयादिभ्य इति च–क्षयउपशमक्षयोपशमेभ्यो हेतुभ्यस्तदुपजायते, सम्यग्दर्शनावरणीयस्येति च ब्रुवता ज्ञानावरणीयम-

साधन-विधान–संख्यानां परस्परेण भेदः

भ्युपगतम्, तदभ्युपगमे च ज्ञानत्वं सम्यग्दर्शनस्य सुप्रतिपाद्यम् । तथा दर्शनमोहनीयस्येति ब्रुवता इदमभ्युपगतम्—दर्शनमोहनीयस्य क्षयादिषु सत्सु तत्प्रादुर्भावो न पुनर्दर्शनमोहस्तदावरणमित्येतद् भावितमेव पुरस्तात् । ग्रन्थकारस्याप्ययमेवाभिप्रायः पुनरुद्घट्टित इति । **तद्यथा इति**। एभ्यो हेतुभ्यो यत् कार्यमुपजातं तत् प्रदर्श्यते—**क्षयसम्यग्दर्शन**मिति। मत्याद्यावरणीयदर्शनमोहसप्तकक्षयादुपजातं क्षयसम्यग्दर्शनमभिधीयते, तेषामेवोपशमाज्जातं उपशमसम्यग्दर्शनमुच्यते, तेषामेव क्षयोपशमाभ्यां जातं क्षयोपशमसम्यग्दर्शनमभिदधति प्रवचनाभिज्ञाः । एषां च क्षयादीनां प्राग्भावना कृतैव, इह केवलं तदावरणीयेषु लगनीया इति। एवं क्षयादिहेतुकं यत् कार्यमुपाजनि तत् प्रदर्श्याधुना एतत् पृच्छ्यते—किमेकरूपाण्येवैतानि उतास्ति कश्चित् प्रकर्ष एषामिति ? । उच्यते—

**अत्र चेत्यादि** । अत्रेति एषु क्षयादिसम्यग्दर्शनेषु, यथा कार्यभेदोऽभ्युपगतः एवं प्रकर्षभेदोऽभ्युपगन्तव्य इति कथयत्येतच्चशब्दः । तं च प्रकर्षं दर्शयन्नाह—**औपशमिके**त्यादि। पूर्वं च क्षयसम्यग्दर्शनं प्रधानत्वादुपन्यस्येदानीं प्रकर्षस्य निदर्श्यत्वादन्ते तदुपन्यस्यति। उपशमेन—उदयविघातरूपेण निर्वृत्तमौपशमिकं, क्षयेण—उपरिशाटरूपेणोपशमेन च निर्वृत्तं क्षायोपशमिकम्, क्षयेण निर्वृत्तं क्षायिकम्, अत एषामौपशमिकादीनामिमां रचनामाश्रित्य परस्य परस्य विशुद्धिप्रकर्षो निर्मलता स्वच्छता तत्त्वपरिच्छेदितेत्यर्थः । औपशमिकं हि सम्यग्दर्शनं सर्वमलीमसम्, अल्पकालत्वात्, भूयश्च मिथ्यात्वगमनात्, यतोऽन्तर्मुहूर्तमात्रं भवेत्, यदि च कालं तत्रस्थो न करोति एवं सति मिथ्यादर्शनमेव प्रतिपद्यत इत्यागमः । तस्माच्चौपशमिकतः क्षायोपशमिकसम्यग्दर्शनं विशुद्धतरम्, बहुकालावस्थायित्वात्, यत उत्कृष्टेन षट्षष्टिः सागरोपमाणि साधिकानि तदुक्तम्, अत एव च तस्य वस्तुपरिच्छेदे स्पष्टं ग्रहणसामर्थ्यमनुमातव्यमागमाच्चास्मात्, ततश्च क्षायिकं विशुद्धतमम्, सर्वकालावस्थायित्वात् स्पष्टवस्तुपरिच्छेदाच्चेति ॥ ७ ॥

**किं चान्यदित्युत्तरसूत्रसम्बन्धवाक्यं**, न केवलमेभिरेवैभिश्च निश्चयः कार्य इति, कैरिति चेदित्यत आह—

**सूत्रम्—सत्सङ्ख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ॥१–८॥**

**टी०—सत्सङ्ख्येत्यादि** । सच्छब्दं च सङ्ख्यादिविशेषणं कश्चिदाश्रयेदित्यतो निराकरणार्थं विविच्य दर्शयति—

**भा०—सत्, सङ्ख्या, क्षेत्रं, स्पर्शनं, कालः, अन्तरं, भावः, अल्पबहुत्वमित्येतैश्च सद्भूतपदप्ररूपणादिभिरष्टाभिरनुयोगद्वारैः सर्वभावानां**[१] **विकल्पशो विस्तराधिगमो भवति । कथमिति चेत्, उच्यते—सत्, सम्यग्दर्शनं किमस्ति नास्ति ? अस्तीत्युच्यते । क्वास्तीति चेत्, उच्यते—अजीवेषु तावन्नास्ति, जीवेषु**

१ ' तत्त्वानां ' इत्यधिकः क–ख–पाठः ।

**तु भाज्यम् । तद्यथा–गतीन्द्रियकाययोगकषायवेदलेश्यासम्यक्त्वज्ञानदर्शनचारित्राहारोपयोगेषु त्रयोदशस्वनुयोगद्वारेषु यथासंभवं सद्भूतप्ररूपणा कर्तव्या ॥**

टी०—**सत् सङ्ख्या क्षेत्रमित्यादि** युक्तमेवैतद् द्वारमिति । इतिशब्द इयत्तायाम् । इयद्भिरेव येऽन्ये तेऽत्रैवान्तर्भवन्ति, **एतैश्च सूत्रोक्तैः** । एतदेव विशेषयति—**सद्भूतपदप्ररूपणादिभिः, सद्भूतस्य**—विद्यमानार्थस्य सम्यग्दर्शनपदस्य **प्ररूपणा**—तत्त्वकथनं सा आदिर्येषां तानि सद्भूतपदप्ररूपणादीनि[1] **तैरिति** विवेकेन फलं दर्शयति—**अष्टाभिरिति** । तेषां च व्याख्यानाङ्गतां कथयति—**अनुयोगद्वारैरिति** । **सर्वभावानाम्** इत्यनेनैषां व्यापितां कथयति–**सदादीनां विकल्पश इत्यादि** व्याख्यातमेव । **कथमिति** चेदित्यनेन पराभिप्रायमाशङ्कते–केन प्रकारेण एभिर्विस्तरेणाधिगमः क्रियत इत्येवं मन्येथाः ? **उच्यते**–यथा क्रियते विस्तराधिगम इति, सदित्यनेनाद्यद्वारं परामृशति, कथं चैतस्य द्वारस्योत्थानं ? यथा शङ्कते परः–किमस्ति नास्तीत्येवम्, अन्यथा सत्त्वे निर्ज्ञाते अयुक्तमेवैतत् कथनमिति, अत आशङ्कावाक्यं दर्शयति–**सम्यग्दर्शनं किमस्ति नास्तीति** । अस्माच्चायं संशयः, यतः शब्दोऽसत्यपि बाह्येऽर्थे शशविषाणादिकः प्रवर्तमानो दृष्टः, सति च बहिरङ्गेऽर्थे घटादौ दृष्टो घटादिः, अतः किं सत्यर्थे उतासति सम्यग्दर्शनशब्दः प्रवृत्तो बहिरर्थ इति प्रश्नयति । सूरिराह–**अस्तीत्युच्यते** । विद्यते सम्यग्दर्शनशब्दवाच्योऽर्थो घटादिशब्दवाच्यवत् । कथं चानेन निरचायि, आप्तोपदेशात् प्रशमसंवेगनिर्वेदाद्यनुमानाच्च । इतरेणाव्यक्ताभिधानवत् प्रतिपद्य पुनश्चोद्यते–**क्व चैतदिति** । गुणो ह्ययं तेन च परतन्त्रत्वात् साधिकरणेन भवितव्यम् रसेनेवाणुव्यापिनेत्येतदाशङ्क्य पराभिप्रायमाचार्य आह–**क्वास्तीति चेत्** मन्यसे, **उच्यते**–द्वये पदार्थाः–जीवा अजीवाश्च । तत्राजीवेषु **तावन्नास्ति,** निश्चयावलम्बनेन धर्माधर्माकाशपुद्गलेषु, यतो ज्ञानाख्यश्चेतनावत्सु समवेतो गुणः स कथमन्यधर्मः सन्नन्यत्र वर्तते । यच्चोक्तं कस्येति स्वामित्वचिन्तायां अजीवस्य प्रतिमादेः सम्यग्दर्शनमिति तदुपचारात्, नत्वसौ मुख्यः कल्पः । इह तु मुख्यां वृत्तिमशिश्रियद् वाचकमुख्यः, अजीवेषु तावदुक्तक्रमेण नास्तीति । अथ जीवेषु का वार्तेत्यत आह—**जीवेषु तु भाज्यम्** । तुशब्द एवकारार्थे भाज्यमेव, नावश्यम्भावि । सर्वेषु भजनां च कथयन्ति—

**तद्यथा–गतीन्द्रियेत्यादिना** । गत्यादीनि चान्यत्रावश्यकादौ प्रपञ्चेनोक्तानि, अशून्यार्थं तु किञ्चिद् दर्श्यते–गत्यादिषु पूर्वं प्रतिपन्नाः प्रतिपद्यमानाश्च सम्यक्त्वं चिन्त्यन्ते । तत्र नारकप्रभृतिषु गतिषु चतसृष्वपि पूर्वं प्रतिपन्नाः प्रतिपद्यमानाश्च जीवाः सन्ति, नरकगतौ क्षायिकक्षायोपशमिके स्यातां, तिर्यग्गतावप्येते, मनुष्यगतौ त्रीण्यपि क्षायिकादीनि सन्ति, देवगतौ

1 'प्ररूपणादीनि' इति क–ख–पाठः ।

क्षायिकक्षायोपशमिके भवेताम् । इन्द्रियाणि सामान्येनाङ्गीकृत्य सन्ति पूर्वप्रतिपन्नाः प्रतिपद्यमानकाश्च विकल्पशः, एकेन्द्रियेषु न पूर्वप्रतिपन्नाः न प्रतिपद्यमानकाः । द्वित्रिचतुरिन्द्रियेष्वसंज्ञिपञ्चेन्द्रियेषु च पूर्वप्रतिपन्ना भाज्याः सास्वादनसम्यक्त्वं प्रति प्रतिपद्यमानास्तु न सन्त्येव, संज्ञिपञ्चेन्द्रियेषु द्वयमप्यस्ति । कायान् पृथिव्यादीनाश्रित्य सामान्येन द्वयमप्यस्ति, विशेषेण धरणिजलानलानिलतरुषु द्वयं न सम्भवत्येव, द्वित्रिचतुरसंज्ञिपञ्चेन्द्रियेषु पूर्वप्रतिपन्नाः स्युः नाधुना प्रतिपद्यन्ते, संज्ञिपञ्चेन्द्रियत्रसकाये द्वयमपि स्यात् । योगे मनोवाक्कायेषु सामान्येन द्वयमपि, काययोगभाजां पृथिव्यादीनां तरुपर्यन्तानां न द्वयं, कायवाग्योगयुजां द्वित्रिचतुरसंज्ञिपञ्चेन्द्रियाणां पूर्वप्रतिपन्नाः स्युः न प्रतिपद्यन्त इति । मनोवाक्काययोगानां द्वयम् । अनन्तानुबन्धिनामुदये न द्वयं, शेषकषायोदये द्वयम् । वेदत्रयसमन्वितानां द्वयमस्ति सामान्येन; विशेषेणापि स्त्रीवेदे द्वयं पुरुषवेदे द्वयं, नपुंसकवेद एकेन्द्रियाणां न द्वयं, विकलेन्द्रियाणामसंज्ञिपञ्चेन्द्रियपर्यवसानानां पूर्वप्रतिपन्नाः केचित् सन्ति, न प्रतिपद्यमानकाः, संज्ञिपञ्चेन्द्रियनपुंसकेषु द्वयं, नारकतिर्यङ्मनुष्यामरेषु लेश्यासु उपरितनीषु द्वयम्, आद्यासु प्रतिपन्नाः स्युः न तु प्रतिपद्यन्ते । किं सम्यग्दृष्टिः प्रतिपद्यते मिथ्यादृष्टिर्वा ? । अत्र निश्चयनयस्य सम्यग्दृष्टिः प्रतिपद्यते, अभूतं नोत्पद्यत इति शशविषाणादिवत् । व्यवहारस्य मिथ्यादृष्टिः प्रतिपद्यते, प्रतिपत्तेरभूतभावविषयत्वात्, असत् कारणे कार्यमिति दर्शनात् । एवं ज्ञानी निश्चयस्याज्ञानी व्यवहारनयस्य । चक्षुर्दर्शनिषु द्वयम् एका(चतुर)क्षाद्यसंज्ञिषु पूर्वप्रतिपन्नाः स्युर्न तु प्रतिपद्यमानकाः, संज्ञिपञ्चेन्द्रियचक्षुर्दर्शनिषु द्वयम्, (अचक्षुर्दर्शनिषु द्वयम् ), अचक्षुर्दर्शनिषु पृथिव्यादिषु पञ्चसु द्वयं नास्ति, शेषेषु द्वित्रिचतुरसंज्ञिष्वचक्षुर्दर्शनिषु पूर्वप्रतिपन्नाः स्युर्न तु प्रतिपद्यन्ते, संज्ञिपञ्चेन्द्रियाचक्षुर्दर्शनिषु द्वयम् । चारित्री पूर्वप्रतिपन्न एव, अचारित्रः पूर्वप्रतिपन्नः प्रतिपद्यमानकश्च स्यात् । आहारकेषु द्वयम्, अनाहारकः पूर्वप्रतिपन्नः न तु प्रतिपद्यमानकोऽन्तरगतौ सम्भविता । **उपयोग** इति, साकारोपयुक्तः प्रतिपद्यते उत अनाकारोपयुक्त इति, उच्यते–साकारोपयुक्तः प्रतिपद्यते पूर्वप्रतिपन्नश्च, अनाकारोपयुक्तस्तु पूर्वप्रतिपन्नः स्यात् नतु प्रतिपद्यमानकः, यतः " सर्वाः किल लब्धयः साकारोपयोगोपयुक्तस्य भवन्ति" ( **प्रज्ञापनासूत्रे** उपयोगपदे ) पारमर्षवचनप्रामाण्यात् । एतेषु **त्रयोदशस्वनुयोगद्वारेषु** व्याख्यानाङ्गेषु **यथासम्भवमिति** यत्र सम्भवति यत्र न सम्भवति यथा वा क्षायिकादि सम्यग्दर्शनं यत्र सम्भवति तथा वाच्यं, सद्भूतपदार्थस्य सम्यग्दर्शनपदस्य **प्ररूपणा** व्याख्या **कर्तव्या** उन्नेया । भाषकपरित्तादयस्तु नादृता भाष्यकारेण, प्रायस्तेषामुपात्तानुयोगद्वारान्तर्गतेरिति, यतो भाषकः पञ्चेन्द्रियेष्ववतरति, परित्तोऽपि कायेषु पर्याप्तस्तेष्वेव, सूक्ष्मसंज्ञिभवचरमाश्च तेष्वेव, अतो नादृता इति ॥ द्वितीयद्वारमुपन्यस्यन्नाह—

---

१ धनुश्चिह्नगतो भागः ग–पाठः ।

**भा०—सङ्ख्या। कियत् सम्यग्दर्शनम् ?। किं सङ्ख्येयमसङ्ख्येयमनन्तमिति ?। उच्यते–असङ्ख्येयानि सम्यग्दर्शनानि, सम्यग्दृष्टयस्त्वनन्ताः ॥**

**टी०—सङ्ख्येति। सङ्ख्या** इयत्ता, सा चैका गणितव्यवहारानुवर्तिनी द्व्यादिका शीर्षप्रहेलिकान्ता गणितविषयातीता च, असंख्येया जघन्यमध्यमोत्कृष्टसंज्ञिता, अपरा तदतिक्रमेण व्यवस्थिता अनन्ता, साऽपि जघन्यादिभेदत्रयानुगता **अनुयोगद्वाराद्**(सू० १४९)विस्तरार्थिनाऽधिगमनीया।

सङ्ख्येयादिसङ्ख्यास्वरूपम्।

य एते सम्यग्दर्शनसमन्विताः सत्त्वा गत्यादिषु ते कियन्त इति तद्वन्त इह पृच्छ्यन्ते। उक्तं चेदं पुरस्तात्, ततः पृच्छति—**कियत् सम्यग्दर्शनं**–किंपरिमाणास्ते सम्यग्दर्शनिन इत्यर्थः, स्वयमेवोद्घट्टयति सङ्ख्याभिज्ञः सन्–किं सङ्ख्येयं सम्यग्दर्शनराशिमभ्युपगच्छामः, उतासङ्ख्येयं, उतानन्तमिति ?। एवं पृष्टे आह–**उच्यते–असङ्ख्येयानि सम्यग्दर्शनानि**, न सङ्ख्येया नाप्यनन्ताः, किं तर्हि ? असङ्ख्येयाः सम्यग्दर्शनिन इति। क्षयसम्यग्दृष्टीन् सिद्धान् केवलिनश्च विरहय्य शेषाः संसारवर्तिनो यावन्तः क्षयादिसम्यग्दर्शनिनस्ते निर्दिश्यन्ते असंख्येयानि सम्यग्दर्शनानीत्यनेन। ये तर्हि केवलिनः सिद्धाश्च ते सर्वे कियन्त इत्याह–**सम्यग्दृष्टयस्त्वनन्ताः**। भवस्थकेवलिनः सिद्धांश्चाङ्गीकृत्योक्तं सम्यग्दृष्टयस्त्वनन्ता इति॥ द्वारान्तरस्पर्शनेनाह—

**भा०—क्षेत्रम्। सम्यग्दर्शनं कियति क्षेत्रे ?। लोकस्यासङ्ख्येयभागे ॥**

**टी०—क्षेत्रम्।** क्षियन्ति–निवसन्ति यत्र जीवादिद्रव्याणि तत् क्षेत्रम्–आकाशम्, यत एतेऽसङ्ख्येयतया निर्धारिता अनन्ततया च, एभिः पुनः कियदाकाशं व्याप्तमिति संशये सति पृच्छति–**सम्यग्दर्शनं कियति क्षेत्रे ?**॥ ननु च सम्यग्दर्शनमेतेन पृच्छ्यते निर्णयोऽपि तस्यैव, सम्यग्दृष्टयस्तु न चोद्यन्ते न निर्णीयन्त इति। उच्यते–इहायं सम्यग्दर्शनशब्दो भावसाधनः सम्यग्दृष्टिसम्यग्दर्शनसमवायी उभयोर्वाचकोऽभ्युपगन्तव्यः, अपायसद्द्रव्यसम्यग्दर्शनिनस्तद्वियुतस्य च सिद्धभवस्थकेवल्याख्यस्य, निर्णयवाक्येऽप्येवमेव दृश्यम्, अथवा सम्यग्दर्शनिषु निर्ज्ञातेषु सम्यग्दृष्टयोऽप्यनेनैव रूपेण ग्रहीष्यन्त इति सम्यग्दर्शनिनः प्रक्ष्यति, अथवा एकं जीवमुद्दिश्यायं प्रावृतत् प्रश्नः, एकत्रावधृते क्षेत्रेऽन्यत्राप्यनुमानात् तत् तथा प्रतिपत्स्येऽहमिति पृच्छति–**सम्यग्दर्शनं कियति क्षेत्रे** इति। एकस्मिंश्च पृच्छ्यमाने सम्यग्दर्शने कियति क्षेत्रे इत्येकवचनमपि सुघटं भवति। सूरिराह–**लोकस्यासङ्ख्येयभागे** इति। यदैकः पृष्टः एकस्यैवोत्तरं तदा कोऽर्थः ? योऽहं सम्यग्दर्शनी सोऽहं कियति क्षेत्रे–आधारे स्थितः ? पृष्टे उत्तरं–लोकस्यासङ्ख्येयभागे, धर्माधर्मद्रव्यद्वयपरिच्छिन्नः आकाशदेशो जीवाजीवाधारक्षेत्रं लोकः, तस्यासङ्ख्येयभागे त्वं स्थितः, यतः असङ्ख्येयप्रदेशो जीवः अतोऽसङ्ख्येयभाग एवावगाहते सर्वस्य लोकस्य, बुद्ध्या असङ्ख्येयभागखण्डकल्पितस्य य एकोऽसङ्ख्येयभागस्तत्र स्थित इति। अथापि सर्वानेवाङ्गीकृत्य प्रश्नः तथाप्यसङ्ख्येयभागे पूर्वस्मादधिकतरे लोकस्य सर्वे वर्तन्त इति युक्तमुत्तरम्॥

भा०—स्पर्शनम् । सम्यग्दर्शनेन किं स्पृष्टम् ?। लोकस्यासङ्ख्येयभागः, अष्टौ चतुर्दशभागा देशोनाः, सम्यग्दृष्टिना तु सर्वलोक इति ॥ अत्राह–सम्यग्दृष्टिसम्यग्दर्शनयोः कः प्रतिविशेष इति ?। उच्यते–अपायसद्द्रव्यतया सम्यग्दर्शनम्, अपायः–आभिनिबोधिकम्, तद्योगात् सम्यग्दर्शनम्। तत् केवलिनो नास्ति । तस्मात् न केवली सम्यग्दर्शनी, सम्यग्दृष्टिस्तु भवति ॥

टी०—स्पर्शनम् । आकाशप्रदेशैः पर्यन्तवर्तिभिः सह यः स्पर्शस्तत् स्पर्शनम्, अस्मिन् द्वारे पृच्छयते–सम्यग्दर्शनेन किं स्पृष्टम् इत्यनेन । अत्रापि सम्यग्दर्शनशब्दः सामान्यवाची दृश्यः, एकं चाङ्गीकृत्य प्रवृत्त इति मन्तव्यम्, उत्तरम्–लोकस्यासङ्ख्येयभागः; स्पृष्ट इत्येकानेकप्रश्नानुरोधेन नेयम् । यः पुनः समुद्घातप्रतिपन्नः चतुर्थसमयवर्ती भवस्थकेवली तेन किं स्पृष्टं लोकस्येति ?। उच्यते–सम्यग्दृष्टिना तु सर्वलोक इति । यतोऽभिहितं "लोकव्यापी चतुर्थे तु" (प्रशम-रतौ)। तुशब्दोऽवधारणे, सम्यग्दृष्टिनैव समुद्घातगतेनैव समस्तलोकः छुप्यत इति । एतस्मिन् व्याख्याने चोदकोऽचूचुदत्–सम्यग्दृष्टिसम्यग्दर्शनशब्दयोर्व्युत्पत्तौ क्रियमाणायां भावे कारके नास्त्यर्थभेद इति, भवांश्चाह सम्यग्दर्शनेन लोकासंख्येयभागः स्पृष्टः, सम्यग्दृष्टिना तु सर्वलोक इति, तन्नूनं भवता कश्चिदर्थभेदः परिकल्पित इति, अतः प्रश्नेनोपक्रमते–सम्यग्दृष्टिसम्यग्दर्शनयोः को विशेष इति ?। सूरिराह–अत्रोच्यते–अपायसद्द्रव्येत्यादि । अपायो–निश्चयज्ञानं मतिज्ञानांशः, सद्द्रव्याणि पुनः शोभनानि प्रशस्तत्वात् विद्यमानानि वा द्रव्याणि मिथ्यादर्शनदलिकानि अध्यवसायविशोधितानि सम्यग्दर्शनतया आपादितपरिणामानि, अपायश्च सद्द्रव्याणि च अपायसद्द्रव्याणि तेषां भावः अपायसद्द्रव्यता, इत्थंभूतलक्षणा तृतीया, यावत् सोऽपायः सम्भवति यावद् वा तानि सम्भवन्तीत्येषाऽपायसद्द्रव्यता तया सम्यग्दर्शनम्। अपाययुक्तानि सद्द्रव्याणीति विनाशाशङ्कानिराचिकीर्षया सुहृद् भूत्वा सूरिराचष्टे–अपायः–आभिनिबोधिकम्, तृतीयो भेदः आभिनिबोधिकस्य निश्चयात्मकः प्रसिद्धः तेन योगस्तद्योगः तस्मात् तेनापायेन योग इति वोच्यते, यतः सम्यग्दर्शनपुद्गलेषु सत्सु चापगतेषु च भवतीति, व्यापी स इत्यर्थः, तद्योगात् सम्यग्दर्शनम्, एतेनापायेन यावदस्ति सम्बन्ध इति, तेन च सम्बन्धः(धे) सत्सु च सद्द्रव्येष्वक्षीणदर्शनसप्तकस्यासत्सु च सद्द्रव्येषु क्षीणदर्शनसप्तकस्य, उभय्यामप्यवस्थायां सम्यग्दर्शनं द्रष्टव्यम् । उभय्यामप्यवस्थायां सम्यग्दृष्टिव्यपदेशो नास्ति । तत् केवलिनो नास्तीत्यादि। तदिति सम्यग्दर्शनं सद्द्रव्यापाययोगजनितव्यपदेशं केवलिनोऽतीन्द्रियदर्शित्वात् न समस्ति। अतो न सम्यग्दर्शनी केवली । कस्तर्हि ? आह–सम्यग्दृष्टिस्तु केवलीति । तानि च बुद्ध्या आदाय अपायसद्द्रव्याणि तत्र केवलिनि सम्यग्दर्शनिव्यपदेशो निषिध्यते । तैस्तु विना यदि सम्यग्दर्शनिव्यपदेशः कल्प्यते भावसाधनोऽर्थोऽविशिष्ट इतिकृत्वा तदा नास्ति निषेध इति । तुशब्दोऽमुमेवार्थमवद्योतयति । एवं च कृत्वा पूर्वप्रश्नेष्वपि सुघटं भाष्यं भवति ॥ द्वारान्तरं छुपति—

**भा०—कालः। सम्यग्दर्शनं कियन्तं कालमिति?। अत्रोच्यते—तदेकजीवेन नानाजीवैश्च परीक्ष्यम्[1]। तद्यथा—एकजीवं प्रति जघन्येनान्तर्मुहूर्तम्, उत्कृष्टेन षट्षष्टिः सागरोपमाणि साधिकानि, नानाजीवान् प्रति सर्वाद्धा॥**

टी०—**काल** इति। यदेतत् पूर्वकैर्द्वारैर्निरूपितं तत् सम्यग्दर्शनं कियन्तं कालं भवतीति प्रश्नयति॥ ननु च स्थितिद्वारेऽप्येतदेव पृष्टमुक्तं च, किमर्थं च पुनः पिष्टपेषणं क्रियते इति?। उच्यते—न कालः स्थितिमन्तरेण कश्चिदस्तीत्यस्यार्थस्य ख्यापनार्थं, तथा च वर्तमानादीन्येव काललिङ्गानि पठन्ति। अथवा एकजीवाश्रयणेन नानाजीवसमाश्रयणेन चास्ति स्थितिद्वारे साक्षाद् विधानमिति, अतो युज्यते प्रश्नः। तथा च "पुव्वभणियं तु जं भण्णए[2]" (**निशीथ-भाष्ये**) इत्यादि। अतस्तत् सम्यग्दर्शनमेकजीवाङ्गीकरणेन सर्वजीवाङ्गीकरणेन च परीक्ष्यम्। एतदुक्तं भवति—एकेन प्राप्तं तत् कियन्तं कालमनुपाल्यत इति, नानाजीवैश्च कियन्तं कालं धार्यत इति परीक्ष्यम्। **एकजीवं प्रतीत्यादि**, पूर्वभावित एव ग्रन्थ इति, स्थितिद्वारे **नानाजीवान् प्रति सर्वाद्धा**-सर्वकालं, महाविदेहादिक्षेत्रमाश्रित्याव्यवच्छेदात्[3]। इयं तु स्थितिः क्षायोपशमिकस्य चिन्तिता, औपशमिकस्य तु यथासम्भवं अन्तर्मुहूर्तप्रमाणेति, क्षायिकस्य तु सर्वदावस्थानम्॥ अतोऽनन्तरमन्तरद्वारं स्पृशति—

**भा०—अन्तरम्। सम्यग्दर्शनस्य को विरहकालः?। एकजीवं प्रति जघन्येनान्तर्मुहूर्तम्, उत्कृष्टेन उपार्धपुद्गलपरिवर्तः। नानाजीवान् प्रति नास्त्यन्तरम्॥**

टी०—**अन्तर**मित्यनेन सम्यग्दर्शनं प्राप्य पुनश्चोज्झित्वा मिथ्यात्वदलिकोदयात् पुनः कियता कालेन लभ्यत इति पृच्छति—**सम्यग्दर्शनस्य को विरहकाल** इति?। सम्यग्दर्शनं प्राप्य पुनश्चोज्झित्वा पुनर्यावन्न सम्यग्दर्शनमासादयति स विरहकालः—सम्यग्दर्शनेन शून्यः कालः कियानिति, औपशमिकक्षायोपशमिके निश्चित्य निर्णयवाक्यं प्रवृत्तम्। **एकजीवं प्रतीत्यादि**। एको जन्तुरौपशमिकं क्षायोपशमिकं वा प्राप्य उज्झित्वा पुनः कश्चिन् मुहूर्तस्यान्तर(रेव) लभते, कश्चित् तु अनन्तेन कालेन लभते, स[4] चान्तरकाल एवमाख्यायते, उत्कृष्टेनोपार्धपुद्गलपरावर्तः, पुद्गलपरावर्तो नाम यदा जगति यावन्तः परमाणवस्ते औदारिकादितया सर्वे परिभुक्ता भवन्ति, स पुद्गलपरावर्तः औदारिकवैक्रियतैजसभाषाप्राणापानमनःकर्मभेदात् सप्तधा, एतत्समुदायस्यार्धं गृह्यते किञ्चिदूनम्। एतत् कथं प्रतिपादयितुं शक्यत इति चेत्, उपार्धपुद्गलपरावर्त इत्यनेनोच्यते '**समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्त**' इति न्यायात्। अयं चार्ध-

पुद्गलपरावर्तस्यार्थः।

---

१ 'परीक्ष्यन्ते' इति क-ख-पाठः।

२ पूर्वभणितं तु यद् भण्यते।

३ 'व्यवच्छेदास्ता यत्' इति ख-ग-पाठः। ४ 'स चानन्तरं काल' इति क-ख-पाठः।

शब्दः समप्रविभागवचनः किञ्चिन्न्यूनाभिधायित्वात् स पुँल्लिङ्गः, उपगतोऽर्धः उपार्धः, किञ्चिन्न्यून इति प्रादिसमासः । **नानाजीवानिति** । सर्वजीवानाश्रित्य **नास्त्यन्तरं**, विदेहादिषु सर्वकालं समवस्थानादिति । क्षायिकस्य त्वनपगमान्नास्त्यन्तरम् । गतमन्तरद्वारम् ॥ द्वारान्तराभिधित्सयाऽऽह—

**भा०—भावः । सम्यग्दर्शनमौपशमिकादीनां कतमो भावः ? । उच्यते—औदयिकपारिणामिकवर्जं त्रिषु भावेषु भवति ॥**

**टी०—भाव** इति । येयं रुचिः जीवस्य जिनवचनश्रद्धायिनी सा कस्मिन् भावे औपशमिकादीनां समवतरतीति प्रश्नयति—**सम्यग्दर्शनमि**त्यादिना । सम्यग्दर्शनमित्यविशिष्टां रुचिं क्षयादिरूपां त्रिविधामपि जिज्ञासते—क्व कैते इति,(कैतदिति ?) तथा प्रतिवचनमपि भविष्यति—**त्रिषु भावेष्वि**ति । औपशमिकादीनामुक्तलक्षणादीनां **कतमो भावः**—कतमावस्थेति यावत्, सूरिस्तु हेयभावनिरसिसिषया आदेयं त्रिष्वित्यनेन कथयति, औदयिकं—गतिकषायादिरूपं पारिणामिकं च भव्यत्वादिलक्षणं विहाय येऽन्ये त्रयः क्षायिकादयस्तेषु भावेषु भवति, औदयिकपारिणामिकयोर्गत्यादिभव्यत्वाद्यवधारणान्नानयोः समस्ति, अनादित्वाच्च, एष इति सूच्यते त्रिषु भवति, नौदयिकपारिणामिकयोरिति ॥ द्वारान्तरं स्पृशति—

**भा०—अल्पबहुत्वम् । अत्राह—सम्यग्दर्शनानां त्रिषु भावेषु वर्तमानानां किं तुल्यसंख्यात्वमाहोस्विदल्पबहुत्वमस्तीति ? । उच्यते—**

**टी०—अल्पबहुत्वमि**त्यनेन । अत्रैतस्मिंस्त्रिषु भावेष्विति व्याख्याते । आहान्यः—एषां क्षायिकादीनां सम्यग्दर्शनानां त्रिषु क्षायिकादिषु परिणामेषु वर्तमानानां किं तुल्यसङ्ख्यत्वमुत नेति, आश्रयभेदेन चाल्पबहुत्वचिन्तेहाश्रिता, **अल्पबहुत्वमिति**; अल्पबहुभावः । किञ्चिदल्पमत्रास्ति किञ्चित् तु बह्विति कथं भावनीयम् ? । उच्यते—

**भा०—सर्वस्तोकमौपशमिकम् । ततः क्षायिकमसङ्ख्येयगुणम् । ततोऽपि क्षायोपशमिकमसङ्ख्येयगुणम् । सम्यग्दृष्टयस्त्वनन्तगुणा इति । एवं सर्वभावानां[1] नामादिभिर्न्यासं कृत्वा प्रमाणादिभिरभिगमः कार्यः । उक्तं सम्यग्दर्शनम् । ज्ञानं वक्ष्यामः ॥ ८ ॥**

**टी०—सर्वस्तोकमौपशमिकम्**, यत ईदृशीं परिणतिं श्रेण्यारोहादिस्वभावां न बहवः सम्प्राप्नुवन्तीत्यागमात्, **ततः क्षायिकमसंख्येयगुणम्**, ततः औपशमिकात् क्षायिकमिति च । अत्रायं विशेषः प्रेक्ष्यः—छद्मस्थानां श्रेणिकादीनां यत् क्षायिकं तद् गृह्यते, अपायसद्भावात्, छद्मस्थवर्तिनश्च औपशमिकस्यावधितयोपात्तत्वात् तत इत्यनेनावधिमतापि तादृशेन भवितव्यम् । तत औपशमिकात् क्षायिकं छद्मस्थस्वामिकमसङ्ख्येयगुणमिति, योऽसावौपशमिको राशिः सोऽसङ्ख्येयेन राशिना गुण्यते, औपशमिकाद् बहुतरमितियावत् । ततोऽपि क्षायिकात् क्षायोपशमिकं भवत्यसङ्ख्येयगुणं, सर्वगतिषु बहुस्वाम्याधारत्वात् । असङ्ख्येय-

१ 'भावानां' इत्यधिको घ-पाठः ।

गुणमिति च योऽसौ क्षायिकराशिः सोऽसङ्ख्येन गुण्यते,अतः क्षायिकाद् बहुतरमास्त[1] इतियावत्। यत् तर्हि क्षायिकं कैवल्याधारं तत् कियत्?। उच्यते–सर्वकेवलिनामानन्त्यादनन्तगुणं, कैवल्याधारमेतद् दृश्यमिति, अतः **सम्यग्दृष्टयस्त्वनन्ता** इति। केवलिनोऽनन्ता इत्यर्थः। ततस्तद्वृत्त्यप्यनन्तमेव। **इति** द्वारपरिसमाप्तिसूचकः। अथ किं सम्यग्दर्शनस्यैव निर्देशादिसदादिभिर्द्वारैरधिगमः क्रियते उत ज्ञानादीनामपीति?। उच्यते–ज्ञानादीनामपि, किन्तु एकत्र सम्यग्दर्शने योजना कृताऽन्यत्राप्येवं दृश्येत्यतिदिशति–**एवं सर्वभावानाम्**। **एवमिति** यथा सम्यग्दर्शनस्य तथा सर्वभावानां ज्ञानादीनां नामस्थापनादिभी रचनां कृत्वा प्रमाणनयनिर्देशादिसदादिभिः परीक्ष्याभिगमः कार्य इति। यत् प्रस्तुतं सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः (१–१) इति तत्र यत् सम्यग्दर्शने विचार्यं तदभिहितम्, तदभिधानाच्च परिसमापितं सम्यग्दर्शनमित्येतदाह–**उक्तं सम्यग्दर्शनम्**। द्वितीयावयवव्याचिख्यासाप्रस्तावप्रदर्शनायाह–**ज्ञानं वक्ष्यामः** ॥ ८ ॥

कीदृक् तदिति चेदुच्यते—

## सूत्रम्––मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानम् ॥ १–९ ॥

**टी०**—मतिश्च श्रुतं चावधिश्च मनःपर्यायश्च केवलं च मतिश्रुतावधिमनःपर्यायकेवलानि, ज्ञानमिति चानेन पञ्चाप्येतानि एकज्ञानमिति नैवं ग्राह्यम् यथा सम्यग्दर्शनादीनि त्रीण्यपि एको मोक्षमार्ग इति, किन्तु एकैकमत्र ज्ञानमिति। यद्येवं ज्ञानानीतिभवितव्यम्, ज्ञानबहुत्वात् उच्यते,–सत्यमेव, **प्रतिज्ञारूपं तु प्रतिवचनं भवतीतिकृत्वा** एकवचनं कृतं, प्रतिज्ञातं चानेन ज्ञानं वक्ष्याम इति, अतस्तदनुरोधेनैकवचनं चकार आचार्यः। एकैकस्य ज्ञानतां प्रख्यापयन्नाह—

ज्ञानमित्येकवचने फलम्

**भा०—मतिज्ञानं श्रुतज्ञानं अवधिज्ञानं मनःपर्यायज्ञानं केवलज्ञानमित्येतत् मूलविधानतः पञ्चविधं ज्ञानम्। प्रभेदास्त्वस्य पुरस्ताद् वक्ष्यन्ते** ॥ ९ ॥

**टी०—मतिज्ञानं श्रुतज्ञानमित्यादि**। मननं मतिः परिच्छेद इत्यर्थः। शेषकारकेष्वपि यथासम्भवं ज्ञेया, ज्ञप्तिर्ज्ञानं[2] वस्तुस्वरूपावधारणमित्यर्थः। **मतिज्ञानं**, मतेर्ज्ञानमिति समासो नैव कार्यः, मतेर्ज्ञानं किं? येन सा गृह्यते, सा च गृह्यते केवलादिना, ततश्चोत्तरपदार्थप्राधान्यात् तत्पुरुषस्य तन्मात्रग्रहणं स्यात्, नत्विन्द्रियानिन्द्रियनिमित्तमिति, तस्मात् ज्ञानशब्दो व्यभिचारी सामान्यज्ञानवाचकः सन्निन्द्रियानिन्द्रियनिमित्तोपजातया मत्या समानाधिकरणतया विशेष्यते, मतिश्च सा ज्ञानं च **मतिज्ञानम्**। तच्च श्रोत्रेन्द्रियव्यतिरिक्तं चक्षुरादीन्द्रियानक्षरोपलब्धिर्या तन्मतिज्ञानम्। **श्रुतज्ञानमिति**। श्रूयते तदिति, अस्मिन् पक्षे शब्दमात्रं गृह्यते, श्रुतिः श्रवणमित्यस्मिन् पक्षे ज्ञानविशेष उच्यते, स एव च ग्राह्यः श्रुतमित्यनेन। कीदृशः स इति चेत्?

मतिज्ञानादीनां व्याख्या

१ 'बहुतममास्त' इति क–ख–पाठः। २ 'ज्ञायते ज्ञानं' इति क–ख–पाठः।

उच्यते—शब्दमाकर्णयतो भाषमाणस्य पुस्तकादिन्यस्तं वा चक्षुषा पश्यतः घ्राणादिभिर्वा अक्षराणि उपलभमानस्य यद् विज्ञानं तत् श्रुतमुच्यते, तेन ज्ञानं विशेष्यते, श्रुतं च तज्ज्ञानं चेति श्रुतज्ञानम्। **अवधिज्ञानमिति**। अवशब्दोऽधःशब्दार्थः, अवधानादवधिः, ज्ञानं—परिच्छेदः। एतदुक्तं भवति—अधोविस्तृतविषयमनुत्तरोपपादिकादीनां ज्ञानमवधिज्ञानम्, यतो बहुत्वं च विषयस्योररीकृत्यैवं व्युत्पत्तिः, अन्यथा तिर्यगूर्ध्वं वा विषयं परिच्छिन्दानस्यावधिव्यपदेशो न स्यात्। अथवा अवधिः—मर्यादा, अमूर्तद्रव्यपरिहारेण मूर्तिनिबन्धनत्वादेव तस्यावधिज्ञानत्वम्। तच्च चतसृष्वपि गतिषु जन्तूनां वर्तमानानामिन्द्रियनिरपेक्षं मनःप्रणिधानवीर्यकं प्रति विशिष्टक्षयोपशमनिमित्तं पुद्गलपरिच्छेदि देवमनुष्यतिर्यङ्नारकस्वामिकमवधिज्ञानमिति। अवधिश्च स तज्ज्ञानं च तदित्यवधिज्ञानम्। **मनःपर्यायज्ञानमिति**। मनो द्विविधं—द्रव्यमनो भावमनश्च, तत्र द्रव्यमनो मनोवर्गणा, भावमनस्तु ता एव वर्गणा जीवेन गृहीताः सत्यो मन्यमानाश्चिन्त्यमाना भावमनोऽभिधीयते। तत्रेह भावमनः परिगृह्यते, तस्य भावमनसः पर्यायास्ते चैवंविधाः—यदा कश्चिदेवं चिन्तयेत् किंस्वभाव आत्मा? ज्ञानस्वभावोऽमूर्तः कर्ता सुखादीनामनुभविता इत्यादयो ज्ञेयविषयाध्यवसायाः परगतास्तेषु यज्ज्ञानं तेषां वा यज्ज्ञानं तन्मनःपर्यायज्ञानम्। तानेव मनःपर्यायान् परमार्थतः समवबुध्यते, बाह्यांस्त्वनुमानादेवेत्यसौ तन्मनःपर्यायज्ञानम्। **केवलज्ञानमिति**। केवलं—सम्पूर्णज्ञेयं तस्य तस्मिन् वा सकलज्ञेये यज्ज्ञानं तत् केवलज्ञानम्, सर्वद्रव्यभावपरिच्छेदीतियावत्। अथवा केवलं एकं मत्यादिज्ञानरहितमात्यन्तिकज्ञानावरणक्षयप्रभवं केवलज्ञानं अविद्यमानस्वप्रभेदम्। विशुद्धिप्रकर्षापेक्षा चैषामानुपूर्वीविन्यासविरचनेति, इतिरियत्तायां, एतावदेव नान्यदस्तीति। **एतत्** इत्यवयवप्रविभागेन यदाख्यातं, मूलम्—आद्यं विधानं—भेदः, मूलं च तद्विधानं च **मूलविधानं**, मूलविधानेन—मूलविधानतः, पञ्चविधं मत्यादिज्ञेयपरिच्छेदि **ज्ञानम्**। एतदुक्तं भवति—मौलान् भेदानङ्गीकृत्य पञ्चविधमेव भवति। अथ किमन्ये एषां पञ्चानां प्रभेदाः सन्ति उत नेति?। सन्तीत्युच्यते—**प्रभेदास्त्वस्येत्यादि**। प्रभेदाः—अंशा अवयवाः **अस्य**—पञ्चविधस्योपरिष्टाद् वक्ष्यन्ते, मूलभेदास्तु न, कथितत्वादिति। मतिज्ञानस्यावग्रहादयः श्रुतस्याङ्गानङ्गप्रविष्टादयः, अवधिज्ञानस्य भवप्रत्ययादयः, मनःपर्यायज्ञानस्य ऋजुमत्यादयः, केवलज्ञानस्य तु न सन्त्येव ॥ ९ ॥

अथ पुरस्तात् प्रमाणनयैरधिगम इत्युक्तं, तत्र न ज्ञायते किं प्रमाणमित्यत आह—

## सूत्रम्—तत् प्रमाणे ॥ १–१० ॥

**टी०—तत् प्रमाणे** इति। अथवाऽन्यैरनेकधा प्रमाणमभ्युपेतं, कापिलैस्त्रिधा प्रत्यक्षानुमानागमभेदात्, अक्षपादेन चत्वारि सहोपमानेन, मीमांसकैः षडर्थापत्त्यभावाभ्यां सह, मायासूनवीयैर्द्वे प्रत्यक्षानुमाने, काणभुजैश्च द्वे त्रीणि वा दर्शनभेदात्, भवतां कथमित्यत आह—

प्रमाण-संख्या

**भा०—तदेतत् पञ्चविधमपि ज्ञानं द्वे प्रमाणे भवतः परोक्षं प्रत्यक्षं च ॥१०॥**

टी०—तच्छब्द एतदित्यस्यार्थे, पञ्चविधमपि मत्यादिज्ञानं द्वे प्रमाणे भवत इत्येतदत्र विधीयमानं, द्वे एव प्रमाणे भवतः, नान्यत् प्रमाणमस्ति ॥ ननु चान्यैरनेकधा कल्पितं, कथं पुनरवध्रियते द्वे एवेति ?। उच्यते—अन्येषामत्रैवान्तर्भावात् प्रमाणान्तरत्वं निवार्यते, न प्रमाणत्वम् । कानिचिच्च नैव प्रमाणानि, एतच्च द्वयमुत्तरत्र भाष्यकार एव दर्शयिष्यति । अथ द्वे प्रत्यक्षानुमाने इत्येवं द्वयं ग्राह्यमुतान्यथेत्याह—एवं चान्यथेति च दर्शयति, '**परोक्षं प्रत्यक्षं चे**'ति प्रत्यक्षमित्येवं परोक्षमिति च अन्यथा, परोक्षं चास्माद् अनुमानमिति नोक्तं, सिद्धान्ते परोक्षमित्युपन्यासात् । "तं समासओ दुविहं पन्नत्तं, तंजहा—पच्चक्खं परोक्खं च[1] (नन्दीसूत्रे सू० २)"इति । परैः इन्द्रियैरुक्षा—सम्बन्धो यस्य ज्ञानस्य तत् परोक्षं ज्ञानम् । एतदुक्तं भवति—इन्द्रियैर्निमित्तैः सद्भिर्यज्ज्ञानमात्मनि सम्बन्धमनुयाति तत् परोक्षं—मतिश्रुतरूपम् । यत् पुनरिन्द्रियादिनिरपेक्षमात्मन एवोपजायते तत् प्रत्यक्षम्, द्विविधेऽपि प्रत्यक्षपरोक्षे ज्ञाने यः साकारांशः स प्रमाणव्यपदेशमश्नुते, यथाभिहितम्—

"साकारः प्रत्ययः सर्वो, विमुक्तः संशयादिना ।
साकारार्थपरिच्छेदात्, प्रमाणं तन्मनीषिणाम् ॥"

इति, साकारांशस्य प्रमाणताऽवसेयेति । प्रमीयतेऽनेनेति प्रमाणम्, मीयतेऽनेनेति मानं, परिनिष्पन्नेन मानशब्देन सह प्रशब्दस्योपपदसमासः, प्रगतं प्रकृष्टं मानं प्रमाणम्, प्रमेयपरिच्छेदार्थिनः प्रमातुस्तत्परिच्छेदसिद्धिप्रधानाङ्गमतिशयोपकारित्वात् प्रकृष्टं मानं प्रमाणम् । वाक्यज्ञानद्वैविध्यात् द्विविधं, प्रत्यक्षपरोक्षभेदाद् वा । अथवा सर्वमेव ज्ञानं प्रत्यक्षं मनइन्द्रियजीवेष्वक्षशब्दस्य रूढत्वात्, सावरणानावरणविशेषात् तु भिद्यते । सावरणानां तावत् त्रितयाभिमुख्येनास्मदादीनां प्रत्यक्षमेव ज्ञानम्, तद्यथा—आत्माभिमुख्येन स्वप्ने भयहर्षरोगगमनराज्यलाभादि, मनआभिमुख्येन स्मरणप्रत्यभिज्ञानवितर्कविपर्ययनिर्धारणादि, इन्द्रियाभिमुख्याच्चक्षुरादिविषयं रूपादिवत्, निरावरणानामात्माभिमुख्येनैव, अभ्यात्मं तु स्वयंदृशां प्रत्यक्षज्ञानिनां, विशुद्धशब्दनयाभिप्रायेण चेदमेकमेव प्रत्यक्षं प्रमाणमिति ॥ आचार्य**सिद्धसेनो**ऽप्याह—

प्रमाणस्य शब्दार्थः

"अभित्रि मादृशां भाज्यमभ्यात्मं तु स्वयंदृशाम् ।
एकं प्रमाणमर्थैक्या-दैक्यं तल्लक्षणैक्यतः ॥" प्रमाण-द्वात्रिंशिकायाम्

अर्थैक्यं कुतः ? । तल्लक्षणैकत्वात् अर्यते—गम्यते परिच्छिद्यत इति । अथवा प्रमातव्यं प्रमेयं प्रमातुमीप्सिततमं प्रमाणार्हं वा कर्मसाधनत्वानतिक्रमादेकलक्षणत्वम् ॥ १० ॥

अयमिदानीं विवेको नावधृतः पञ्चविधस्य मध्ये—किं परोक्षं किं वा प्रत्यक्षमिति, तद्विवेकावधारणाय आह—

---

१ तत् समासतो द्विविधं प्रज्ञप्तं, तद्यथा—प्रत्यक्षं च परोक्षं च ।

## सूत्रम्—आद्ये परोक्षम् ॥ १–११ ॥

**भा०—आदौ भवमाद्यम्। सूत्रक्रमप्रामाण्यात् प्रथमद्वितीये शास्ति, तदेवमाद्ये-मतिज्ञानश्रुतज्ञाने परोक्षं प्रमाणं भवतः। कुतः?। निमित्तापेक्षत्वात् अपायसद्द्रव्यतया मतिज्ञानम्। तदिन्द्रियानिन्द्रियनिमित्तमिति वक्ष्यते। तत्पूर्वकत्वात् परोपदेशजत्वाच्च श्रुतज्ञानम् ॥ ११ ॥**

**टी०**—सूत्रोपात्ताद्यशब्दार्थोऽन्यथाऽवगमयितुं न शक्यते परस्मायित्यतो व्युत्पत्त्याह—**आदौ भवमाद्यम्**, यस्मात् परमस्ति न पूर्वमादिः सः विवक्षावशात्, तत्र भवं, दिगादित्वाद्यत्, आद्यं चाद्यं चेत्याद्ये इति, प्रतिविशिष्टेन च क्रमेण व्यवस्थितानां आद्यव्यपदेशो दृश्यते, तद्यथा–अयं यतिरेषां विशिष्टक्रमभाजामाद्य इति। एवमत्रामूर्तानां ज्ञानानां क्रमसन्निवेशो दुरुपपाद इति मत्त्वा ब्रवीति–**आद्ये** इति, **सूत्रक्रमप्रामाण्यात्**, सूत्रं चासन्नमप्यनन्तरं त्यज्यते, तत् प्रमाणे (१–१०) इति सन्निवेशाभावात्, तस्मात् परमेव मतिश्रुतादि ग्राह्यम्, तत्र **क्रमः**–परिपाटी, सूत्रे क्रमः **सूत्रक्रमः**, तस्य **प्रामाण्यम्**–आश्रयणं तस्मात्। **प्रथमद्वितीये** मतिश्रुते, **शास्तीति** च ग्रन्थकार एव द्विधा आत्मानं विभज्य सूत्रकारभाष्यकाराकारेणैवमाह–**शास्तीति**, सूत्रकार इति शेषः[1]। अथवा पर्यायभेदात् पर्यायिणो भेद इत्यन्यः सूत्रकारपर्यायोऽन्यश्च भाष्यकारपर्याय इत्यतः सूत्रकारपर्यायः शास्तीति। **तदेवमाद्यव्यपदेशे** सिद्धे सुखेन वक्तुं शक्यते, किमिति चेत्, उच्यते-**मतिज्ञानश्रुतज्ञाने** द्वे अपि **परोक्षं प्रमाणं भवतः**, शेषमनूद्य परोक्षप्रमाणता विधीयते। **कुत** इति च प्रश्नयितुरयमभिप्रायः–यमयं हेतुमुपन्यसिष्यति वक्ष्यमाणं तत्रास्य व्यभिचारं दर्शयिष्यामीति, इतरोऽपि सविशेषणं हेतुं बुद्धौ न्यस्याह–**निमित्तापेक्षत्वादिति**। धूमादग्निज्ञानं परोक्षमुपजायते निमित्तापेक्षं, तद्वन्मतिश्रुते, इन्द्रियानिन्द्रियनिमित्तभावः स्पष्टो मतेः, श्रुतस्य च। न च निमित्तापेक्षिता अनैकान्तिकी, कथं तर्ह्यवधिज्ञानादित्रयं निमित्तमपेक्षते? यतोऽवधिरान्तरनिमित्तं क्षयोपशममालम्ब्य बहिरङ्गं च विषयमुत्पद्यते, तथा मनःपर्यायज्ञानमपि, केवलज्ञानमपि कर्मणां ज्ञानावृतां समस्तक्षयमाश्रित्य विषयं चोत्पद्यत इति?। उच्यते–इतरः सविशेषणोऽयं हेतुरित्याह–**अपायसद्द्रव्येत्यादि**। अनेन च प्रतिज्ञार्थं[2] विशिष्यापायसद्द्रव्येत्यादिना ततो हेतुं सविशेषणं करिष्यति **तदिन्द्रियानीत्यादिना**। यन्मतिज्ञानं धर्मितयोपात्तं तत् कीदृशं, परोक्षं प्रमाणं वा[3] साध्यते?। उच्यते–**अपायसद्द्रव्यतया मतिज्ञानं** धर्मित्वेनोपन्यस्तम्, अपायो निश्चय ईहानन्तरवर्ती। **सद्द्रव्यमिति**, शोभनानि द्रव्याणि–सम्यक्त्वदलिकानि, अपायश्च सद्द्रव्याणि च तेषां भावः–स्वरूपादप्रच्युतिः, तयेत्थंभूतया मतिज्ञानं धर्मि। एतदुक्तं भवति–मतिज्ञानस्यावग्रहादिभेदस्य मध्ये योऽपायोंऽशस्तन्मतिज्ञानं परोक्षं प्रमाणमिति।

परोक्षप्रमाणम्

---

१ 'शेषः' इति क–पाठः। २ 'प्रतिज्ञानार्थं' इति ख–पाठः। ३ 'वा' इति ख–पाठः।

अवग्रहेहयोरनिश्चितत्वान्न समस्ति प्रमाणम्। स चापायः सद्द्रव्यानुगतो यदि न भवति तन्मिथ्यादृष्टेरिवाशुद्धदलिककलुषितः, अतो योऽपायः सद्द्रव्यानुवर्ती स प्रमाणं मतिभेदः। यदा तर्हि दर्शनसप्तकं क्षीणं भवति तदा सद्द्रव्याभावे कथं प्रमाणता श्रेणिकाद्यपायांशस्य? उच्यते–सद्द्रव्यतयेत्यनेनार्थत इदं कथ्यते–सम्यग्दृष्टेर्योऽपायांश इति। भवति चासौ सम्यग्दृष्टेरपायः। अथवा एकशेषोऽत्र द्रष्टव्यः, अपायश्चापायश्चापायौ सद्द्रव्यं च सद्द्रव्यं च सद्द्रव्ये अपायौ च सद्द्रव्ये चापायसद्द्रव्याणि तेषां भावस्तयेति। इदमुक्तं भवति–अपायसद्द्रव्यानुगतो यः अक्षीणदर्शनसप्तकस्य स परिगृहीतः, एकेन अपायसद्द्रव्यशब्देन, तथा द्वितीयेनापायो यः सद्द्रव्यं शोभनं द्रव्यं, कश्चापायः सद्द्रव्यम्? यः क्षीणदर्शनसप्तकस्य भवति। एतेनैतदुक्तं भवति–सम्यग्दर्शिनिनः क्षीणाक्षीणदर्शनसप्तकस्य योऽपायो मतिज्ञानं तत् परोक्षं प्रमाणम्। सविकल्पमिति निमित्तापेक्षत्वाद् धूमादग्निज्ञानवदिति, एवं श्रुतज्ञानस्याप्यपायांशः प्रमाणयितव्यः। सम्प्रति निमित्तापेक्षत्वादित्यस्य यो व्यभिचारः पुनः पुरस्तादवाचि तत्परिजिहीर्षयेदमाह–**तदिन्द्रियानिन्द्रियनिमित्तमिति वक्ष्यते** इत्यनेन। तदिति मतिज्ञानम्, इन्द्रियाणि–श्रोत्रादीनि अनिन्द्रियं–मनः ओघज्ञानं च तानि निमित्तं–कारणं यस्य ज्ञानस्य तदिन्द्रियानिन्द्रियनिमित्तम्, न हीन्द्रियाण्यनिन्द्रियं च विरहय्य तस्य ज्ञानस्य सम्भवोऽस्तीति, ततश्च हेतुरेवंविधो ज्ञा(जा)तः–इन्द्रियानिन्द्रियनिमित्तत्वादिति। विशिष्टमेव निमित्तमिन्द्रियानिन्द्रियाख्यमुररीकृत्य निमित्तापेक्षत्वादिति मया प्रागभ्यधायि, नास्त्यतो व्यभिचारः। श्रुतज्ञानस्यापीन्द्रियानिन्द्रियनिमित्ततैव, किंतु अन्यथापि निमित्तं कथ्यते, तदाह–**तत्पूर्वकत्वात्। तदिति** मतिज्ञानं पूर्वं–पूरकं पालकं यस्य तत् तत्पूर्वकं तद्भावस्तत्पूर्वकत्वं तस्मात् तत्पूर्वकत्वात्, यावन्मतिस्तावत् तद् भवति, न त्वीदृश्यवस्थाऽस्ति यत्र तन्मतिज्ञानेन विना प्रादुःष्यात्, अतस्तन्मतिज्ञानं श्रुतज्ञानस्य पालकं भवतीतिकृत्वा मतिज्ञानमेव तस्यात्मलाभनिमित्तं भवति, तस्मिन् सति तस्य भवनात्, अतः श्रुतं[1] मतिं निमित्तीकृत्य प्रवर्तमानमिन्द्रियानिन्द्रियनिमित्तं सत् कथं प्रत्यक्षव्यपदेशं लभेत? **तथा परोपदेशजत्वाच्च। श्रुतज्ञानं परोक्षं**, परः–तीर्थकरादिस्तस्योपदेशः, उपदिश्यते उच्चार्यते इत्युपदेशः–शब्दस्तस्मात् परोपदेशात्–तीर्थकरादिशब्दश्रवणादुपजायते यत् तदिन्द्रियानिन्द्रियनिमित्तं श्रुतज्ञानं, तत्पूर्वकत्वात् परोपदेशादिति च, अनेन निमित्तभूयस्त्वं ख्यापितम्। यतः श्रुतज्ञानमुपजायमानं स्वतः प्रत्येकबुद्धादीनां मनसि सति मतिज्ञाने च सति समस्ति, अतो निमित्तद्वयमाश्रितं[2] भवति। तथा यस्यापूर्वमेवेदानीं प्रादुरस्ति तस्य सति परोपदेशे सत्यां मतौ सत्सु चेन्द्रियानिन्द्रियेषूदेति, अतो निमि-

प्रामाण्यम्

अपायसद्द्रव्ये परोक्षता

श्रुतस्य परोक्षता

१ 'श्रुतमतिं' इति क–ख–पाठः। २ 'श्रितं च' इति ख–पाठः।

त्तभूयस्त्वापेक्षत्वात् परोक्षं तद् भण्यते ॥ ननु चेन्द्रियोपष्टम्भेनोपजायमानस्य ज्ञानस्य प्रत्यक्षत्वं लोके प्रथितं, तदपाकरणप्रवृत्तस्य लोकविरोधः, तथा इदं रूपं प्रत्यक्षमिति योऽयं प्रत्ययो नायं परोक्षे दृष्टः । नहि धूमादग्निमवगच्छतोऽयमग्निरिति संप्रत्ययो भवति, ततश्च स्वप्रतीतेरपि विरोध इति । उच्यते-इदं रूपं प्रत्यक्षमिति न तत्र मुख्यया वृत्त्या रूपं प्रत्यक्षं, ज्ञानमेव तु प्रत्यक्षं, तेन प्रत्यक्षेण ज्ञानेनावच्छिन्नोऽर्थः प्रत्यक्ष इत्युच्यते, तस्य युक्ता प्रत्यक्षता । किंच-न सर्वथेन्द्रियनिमित्तस्य ज्ञानस्य प्रत्यक्षता, निषेधात्, यतः सर्वथा तं विषयं न परिच्छेत्तुमलं, चक्षू रूपं गृह्णात्याराद्भागवर्ति, न परमध्यभागावस्थितम्, तथा श्रोत्रादि वाच्यम्, अवध्यादित्रयं पुनः सर्वात्मनाऽवगच्छति, अतस्तस्यैव युक्ता प्रत्यक्षता। किंच न सर्वथेन्द्रियनिमित्तस्य ज्ञानस्य प्रत्यक्षव्यपदेशो निषिध्यते[1], यतोऽयं निश्चयमङ्गीकृत्य भाष्यकृता प्रत्यक्षव्यपदेशो निषिध्यते, व्यवहारात्त्विष्यत एव। यतोऽभिहितं नन्द्याम् (सू० २-३) "तं समासओ दुविहं पण्णत्तं, (तं० पच्चक्खं च परोक्खं च । से किं तं पच्चक्खं ? पच्चक्खं दुविहं पण्णत्तं ) तं०-इन्दियपच्चक्खं नोइन्दियपच्चक्खं च[2]" इन्द्रियप्रत्यक्षमिति ब्रुवता व्यवहारप्रत्यक्षता भवति, भाष्यकारस्यापि योगविभागात् तस्येन्द्रियजस्य ज्ञानस्य सिद्धा प्रत्यक्षता, स चैवं योगो विभजनीयः-आद्ये परोक्षं निश्चयतः ततः प्रत्यक्षं, प्रत्यक्षं चाद्ये व्यवहारः, ततोऽन्यत् अवध्यादि एकान्तेनैव प्रत्यक्षमिति ॥ ११ ॥

एवं परोक्षं प्रदर्श्य प्राक् प्रतिज्ञातं प्रत्यक्षं प्रमाणं कथयन्नाह—

## सूत्रम्—प्रत्यक्षमन्यत् ॥ १-१२ ॥

टी०—अन्यदिति चोक्ते जायते विचारणा-कुतोऽन्यदिति ? अवधीकृतमेव विच्छेदकारणं ख्यापयन् "ते—

**भा०—मतिश्रुताभ्यां यदन्यत् त्रिविधं ज्ञानं तत् प्रत्यक्षं प्रमाणं भवति। कुतः ?। अतीन्द्रियत्वात् । प्रमीयन्तेऽर्थास्तैरिति प्रमाणानि । अत्राह-इह अवधारितं-द्वे एव प्रमाणे प्रत्यक्षपरोक्षे इति ॥**

अवध्यादेः प्रत्यक्षता

टी०—**मतिश्रुताभ्यामिति**। मतिज्ञानश्रुतज्ञानाभ्यां यदन्यत्, तस्य चैकैकस्य प्रत्यक्षतां प्रकाशयन्नाह-**त्रिविधमिति**। उक्तेऽपि चैतस्मिन् किं तत् त्रिविधमित्याह-**ज्ञानं, प्रत्यक्षं प्रमाणं भवतीति**। प्रत्यक्षं भवतीत्येतद् विधीयतेऽत्र,शेषस्यानुवाद इति। **कुत** इति च प्रश्नयितुरभिप्रायोऽयम्-यद्यान्तरनिमित्तं क्षयोपशमः प्रत्यक्षतायाः कारणभावं प्रतिपद्यते स सर्वेषां मत्यादीनां साधारणः क्षयोपशमः कारणमस्तीति सर्वप्रत्यक्षत्वप्रसङ्गः, अथ प्रत्यक्षतायाः पृथग् निमित्तं तदुच्यतामिति, इतरस्तु असाधारणं त्रयाणां प्रत्यक्षतायाः प्रकटीकुर्वन् निमित्तमाह-**अतीन्द्रियत्वादिति**। अतिक्रा-

१ 'निषेध्यते' इति ख-पाठः । २ तत् समासतो द्विविधं प्रज्ञप्तं, ( तद्यथा-प्रत्यक्षं च परोक्षं च । अथ किं तत् प्रत्यक्षम् ? प्रत्यक्षं द्विविधं प्रज्ञप्तम् ) तद्यथा-इन्द्रियप्रत्यक्षं नोइन्द्रियप्रत्यक्षं च ।

न्तमिन्द्रियाणि अतीन्द्रियं ज्ञानं तद्भावोऽतीन्द्रियत्वं तस्मादिति, यत् प्राणिनां ज्ञानदर्शनावरण-क्षयोपशमात् क्षयाच्च इन्द्रियानिन्द्रियद्वारनिरपेक्षमात्मानमेव केवलमभिमुखीकुर्वदुदेति तत् प्रत्यक्षं—अवध्यादि। एवं तत् प्रमाणे (१-१०) इति द्वित्वसङ्ख्यायाः परोक्षप्रत्यक्षाख्यो यो विषयस्तमुपदर्श्य प्रमाणशब्दार्थकथने प्रावृतद् भाष्यकारः—**प्रमीयन्तेऽर्थास्तैरिति प्रमाणानीति।** (**प्रमीयन्ते**)—परिच्छिद्यन्ते—यथावन्निश्चीयन्ते सदसन्नित्यानित्यादिभेदेनार्था—जीवाद्-यस्तैरिति प्रमाणानि, करणे ल्युट्, करणं ज्ञानमात्मनः, आहितप्रधानकारणस्य स्वतन्त्रस्य कर्तुरनेककारकशक्तियुक्तस्य साधकतमत्वविवक्षावशादवच्छेदिका शक्तिरर्थस्य करणव्यपदेशमश्नुते, तया करणभूतया परिच्छिनत्ति—अवबुद्ध्यते ज्ञानपरिणतिरूपयाऽऽत्मैव। **तैरिति।** प्रमाणद्वयेऽभ्युपगते बहुवचनमयुक्तमिति चेत्, न, व्यक्तिपक्षसमाश्रयणादिति, यतो मत्यादिकाः पञ्च व्यक्तयः, तासां बहुत्वात् समीचीनमेव बहुवचनमिति। एवं द्वे परोक्षप्रत्यक्षे प्रमाणे भवत इति ख्यापिते चोदयति—**इह शास्त्रे** निर्धारितमेतद्-**द्वे एव प्रमाणे**, अन्यथा तत् प्रमाणे इत्यत्र या द्वित्वसङ्ख्या सा व्यर्थैव स्यात्, यद्यवधारणतया नाश्रीयेत, तस्मादवश्यंतया तद्-वचनं नियमकारि प्रतिपत्तव्यम्—द्वे एव प्रमाणे, के च ? **प्रत्यक्षपरोक्षे** इति, ततश्चान्येषामप्रमाणता आपन्ना, न च न सन्त्येवान्यानि, यतोऽनुमानादीनि प्रमाणानि मन्यन्ते, साङ्ख्याः प्रत्यक्षानुमानागमाख्यानि त्रीणि, नैयायिकाः प्रत्यक्षानुमानोपमानागमाख्यानि, प्रत्यक्षानुमानशाब्दोपमानार्थापत्त्यभावा इति जैमिनीयाः। एतदाह—

अनुमानादीनां प्रामाण्यविचारः

**भा०—अनुमानोपमानागमार्थापत्तिसम्भवाभावान्यपि प्रमाणानि इति केचित् मन्यन्ते। तत् कथमेतदिति ?। अत्रोच्यते—**

**टी०—अनुमानोपमाने**त्यादि। तत्रानुमानं तावत् पक्षधर्मान्वयव्यतिरेकजनितं ज्ञानम्, प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानं, यथा गौस्तथा गवयः।

अनुमानादीनां व्याख्या

"प्रसिद्धेन हि साधर्म्यात्, साध्यसाधनमिष्यते।
उपमानं परैस्तच्च, यथा गौर्गवयस्तथा॥"

तथा आप्तोपदेश आगमस्तदनुसारि ज्ञानमागम उच्यते प्रमाणं वर्णपदवाक्यात्मकः। तथाऽर्थापत्तिर्द्विधा शब्दार्थापत्तिरर्थार्थापत्तिश्चेति। तत्र शब्दार्थापत्तिर्देवदत्तो दिवा न भुङ्क्तेऽनुपहतेन्द्रियशरीरश्चेति, रात्रौ तर्हि भुङ्क्ते इति। तथा अर्थार्थापत्तिरपि नीलं पश्यतो यदिन्द्रियानुमानं समस्ति तत् किमपीन्द्रियं येनैतन्नीलं परिच्छिन्नमिति। सम्भवोऽपि प्रमाणं—प्रस्थे कुडवः समस्ति, अस्मिन् प्रस्थाख्ये आधारे कुडव आधेयः सम्भवतीति एष सम्भवः। तथाऽभावोऽपि प्रमाणाभावविषयः, यत्र विषये प्रत्यक्षादिप्रमाणानामप्रवृत्तिरसावभावस्तद्विषयमपि ज्ञानमभाव इति व्यपदिश्यते। अत एव तान्यनुमानादीनि केचिदाचार्याः प्रमाणा-

नीति मन्यन्ते, तत् कथमित्येवं मन्यन्ते, किमेषां तानि न सन्ति प्रमाणत्वेन ? उत प्रमाणान्तराणि न भवन्तीति ?। अत्रोच्यते मया—

**भा०—सर्वाण्येतानि मतिश्रुतयोरन्तर्भूतानि, इन्द्रियार्थसन्निकर्षनिमित्तत्वात्। किश्चान्यत्। अप्रमाणान्येव वा। कुतः ?। मिथ्यादर्शनपरिग्रहात्, विपरीतोपदेशाच्च ॥**

**टी०—सर्वाणि** इत्यादि। **सर्वाणि**—समस्तानि **एतानि**—अनुमानादीनि मतिज्ञानश्रुतज्ञानयोरेव **अन्तर्भूतानि**—प्रविष्टानि। कयोपपत्त्येति चेत् तामुपपत्तिमाह—**इन्द्रियार्थे**त्यादि। **इन्द्रियाणि**—चक्षुरादीनि तेषा**मर्था**—रूपादयः इन्द्रियाणि चार्थाश्च इन्द्रियार्थास्तेषां **सन्निकर्षः**—सम्बन्धः स इन्द्रियार्थसन्निकर्षो निमित्तं यस्य अनुमानादेस्त**दिन्द्रियार्थसन्निकर्षनिमित्तम्**—अनुमानादि। कथं पुनरिन्द्रियार्थसन्निकर्षः कारणमनुमानादेः ?। उच्यते—अनुमानं तावच्चक्षुरादीन्द्रियधूमाद्यर्थसन्निकर्षजम्, अन्यथा तस्यासम्भवात्, इन्द्रियनिमित्तत्वात् सपरार्थस्यानुमानस्येति। उपमानमपि चक्षुरादीन्द्रियगवाद्यर्थसन्निकर्षजम्। आगमाख्यमपि श्रोत्रेन्द्रियस्य अनिन्द्रियस्य वा आप्तवचनार्थस्य सन्निकर्षे सति प्रादुरस्ति। शब्दार्थापत्तिरप्येवमेव। अर्थार्थापत्तिस्तु चक्षुरादेरिन्द्रियस्य नीलादे रूपस्य च सन्निकर्ष एवोपजायते। सम्भवोऽपि प्रस्थमर्थं दृष्ट्वा श्रुत्वा वा प्रादुरस्ति, एवं चक्षुःश्रोत्रयोः प्रस्थार्थप्रस्थशब्दयोः सन्निकर्षे सति तदुदेति। अभावोऽपि प्रमाणं प्रमेयाभावविषयः, मनसा विकल्प्यार्थमुत्तरत्र स एव विषयीभवति विकल्पितोऽर्थो[1], नानुमानादसौ भिद्यत इति, एवमिन्द्रियार्थसन्निकर्षनिमित्तान्येतानि मतिश्रतयोरन्तर्भावं यान्तीति ॥ **किंचान्य**दिति पक्षान्तरमाश्रयति। **अप्रमाणान्येव वा**। नैवानुमानादीनि प्रमाणानि, मिथ्यादर्शनसमन्वितत्वात्, अयथार्थोपदेशव्यापृतत्वात् उन्मत्तकवाक्यविज्ञानवत्, एतदेवाह—**मिथ्यादर्शने**त्यादि। मिथ्यादर्शनम्—एकनयाश्रयणं तेन गृहीतं मिथ्यादर्शनपरिग्रहो भण्यते, यत एव च मिथ्यादर्शनपरिग्रहोऽत एव **विपरीतोपदेशा**दिति। **विपरीतम्**—अन्यथावस्थितं नाना[2]धर्मकं सद्वस्तु एकधर्मकमाश्रितं विपरीतं भण्यते, तस्य **उपदेशः** कथनं विपरीतोपदेशस्तस्मात्, यत एतान्येकनयावलम्बीन्यनुमानादीनि विपरीतमेकान्तपक्षाश्रितं वस्तु विच्छिन्दन्ति तस्मादप्रमाणानि परिकल्पितानीति। न च मिथ्यादृष्टिगृहीतं कदाचिदपि ज्ञानं भण्यते, किन्त्वज्ञानमेव, संसारहेतुत्वात्, एतच्चोत्तरत्र निदर्शयिष्यत्येव। यत आह—

> अनुमानादीनामिन्द्रियार्थसंबन्धहेतुता

> अनुमानादीनामप्रामाण्ये हेतुः

**भा०—मिथ्यादृष्टेर्हि मतिश्रुतावधयो नियतमज्ञानमेवेति वक्ष्यते ( १–३२ )। नयवादान्तरेण तु यथा मतिश्रुतविकल्पजानि भवन्ति तथा पुरस्ताद् ( १–३५ )**

---

१ 'विकल्पिताऽर्थो' इति क-ग-पाठः। २ 'धर्मकदम्बकं सद्वस्तु' इति क-ग-पाठः।

**वक्ष्यामः ॥१२॥ अत्राह-उक्तं भवता मत्यादीनि ज्ञानानि उद्दिश्य-तानि विधानतो लक्षणतश्च पुरस्ताद् विस्तरेण वक्ष्याम इति। तदुच्यतामिति। अत्रोच्यते—**

टी०—**मिथ्यादृष्टेर्ही**त्यादि। यस्मान्मिथ्यादृष्टेर्जन्तोर्मतिश्रुतावधयस्त्रयोऽपि निश्चयेन कुत्सितमेव ज्ञानमज्ञानमिति भणिष्यते। यद्येवं कथं तर्हि मतिश्रुतयोरन्तर्भूतानीत्युक्तम्? उच्यते—नयवादमाश्रित्यैतदुक्तम्। केन तर्हि नयवादान्तरेण मतिश्रुतान्तर्गतानीत्याह—**नयवादान्तरेण तु** इत्यादि। **नया**-नैगमादयः तेषां वादः—स्वरुचितार्थप्रकाशनं नयवादः तस्य अन्तरं-भेदो नयवादान्तरं तेन नयवादभेदेनैव। **यथा** मतिश्च श्रुतं च मतिश्रुते तयोर्विकल्पा-भेदास्तेभ्यो जायन्त इति **मतिश्रुतविकल्पजानि भवन्ति यथा तथा पुरस्तात्** नयविचारणायां वक्ष्यामः (१-३५) इतिशब्देन यस्य हि मिथ्यादृष्टिरज्ञो वा नास्तीति वक्ष्यति तन्मतेन तु प्रमाणानीति ॥ १२ ॥

**अत्रे**ति। एतस्मिन् ज्ञानपञ्चके कथिते सामान्येन प्रमाणद्वये च-प्रत्यक्षपरोक्षरूपे विहिते, परोऽवोचत्-**उक्तं**-प्रतिपादितं त्वया, किमिति चेत्—उच्यते-**मत्यादीनि पञ्च ज्ञानानि**-मतिश्रुतावधिमनःपर्यायकेवलान्येव **उद्दिश्य,** तत इदमभिहितं तदुच्यते-**तानि विधानतो लक्षणतश्च पुरस्ताद् विस्तरेण वक्ष्याम** इत्येतत्॥ ननु च नैवंविधं तत्र[1] सूत्रे भाष्यमस्ति-विधानतो लक्षणतश्चेति, कथमयमध्यारोपः क्रियते गुरोरिति?। उच्यते—सत्यमेवंविधं भाष्यं नास्तीति, एवं पुनः समस्ति-प्रभेदास्त्वस्य पुरस्ताद् वक्ष्यन्त इति (१-९)। अतः प्रभेदा-मतिज्ञाने विधानलक्षणरूपाः प्रतिपाद्यन्ते तत्र भाष्ये, अतो नाध्यारोप इति। विधानं-भेदः, मतिज्ञानं सभेदकं वक्ष्यामीति प्रतिज्ञातम्, तथा लक्षणम्-असाधारणं यच्चिह्नं मत्यादेस्तच्च वक्ष्यामीति प्रत्यज्ञायि, तदुच्यतां विधानं लक्षणं चेति, एवं पर्यनुयुक्त आह—**अत्रोच्यत** इति ॥

अत्रैतस्मिंश्चोदिते उच्यते मया, लक्षणमल्पविचारत्वात्, अनेन सूत्रेण **मतिः स्मृत्या**दिना। अथवा नैव मतिज्ञानस्यानेन सूत्रेण लक्षणं कथयति, प्रतीतत्वात्, प्रतीतं हि लोके इन्द्रियानिन्द्रियजं ज्ञानं, यच्च प्रतीतं न तस्य लक्षणमाचक्षते विचक्षणाः, नहि हुताशनस्योष्णतालाञ्छनमत्यन्तप्रतीतत्वादभिदधते विद्वांसः, किं तर्हि सूत्रेण प्रतिपादयति? उच्यते—लक्षणं द्विविधं-तत्स्थमतत्स्थं चेति, तत्स्थमग्नेरौष्ण्यवत्, अतत्स्थं वारिणो बलाकादिवत्, मतिज्ञानस्य लक्षणं यत्तत्स्थं न पुनस्ततो ज्ञानाद् भिन्नमित्येतदादर्शयति सूत्रेण ॥

## सूत्रम्—मतिः स्मृतिः संज्ञा चिन्ताऽभिनिबोध इत्यनर्थान्तरम् ॥ १-१३ ॥

टी०—**मतिः स्मृतिः संज्ञे**त्यादि। अत एव च ज्ञानशब्दं प्रत्येकं लगयति—

**भा०—मतिज्ञानं स्मृतिज्ञानं संज्ञाज्ञानं चिन्ताज्ञानं आभिनिबोधिकज्ञानमित्यनर्थान्तरम् ॥ १३ ॥**

---

१ 'तत्र' इति क-ग-पाठः।

**टी०—मतिज्ञानं स्मृतिज्ञानमित्यादि** । येयं मतिः सैव ज्ञानमित्यस्य ख्यापनार्थं मननं मतिस्तदेव ज्ञानं मतिज्ञानमिति । मतिज्ञानं नाम यदिन्द्रियानिन्द्रियनिमित्तं वर्तमानकालविषयपरिच्छेदि । स्मरणं स्मृतिः सैव ज्ञानं स्मृतिज्ञानं, तैरेवेन्द्रियैर्यैः परिच्छिन्नो विषयो रूपादिस्तं यत् कालान्तरेण विनष्टमपि स्मरति तत् स्मृतिज्ञानम्, अतीतवस्त्वालम्बनमेककर्तृकं चैतन्यपरिणतिस्वभावं मनोज्ञानमितियावत् । **संज्ञाज्ञानं** नाम यत्तैरेवेन्द्रियैरनुभूतमर्थं प्राक् पुनर्विलोक्य स एवायं यमहमद्राक्षं पूर्वाह्ण इति संज्ञाज्ञानमेतत् । **चिन्ताज्ञान**मागामिनो वस्तुन एवं निष्पत्तिर्भवति अन्यथा नेति, यथैवं ज्ञानादित्रयसमन्विते तत्रैव परमसुखावाप्तिरन्यथा नेत्येतच्चिन्ताज्ञानं मनोज्ञानमेव । **आभिनिबोधिकम्** अभिमुखो निश्चितो यो विषयपरिच्छेदः सर्वैरेवैभिः प्रकारैस्तदाभिनिबोधिकमिति । यदा चैतल्लक्षणसूत्रं तदा इतिशब्द एवमित्यस्यार्थे, एवंलक्षणमेभिः पर्यायैर्निरूपितं मतिज्ञानं ज्ञेयमिति । एवमेतत् कियताऽप्यंशेन भेदं प्रतिपद्यमानमनर्थान्तरमिति व्यपदिशति । नैषां मतिज्ञानविरहितोऽर्थो विकल्पनीय इति । अपरे तु सर्वे पर्यायशब्दा एवैते शतक्रतुशक्रादिशब्दवदिति मन्यन्ते, नात्र भेदेनार्थः कल्पनीय इति । तथा चास्य सूत्रस्य पूर्वपक्षमन्यथा रचयन्ति, एवं—लोके स्मृतिज्ञानं अतीतार्थपरिच्छेदि सिद्धम्, संज्ञाज्ञानं वर्तमानार्थग्राहि, चिन्ताज्ञानमागामिकालविषयमिति, इह तु सिद्धान्ते आभिनिबोधिकज्ञानमेवोच्यते, स्मृत्यादीनि तु नोच्यन्ते, तत्रानभिधाने प्रयोजनं वाच्यम् । उच्यते—आभिनिबोधिकज्ञानस्यैव त्रिकालविषयस्यैते पर्याया नार्थान्तरतेति मतिः स्मृतिः संज्ञा चिन्ताऽभिनिबोध इत्यस्यानर्थान्तरमेतदिति ॥ १३ ॥

मतेः पर्यायाः ।

इह हि प्रतिक्षणं प्राणिनामन्यदन्यच्च[1] ज्ञानमुदेति, घटालम्बनज्ञानापगतौ पटालम्बनज्ञानाविर्भावः, यच्चोत्पद्यते तत्कारणायत्तजन्म वदन्ति सन्तः—यथा घटः पुरुषमृत्तिकादण्डाद्यपेक्ष्य कारणमाविरस्ति, एवमस्य ज्ञानस्य समुपजायमानस्य किं निमित्तमिति ?। उच्यते—

## सूत्रम्—तदिन्द्रियानिन्द्रियनिमित्तम् ॥ १-१४ ॥

**भा०—तदेतत् मतिज्ञानं द्विविधं भवति—इन्द्रियनिमित्तमनिन्द्रियनिमित्तं च ।**

**टी०**—तदेतदित्यनन्तरलक्षणोपेतं **मतिज्ञानं** किंनिमित्तमिति ?। उच्यते—हेतोर्द्वैविध्यात् **द्विविधं भवति**, तेनैव हेतुना द्विविधेन तत्कार्यमादर्शयति—**इन्द्रियनिमित्तमनिन्द्रियनिमित्तं च**। तत्रेन्द्रियाणि—स्पर्शनादीनि पञ्च निमित्तं यस्य तदिन्द्रियनिमित्तम्, नहि श्रोत्रेन्द्रियमन्तरेणायं प्रत्ययो भवति शब्दोऽयमिति, न च स्पर्शनमन्तरेणायं प्रत्ययः समुत्पद्यते—शीतोऽयमुष्णो वा, एवं शेषेष्वपि वाच्यम् । तथाऽनिन्द्रियनिमित्तमिति इन्द्रियादन्यदनिन्द्रियं—मनः ओघश्चेति तत्

मतेः कारणानि

१ 'प्राणिनामन्यच्च' इति ख—पाठः ।

निमित्तमस्य मतिज्ञानस्य तदनिन्द्रियनिमित्तमिति, स्मृतिज्ञानहेतुर्मनः। एवं चैतद् द्रष्टव्यम्–इन्द्रियनिमित्तमेकम्, अपरमनिन्द्रियनिमित्तम्, अन्यदिन्द्रियानिन्द्रियनिमित्तमिति त्रिधा, तत्रैकमिन्द्रियनिमित्तमेव ज्ञानं मत्याख्यम्, यथाऽवनिवारिदहनपवनवनस्पतीनामेकेन्द्रियाणां द्वित्रिचतुरिन्द्रियाणामसंज्ञिनां च पञ्चेन्द्रियाणां, मनसोऽभावात्, तथाऽनिन्द्रियनिमित्तं स्मृतिज्ञानम्, इतरेन्द्रियनिरपेक्षं चक्षुरादिव्यापाराभावात्, तथा इन्द्रियानिन्द्रियनिमित्तं जाग्रदवस्थायां, स्पर्शनेन मनसोपयुक्तः स्पृशत्युष्णमिदं शीतं चेति, इन्द्रियं मनश्चोभयं तस्योत्पत्तौ निमित्तं भवति इति। तदेतत् सर्वमेकशेषाल्लभ्यत इति, इन्द्रियं चानिन्द्रियं च इन्द्रियानिन्द्रिये इन्द्रियानिन्द्रियाणि च तानि निमित्तं यस्य तदिन्द्रियानिन्द्रियनिमित्तमिति। एतदेवाह–इन्द्रियनिमित्तमनिन्द्रियनिमित्तं च, चशब्दादुभयनिमित्तं चेति, अपेक्षाकारणं चाङ्गीकृत्य सूत्रं पपाठ आचार्यः तदिन्द्रियानिन्द्रियनिमित्तमिति। अपेक्षाकारणं चालोकविषयेन्द्रियाणि, सति प्रकाशे विषये च चक्षुरादिषु च सत्सु ज्ञानस्योद्भवो दृष्टः, तेषामपि मध्येऽन्तरङ्गमपेक्षाकारणमिन्द्रियानिन्द्रियाणि पठितम्[1], पारमार्थिकं तु कारणं क्षयोपशमो मतिज्ञानावरणपुद्गलानाम्, नहि तदावरणक्षयोपशममनपेक्ष्य ज्ञानस्योत्पत्तिरिष्यते। यदि तर्ह्यान्तरं निमित्तं क्षयोपशमः स एवोपादेयः किं बाह्येनेन्द्रियानिन्द्रियनिमित्तेनाधीतेनेति ?। उच्यते–स क्षयोपशमः सर्वसाधारण इतिकृत्वा न पठितः, चशब्देन वा गृहीतो द्रष्टव्यः, इन्द्रियनिमित्तमनिन्द्रियनिमित्तं च, चशब्दात् क्षयोपशमनिमित्तमिति, न वा, भावेन्द्रियस्य तद्रूपत्वात् इति॥ तत्रेन्द्रियनिमित्तं स्वयमेव भावयति–

**भा०–तत्रेन्द्रियनिमित्तं स्पर्शनादीनां पञ्चानां स्पर्शादिषु पञ्चस्वेव स्वविषयेषु। अनिन्द्रियनिमित्तं मनोवृत्तिरोघज्ञानं च॥ १४॥**

**टी०–तत्रेन्द्रियेत्यादिना।** तत्र तेषां त्रयाणां मध्ये **इन्द्रियनिमित्तं** तावद् भण्यते–

इन्द्रियानिन्द्रियनिमित्तता मतेः

**स्पर्शनादीनामिति।** स्पर्शनरसनघ्राणचक्षुःश्रोत्राणां **पञ्चानामेव पञ्चस्वेव** इत्यन्यस्याभावान्नियमयति, स्वे–आत्मीया विषया येषु प्राणिनः सात्त्विं भजन्ते तेषु **स्वेषु विषयेषु**, तद्यथा–स्पर्शनस्य स्पर्शे, रसनस्य रसे, घ्राणस्य गन्धे, चक्षुषो रूपे, श्रोत्रस्य शब्दे, अत एषां स्पर्शनादीनां स्वविषयेषु प्रवर्तमानानां ग्राहितया यदुपजायते ज्ञानं तत् तानीन्द्रियाण्यालम्ब्योत्पद्यमानमिन्द्रियनिमित्तमिति भण्यते। इदानीमनिन्द्रियनिमित्तमाचष्टे–अनिन्द्रियं–मनस्तन्निमित्तं यस्य तदनिन्द्रियनिमित्तम्। कीदृक् तदित्याह–**मनोवृत्तिर्मनोविज्ञानमिति।** मनसो भावाख्यस्य वर्तनं–विषयपरिच्छेदितया परिणतिर्मनोवृत्तिः, **ओघज्ञानं चेति।** ओघः–सामान्यं अप्रविभक्तरूपं यत्र न स्पर्शनादीनीन्द्रियाणि तानि मनोनिमित्तमाश्रीयन्ते, केवलं मत्यावरणीयक्षयोपशम एव तस्य ज्ञानस्योत्पत्तौ निमित्तम्, यथा वल्ल्यादीनां नीव्राद्यभिसर्पणज्ञानं न स्पर्शननिमित्तं न मनोनिमित्तमिति, तस्मात् तत्र मत्यज्ञानावरणक्षयोपशम एव केवलो निमित्तीक्रियते ओघज्ञानस्य॥१४॥

१ 'पठन्ति' इति ख-पाठः।

तत् पुनरिन्द्रियनिमित्तमनिन्द्रियनिमित्तं वा ज्ञानं किमेकरूपमुतास्ति कश्चिद् भेदकलापः ? । अस्तीत्याह । यद्यस्ति ततो भण्यताम् । उच्यते—

## सूत्रम्—अवग्रहेहापायधारणाः ॥ १–१५ ॥

**भा०—तदेतत् मतिज्ञानमुभयनिमित्तमप्येकशश्चतुर्विधं भवति । तद्यथा—अवग्रह ईहा अपायो धारणा चेति ।**

**टी०—तदेतत् मतिज्ञानं** लक्षणविधानाभ्यां यदुक्तम् **उभयनिमित्त**मिन्द्रियनिमित्तमनिन्द्रियनिमित्तम् **अपि**शब्दादिन्द्रियानिन्द्रियनिमित्तमपि ॥ अथेन्द्रियानिन्द्रियनिमित्तसमुदायरूपेण स्थितं चतुर्विधं किं ग्राह्यम् ? । नेत्याह—**एकशः**, एकैकं स्पर्शनेन्द्रियनिमित्तं चतुर्विधं, रसनेन्द्रियनिमित्तं चतुर्विधं, घ्राणेन्द्रियनिमित्तं चतुर्विधम्, चक्षुरिन्द्रियनिमित्तं चतुर्विधं, श्रोत्रेन्द्रियनिमित्तं चतुर्विधं, मनोनिमित्तं चतुर्विधमिति । चतस्रो विधा यस्य **तच्चतुर्विधम्** । कास्ताश्चतस्रो विधा इत्याह—**अवग्रह ईहा अपायो धारणेति** । स्पर्शनावग्रहः स्पर्शनेहा स्पर्शनापायः स्पर्शनधारणेति, एवं सर्वत्र दृश्यं यावन्मनोधारणेति । पर आह—निर्ज्ञातं चातुर्विध्यमेकैकस्य, इदं तु न विज्ञातं किंस्वरूपा अवग्रहादय इत्यतः स्वरूपमवग्रहादीनां ब्रूहि, एवमुक्ते सूरिः स्वरूपप्रचिकाशयिषयाऽऽह अवग्रहादीनाम्—

अवग्रहाद्या मतेर्भेदाः

**भा०—तत्राव्यक्तं यथास्वमिन्द्रियैर्विषयाणामालोचनावधारणमवग्रहः । अवग्रहो ग्रहो ग्रहणमालोचनमवधारणमित्यनर्थान्तरम् ॥**

**टी०—तत्राव्यक्तमित्यादिना** । **तत्रेति** चतुर्ष्ववग्रहादिषु प्रक्रान्तेषु अवग्रहोऽभिधीयते । अवग्रहणमवग्रहः सामान्यार्थपरिच्छेद इत्यर्थः । यद् विज्ञानं स्पर्शनादीन्द्रियजं व्यञ्जनावग्रहादनन्तरक्षणे सामान्यस्यानिर्देश्यस्य[1] स्वरूपकल्पनारहितस्य नामादिकल्पनारहितस्य च[2] वस्तुनः परिच्छेदकं सोऽवग्रहः अव्यक्तं ज्ञानमितियावत् । यदाह—अव्यक्तम्—अस्फुटम् अवधारणमित्यनेन सम्बन्धः । अव्यक्तं यदवधारणम्—अव्यक्तो यः परिच्छेद इत्यर्थः । कस्याव्यक्तं कैर्वा तदव्यक्तमिति ? । उच्यते—**यथास्वमित्यादि** । यथाशब्दो वीप्सायां, यो य इति, स्वशब्द आत्मीयवचनो, यो य आत्मीय इत्यर्थः । यथास्वं विषयोऽभिसम्बन्ध्यते, योऽयमात्मीयो विषयस्तस्यात्मीयस्य विषयस्य **इन्द्रियैः** स्पर्शनादिभिः करणभूतैर्ये विषयाः परिच्छेद्यन्ते तेषां **विषयाणां** स्पर्शादीनां अव्यक्तमवधारणम्, कीदृशमत आह—**आलोचनावधारणम्**, आङ्मर्यादायाम् आलोचनं-दर्शनं, परिच्छेदो मर्यादया यः स आलोचना । यथोक्तं पुरस्ताद् वस्तुसामान्यस्यानिर्देश्यस्य[3] स्वरूपनामजात्यादिकल्पनावियुतस्य यः परिच्छेदः सा आलोचना मर्यादया भवति । आलोचना च सा अवधारणं च तदालोचनावधारणम् । अत एतदुक्तं भवति—उक्तमालोचनावधारणं स्पर्शनादिभिरिन्द्रियैः स्पर्शनादीनामात्मीयानां विषयाणामात्मनो यद् भवति सोऽ-

अवग्रहस्वरूपम्

१ 'निर्देशस्य' इति ख–पाठः । २ 'च विमुक्तौ' इति ख–पाठः । ३ 'अनिर्देशस्य' इति ख–पाठः ।

वग्रहः, किं पुनः कारणमाद्ये क्षणे तं विषयं परिच्छेत्तुं यथावन्न शक्नोति परतश्च यथावच्छेक्ष्यति ? । उच्यते—मतिज्ञानावरणीयकर्मणः स तादृशः क्षयोपशमो येनादौ तं विषयं सामान्येन परिच्छिनत्ति, ईहायां चान्यादृशः क्षयोपशमो यतस्तमेव स्फुटतरमीहिष्यते, अपाये चान्यादृशः क्षयोपशमो येन तमेव विषयं स्फुटतरमवच्छिनत्तीति, धारणायामप्यन्यादृशो येनावधारयिष्यतीति, तस्मान्मलीमसत्वात् क्षयोपशमस्यादावव्यक्तमवधारणं यत् सोऽवग्रह इत्युच्यते। एवं स्वचिह्नतोऽवग्रहं निरूप्य पर्यायशब्दैस्तमेव कथयति–अव(ग्रहो ग्रहो)ग्रहणमालोचनावग्रहोऽभिधीयते अवधारणं चेति, योऽसौ सामान्यपरिच्छेदः स एभिः शब्दैरर्थतो नानात्वमप्रतिपद्यमानैरभिधीयते । एवमवग्रहं कथयित्वा ईहायाः स्वरूपमाचिख्यासुराह—

**भा०—अवगृहीतम्**[1] । **विषयार्थैकदेशाच्छेषानुगमनम्** । **निश्चयविशेषजिज्ञासा चेष्टा ईहा । ईहा ऊहा तर्कः परीक्षा विचारणा जिज्ञासेत्यनर्थान्तरम्** ॥

**टी०—अवगृहीतमित्यादि** । अवगृहीतमित्यनेन क्रमं दर्शयति–सामान्येन गृहीते ईहा प्रवर्तते न पूर्वमेवेहेति, यदा हि सामान्येन स्पर्शनेन्द्रियेण स्पर्शसामान्यमागृहीतमनिर्देश्यादिरूपं तत उत्तरं स्पर्शभेदविचारणा ईहाभिधीयत इति । एतदाह—**विषयार्थै**केत्यादि । विषयः–स्पर्शादिः स एव परिच्छेदकालेऽर्यमाणत्वात्-परिच्छिद्यमानत्वादर्थ इत्युच्यते, विषयश्चासावर्थश्च विषयार्थः तस्यैकदेशः सामान्यमनिर्देश्यादिरूपं तस्मात् **विषयार्थैकदेशात्** परिच्छिन्नादनन्तरं यत् **शेषानुगमनं** शेषस्य–भेदविशेषस्येत्यर्थः । **अनुगमनं** विचारणं, शेषस्यानुगमनं विशेषविचारणमित्यर्थः । किमयं मृणालीस्पर्शः उताहो सर्पस्पर्श इति । न चैतत् संशयविज्ञानमिति युज्यते वक्तुम्, यतः संशयविज्ञानमेवंरूपं भवति यदनेकार्थावलम्बनमूर्ध्वतासामान्यं पश्यतः किमयं स्थाणुरुत पुरुष इति नैकस्यापि परिच्छेदं शक्तं कर्तुमिति तत् संशयविज्ञानमभिधीयते। ईहा पुनरेवंविधलक्षणविपरीता, यतः स्पर्शसामान्य उपलब्धे तदुत्तरकालं मृणालस्पर्शे सद्भूतविशेषादानप्रवृत्ता, असद्भूतविशेषपरित्यागप्रवृत्ता चेहेत्यभिधीयते। अमी पूर्वं मृणालस्पर्शे मया सद्भूता विशेषा अनुभूता इत्यतस्तदभिमुखाऽसौ, अमी च नानुभूता इति तत्परित्यागाभिमुखा, अतो न संशयविज्ञानेनास्याः साम्यमस्तीत्येतदाह–**निश्चयविशेषजिज्ञासा ईहा** । निश्चीयतेऽसाविति निश्चयः । कोऽसौ ? विशेष इत्याह, विशिष्यते–भिद्यतेऽन्यस्मादिति विशेषः, निश्चयश्चासौ विशेषश्च निश्चयविशेषः, निश्चितो विशेष इत्यर्थः, तस्य ज्ञातुमिच्छा या सा जिज्ञासा, विद्यमानाविद्यमानविशेषादानपरित्यागाभिमुखेत्यर्थः । सैवंविधा ईहाऽभिधीयते । एवं स्वचिह्नेन ईहां निरूप्य पर्यायशब्दैरर्थतो नानात्वमप्रतिपद्यमानैरसम्मोहार्थं तामेवाचष्टे–**ईहा ऊहा** इत्यादि। यत्तद्विशेषविचारणं सा तदीहेत्येवात्राभिधीयते, चेष्टा ऊहा **तर्कः परीक्षा विचारणा जिज्ञासे**त्येवं नास्त्यर्थभेद एषां शब्दानाम्, सत्यपि चार्थभेदेऽन्यत्रेहा नार्थान्तरभूता एवैते, एकरूपत्वात् । ईहायाः स्वरूपमाख्याय अपायस्य तदनन्तरवर्तिनः स्वरूपं दिदर्शयिषुराह—

ईहायाः स्वरूपम्

[1] 'अवगृहीते' इति घ–पाठः, समीचीनतरश्च ।

**भा०—अवगृहीते विषये सम्यगसम्यगिति गुणदोषविचारणा अध्यवसायापनोदोऽपायः । अपायोऽपगमः, अपनोदः अपव्याधः, अपेतमपगतमपविद्धमपनुत्तमित्यनर्थान्तरम् ॥**

टी०—अवगृहीते इत्यादि । अनेनापि क्रममाचष्टे, सामान्येनावगृहीते स्पर्शसामान्यविषये अनिर्देश्यादिरूपे तत उत्तरकालमीहायां प्रवृत्तायां, कथमिति चेत्? उच्यते-**सम्यगसम्यगि**त्येवं मृणालीस्पर्शः किमुताहिस्पर्श इति । मृणालीस्पर्श इत्येवमादानाभिमुखत्वात् सम्यक् न अहिस्पर्शोऽयमित्येवं परित्यागाभिमुखत्वादसम्यगिति, तत उत्तरकालं सम्यगित्यपायः प्रवर्तते, नत्वसत्येतस्मिन् द्वय इति। स पुनः किंरूपोऽपाय इति? उच्यते-**गुणदोषे**त्यादि। गुण इति यस्तस्मिन् साधारणो धर्मो मृणाले स गुणः, दोषस्तु यस्तत्र न सम्भवति धर्मः स दोषः, गुणश्च दोषश्च गुणदोषौ तयोर्विचारणा-मार्गणा **गुणदोषविचारणा** तया गुणदोषविचारणया यः प्रवर्ततेऽध्यवसायः-चित्तं, कीदृशम्? **अपनोद** इत्येवंरूपः, अपनुदतीत्यपनोदः सोऽध्यवसायोऽपनुदति तत्रासन्निहितधर्ममिति मृणालस्यैवायं स्पर्शः अत्यन्तशीतादिगुणसमन्वितत्वादिति अस्यैवायमिति यः प्रत्ययोऽन्यस्य न भवतीति सः **अपायः** । संप्रत्येवं लक्षणतो निर्धारितस्वरूपं पर्यायशब्दैस्तमेव व्यपदिशत्यनर्थान्तरभूतैः **अपायोऽपगम** इत्यादिभिः। अपैतीत्यपायः, निश्चयेन परिच्छिनत्तीत्यर्थः । अपगच्छत्यपनुदति अपविध्यतीत्यर्थः । पुनश्चापाय इत्यस्य भावार्थमुररीकृत्य भावाभिधायिभिरेव कथयति-**अपेतमपगत**मित्यादिभिः । मृणालस्यैवायं स्पर्श इति येयं फलरूपा परिच्छित्तिस्वभावता ज्ञानस्येति सा भावाभिधायिभिरेभिरुच्यते, **अपेतमपगतं** परिच्छिन्नमेतन्मया एवमेतन्नान्यथेत्यर्थः। एवं निश्चितस्यार्थस्योत्तरकालं यदविस्मरणम्, अधुना यदा चान्यत्रार्थे उपयुक्तो भवति तदाऽपि या वासना लब्धिरूपा यद् वाऽन्यस्मिन् कालान्तरेऽनुसरणमेतन्मया प्रागासेवितमित्येषा त्रिरूपा धारणाऽभिधीयते तां दर्शयति-

अपायस्य स्वरूपम्

**भा०—धारणा प्रतिपत्तिर्यथास्वं मत्यवस्थानमवधारणं च। धारणा प्रतिपत्तिरवधारणावस्थानं निश्चयः अवगमः अवबोध इत्यनर्थान्तरम् ॥ १५ ॥**

टी०—**धारणा प्रतिपत्ति**रित्यादिना। धारणेति लक्ष्यम्, प्रतिपत्तिर्यथास्वमित्यनेनाद्यं भेदमादर्शयति, अस्मिन् काले निश्चितस्यार्थस्य यावदन्यत्र नोपयोगं याति तावत् अर्थस्य यद् दर्शनमप्रच्युतिः सा प्रतिपत्तिः यथास्वमित्युच्यते, प्रतिपत्तिः-अप्रच्युतिः यथास्वं-यथाविषयं यो यः स्पर्शादिर्विषय आगृहीतः तस्याऽनाश इत्यर्थः। मत्यवस्थानमित्यनेन द्वितीयां लब्धिरूपां धारणां कथयति, यदा अपायं स्पर्शादेर्विषयस्य कृत्वाऽन्यत्रोपयुक्तो भवति तदाऽप्यसौ लब्धिरूपा धारणा समस्ति, अतो मत्यवस्थानमिति ब्रूते। मतेः धारणाख्याया अवस्थानं शक्तिरूपं **मत्यवस्थानं** भण्यते। **अवधारणं** चेत्यनेन तृतीयभेदं कथयति। यदा कालान्तरे तमेव प्रागनुभूतं विषयमालम्ब्य ज्ञान-

धारणायाः स्वरूपम्

१ 'विचारणया' इति ख-पाठः। २ '०मपनुत्त०' इति घ-पाठः। '०वधारणमव०' इति घ-पाठः।

मुदेति तदा तदेवावधारणमिति भण्यते यस्मादवधारयति कालान्तरानुभूतमर्थमेवमेतन्मया सेवितमिति। सम्प्रति पर्यायशब्दैस्तामेव त्रिप्रकारामाचष्टे- धारयत्यर्थं त्रिभिरप्येभिः प्रकारैः सा धारणा। प्रतिपत्तिर्नाम परिच्छिन्नेऽर्थे यावदन्यत्रोपयोगं न याति तावदनाशस्तस्यार्थस्य तस्मिन् विज्ञान इति। अवधारणं पुनः कालान्तरानुस्मरणमागृहीतम्। अवस्थानमित्यनेन तु अन्यत्र पदार्थे उपयुक्तस्य या लब्धिरूपा धारणा सा गृहीता। पुनरेषामन्ये त्रयो यथासङ्ख्यकेन भेदा निदर्श्यन्ते— निश्चयोऽवगमोऽवबोध इति। निश्चय इत्ययं प्रतिपत्तिरित्यस्य पर्यायः, अवगम इत्ययं तु मत्यवस्थानस्य लब्धिरूपस्येति। अथवा अविशिष्टधारणायाः सर्व एते पर्याया इत्यनर्थान्तरमित्याह। भावना चैवं कार्या—अपवरकाद्यन्धकारस्थितेन पुंसा यदा स्पर्शनेन्द्रियेणोपलब्धमाद्यक्षणे सामान्यमनिर्देश्यमशेषकल्पनारहितं सोऽवग्रहः। यदा पुनस्तमेव विचारयति किमयं मृणालस्पर्श उताहिस्पर्श इति सेहा। यदाऽस्य निश्चितं भवति मृणालस्यैवायं नाहेरिति सोऽपायः। यदा तु निश्चितं सन्तमविच्युतिरूपेण धारयति लब्धिरूपेण वा कालान्तरानुस्मरणे वा सा धारणा। एवं रसनादिभिः रसादीनां योपलब्धिः सैकैका चतुर्विधा भावनीयेति ॥ १५ ॥

अत्राह—एते ह्यवग्रहादयो ज्ञानविशेषाः क्षयोपशमवैचित्र्यात् स्पर्शादिकमर्थमन्यथा वाऽन्यथा[1] निश्चिन्वन्तस्तथाव्यपदेशभाज इत्युक्तम् ॥ अथैषां स्वस्थाने क्षयोपशमवैचित्र्यमस्ति नास्तीति ?। उच्यते-अस्ति, यतोऽवग्रहः क्षयोपशमोत्कर्षापकर्षापेक्षोऽनेकधा बह्वादेरर्थस्य परिच्छेदकः, एवमीहादयोऽपीति, एतदनेन प्रतिपादयति सूत्रेण—

**सूत्रम्—बहुबहुविधक्षिप्रानिश्रितासन्दिग्धध्रुवाणां[2] सेतराणाम् ॥१-१६॥**

**टी०—बहुबहुविधेत्यादिना।** श्रुतानुमितैश्च पदैः प्रायो व्याख्या सूत्राणाम्, इष्टेऽपि अनुमीयमानैरवग्रहादिभिर्बह्वादीनां सम्बन्धं लगयन्नाह—

**भा०—अवग्रहादयश्चत्वारो मतिज्ञानविभागाः एषां बह्वादीनामर्थानां सेतराणां भवन्त्येकशः। सेतराणामिति-सप्रतिपक्षाणामित्यर्थः ॥**

**टी०—अवग्रहादयश्चत्वार** इत्यादि। अवग्रहादयः प्रागत्र (१-१५) निरूपितस्वरूपाः मूलभेदतश्चत्वार इति, क्षयोपशमवैचित्र्यात् तु नानाभेदास्त एव भवन्तीति मत्वा चत्वार इत्याह। मतिज्ञानस्य च प्रकृतत्वात् तद्भेदा एत इति-मतिज्ञानविभागा इत्याह, अवग्रहादयः। एतेऽवग्रहादयः **एषां** सूत्रोपन्यस्तानां **बह्वादीनां** षण्णाम् **अर्थानाम्** अर्थ्यमानानामित्यर्थः। बह्वादीनां षण्णामर्थानां सेतराणां च तेऽवग्रहादयो ग्राहका इत्यर्थ इत्याह-**सेतराणां भवन्तीति। एकश** इति च। एकैकस्य बह्वादेरर्थकलापस्य सेतरस्य ग्राहका इति एकैकोऽवग्रहादिरेकशः। सेतर इत्यस्य चार्थो नैवं ग्राह्यः-बहोरर्थस्य क्षिप्रार्थ इतर इति शक्यं वक्तुम्, एवं बह्वादीनामनिश्रितादिरितर

:अवग्रहादेर्बह्वादयो भेदाः

१ 'वाऽन्यथा' इति ख-ग-पाठः। २ '०श्रितानुक्तध्रुवा०' इति घ-पाठः।

इति, एतन्निरासायाह- **सेतराणाम्** , **सप्रतिपक्षाणामित्यर्थः**। एतत् कथयति-इतरशब्दस्य विरोधी योऽर्थः स वाच्यो भवति, बह्वर्थस्य च स्तोकार्थो विरोधी प्रतिपक्षः, इत्येवं शेषाणां प्रतिपक्षता ज्ञेया, एवं सम्बन्धं लगयित्वाऽर्थं कथयति—

अल्पावग्रहः

**भा०—बह्ववगृह्णाति अल्पमवगृह्णाति। बहुविधमवगृह्णात एकविधमवगृह्णाति। क्षिप्रमवगृह्णाति चिरेणावगृह्णाति। निश्रितमवगृह्णाति अनिश्रितमवगृह्णाति। असन्दिग्धमवगृह्णाति सन्दिग्धमवगृह्णाति[1]। ध्रुवमवगृह्णाति अध्रुवमवगृह्णाति। इत्येवमीहादीनामपि विद्यात्[2]॥ १६॥**

बह्ववग्रहस्य स्वरूपम्

**टी०—बह्ववगृह्णाति** इत्यादिना॥ ननु चावग्रहादयः प्रथमान्ताः श्रुताः पूर्वसूत्रे (१-१५), बह्वादयश्चेह षष्ठ्यन्ता इति तत्रैवमर्थकथनं युक्तं-बहोरर्थस्यावग्रहः अल्पस्यार्थस्यावग्रह इति? उच्यते-नायं दोषः, यतोऽवग्रहादयः कर्तृसाधनाः तत्र श्रुताः[3], अवगृह्णातीत्यवग्रहः, ईहत इति ईहा, अपैतीत्यपायः, धारयतीति धारणा, यश्चासौ ज्ञानांशोऽवगृह्णातीत्यादिरूपस्तस्यावश्यं कर्मणा भवितव्यम्, तच्चेह बह्वादिभेदं सूत्रेण विषयात्मकं भण्यते, अतो नास्त्यर्थभेदो बहोरवग्रहः बहुमवगृह्णातीति, अनयोः एक एवार्थः, केवलं तु शब्दभेद उच्यते। स्पर्शनावग्रहस्तावदेवं बहुमवगृह्णाति-शय्यायामुपविशन् पुमान् तत्स्थयोषित्पुष्पवस्त्रचन्दनादिस्पर्शं बहुं सन्तमेकैकं भेदेनावबुध्यते, अयं योषित्स्पर्शोऽयं च तल्लग्नपुष्पस्पर्शोऽयं च तद्गात्रानुलग्नचन्दनस्पर्शोऽयं चैतत्परिहितवस्त्रस्पर्शः अयमेतदाबद्धरसनास्पर्श इति, अतो बहुलस्पर्शं[4] भिन्नजातीयमवगृह्णातीति॥ ननु चावग्रह एकसामयिकः शास्त्रे निरूपितो न चैकस्मिन् समये चैवैकावग्रह एवंविधो युक्तोऽल्पकालत्वादिति। उच्यते-सत्यमेवमेतत्, किंतु अवग्रहो द्विधा-नैश्चयिको व्यावहारिकश्च॥ तत्र नैश्चयिको नाम सामान्यपरिच्छेदः, स चैकसामयिकः शास्त्रेऽभिहितः, ततो नैश्चयिकादनन्तरमीहैवमात्मिका प्रवर्तते-किमेष स्पर्श उतास्पर्श इति, तस्याश्चानन्तरोऽपायः स्पर्शोऽयमिति, अयं चापायः अवग्रह इत्युपचर्यते, आगामिनो भेदानङ्गीकृत्य यस्मादेतेन सामान्यमवच्छिद्यते। यतः पुनरेतस्मादीहा प्रवर्तिष्यते कस्यायं स्पर्शः? पुनश्चापायो भविष्यत्यस्यायमिति, अयमपि चापायः पुनरवग्रह इत्युपचर्यते, अतोऽनन्तरवर्तिनीमीहामपायं चाश्रित्य, एवं यावदस्यान्ते निश्चय उपजातो भवति, यत्रापरं विशेषं नाकाङ्क्षतीत्यर्थः। अपाय एव भवति न तत्रोपचार इति। अतो य एष औपचारिकोऽवग्रहस्तमङ्गीकृत्य बहु अवगृह्णातीत्येतदुच्यते, नत्वेकसमयवर्तिनं नैश्चयिकमिति, एवं बहुविधादिषु सर्वत्रौपचारिकाश्रयणाद् व्याख्येयमिति। सम्प्रति बह्वित्यस्य प्रतिपक्षं कथयति-**अल्पमवगृह्णातीत्यनेन**, यदा तेषामेव योषिदा-

१ 'अनुक्तमवगृह्णाति उक्तमवगृह्णाति' इति घ-पाठः। २ 'विन्द्यात्' इति क-पाठः। ३ 'तत्राश्रिताः' इति क-ख-पाठः। ४ 'बहुलस्पर्शे' इति ग-पाठः।

दिस्पर्शानां यं किञ्चिदेकं स्पर्शमवगृह्णाति अन्यान् सतोऽपि क्षयोपशमापकर्षात् न गृह्णाति तदाल्पम्–एकमवगृह्णातीत्युच्यते। **बहुविधमवगृह्णातीति**। बह्व्यो विधा यस्य स बहुविधः तमवगृह्णाति। बहुविधो नाम स एव योषिदादिस्पर्श एकैकः शीतस्निग्धमृदुकठिनादिरूपो यदाऽवगृह्यते तदा बहुविधं गुणैर्भिन्नं स्पर्शं परिच्छिन्दत् तज्ज्ञानं बहुविधमवगृह्णातीत्युच्यते। यदा तु योषिदादिस्पर्शमेवैकगुणसमन्वितं शीतोऽयमिति वा स्निग्धोऽयमिति वा मृदुरयमिति वेत्येवमवच्छिनत्ति तदा **एकविधमवगृह्णातीत्युच्यते**। तमेव भूयो योषिदादिस्पर्शमाशु स्वेनात्मना यदाऽवच्छिनत्ति तदा **क्षिप्रमवगृह्णातीति** भण्यते। यदा तु तमेव योषिदादिस्पर्शं स्वेनात्मनाऽवच्छिनत्ति बहुना कालेन तदा **चिरेणावगृह्णातीत्युच्यते**। **चिरेणेति** बहुना कालेन। **अनिश्रितमवगृह्णातीति** निश्रितो लिङ्गप्रमितोऽभिधीयते, यथा यूथिकाकुसुमानामत्यन्तशीतमृदुस्निग्धादिरूपः प्राक् स्पर्शोऽनुभूतस्तेनानुमानेन लिङ्गेन तं विषयं न यदा परिच्छिन्दत् तज्ज्ञानं प्रवर्तते तदा अनिश्रितं अलिङ्गमवगृह्णातीत्युच्यते। यदा त्वेतस्मादाख्याताल्लिङ्गात् परिच्छिनत्ति निश्रितं तदा स लिङ्गमवगृह्णातीति भण्यते। उक्तमवगृह्णातीत्ययं तु विकल्पः श्रोत्रावग्रहविषय एव न सर्वव्यापीति। यत उक्तमुच्यते शब्दः स चाप्यक्षरात्मकः तमवगृह्णातीति। अनुक्तस्तूक्तादन्यो "नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थ(गतिः)" (परिभाषेन्दुशेखरे प० ७४) इति अनया कल्पनया शब्द एवानक्षरात्मकोऽभिधीयते तमवगृह्णाति अनुक्तमवगृह्णातीति भण्यते। अव्याप्तिदोषभीत्या चापरैरिमं विकल्पं प्रोज्झ्य अयं विकल्प उपन्यस्तो निश्चितमवगृह्णातीति, निश्चितं सकलसंशयादिदोषरहितमिति, यथा तमेव योषिदादिस्पर्शमवगृह्णत् ज्ञानं योषित एव पुष्पाणामेव चन्दनस्यैवेत्येवं यदा प्रवर्तते तदा निश्चितमवगृह्णातीत्युपदिश्यते। अनिश्चितमवगृह्णातीति च कदा व्यपदिश्यते?। यदा तमेव स्पर्शं संशयापन्नः परिच्छिनत्ति स्पर्शोऽयं भवति एवं तु न निश्चिनोति–योषित एवायं, विलोमधर्मादेरपीदृशो भवति स्पर्श इति संशयप्रादुर्भावात्। **ध्रुवमवगृह्णातीति**। ध्रुवमत्यन्तं सर्वदेत्यर्थः। यदा यदा तस्य तेन स्पर्शेन योगो भवति योषिदादिना तदा तदा तमर्थमवच्छिनत्तीत्यर्थः। एतदुक्तं भवति–सति चोपयोगे यदाऽसौ विषयः स्पर्शाख्यः स्पृष्टो भवति तदा तमवगृह्णाति, एवम् **अध्रुवमवगृह्णातीति**। सतीन्द्रिये सति चोपयोगे सति च विषयसम्बन्धे कदाचित् तं विषयं तथा परिच्छिनत्ति कदाचिन्नेत्येतदध्रुवमवगृह्णातीत्युपदिश्यते। एवमित्यनेनैतत् कथयति–यथा विषयस्य बह्वादेर्भेदाद् द्वादशप्रकारोऽवग्रहोऽभिहितः क्षयोपशमोत्कर्षापकर्षाद् एवम् ईहादीनामपि ईहापायधारणानामपि जानीयाद्, बह्वीहते अल्पमीहते बहुविधमीहते एकविधमीहते क्षिप्रमीहते चिरेणेहते अनिश्रितमीहते निश्रितमीहते उक्तमीहते अनुक्तमीहते, द्वितीयविकल्पे निश्चितमीहते सन्दिग्धमीहते ध्रुवमीहते अध्रुवमीहते। एवमपायेऽपि बह्वपैतीत्यादयो द्वादश विकल्पाः, धारणायां च बहु धारयतीत्यादयो द्वादशैव, एवमवग्रहादीनां स्वस्थाने द्वादशविधत्वम् ॥ १६ ॥

ग्राह्यभेदाद् भेदं प्रतिपाद्येदानीमेषामेवावग्रहादीनां विषयं निर्धारयन्नाह—

**सूत्रम्—अर्थस्य ॥ १–१७ ॥**

**भा०—अवग्रहादयो मतिज्ञानविकल्पा अर्थस्य भवन्ति ॥ १७ ॥**

**टी०**—अर्थस्येति । कस्य विषयस्य ग्राहका अवग्रहादय इति मन्येथास्त्वम् ? । अर्थस्येति ब्रूमः । अर्थश्च स्पर्शरसगन्धवर्णशब्दात्मकः तस्य स्पर्शादेरर्थस्य अवग्रहादयोऽवच्छेदका **मति-ज्ञानविकल्पाः** मतिज्ञानस्येन्द्रियादिभेदेनाविभक्तस्य **विकल्पाः** अंशा इत्यर्थः । तदेवं विभज्यमानमेभिर्भेदैरवतिष्ठत इति यदि तर्हि स्पर्शादेर्विषयस्य ग्राहकाः अवग्रहादयोऽभ्युप-गम्यन्ते न तर्हि द्रव्यस्य ज्ञानं चक्षुरादिजं किञ्चिद् ग्राहकं समस्ति छाद्मस्थिकम् ? । उच्यते—स्पर्शादयो द्रव्यपर्यायाः, पर्यायग्रहणाच्च द्रव्यमवच्छिन्नमेवावसातव्यं, तेन रूपेण द्रव्यस्यैव भवनात्, यतो न द्रव्यविपुताः पर्यायाः, पर्यायविरहितं वा द्रव्यम्, अन्यतरानुपलब्धा-वन्यतरस्यानुपलब्धेः । प्रतीन्द्रियप्राप्त्या द्रव्यस्यैव रूपादिविशेषणभाक्त्वात्, विवक्षावशाच्च प्रधानगुणभावाभ्युपगमः प्रतिपद्यते जैनैः, अतः स्पर्शादिग्रहणे द्रव्यग्रहणमवश्यंभावि द्रव्य-ग्रहणे वा स्पर्शादिग्रहणम्, अन्योन्यानुगमात् । अर्थस्य स्पर्शादेः सामान्यानिर्देश्यस्वरूपस्य नामादिकल्पनारहितस्य अवग्रहो ग्राहकः, तस्यैव स्पर्शादेः किमयं स्पर्श उतास्पर्श इत्येवं परिच्छेदिका ईहा, तस्यैव स्पर्शोऽयमित्येवं परिच्छेदकोऽपायः, तस्यैव स्पर्शादेरर्थस्य परि-च्छिन्नस्योत्तरकालमविस्मृतिर्या सा धारणा । एवं रसादिष्वपि प्रत्येकमवग्रहादयो योज्याः । इदं च साधारणमवगम्यम्—अवग्रहादय एवार्थस्य मतिज्ञानविकल्पा ग्राहकाः नान्यो मतिज्ञा-नांश इति ॥ १७ ॥

अथ किमन्योऽप्यस्ति कश्चिन्मतिज्ञानांशो योऽर्थस्य ग्राहको न भवतीति नियमेना-पास्यते? । उच्यते—अस्ति, यः सामान्यमात्रग्राहिणोऽप्यत्रग्रहादुक्तस्वरूपादत्यन्तमलीमसरूपोऽ-वग्रह इति । स तर्हि कस्य ग्राहक इति ? । उच्यते—

**सूत्रम्—व्यञ्जनस्यावग्रहः ॥ १–१८ ॥**

**भा०—व्यञ्जनस्यावग्रह एव भवति नेहादयः । एवं द्विविधोऽवग्रहो व्यञ्जनस्यार्थस्य च । ईहादयस्त्वर्थस्यैव ॥ १८ ॥**

**टी०—व्यञ्जनस्यावग्रह** इति । तत्र व्यज्यतेऽनेनार्थ इति व्यञ्जनं सन्तमसावस्थित-घटरूपप्रदीपादिवत्, तत् पुनर्व्यञ्जनं संश्लेषरूपं यदिन्द्रियाणां स्पर्शनादीनामुपकरणाख्यानां स्पर्शाद्याकारेण परिणतानां पुद्गलद्रव्याणां च यः परस्परं संश्लेषस्तद्व्यञ्जनं, तस्य व्यञ्जन-स्यावग्रह एवैको भवति ग्राहकः । का भावनेति चेत् ? उच्यते—यदोपकरणेन्द्रियस्य स्पर्श-नादेः पुद्गलैः स्पर्शाद्याकारपरिणतैः सम्बन्ध उपजातो भवति न च किमप्येतदिति गृह्णाति किन्त्वव्यक्तविज्ञानोऽसौ सुप्तमत्तादिसूक्ष्मावबोधसहितपुरुषवदिति तदा तैः पुद्गलैः स्पर्शनाद्यु-

१ 'विशेषेण' इति क–ख–पाठः ।

पकरणेन्द्रियसंश्लिष्टैर्या च यावती च विज्ञानशक्तिराविरस्ति सैवंविधा विज्ञानशक्तिरवग्रहाख्या, तस्य स्पर्शनाद्युपकरणेन्द्रियसंश्लिष्टस्पर्शाद्याकारपरिणतपुद्गलराशेर्व्यञ्जनाख्यस्य ग्राहिकाऽवग्रह इति भण्यन्ते। तेनैतदुक्तं भवति-स्पर्शनाद्युपकरणेन्द्रियसंश्लिष्टाः स्पर्शनाद्याकारपरिणताः पुद्गलाः व्यञ्जनं भण्यन्ते, विशिष्टार्थावग्रहकारित्वात्, तस्य व्यञ्जनस्य परिच्छेदकोऽव्यक्तोऽवग्रहो भण्यते, अपरोऽपि तस्मान्मनाक् निश्चिततरः किमप्येतदित्येवंविधः सामान्यपरिच्छेदोऽवग्रहो भण्यते, ततः परमीहादयः प्रवर्तन्ते, अतः सूक्तं व्यञ्जनस्यावग्रह एव अत्यन्तमलीमसपरिच्छेदक इति, **नेहादयः**, ईहापायधारणास्तस्य व्यञ्जनस्य ग्राहिका न भवन्ति, स्वांशे-भेदमार्गणनिश्चयधारणाख्ये तासां नियतत्वात्। एवमुक्तेन प्रकारेण, सूत्रद्वयाभिहितेनेत्यर्थः। **द्विविध** इति च। विषयस्य द्विरूपत्वात् द्विविध इत्युक्तम्। एतदेवाह-व्यञ्जनस्यार्थस्य च परिच्छेदे प्रवर्तमानो द्विविध उच्यते, ईहादयस्त्वर्थस्य स्पर्शादेरेव विशेषका भवन्ति, नेहापायधारणास्ववग्रहस्य द्वैरूप्यमस्तीति ॥ १८ ॥

अथ किं स्पर्शनादीनामिन्द्रियाणां सर्वेषां व्यञ्जनावग्रहः समस्ति, उत कस्यचिन्नेति?। उच्यते-कस्यचिन्न सम्भवतीत्यपि। एतद् दर्शयति—

## सूत्रम्—न चक्षुरनिन्द्रियाभ्याम् ॥ १-१९ ॥

**भा०—चक्षुषा नोइन्द्रियेण च व्यञ्जनावग्रहो न भवति, चतुर्भिरिन्द्रियैः शेषैर्भवति। एवमेतत् मतिज्ञानं द्विविधं, चतुर्विधमष्टाविंशतिविधमष्टषष्ट्युत्तरशतविधं, षट्त्रिंशत्त्रिशतविधं च भवति ॥ १९ ॥**

**अत्राह—गृह्णीमस्तावन्मतिज्ञानम्। अथ श्रुतज्ञानं किमिति अत्रोच्यते ॥**

**टी०**-करणे सहार्थे वैषा तृतीया, **चक्षुषा** उपकरणेन्द्रियाख्येन सह **नोइन्द्रियेण** वा मनओघज्ञानरूपेण सह ते रूपाकारपरिणताः पुद्गलाश्चिन्त्यमानाः वस्तुविशेषाः संश्लेषं न यान्ति, अतो व्यञ्जनम् चक्षुरुपकरणेन्द्रियनोइन्द्रिययो रूपाद्याकारपरिणतिपुद्गलानां च यत् संश्लेषरूपं तद्व्यञ्जनमेवंविधं नास्ति, तदभावाच्च तदवग्रहोऽपि नास्ति, एतदाह-**व्यञ्जनस्यावग्रहो न भवति**। एतदुक्तं भवति-ये ते दृश्यमानाश्चिन्त्यमानाश्च वस्तुविशेषाः न ते चक्षुरिन्द्रियेणोपकरणरूपेण नोइन्द्रियेण च सह संश्लेषमिताः परिच्छिद्यन्ते, यतो योग्यदेशावस्थितं वस्तु चक्षुः शरीरस्थमेव सत् परिच्छिनत्ति, न गत्वा विषयपरिच्छेदे व्याप्रियते, न वा विषयमागतं धान्यमसूरकाकृतिके इन्द्रियदेशेऽवगच्छति, अतश्च लोचनमप्राप्तविषयग्राहि, न खलु ग्राह्येण तस्यानुग्रहोपघातानुभवो दृष्टः, स्वान्तस्येव, नापि धान्यमसूराकृतीन्द्रियदेशवर्तिविषयपरिच्छेदि विलोचनं, यदि स्यात् ततस्तद्गतमञ्जनादि परिच्छिन्द्यात्, न च परिच्छिनत्ति, अतो निश्चीयतेऽनागतं विषयमवबुध्यते तत्, न वा गत्वा विषयदेशमित्यतो न व्यञ्जनावग्रहस्तस्य। मनसोऽप्येवमेव, न चिन्त्यमानं विषयं प्राप्य मनः चिन्तयति, न वा आगतं स्वात्मन्यवस्थितं विषयं मनः पर्यालोचयति, यदि च संश्लिष्य विषयं परिच्छिन्द्यात्

नेत्रस्याप्राप्यकारित्वम्।

मनस्ततो ज्ञेयकृतमनुग्रहं विक्लेदादिरूपमनुभवेद् उपघातं वा दाहादिरूपमिति ॥ अथामूर्तत्वान्न दह्यत इति, तदप्ययुक्तम्, आर्हतस्य हि पुद्गलात्मकत्वात् मूर्तता मनस्यसिध्यत्, शरीरस्थं वा मनो विषयं निश्चिनोति, यथा हि स्पर्शनं करणमगत्वेति न वा शरीरात् तस्य निःसरणं, स्पर्शनं हि करणं सन्न निस्सरदृष्टम्, अतो मनश्चिन्त्यमानैर्वस्तुभिः सह न श्लिष्यतीति व्यञ्जनावग्रहाभाव आख्यायते । **चतुर्भिरिति** चक्षुर्मनोव्यतिरिक्तानि चत्वार्येवेति, अन्यानि सांख्याभिमतानि निरस्यति—चतुर्भिरेव नातो व्यतिरिक्तैरिन्द्रियैरिति, स्पर्शनरसनघ्राणश्रोत्रैः **शेषैरिति,** उपर्युक्तवर्जैः **भवति,** व्यञ्जनावग्रहः सम्भवतीति यावत् । किमिति यदि एतानि चत्वार्यप्युपकरणेन्द्रियेण सह श्लिष्टं स्पर्शादिकं विषयमवच्छिन्दते नान्यथेति अतः प्राप्तविषयग्राहित्वादेषां सम्भवति व्यञ्जनावग्रह इति । **एवमेतदिति** लक्षणविधानाभ्यां

मतिज्ञानस्य भेदविचारः

यन्निरूपितं **मतिज्ञानं** तस्य पुनः सम्पिण्डय भेदान् कथयति द्विविधमित्यादिना । **द्विविधमिति,** इन्द्रियनिमित्तमनिन्द्रियनिमित्तं च । **चतुर्विधमवग्रहादिभेदतः । अष्टाविंशतिविधमिति,** स्पर्शनादीनां मनःपर्यवसानानां षण्णामेकैकस्य चत्वारो भेदा अवग्रहादयस्ते समुदिताः सर्वेऽपि चतुर्विंशतिरूपजाताः, ततोऽन्यचक्षुर्मनोवर्जस्पर्शनादीनां यो व्यञ्जनावग्रहः चतुर्भेदः स प्रक्षिप्तः, ततोऽष्टाविंशतिविधं भवति । **अष्टषष्ट्युत्तरशतविधमिति,** तस्या एवाष्टाविंशतेरेकैको भेदः षड्विधो भवति बह्वादिभेदेन अत अष्टषष्ट्युत्तरशतविधं भवति । तस्या एवाष्टाविंशतेरेकैको भेदो द्वादशधा भवति सेतरबह्वादिद्वादशकेन, अतः **षट्त्रिंशत्त्रिशतभेद(विध)मिति** ॥ १९ ॥

अत्र—अस्मिन्नवकाशे चोदकः आह—गृह्णीमो जानीमस्तावत् क्रमेण पूर्वमुद्घट्टितं लक्षणविधानरूपं **मतिज्ञानं,** तदनन्तरं तु यच्छ्रुतज्ञानमुक्तं तन्न विद्म इत्यतः पृच्छ्यते मया—अथ श्रुतज्ञानं किंलक्षणमिति ? । अस्मिन् चोदिते गुरुराह—उच्यते मयेति—

## सूत्रम्—श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम् ॥ १–२० ॥

**टी०**—श्रुतमिति लक्ष्यं, मतिपूर्वमिति लक्षणं, द्व्यादिविधानं, श्रुतमिति च श्रूयते

श्रुतशब्दस्यार्थः

स्म श्रुतम् । एवंविधायां च कल्पनायां शब्दोऽभिधीयते न श्रुतिः, श्रुतं श्रवणमिति भवासाधनतामभ्युपैति, प्रकृतेन ज्ञानग्रहणेन श्रुतमिति ज्ञानं ग्राह्यं, न शब्दः, ज्ञानविचारप्रस्तावात् । यदि तु श्रुतज्ञानस्यान्तर्वर्तिनः स शब्दो निमित्ततां प्रतिपद्यमानः श्रुतव्यपदेशमश्नुते न कश्चिद् दोषः, उपचारस्य व्यवहाराङ्गत्वात् । मुख्यया तु वृत्त्या श्रुतमित्यनेन ज्ञानमुच्यते, एतदाह—

**भा०—श्रुतज्ञानं मतिज्ञानपूर्वकं भवति । श्रुतमाप्तवचनं आगमः उपदेश ऐतिह्यमाम्नायः प्रवचनं जिनवचनमित्यनर्थान्तरम् ॥**

टी०—**श्रुतज्ञानमिति**। मतिपूर्वमित्यस्यार्थं विवृणोति–**मतिज्ञानपूर्वकं** भवतीत्यनेन। मत्या कृतया ज्ञानं विशेषयति–**मतिज्ञानमिति**। तन्मतिज्ञानं पूर्वं यस्य तन्मतिपूर्वं भण्यते, अपेक्षाकारणं चेह पूर्वमित्यनेनोच्यते, यथा घटस्योत्पत्तावपेक्षाकारणं व्योमाद्यपेक्ष्यते, तेन विना तदभावात्, एवमिह सति मतिज्ञाने लब्धिरूपे ततः श्रुतज्ञानस्योत्पत्तिरिष्टा न मतिज्ञानाभावे, किं पुनः कारणं तदेव मतिज्ञानं न श्रुतज्ञानीभवतीति मृत्तिकावद् घटरूपेण? उच्यते–एवं सति श्रुतज्ञाने प्रादुर्भूते मतिज्ञानस्य नाशः स्यात्, न चैतदिष्यते। यत आह–"जत्थ मई तत्थ सुअं, जत्थ सुअं तत्थ मई (जत्थ आभिणिबोहियनाणं तत्थ सुयनाणं, जत्थ सुयनाणं तत्थाभिणिबोहियनाणं"[1] नन्दी०सू० २४)। तस्मादपेक्षाकारणमेव मतिज्ञानं तस्योत्पत्तौ लब्धिरूपं भवति, न पुनः समवायिकारणमिति। एतच्च लक्षणमुक्तमेव, यतो मतिज्ञानभावे लक्ष्यते श्रुतमिति। एतच्च श्रुतज्ञानमेवमात्मकमिन्द्रियमनोनिमित्तं ग्रन्थानुसारि विज्ञानं यदिति, तं च ग्रन्थं दर्शयति बहुभिः पर्यायशब्दैः–**श्रुतमाप्तवचनमित्यादिभिः**। श्रूयते तदिति श्रुतम्, अस्मिन् पक्षे शब्दोऽभिधीयते, तस्य शब्दस्य श्रुतज्ञानं–परिच्छेदकारि श्रुतज्ञानमिति गृह्यते। एवं सर्वेष्वाप्तवचनादिषु षष्ठीसमास आश्रयणीयः, आप्तवचनस्य ज्ञानं यत्परिच्छेदकारि इत्येवम्, आप्तो–रागादिवियुतः तस्य वचनमिति॥ ननु चार्थमेव कथयति तीर्थकृत्, न सूत्रं ग्रथ्नाति, गणधरास्तु सूत्रसन्दर्भेण व्याप्रियन्ते, कथं तर्हि इदमुच्यते–आप्तस्य–तीर्थकृतो वचनं द्वादशाङ्गं–गणिपिटकमिति?। उच्यते–गौणीकल्पनामाश्रित्योक्तमाप्तस्य वचनमित्येतत्। कथम्? यदा हि भगवान् जीवादिकमर्थं केवलज्ञानभास्वत्प्रभावप्रकाशितं गणधरेभ्य आचष्टे तदाऽसौ जीवादिरर्थस्तस्मिन् केवलज्ञानदर्शनात्मके तीर्थकृति समारूढ इव लक्ष्यते प्रतिबिम्बाकारेणोपजायमानत्वात् अतोऽसावप्यर्थ आप्तो भवति, तदध्यारोपात्, तस्याप्तस्यार्थस्य तद्गणधरवचनं प्रतिपादकमित्याप्तवचनं भण्यते। यद्वा गणधरवचनमेवाप्तवचनम्, निश्रयोपजायमानत्वात् आप्तवचनमुच्यते। एवमागमादिष्वपि घटमानमायोज्यमिति। आगच्छत्याचार्यपरम्परया वासनाद्वारेणेत्यागमः, उपदिश्यते–उच्चार्यते इत्युपदेशः, ऐतिह्यमेवमेतद् वृद्धाः स्मरन्तीति, आम्नायते–अभ्यस्यते निर्जरार्थिभिरित्याम्नायः, प्रकर्षेण नामादिनयप्रमाणनिर्देशादिभिश्च यत्र जीवादयो व्याख्यातास्तत् प्रवचनम्, जिना रागादिसन्तानविजि (वर्जि?) तास्तेषामिदं वचनमिति। एवमेभिरनर्थान्तरवर्तिभिः एकोऽर्थः प्रतिपाद्यते द्वादशाङ्गं गणिपिटकमितियावत्, स **चावश्यकादिराचारादिश्च**॥ एवं लक्षणतः पर्यायतश्चाभिधायाभिधानं दर्शयति—

आगमादीनां व्युत्पत्त्यर्थः

---

१ यत्र मतिस्तत्र श्रुतं, यत्र श्रुतं तत्र मतिः (यत्राभिनिबोधिकज्ञानं तत्र श्रुतज्ञानं, यत्र श्रुतज्ञानं तत्राभिनिबोधिकज्ञानम्)।

२ 'दकमपीत्याप्त' इति ख-पाठः।

**भा०—तद् द्विविधमङ्गबाह्यमङ्गप्रविष्टं च। तत् पुनरनेकविधं द्वादशविधं च यथासङ्ख्यम्। अङ्गबाह्यमनेकविधम्। तद्यथा—सामायिकं, चतुर्विंशतिस्तवः, वन्दनं, प्रतिक्रमणं, कायव्युत्सर्गः, प्रत्याख्यानं, दशवैकालिकं, उत्तराध्यायाः, दशाः, कल्पव्यवहारौ, निशीथमृषिभाषितानीत्येवमादि ॥**

श्रुतज्ञानस्य भेद-प्ररूपणा

**टी०**—तद् **द्विविधमि**त्यादिना। द्वौ चानेकश्च द्वादश च द्व्यनेकद्वादश ते भेदा यस्य तद् द्व्यनेकद्वादशभेदम्, तच्छ्रुतं द्विविधमिति, परोपाधिकं द्विविधत्वमिति वक्ष्यति। **अङ्गबाह्यमिति**। अङ्गानि-अवयवा आचारादयस्तेभ्यो बाह्यमिति अङ्गबाह्यम्, अङ्गेष्वाचारादिषु प्रविष्टम्—अन्तर्गतम् अङ्गप्रविष्टम्, अङ्गबाह्यमङ्गप्रविष्टम् च पुनरनेन भेदेन भेद्यम्—अनेकविधम्—अनेकप्रकारम्, अङ्गबाह्यं, द्वादशविधं—द्वादशभेदम् अङ्गप्रविष्टमेवं **यथासङ्ख्यं** यथोपन्यस्तमितियावत्। अङ्गबाह्यमनेकविधं सामायिकादि। समभावो यत्राध्ययने वर्ण्यते तत्तेन वर्ण्यमानेनार्थेन निर्दिशति—**सामायिकमिति**। एवं सर्वेषु वक्ष्यमाणेष्वर्थसम्बन्धाद् व्यपदेशो दृश्यः। चतुर्विंशतीनां पूरणस्यारादुपकारिणो यत्र स्तवः शेषाणां च तीर्थकृतां वर्ण्यते स **चतुर्विंशतिस्तव** इति। वन्दनम्—प्रणामः स कस्मै कार्यः कस्मै च नेति यत्र वर्ण्यते तत् **वन्दनम्**। असंयमस्थानं प्राप्तस्य यतेस्तस्मात् प्रतिनिवर्तनं यत्र वर्ण्यते तत् **प्रतिक्रमणम्**। कृतस्य पापस्य यत्र कायपरित्यागेन क्रियमाणेन विशुद्धिराख्यायते स **कायव्युत्सर्गः**। प्रत्याख्यानं यत्र मूलगुणा उत्तरगुणाश्च धारणीया इत्ययमर्थः ख्याप्यते तत् **प्रत्याख्यानम्**। दशविकाले पुत्रहिताय स्थापितान्यध्ययनानि **दशवैकालिकम्**। आचारात् परतः पूर्वकाले यस्मादेतानि पठितवन्तो यतयस्तेन **उत्तराध्ययनानि**। पूर्वेभ्य आनीय सङ्घसन्ततिहिताय स्थापितान्यध्ययनानि दशा उच्यन्ते। दशा इति व्यवस्थावचनः शब्दः, काचित् प्रतिविशिष्टावस्था यतीनां यासु वर्ण्यते ता **दशा** इति। **कल्पव्यवहारौ** कल्प्यन्ते—भिद्यन्ते मूलादिगुणा यत्र स कल्पः, व्यवह्रियते प्रायश्चित्ताभवद्व्यवहारतयेति **व्यवहारः**। **निशीथम्** अप्रकाशं सूत्रार्थाभ्यां, यद् ऋषिभि**र्भाषितानि** प्रत्येकबुद्धादिभिः कापिलीयादीनि, **एवमादि** सर्वमङ्गबाह्यं दृश्यम् ॥

अङ्गबाह्यादीनां सामायिकादीनां व्याख्या

**भा०—अङ्गप्रविष्टं द्वादशविधम्। तद्यथा—आचारः, सूत्रकृतं, स्थानं, समवायः, व्याख्याप्रज्ञप्तिः, ज्ञातधर्मकथाः, उपासकाध्ययनदशाः, अन्तकृद्दशाः, अनुत्तरोपपातिकदशाः, प्रश्नव्याकरणं, विपाकसूत्रं, दृष्टिपात इति ॥ अत्राह—मतिज्ञानश्रुतज्ञानयोः कः प्रतिविशेष इति ?। अत्रोच्यते—**

टी०—अङ्गप्रविष्टं द्वादशविधं भण्यते। तद्यथा, आचारो ज्ञानादिर्यत्र कथ्यते स **आचारः**। सूत्रीकृता अज्ञानिकादयो यत्र वादिनस्तत् **सूत्रकृतम्**। यत्रैकादीनि पर्यायान्तराणि वर्ण्यन्ते तत् **स्थानम्**। सम्यगवायनं वर्षधर-नद्यादिपर्वतानां यत्र स **समवायः**। व्याख्यायन्ते जीवादिगतयो यत्र नयद्वारेण प्ररूपणाः क्रियन्ते सा **व्याख्याप्रज्ञप्तिः**। ज्ञाता–दृष्टान्तास्तानुपादाय धर्मो यत्र कथ्यते ताः **ज्ञातधर्मकथाः**। उपासकैः–श्रावकैरेवं स्थातव्यमिति येष्वध्ययनेषु दशसु वर्ण्यते ता **उपासकदशाः**। अन्तकृतः–सिद्धास्ते यत्र ख्यायन्ते **वर्धमान**स्वामिनस्तीर्थ एतावन्त इत्येवं सर्वकृतान्ताः **अन्तकृद्दशाः**। अनुत्तरोपपादिका देवा येषु ख्याप्यन्ते ताः **अनुत्तरोपपादिकदशाः**। प्रश्नितस्य जीवादेर्यत्र प्रतिवचनं भगवता दत्तं तत् **प्रश्नव्याकरणम्**। विपाकः–कर्मणामनुभवस्तं सूत्रयति–दर्शयति तद् **विपाकसूत्रम्**। दृष्टीनाम् अज्ञानिकादीनां यत्र प्ररूपणा कृता स **दृष्टिवादः**, तासां वा तत्र **पातः**। अत्रावसरे चोदक आह–उक्तं लक्षणं विधानं च श्रुतस्य, किन्तु यथाऽयं विषयं निरूपयिष्यते तथा न कश्चिद् भेदोऽस्तीति पृच्छति मतिश्रुतयोः को भेद इति ?। भण्यते—

अङ्गप्रविष्टानां आचारादीनां व्याख्या

भा०—**उत्पन्नाविनष्टार्थग्राहकं साम्प्रतकालविषयं मतिज्ञानम्, श्रुतज्ञानं तु त्रिकालविषयम्, उत्पन्नविनष्टानुत्पन्नार्थग्राहकमिति॥ अत्राह–गृह्णीमो मतिश्रुतयोर्नानात्वम्॥ अथ श्रुतज्ञानस्य द्विविधमनेकं द्वादशविधमिति किंकृतः प्रतिविशेष इति ?। अत्रोच्यते—**

मतिश्रुतयोः प्रतिविशेषः

टी०—**उत्पन्नेत्यादिना**। उत्पन्नः–स्वेन रूपेण जातः स्पर्शादिरर्थो घटादिगतः, स चोत्पन्नो यदि तेन रूपेण सन्तिष्ठते न तु कपालाद्यवस्थां प्राप्तस्तदा स्पर्शनमतिज्ञानमेवं परिच्छिनत्ति–घटस्यायं स्पर्श इति, स चाप्युत्पन्नाविनष्टो यदि योग्यदेशस्थो भवति तदा परिच्छिनत्ति, न तु विप्रकृष्टदेशस्थमित्येतदाह–**साम्प्रतकालविषयमिति**। अनेन वर्तमानकालविषयतां मतिज्ञानस्यावेदयते। **श्रुतज्ञानं तु**, तुशब्दः भेदप्रदर्शनपर इति। तं भेदमाह—**त्रिकालविषयम्**। पुनश्चेदमैदंपर्यं[1] व्याख्यानयति–**उत्पन्नेत्यादिना**। उत्पन्नो–वर्तमानस्तमपि नोइन्द्रियं मनआख्यं परिचिन्तयति–कीदृशोऽयं कर्करस्पर्श इति, **विनष्टमप्यन्यत्र** लग्नं शर्करास्पर्शमतीतं चिन्तयति–अस्याः प्राक् शर्करायाः मया स्पर्शोऽनुभूत इति। **अनुत्पन्नम्**-आगामिनमेवंविध एषां क्षीरगुडादीनां प्रतिविशिष्टात् संस्कारात् स्पर्श उपयास्यतीति, अत उत्पन्नादिग्राहकम्। पुनश्चोदयति–अवगतो विशेष एतयोः, अथ श्रुतज्ञानस्य द्विविधादिभेदः किंकृत इति ? सर्वं तद्द्रव्यश्रुतं भावश्रुतस्य निमित्तमिति शक्यं वक्तुम्। एवमुक्ते सूरिराह—

भा०—**वक्तृविशेषाद् द्वैविध्यम्। यद् भगवद्भिः सर्वज्ञैः सर्वदर्शिभिः परमर्षिभिरर्हद्भिस्तत्स्वाभाव्यात् परमशुभस्य च प्रवचनप्रतिष्ठापनफलस्य तीर्थकरनामकर्मणोऽनुभावादुक्तं भगवच्छिष्यैरतिशयवद्भिरुत्तमातिशयवाग्बु-**

१ 'श्चेदमेव पदं' इति ख-पाठः।

**द्धिसम्पन्नैर्गणधरैर्दृब्धं तदङ्गप्रविष्टम्। गणधरानन्तर्यादिभिस्त्वत्यन्तविशुद्धागमैः परमप्रकृष्टवाङ्मतिबुद्धिशक्तिभिराचार्यैः कालसंहननायुर्दोषादल्पशक्तीनां शिष्याणामनुग्रहाय यत् प्रोक्तं तदङ्गबाह्यमिति ॥**

टी०—**वक्तृविशेषादित्यादिना।** वक्तारः तस्य ग्रन्थराशेर्निबन्धकास्तेषां विशेषो-भेदस्तस्माद् **द्वैविध्यं**-द्विविधत्वं-द्विभेदताऽनुमातव्या। **यद्भगवद्भिरित्यादि।** अयं पिण्डार्थः-तीर्थकृद्भिरर्थः कथितः स गणधरैर्गणधरशिष्यादिभिश्च रचित इति गणधरास्तद्वंशवर्तिनश्च द्वये वक्तारस्तद्भेदाद् द्विविधमिति। एतदाह-यद् उक्तं **तैर्भगवद्भिरैश्वर्यादि-गुणान्वितैः**, सर्वद्रव्यपर्यायान् जानाति(नद्भिः) विशेषतः **सर्वज्ञैः**, तानेव सामान्यतः पश्यद्भिः **सर्वदर्शिभिरिति।** सामान्यकेवलिनो हि प्रधानभावं बिभ्रति ऋषयः, प्रधानतरास्तीर्थकराः **परमर्षिभिः** इत्याह, पूजां त्रिदशादीनामर्हद्भिरित्यतोऽर्हद्भिः ( सम्बन्ध-का० ७ )।

तीर्थंकरोपदेशे कारणम्

किमर्थं कृतकृत्या अर्हन्तो गणधरेभ्यः कथयन्त्यर्थमिति?। उच्यते-**तत्स्वाभाव्यादिति।** तेषामेष एव स्वभावस्तीर्थकृतां यतः उत्पन्नदिव्यज्ञानैर्गणधरादिभ्यः प्रकाशनीयः सोऽर्थ इति, न च स्वभावेऽस्ति पर्यनुयोगो, भास्करप्रकाशवत्, किमर्थमयमंशुमाली जगत् प्रकाशयतीति न कश्चित् प्रश्नयति। अथवा अकृतार्थ एव तदा भगवान्, किमिति? कर्मोदयभाक्त्वात्। कस्य कर्मण इति चेत्? उच्यते-तीर्थकरनामाख्यस्य। तद्द्वयविशेषणमुपक्षिपति-**परमशुभस्ये-त्यादि।** परमं च तच्छुभं च परमशुभं तस्य। कथं परमशुभतेति चेद् यतस्तस्मिन्नुदितेऽन्या असातादिकाः प्रकृतय उदिता अपि न स्वविपाकं प्रकटं दर्शयितुं शक्ताः, क्षीरद्रव्यापूरितकुम्भे पिचुमन्दरसबिन्दुवदिति। एवं परमशुभस्य, **प्रवचनं** द्वादशाङ्गं ततोऽनन्यवृत्तिर्वा संघस्तस्य प्रवचनस्य **प्रतिष्ठापनं**-निर्वर्तनं प्रयोजनमस्य **तत्प्रवचनप्रतिष्ठापनफलं** तस्य, तीर्थं तदेव गणिपिटकं सङ्घः, सम्यग्दर्शनादित्रयं वा तत् कुर्वन्ति-उपदेशयन्ति ये ते **तीर्थकराः**, तान् नामयति-करोति यत् तत् **तीथकरनाम।** तस्य तदेवार्हदादिपूजाकरणाद्धेतोः क्रियमाणं कर्मेत्यभिधीयते तस्यानुभावात्, पश्चाद् विपाकादित्यर्थः। अतस्तस्मादनुभावाद् यदुक्तं-प्रतिपादितं तीर्थकृद्भिः तदेव तीर्थकरप्रतिपादितमर्थजातम्-उत्पन्नमिति वा विनष्टमिति वा ध्रुवमिति वा इत्येवं तद् गृहीत्वा गणधरैः, तेषां त्रितयं विशेषणमुपक्षिपति—

**भगवच्छिष्यैरित्यादिना** स्वयं गृहीतलिङ्गतां निरस्यति। पुनश्च सामान्य-पुरुषा न भवन्तीति दर्शयति—**अतिशयवद्भिरिति।** अतिशयाः-विशिष्टाः शक्तयः। यथा-"पहू णं चउद्दसपुव्वी घडादो( ओ ? ) घडसहस्सं पडाओ पडसहस्सं[1]" इत्येवमादयः, ते येषां सन्ति तेऽतिशयवन्तस्तैरिति। तथा **उत्तमातिशयेत्यादिना** कुण्ठतां निरस्यति, यत उत्तमा अतिशयाः (बीज-

गणधरविशेषणानां सार्थकता

---

१ प्रभुः चतुर्दशपूर्वी घटात् घटसहस्रं पटात् पटसहस्रम् ( **भगवत्यां सू० १९९** )।

कोष्ठादिबुद्ध्यः ) प्रसादादयः वाग्विवक्षितार्थप्रतिपादिका बुद्धिः बीजकोष्ठकादि, यावद् भण्यते तत् सर्वमसौ गृह्णाति न किञ्चित् न पश्यति तिलतुषमात्रमपीत्यर्थः। आभिरुत्तमाः अतिशयवाग्बुद्धिभिः सम्पन्ना–अन्वितास्तैः साधुवृन्दोपदेशनप्रवृत्तैर्गणधारिभिर्यत् दृब्धं–रचितं तदङ्गप्रविष्टमाचारादि भण्यते, अङ्गबाह्यं सम्प्रतितनैः कृतमिति तदुच्यते। गणधरा इन्द्रभूत्यादयः तेषामनन्तरे ये साधवस्तेऽनन्तर्याः शिष्या इत्यर्थः ते गणधरानन्तर्याः जम्बूनामादयः आदिर्येषां प्रभवादीनां ते गणधरानन्तर्यादयः, तैरत्यन्तनिर्मलागमैः परमप्रकृष्टा वाङ्मतिबुद्धिशक्तयो येषां तैरिति, वाग्-भाषा स्पष्टवर्णा सकलदोषरहिता मतिः, बुद्धिश्चतुर्विधा, शक्तिः वादलब्ध्यादि। एवंविधैरपि नोज्झितचारित्रैरित्येतदाह–आचार्यैः ज्ञानाद्याचारानुष्ठायिभिरिति। किमर्थं तैस्तत एव प्रवचनादुद्धृत्य दशवैकालिकादि रचितम्? उच्यते–अल्पशक्तीनामनुग्रहार्थम्। कस्मादल्पशक्तय इति चेत्? उच्यते–कालसंहननेत्यादि। कालदोषात् कालस्य दुःख[ष]माभिधानस्य स्वभावात् पुरुषा अल्पशक्तयो भवन्ति, संहननच्छेदवर्ति स एव दोषस्तद्वाऽल्पसामर्थ्यम्, आयुः-जीवितं तदल्पं यः सर्वचिरं जीवेत् स वर्षशतमिति, अत एतस्मात् कालादिदोषादल्पशक्तयः पुमांसो भविष्यन्तीत्येवं मन्यमानैर्गणधरैर्वंशजैः सूरिभिः शिष्याणां अनुग्रहाय–उपकारायाल्पेनैव ग्रन्थेन सुबहुमर्थमूहिष्यन्त इति मन्यमानैर्यत् प्रोक्तं दशवैकालिकादि तदङ्गबाह्यमिति। अत एव द्विविधकारणात् मतेः सकाशात् महाविषयता सिद्धा, एतदाह—

श्रुतज्ञानस्य महाविषयत्वात् अङ्गादिभेदः।

**भा०–सर्वज्ञप्रणीतत्वादानन्त्याच्च ज्ञेयस्य श्रुतज्ञानं मतिज्ञानान्महाविषयम्। तस्य महाविषयत्वात् तांस्तानर्थानधिकृत्य प्रकरणसमाप्त्यपेक्षमङ्गोपाङ्गनानात्वम्। किंचान्यत्। सुखग्रहणविज्ञानापोहप्रयोगार्थं च।**

टी०–**सर्वज्ञप्रणीतत्वादि**त्यादि। **सर्वज्ञै**स्तीर्थकृद्भिः प्रणीतत्वादुपदिष्टत्वात् **महाविषयं** श्रुतम्, यतः सङ्ख्यामतिक्रान्तानपि भावानाख्यातुं शक्तोऽनन्तान् श्रुतज्ञानानुसारेण पदार्थान्, किंच आनन्त्याज्ज्ञेयस्य, अनन्तं हि ज्ञेयमनेन निरूपयितुं शक्यते सामान्यतः, मन्तुर्मत्या सम्प्रतितनार्थग्राहिकया, श्रुतज्ञानं–ग्रन्थानुसारि मतिज्ञानादिन्द्रियसमुत्थात् महाविषयमनेकार्थपरिच्छेदीत्यर्थः। तस्य श्रुतज्ञानस्य महाविषयत्वाद्–बह्वर्थविषयत्वात् ताँस्तान् जीवादीनर्यमाणानाश्रित्य। एतदुक्तं भवति–तत्र ग्रन्थे गणिपिटके ये विप्रकीर्णा अर्थास्तान् संकुलतया स्थितान् पश्यद्भिस्तैर्गणधरैस्तच्छिष्यादिभिश्च कथन्त्विदमेतावति ग्रन्थे परिसमाप्यत इति मन्यमानैरिदमङ्गमाचारादीदं च तदुपाङ्गमिति स्थापितम्, एतदाह–**प्रकरणे**त्यादि। प्रकरणं यत्र विवक्षित आचार इत्यादिरूपोऽर्थो निष्ठां याति तद् भण्यते तस्य समाप्तिः तामपेक्षते यत् तत् प्रकरणपरिसमाप्त्यपेक्षम्, किं तद्? अङ्गोपाङ्गनानात्वमिति। किञ्चान्यत् इतश्च कारणादङ्गोपाङ्गनानात्वमिति। सुखग्रहणेत्यादि। सुखेन–अनायासेनापूर्वस्य ग्रहणं करिष्यन्ति अङ्गा-

१ चिह्नितोऽयं ख–पाठः। २ '०पदेशेन' इति ख–पाठः। ३ 'गणधरादिभिः' इति ख–पाठः।

नङ्गानां, सुखेन च गृहीतं[1] धारयिष्यन्ति बुद्ध्या, सुखेन विज्ञानं तस्मिन्नर्थे शृण्वत उत्पादयिष्यन्तीति, सुखेन अपोहं—निश्चयं करिष्यन्ति इति एवमेषोऽर्थः स्थित इति, सुखेन च प्रयोगव्यापारं करिष्यन्ति प्रत्यवेक्षणादिकाले तेन विदितेनेति ॥

**भा०—अन्यथा ह्यनिबद्धमङ्गोपाङ्गशः समुद्रप्रतरणवद् दुरध्यवसानं[2] स्यात्। एतेन पूर्वाणि वस्तूनि प्राभृतानि प्राभृतप्राभृतानि अध्ययनान्युद्देशाश्च व्याख्याताः॥**

**टी०**—अन्यथेत्यादि। अन्यथेति भेदेन रचनाया अभावे हि यस्मादनिबद्धमरचितं, कथमिति चेत्, अङ्गोपाङ्गशः, अङ्गानि आचाराङ्गादीनि, उपाङ्गानि राजप्रसेनकीयौपपातिकादीनि, ताभ्यामङ्गोपा ाभ्यां परिमिताविशिष्टार्थाभिधायिभ्यामङ्गोपाङ्गशः, अल्पार्थाच्छस्। समुद्रस्य प्रतरणम्—उत्तरणं तेन समुद्रप्रतरणेन तुल्यं वर्तते समुद्रप्रतरणवत्, दुरध्यवसानं स्यादिति। दुःखेनाध्यवसीयते दुरध्यवसानम्। यावदेतदुक्तं भवति—यद्येतच्छ्रुतज्ञानमङ्गोपाङ्गादिभेदेन न रच्येत एवं सत्यर्थानन्त्याद् ग्रन्थस्य[3] चातिबहुत्वाद् दुःखेन शिष्यस्तत्र रतिं बध्नीयात्। यथा महार्णवं पश्यतः पुंसो न भवति चेतोवृत्तिर्बाहुभ्यां प्रतरामीति, प्रतरणप्रवृत्तोऽपि चान्तराल एव रसभङ्गं प्रतिपद्यते, एवमिहापि यदा पुनरङ्गोपाङ्गादिकल्पनया रचनया प्रविभक्तो भवति स महान् ग्रन्थराशिस्तदाऽदभ्रनदीतडागतरणवत् सुगमो भविष्यतीत्यतोऽङ्गोपाङ्गनानात्वमिति ॥ अथ पूर्वादिरचना किमर्था इत्येवमाशङ्क्येत ?। उच्यते—तत्रापि नान्यत् करणे प्रयोजनमस्ति, किन्त्वेतदेव, तदाह—एतेनेत्यादि। एतेनाङ्गोपाङ्गभेदप्रयोजनेन सुखग्रहणादिना पूर्वाणि दृष्टिपातान्तःपातीनि पूर्वं प्रणयनात्, वस्तूनि पूर्वस्यैवांशोऽल्पः वस्तुनः प्राभृतमल्पतरं, प्राभृतात् प्राभृतप्राभृतमल्पतरं, ततोऽध्ययनं ग्रन्थतोऽल्पतरं, तत उद्देशकोऽल्पतर इति। व्याख्याता[4]नीति। सुखग्रहणादि यदेवाङ्गोपाङ्गादिकरणे फलं तदेवात्रापीति ॥

**भा०—अत्राह—मतिश्रुतयोस्तुल्यविषयत्वं, वक्ष्यति द्रव्येष्वसर्वपर्यायेषु (१–२७) इति। तस्मादेकत्वमेवास्त्विति। अत्रोच्यते—**

**टी०**—सम्प्रत्येवं मन्यते परः—श्रुतज्ञानस्य द्विविधादिकरणे सूक्तमनेन प्रयोजनं, यदुक्तं मया—कः पुनर्मतिज्ञानश्रुतज्ञानयोर्विशेष इति, तत्रानेन सांप्रतार्थग्राहि मतिज्ञानं त्रिकालविषयं तु श्रुतज्ञानमित्ययं विशेषो दर्शितः, तत्रैतावताऽप्यपरितुष्यन्[5] विषयकृतं च साम्यमुभयोरस्तीति मन्यमानः अत्रावसरे ब्रवीति—मतिश्रुतयोरुक्तस्वरूपयोस्तुल्यविषयत्वमभिजग्राह, नासावाचक्ष्यते[6] इहैवोत्तरत्र तस्य वक्ष्यमाणस्य सूत्रस्यैकदेशमुपन्यस्यति—द्रव्येष्वसर्वपर्यायेषु इति ॥ सर्वेषु धर्मादिद्रव्येष्वसर्वपर्यायेषु मतिश्रुतयोः प्रवृत्तिर्निबन्ध इति। तस्माद्—विषयादेकरूपात् एकत्वमेव मतिश्रुतयोर्भवतु, न भेद इति, अत्रोच्यते—

१ 'गृहीत्वा' इति ख–पाठः। २ 'दुरध्यवसेयं' इति ख–पाठः। ३ 'रूपस्य' इति ख–पाठः। ४ 'व्याख्याता इति' इति प्रतिभाति। ५ 'तत्रैवापरितुष्यन्' इति क–ख–पाठः। ६ 'वाचष्टे' इति प्रतिभाति।

**भा०—उक्तमेतत् साम्प्रतकालविषयं मतिज्ञानं, श्रुतज्ञानं तु त्रिकालविषयं, विशुद्धतरं च। किंचान्यत्। मतिज्ञानमिन्द्रियानिन्द्रियनिमित्तम्, आत्मने ज्ञस्वाभाव्यात् पारिणामिकं, श्रुतज्ञानं तु तत्पूर्वकमाप्तोपदेशाद् भवतीति ॥ २० ॥**

श्रुतस्य शुद्धता, अपारिणामिकता च।

**अत्राह-उक्तं श्रुतज्ञानम्। अथावधिज्ञानं किमिति। अत्रोच्यते—**

**टी०—उक्तमेतदिति** भेदप्रयोजनं पुरस्तात्, तदेवोद्घटयति-वर्तमानकालविषयं-वर्तमानमर्थमालम्बते **मतिज्ञानम्, श्रुतज्ञानं** पुन**स्त्रिकालविषयं**-त्रैकालिकमर्थमालम्बते, **विशुद्धतरं च,** व्यवहि विप्रकृष्टानेकसूक्ष्माद्यर्थग्राहित्वाद् विशुद्धतरमित्युच्यते, **किंचान्यदिति**। तथा अयमपरस्तयोर्विशेषः-**मतिज्ञानमिन्द्रियाणि**-स्पर्शनादीनि, **अनिन्द्रियं**-मन ओघज्ञानं च **निमित्तमु**ररीकृत्य प्रवर्तते, **आत्मनो**-जीवस्य **ज्ञस्वाभाव्यादिति**। जानातीति ज्ञः, ज्ञत्वमेव स्वाभाव्यं ज्ञस्वाभाव्यमात्मरूपता, तस्मात् ज्ञस्वाभाव्यादिति। **पारिणामिकमिति** सर्वकालवर्ति, न कदाचित् संसारे पर्यटत एतद् भ्रष्टम्, यतो निगोदजीवानामपि 'अक्षरस्यानन्तभागो नित्योद्घाट' इत्यागमः अतः पारिणामिकम्। **श्रुतज्ञानं** पुनर्नैवं सर्वदा जीवस्य भवति, यतस्त**त्पूर्वकम्**, मतिज्ञाने सति भवति नासतीत्यर्थः। तत्पूर्वकत्वेऽपि च सत्युपदेशमपेक्षते, यत **आप्तोपदेशाद् भवतीति,** आप्ताः-रागादिविवर्जिताः अर्हदादयः तेभ्य **उपदेशो**-वचनं ( तस्मात् ), तद्वचनमपेक्ष्य ग्रन्थानुसारि श्रुतज्ञानमुदेतीत्यर्थः। तस्मादेकं नित्यमपरं चानित्यमिति स्थापितम् ॥ २० ॥

अत्रावसरे चोदक आह-प्रतिपादितं श्रुतज्ञानं भवद्भिः, अस्मादनन्तरं यद**वधिज्ञानं** पुरस्तान्निरदिक्षद् भवान् (**किमिति**) किंलक्षणं किंस्वरूपं तदित्याह—

## सूत्रम्-द्विविधोऽवधिः ॥ १-२१ ॥

**टी०-द्विविधोऽवधिः** द्वे विधे-द्वौ भेदौ यस्य स द्विविधः। तावेव द्वौ भेदौ दर्शयति—

अवधेर्भेदौ **भा०—भवप्रत्ययः, क्षयोपशमनिमित्तश्च ॥ २१ ॥**

**टी०—भवप्रत्यय** इत्यादिना ॥ ननु च लक्षणे पृष्टे भेदकथनमन्याय्यम्, आम्रप्रश्ने कोविदारकथनवदप्रस्तावापास्तमिति ?। उच्यते-तदेव लक्षणं भेदद्वयकथनेन निरूप्यते इति न किञ्चिद् दुष्यति, भवेन-देवनारकाख्येन तल्लक्ष्यतेऽतो भवो लक्षणं ज्ञानं पुनर्लक्ष्यं भवतीति, तथा क्षयोपशमो लक्षणं ज्ञानं तु लक्ष्यम्। एतदुक्तं भवति-भवक्षयोपशमाभ्यां लक्ष्यमाणो द्विविधोऽवधिरिति नान्यत् किंचन कथ्यते, भवन्ति-वर्तन्ते कर्म(वश)वर्तिनो जन्तव इत्यस्मिन् भवो देवात्मतया यत्र स्थाने शरीरमाददते जीवाः स भवः नारकात्मतया च, प्रत्ययो निमित्तं कारणमिति, भवः प्रत्ययो यस्य स **भवप्रत्ययः**। अवश्यं ह्युत्पन्नमात्रस्यैव देवस्य नारकस्य वा सोऽवधिरुद्भवति, एतावता स भवप्रत्यय इत्यभिधीयते, तद्भावे भावात् तद-

१ 'कियदस्यानन्तरमुद्दिष्टमिति' इति क-ख-पाठः।

भावे चाभावादिति । मुख्यं तु कारणं तस्याप्यवधेः क्षयोपशम एव, न ह्यवधिज्ञानदर्शनावरणीयस्य कर्मणः क्षयोपशममपहाय देवनारकाणामवधेरुत्पत्तिरस्तीति, तस्यैव तु क्षयोपशमस्य स भवो निमित्ततां बिभर्ति, कारणत्वात्, देवनारकावधिर्निमित्ती, तस्य कारणं क्षयोपशमः, क्षयोपशमस्य कारणं भव इति । अशुद्धनयमतेन च कारणकारणमपि कारणं भण्यते । एवं भवस्य प्रत्ययता क्षयोपशमनिमित्तता चेति, यदा अवधिज्ञानदर्शनावरणीयकर्मणां क्षयः–परिशाटः संजातो भवत्युदितानामनुदितानां चोपशमः–उदयविघातलक्षणः संवृत्तो भवति स उपशमस्ताभ्यां क्षयोपशमाभ्यां कारणभूताभ्यां य उदेति स **क्षयोपशमनिमित्त** इति मनुष्याणां तिरश्चां चेति ॥ २१ ॥

## सूत्रम्–तत्र भवप्रत्ययो नारकदेवानाम् ॥ १–२२ ॥

**टी०**—**तत्रेति** तयोरुद्घट्टितयोर्द्वयोराद्यस्तावदुच्यते, तमाह–**भवप्रत्ययोऽवधिः नारकदेवानाम्** । नारकदेवानामित्यमुमवयवं विवृणोति—

**भा०**—**नारकाणां देवानां च यथास्वं भवप्रत्ययमवधिज्ञानं भवति । भवप्रत्ययं भवहेतुकं भवनिमित्तमित्यर्थः । तेषां हि भवोत्पत्तिरेव तस्य हेतुर्भवति, पक्षिणामाकाशगमनवत्, न शिक्षा न तप इति ॥ २२ ॥**

देवनारकयोरवधिः भवहेतुकः

**टी०**—**नारकाणामित्यादिना** । नारकाः शर्करासन्निविष्टोष्ट्रिकाकृतयः तेषु भवाः अतिप्रकृष्टदुःखोपेताः प्राणिनो नारकाः, देवा भवनपत्यादयः शुभकर्मभुजः तेषाम् । **यथास्वमिति** । यस्य यस्यात्मीयं यद्यदित्यर्थः । तद् यथा–रत्नप्रभापृथिवीनरकनिवासिनां ये सर्वोपरि तेषां अन्यादृशम्, ये तु तेभ्योऽधस्तात् तेषां तस्यामेवावनावन्यादृक् प्रस्तरापेक्षयेति । एवं सर्वपृथिवीनारकाणां यथास्वमित्येतन्नेयम् । देवानामपि यद् यस्य सम्भवति तच्च यथास्वमिति विज्ञेयम्, **भवप्रत्ययं**–भवकारणं अधोऽधो विस्तृतविषयमवधिज्ञानं भवति । प्रत्ययशब्दश्च विज्ञाने प्रसिद्ध इत्यतोऽर्थान्तरवृत्तितां दर्शयति–**भवप्रत्ययं भवहेतुकं** भवति । **भवनिमित्तमिति**, भवः प्रत्ययो–हेतुर्निमित्तमस्य तद्भवप्रत्ययमिति ॥ ननु च क्षयोपशमनिमित्ततां ज्ञानाज्ञानादिसूत्रे कथयिष्यति, भवावधेः कथमौदयिको भवोऽस्य निमित्तमिति ? । उच्यते–तस्मिन्नेव क्षयोपशमलब्धेरवश्यंभावादित्युक्तं किं विस्मार्यते भवता ?, एतदाह–**तेषामित्यादिना** । **तेषां**–नारकदेवानां यस्मान्नारकदेवभवोत्पत्तिलाभ एवं तस्य अवधिज्ञानस्य **हेतुः**–कारणं **भवतीति** । भवोत्पत्तिरेवेति च नियम एव दृश्यो विद्यमानमपि क्षयोपशममनङ्गीकृत्य यदेव क्षयोपशमस्य कारणमसाधारणं तत्रैवादरमादधान एवमुक्तवान्–**भवोत्पत्तिरेवेति, न पुनर्भव** एवास्य निमित्तमिति, क्षयोपशमस्याप्याश्रितत्वादिति । यथा वाऽन्यत्रापि भव एव केवलो निमित्तं भवति कस्यचित् कार्यविशेषस्य तथा दर्शयति–**पक्षिणामित्यादिना** । **पक्षिणां**–मयूरशुकसारिकादीनां यथा आकाशगमनशक्तिः प्रादुर्भवति

१ 'क्षयोपशमनिमित्तताश्चेति' इति क–ख–पाठः ।

**शिक्षां** अन्योपदेशरूपां **तपश्च** अनशनादिरूपमन्तरेण तद्वन्नारकदेवानां शिक्षां तपश्चान्तरेण तदवधिज्ञानं प्रादुरस्तीति ॥ २२ ॥

द्विविधोऽवधिरित्युक्तम्, तत्रैकं भेदं प्रतिपाद्य द्वितीयभेदं दर्शयन्नाह—**यथोक्त**मित्यादि। अथवा यथा देवनारकावधिर्भवं क्षयोपशमं चोभयमपेक्षते एवं किं क्षयोपशमोऽपि अवश्यं मनुष्यादिभवे प्राप्ते भवत्येव उत नेति ?। उच्यते—न तत्र भवः सन्नपि कारणतयाऽभ्युपेयते, तद्भावेऽप्यभावादवधेः, किंतु क्षयोपशम एव प्राधान्येन निरूप्यते—

## सूत्रम्—यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् ॥ १-२३ ॥

**टी०—यथोक्तनिमित्त** इत्यादिना। **यथा**—येन प्रकारेण **उक्तं**—उदितं **निमित्तं**—

नरतिरश्चां षड्विधोऽवधिः

हेतुरस्य स **यथोक्तनिमित्तः** ॥ ननु भवोऽपि उदितं निमित्तं तस्येत्याशङ्क्य स्वयमेनं यथोक्तं निमित्तशब्दमुच्चार्यार्थं कथयति—

**भा०—यथोक्तनिमित्तः, क्षयोपशमनिमित्त इत्यर्थः। तदेतदवधिज्ञानं क्षयोपशमनिमित्तं षड्विधं भवति। शेषाणामिति नारकदेवेभ्यः शेषाणां तिर्यग्योनिजानां मनुष्याणां च। अवधिज्ञानावरणीयस्य कर्मणः क्षयोपशमाभ्यां भवति षड्विधम्। तद् यथा—**

**टी०—यथोक्तनिमित्त** इति। क उक्त एवं बुद्धिर्भवेत् ?। उच्यते—एवं **क्षयोपशमनिमित्त इत्यर्थः**, क्षयश्चोपशमश्च क्षयोपशमौ तौ निमित्तमस्य अत एवमभिधीयते क्षयोपशमनिमित्त इति, यथा सम्यग्दर्शनादि क्षयोपशमनिमित्तं तद्वदेष इति। **षडि**ति सङ्ख्येयप्रधानसङ्ख्याभिधायी, **विकल्प** इत्यनेकरूपं यत् कल्पनं यावत् स्थानै रूपैरित्यर्थः। षड् विकल्पा यस्य स षड्विकल्प इत्यवधिसम्बन्धे षड्विकल्पोऽवधिः पुल्लिङ्गः। यदा त्ववधिशब्दः प्रकृतस्य ज्ञानस्य विशेषणं भवति तदा नपुंसकलिङ्गता षड्विधमिति। एतदाह—तदेतदित्यादि। तदिति पुरस्ताद् यदुक्तं, एतदिति भवतः प्रत्यक्षं, हृदि विपरिवर्तमानत्वात्, अवधिज्ञानं क्षयोपशमजं, नेतरत्, **षड्विधं भवति**, षड्विधक्षयोपशमसद्भावादित्यर्थः। केषां षोढा ? अत आह—**शेषाणाम्**। अस्य चार्थं विवृणोति—**शेषाणामि**त्यादिना। शेषाणामुपर्युक्तवर्जितानाम्, ते के चोपर्युक्ताः ? देवनारकाः, तेभ्यो **देवनारकेभ्यः** शेषाणाम्, तद्वर्जाश्च नान्ये तिर्यङ्मनुष्यान् अन्तरेण सन्तीत्यत आह—**तिर्यग्योनिजानां मनुष्याणां** च, तिरश्चां—गवादीनां योनिः—उत्पत्तिस्थानं गर्भादि तत्र जन्यन्त इति तिर्यग्योनिजाः पञ्चेन्द्रियाः पर्याप्ताः संज्ञिनो ग्राह्याः, तेषामेव तेन योगात्, असंज्ञिपञ्चेन्द्रियादीनां तु तदभावः, अतस्तेषां, मनुष्याणां च गर्भजादिविशिष्टानां, न तु संमूर्च्छजानामिति। कथं पुनरेकं सत् षड्विधमिति व्यपदिश्यते ?। आह—उपाधिभेदात्। स चोपाधिः क्षयोपशमोऽनेकरूपः ज्ञानावरणीयकर्मण इत्येतद् दर्शयति—**ज्ञानमवधिस्तस्यावरणीयम्**—आच्छादकं भास्करस्येवाभ्रादि तस्य ज्ञानावरणीयस्य कालान्तरकृतस्य **कर्मणः क्षयोपशमाभ्यां** उक्तस्वरूपाभ्यां **षड्विधं भवति**,

द्विवचनं चासात् क्षयोपशमाभ्यामित्येतत् क्रियते—यत उभावपि तस्य समुदितौ सन्तौ निमित्तं भवतः, नैकैक इति। यतो न क्षायिकं किञ्चिदवधिज्ञानं, नाप्यौपशमिकं सिद्धान्ते पठितं, निमित्तं तूक्तम्। तत् षड्विधं यैः प्रकारैर्व्यवस्थितं तथोपन्यस्यति—

**भा०—अनानुगामिकं, आनुगामिकं, हीयमानकं, वर्धमानकं, अनवस्थितं, अवस्थितमिति। तत्रानानुगामिकं यत्र क्षेत्रे स्थितस्योत्पन्नं ततः प्रच्युतस्य प्रतिपतति, प्रश्नादेशपुरुषज्ञानवत् ॥**

अवधेरनानुगामिकादिका भेदाः

टी०—**अनानुगामिक**मित्यादिना। उपन्यस्य चार्थं कथयति—तत्र तेषु षट्सु अनानुगामिकं अनुगच्छत्यवश्यमनुगामि तदेवानुगामिकमाङ्पूर्वम्, अनुगमप्रयोजनं वा आनुगामिकं, तस्य प्रतिषेधोऽनानुगामिकमिति। अर्थमस्य भावयति—यत्रेत्यादिना। **यत्र क्षेत्रे** प्रतिश्रयस्थानादौ **स्थितस्येति** कायोत्सर्गक्रियादिपरिणतस्य **उत्पन्नम्**—उद्भूतं भवति तेन चोत्पन्नेन यावत् तस्मात् स्थानान्न निर्याति तावज्जानातीत्यर्थः। **ततो**ऽपक्रान्तस्य स्थानान्तरवर्तिनः **प्रतिपतति**—नश्यति। कथमिव? उच्यते—**प्रश्नादेशपुरुषज्ञानवत्**। प्रश्नः-पृच्छनं जीवधातुमूलानां तं प्रश्नमादिशतीति प्रश्नादेशः, प्रश्नादेशश्चासौ पुरुषश्चेति प्रश्नादेश-पुरुषः, तस्य ज्ञानं तेन तुल्यमेतद् दृश्यम्, पुरुषप्रश्नादेशज्ञानवदित्येवं गमकत्वम्, अथवा प्रश्नादेशः—प्रधानपुरुषस्तन्निष्ठः—तत्परायणस्तस्य ज्ञानं तद्वदिति। का पुनर्भावना? यथा नैमित्तिकः कश्चिदादिशन् कस्मिंश्चिदेव स्थाने शक्नोति संवादयितुं न सर्वत्र पृच्छ्यमानमर्थम्, एवं तदप्यवधिज्ञानं यत्र स्थितस्योपजातं तत्रस्थ एवोपलभते तेन नान्यत्रेति ॥

**भा०—आनुगामिकं यत्र क्वचिदुत्पन्नं क्षेत्रान्तरगतस्यापि न प्रतिपतति, भास्करप्रकाशवत् घटरक्तभाववच्च ॥**

टी०—**आनुगामिक**मेतद् विपरीतमिति। **यत्र क्वचि**दाश्रयादा**वुत्पन्नं** तस्मात् **क्षेत्रान्तरगतस्यापि न** प्रच्यवते, **भास्करप्रकाशवत्**, यथाऽऽदित्यमण्डलभवः प्रकाशः प्राच्यां दिशि प्रकाशनीयं प्राचीकशत् तथा प्रतीचीमुखचुम्बिनोऽपि सवितुस्तावत् तमवकाशमुद्द्योतयति प्रकाशो, मनागपि न क्षीयते, कुम्भरक्ततावद् वा भावनीयम्, नहि घटस्यापाकादुद्धृतस्य तडाकादिना तस्य रक्तता भ्रंशमश्नुते तद्वदानुगामिकमवधिज्ञानमिति। पूर्वदृष्टान्ते च परोक्षः प्रकाशस्तावत्त्वेन क्षेत्रान्तरप्राप्तस्य सवितुः संदिग्धः अतः प्रत्यक्षं **घटरक्तता**-दृष्टान्तमुपादिताचार्यः ॥

**भा०—हीयमानकम्, असङ्ख्येयेषु द्वीपेषु समुद्रेषु पृथिवीषु विमानेषु तिर्यगूर्ध्वमधो वा यदुत्पन्नं क्रमशः संक्षिप्यमाणं प्रतिपतति आ अङ्गुलासङ्ख्येय-भागात्, प्रतिपतत्येव वा परिच्छिन्नेन्धनोपादानसन्तत्यग्निशिखावत् ॥**

टी०—**हीयमानकं** हीयते क्रमेणाल्पीभवति यत् तद्धीयमानकम्, **असङ्ख्येयेषु** अति-क्रान्तशीर्षप्रहेलिकागणितेष्वितियावत्। **द्वीपा** जम्बूद्वीपादयः **समुद्रा** लवणादयः तेषु **पृथि**-

**वीषु** रत्नप्रभादिकासु, **विमानेषु** ज्योतिर्विमानादिषु, **तिर्यग्** द्वीपसमुद्रेषु, **ऊर्ध्वं** विमानेषु, **अधः** पृथिवीषु यदवधिज्ञानमुत्पन्नं भवति ततः **क्रमशः परिसंक्षिप्यमाणं**-हीयमानं **प्रतिपतति** । यस्माद् यद्वीपानपश्यत् तत् तेषामेकं क्रोशं पुनर्न प्रेक्षते शेषं पश्यति, पुनरर्धयोजनं **न** पश्यत्येवं हीयमानं तावद्धीयते यावदङ्गुलासङ्ख्येयभागः शेषः, एतदाह-**आ अङ्गुलस्यासंख्येयभागात्** अङ्गुलपरिमाणस्य क्षेत्रस्य असंख्येयानि खण्डानि कृतस्य एकस्मिन् असंख्येयभागे यावन्ति द्रव्याणि समवस्थितानि तानि[1] पश्यतीत्यर्थः । ततः कदाचिदवतिष्ठते कदाचित् **प्रतिपतत्येव**, तान्यपि न पश्यतीत्यर्थः। अङ्गुलशब्दश्च परिभाषितार्थो द्रष्टव्यः, अन्यथाऽङ्गुलासंख्येयभागादिति भवितव्यम्, अन्येषां त्वेवंविधमेव भाष्यमिति । कथं हीयत इति चेद् ? दृष्टान्तमुपन्यस्यति—**परिच्छिन्नेत्यादि** । परितः—सर्वासु दिक्षु **छिन्ना इन्धनं**-पलालादि **तस्योपादानं**-प्रक्षेपः तस्य **सन्ततिर्नैरन्तर्येण** प्रक्षेपः, सा विशेष्यते परिच्छिन्नेति, नातः परमिन्धनप्रक्षेपः अतः परिच्छिन्ना इन्धनोपादानसन्ततिः, एतदुभयं पुनरपि शिखाया विशेषणम्, परिच्छिन्ना इन्धनोपादानसन्ततिर्यस्यामग्निशिखायां सा परिच्छिन्नेन्धनोपादानसन्ततिः, अग्नेः शिखा **अग्निशिखा**, परिच्छिन्नेन्धनोपादानसन्तत्यग्निशिखा तया तुल्यमेतद्धीयमानमवधिज्ञानं, यथाऽपनीतेन्धनाऽग्निज्वाला नाशमाशु प्रतिपद्यते तद्वदेतदपीति ॥

**भा०-वर्धमानकं यदङ्गुलस्यासंख्येयभागादिषूत्पन्नं वर्धते आसर्वलोकात्। अधरोत्तरारणिनिर्मथनोत्पन्नोपात्तशुष्कोपचीयमानाधीयमानेन्धनराश्यग्निवत्[2] ॥**

टी०-**वर्धमानकं यदङ्गुलासङ्ख्येयभागादिषु** । अङ्गुलस्यासंख्येयभागमात्रे क्षेत्रे ततोऽङ्गुलमात्रे ततोऽरत्निमात्रे इत्यादिषूत्पन्नं तावद् **वर्धते** यावत् **सर्वलोको** धर्माधर्मद्रव्यद्वयपरिच्छिन्नो व्याप्तो भवति तदा **आसर्वलोकात्**, कथमिव वर्धते अत आह-**अधरोत्तरेत्यादि** । **अधरः**-अधोवर्ती **उत्तरः**-उपरिवर्ती तावेवारणी ताभ्यामधरोत्तरारणिभ्यां **निर्मथनं**-संघर्षणं तेन **निष्पन्न**-उद्भूतः, तदेवमुत्पन्नोऽवधिर्वृद्धिं गच्छति यथा तथाह—**उपात्तेत्यादिना** । **उपात्तं** प्रक्षिप्तं **शुष्कमार्द्रं** न भवति करीषादि तेनोपात्तेन शुष्केण **उपचीयमानः** वृद्धिं गच्छन्नित्यर्थः, **आधीयमानः** प्रक्षिप्यमाणोऽन्योऽपि पुनः पुनः इन्धनानां पलालादीनां **राशिः**-समूहो यत्राग्नौ सः अधरोत्तरारणिनिर्मथनोत्पन्नोपात्तशुष्कोपचीयमानाधीयमानेन्धनराश्यग्निः, तेन तुल्यमेतदिति, यथाऽग्निः प्रयत्नादुपजातः सन् पुनरिन्धनलाभाद् वृद्धिमुपगच्छत्येवं परमशुभाध्यवसायलाभादसौ पूर्वोत्पन्नो वर्धत इत्यर्थः ॥

**भा०—अनवस्थितं हीयते वर्धते वर्धते हीयते च। प्रतिपतति चोत्पद्यते चेति। पुनः पुनरूर्मिवत् ॥**

---

१ 'तानि तानि' इति ग-टी-पाठः । २ '० निर्मथनोत्पन्नोपात्त०' इति घ-पाठः ।

टी०—**अनवस्थितमिति**। नावतिष्ठते क्वचिदेकस्मिन् वस्तुनि शुभाशुभानेकसंयमस्थानलाभात्, यत आह—**हीयते** योजनं दृष्ट्वा तस्यैवार्धमवगच्छति तस्याप्यर्धमेवादि, **वर्धते** चार्धक्रोशं दृष्ट्वा क्रोशमवैत्यर्धयोजनं योजनमेवमादि, कदाचिदुभयीमवस्थामनुभवति **वर्धते हीयते च**, तस्यैव क्रोशस्यैकस्यां दिश्यपरक्रोशो वृद्धिः अन्यस्यां तस्य क्रोशस्यार्धं हीनमिति। अथवा **प्रतिपतति चोत्पद्यते चेति** क्वचित् कालान्तर उदितं पुनर्नश्यति पुनश्चोदेति, क्षयोपशमवैचित्र्यात्, पुनः पुनर्नाशोत्पादस्वभावमूर्मिवत् यथा महति सरसि स्वच्छवारिभारिणि पूर्णे प्रबलानिलवेगविक्षिप्यमाणजलेऽदभ्रोर्मयः समुपजाताः समासादितरोधसः[१] शमं शनैः शनैर्भजन्ते, पुनश्चाभिघातविशेषात् प्रादुःष्यन्ति, अतो यथोर्मयोऽनवस्थिता एवमवधिज्ञानमपीति ॥

**भा०—अवस्थितं यावति क्षेत्रे उत्पन्नं भवति ततो न प्रतिपतत्याकेवलप्राप्तेरवतिष्ठते, आभवक्षयाद् वा जात्यन्तरस्थायि भवति लिङ्गवत् ॥ २३ ॥**

**उक्तमवधिज्ञानम् । मनःपर्यायज्ञानं वक्ष्यामः ॥**

टी०—**अवस्थितमिति**। अवतिष्ठते स्म अवस्थितं, यया मात्रयोत्पन्नं तां मात्रां न जहातीतियावत्, एतदाह—**यावति** क्षेत्र इत्यादि। **यावति** यत्परिमाणे **क्षेत्रे**ऽङ्गुलासङ्ख्येयभागादावुत्पन्नमासर्वलोकात् **तत** इति तस्मात् क्षेत्रान्न **प्रतिपतति**—न नश्यति, सर्वकालमास्ते, कुतोऽवधेर्यावदास्त इति? उच्यते—**आकेवलप्राप्तेः**, आङ्मर्यादायाम्। केवलज्ञानं तस्य **प्राप्तिः**—लाभः आकेवलप्राप्तेर्यावत् केवलज्ञानं न प्राप्नोति, प्राप्ते तु केवले छाद्मस्थिकं ज्ञानं व्यावर्तते। अथवा मरणात् तदाह—**आभवक्षयात्**, भवो—मनुष्यादिजन्म यावत् तत्र जीवति तावद् भवति ततः परं न, तस्माद् भवक्षयात्, ततः परं नश्यति। अथवा **जात्यन्तर**मपि गच्छन्तं जीवं न मुञ्चति तदवधिज्ञानं, तेनान्वित एव गच्छति, लिङ्गवज्जात्यन्तरं (जात्यन्त)[२]**रावस्थायि** वा **भवती**त्येतदाह—जातेरन्या जातिः **जात्यन्तरं** तत्रावतिष्ठति तच्छीलं च, कथमिव तदादाय गच्छति? आह—**लिङ्गवत्** पुरुषवेदादि लिङ्गं त्रिधा तेन तुल्यं वर्तत इति लिङ्गवत्, यथा इह जन्मन्युपादाय पुरुषवेदं जन्तुर्जात्यन्तरमाधावत्येवमवधिमपि ॥ ॥ १-२३ ॥

प्रस्तुतवस्तुपरिसमाप्तिं सूचयत्युक्त**मवधिज्ञानमि**त्यनेन **उक्तं** लक्षणतो विधानतश्च **अवधिज्ञानं** न पुनर्वाच्यमिति, तदनन्तरानुसारि **मनःपर्यायज्ञानं वक्ष्यामः**—

## सूत्रम्—ऋजुविपुलमती मनःपर्यायः ॥ १-२४ ॥

मनःपर्यायस्य भेदौ

**भा०—मनःपर्यायज्ञानं द्विविधम्—ऋजुमतिमनःपर्यायज्ञानम्, विपुलमतिमनःपर्यायज्ञानं च ॥ २४ ॥**

**अत्राह—कोऽनयोः प्रतिविशेष इति? । अत्रोच्यते—**

---

१ 'रोधस्तु' इति ख-पाठः । २ चिह्नितोऽयं ख-पाठः ।

**टी०**—ऋजुविपुलेत्यादि । ऋजुश्च विपुला च ऋजुविपुले एते च **मती** ऋजुविपुलमती, ऋज्वी मतिर्विपुला च मतिरिति ॥ ननु च मतिरित्यनेन ज्ञानमभिधीयते, ज्ञानस्य च ऋजुत्वं विपुलत्वं चायुक्तं, 'निर्गुणा गुणा' (अ० ५, सू० ४०) इति वक्ष्यमाणत्वात्, मूर्तेषु चैष व्यवहारः, ऋज्वी विपुला चाङ्गुलिरिति, ज्ञाने त्वमूर्ते ऋजुत्वविपुलत्वकल्पना न साधीयसीति । उच्यते—ऋजुता विपुलता वा ग्राह्यविषया समस्ति, तया ज्ञानस्योपदेशो भविष्यति, या मतिः सामान्यं गृह्णाति सा ऋज्वीत्युपदिश्यते, या पुनर्विशेषग्राहिणी सा विपुलेत्युपदिश्यते, ऋजु सामान्यमेकरूपत्वात्, विशेषास्तु विविक्ता बहवः । यदि सामान्यग्राहिणी ऋजुमतिर्मनःपर्यायज्ञानं प्राप्तं तर्हि मनःपर्यायदर्शनमपि, यस्मात् सामान्यग्राहि दर्शनमिष्यते, न चाराधितराद्धान्तैर्मनःपर्यायदर्शनमध्यगायि, आह—यद्यप्येवमुच्यते सामान्यग्राहिणी ऋजुमतिरिति तथाऽप्यसौ सामान्यभेदरूपमेव परिच्छिनत्ति, यतो बहून् भेदान् न शक्नोति परिच्छेत्तुम्, अतः सामान्यग्राहिणी, परमार्थतस्त्वसौ विशेषमेकं द्वौ त्रीन् वा गृह्णन्ती प्रवर्तते, अतः स्तोकाभिधायी सामान्यश[२]ब्दोऽत्र, या तु विशेषान् बहून् गृह्णाति सा विपुलमतिः । केचित् तु मन्यन्ते **प्रज्ञापनायां** मनःपर्यायज्ञाने दर्शनता पठ्यते, तत्सम्भवे सामान्यग्राहिणी घटितपदा, अतः ऋजुमतिर्विपुलमतिश्च । किम् ? **मनःपर्यायः**, मन इति च मनोवर्गणा जीवेन मन्यमाना द्रव्यविशेषा उच्यन्ते, तस्य मनसः पर्यायाः—परिणामविशेषाः मनःपर्यायाः, मनसि वा पर्यायाः, तेषु मनःपर्यायेषु यज्ज्ञानं तन्मनःपर्यायज्ञानमिति । इह साधोः सकलप्रमादरहितस्य मनःपर्यायज्ञानावरणीयकर्मक्षयोपशमात् प्रतिविशिष्टं ज्ञानमुदयते, येन ज्ञानेन मनःपर्याप्तिभाजां प्राणिनां पञ्चेन्द्रियाणां मनुष्यलोकवर्तिनां मनसः पर्यायानालम्ब्यते—जानाति मुख्यतः, ये तु चिन्त्यमानाः स्तम्भकुम्भादयस्ताननुमानेनावगच्छन्ति । कथम् ? उच्यते—अस्यैतानि मनोद्रव्याण्यनेनाकारेण परिणतानि लक्ष्यन्ते अतः स्तम्भादिश्चिन्तितः, तस्य परिणामस्य स्तम्भाद्यविनाभावात्, न पुनः साक्षाद् बहिर्द्रव्याणि जानीते इति, क्षयोपशमवैचित्र्यात्, कस्यचित् तदेवंविधं मनःपर्यायज्ञानं भवति येन सामान्यं घटमात्रं चिन्तितमवगच्छति तच्च ऋजुमतिर्मनःपर्यायज्ञानम् । अपरस्य तु तदावरणीयकर्मक्षयोपशमोत्कर्षापेक्षयैवंविधं भवति तद् विपुलमतिर्मनःपर्यायज्ञानम्, उभयमपीन्द्रियानिन्द्रियनिरपेक्षम्, घटमात्रावच्छेदि प्रथमम्, द्वितीयं तु पर्यायशतैर्मृण्मयरक्तशुक्लादिप्रमाणादिभिर्विचिन्तितं घटमवबुद्धयते, अत एव क्षयोपशमद्वैविध्यात्, प्रकृतेन च ज्ञानग्रहणेन मनःपर्यायं सम्बध्नन् भाष्यकृदाह—**मनःपर्यायज्ञानं द्विविधम्** । मनःपर्यायस्य तेषु वा ज्ञानं मनःपर्यायज्ञानं, द्वे विधे यस्य तद् द्विविधं, ते द्वे विधे दर्शयति—**ऋजुमतिर्मनःपर्यायज्ञानम्**, ऋजुमतिरेव मनःपर्यायज्ञानं, घटादिमात्रचिन्तितपरिज्ञानमिति, **विपुलमतिरेव मनःपर्यायज्ञानं**, प्रसङ्गतः पर्यायशतैः परिज्ञानमिति ॥ २४ ॥

ऋजुमति-विपुलमत्योः स्वरूपम्

एवं द्वैविध्ये दर्शिते चोदकोऽभिधत्ते—मनःपर्यायाणामुभयत्र दर्शनम् अतीन्द्रियत्वं चोभयोः ऋजुविपुलमत्योः समानम्, अतः किंकृतं नानात्वमिति प्रश्नयति—कोऽ-

१ 'सामान्यं' इति क-ख-ग-पाठः । २ 'शब्दार्थः' इति क-ख-ग-पाठः ।

नयोः प्रतिविशेषः ?। क इत्यसम्भावने, नैव कश्चित् सम्भाव्यते, अनयोरिति ऋजुविपुलमत्योः प्रतिविशेषः–स्वगतो भेद इति, उच्यते गुरुणा—

**सूत्रम्—विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥ १–२५ ॥**

**भा०—विशुद्धिकृतश्च अप्रतिपातकृतश्चानयोः प्रतिविशेषः । तद्यथा— ऋजुमतिमनःपर्यायज्ञानाद् विपुलमतिमनःपर्यायज्ञानं विशुद्धतरम् । किञ्चान्यत् ।**

ऋजुविपुलमत्योर्विशेषः

टी०—विशुद्ध्यप्रतीत्यादि । विशुद्धेः कारणात् तयोः ऋजुविपुलमत्योर्विशेषः अप्रतिपाताच्च,विशुद्ध्या–बहुतरपर्यायज्ञानरूपया कृतो–जनितः विशुद्धिकृतः,चशब्दः समुच्चये, अप्रतिपातेन–अच्यवनरूपेण कृतः अप्रतिपातकृतश्चानयोः–ऋजुविपुलमत्योः प्रतिविशेषो–नानात्वं बोद्धव्यम् । तत्र विशुद्धिकृतं तावद् भेदं दर्शयति–ऋजुमतिमनःपर्यायज्ञानात् सामान्यग्राहिणः विपुलमतिमनःपर्यायज्ञानं नानाविधविशेषग्राहि विशुद्धतरमिति,यद् द्रव्यं यावद्भिः पर्यायैरवच्छिनत्ति ऋजुमतिस्तदेव द्रव्यं बहुतरैः पर्यायैर्विपुलमतिरवगच्छति, यथा घटे चिन्तिते ऋजुमतिमनःपर्यायज्ञानेनैतावद् व्यज्ञायि–घटोऽनेन चिन्तितः, विपुलमतिमनःपर्यायज्ञानं पुनस्तमेव घटं पार्थिवत्वरक्तत्वप्रमाणादिभिर्बहुभिर्भेदैरवबुद्ध्यते, अतो विशुद्धतरमुच्यते । किञ्चान्यदिति भेदस्य उपपत्त्यन्तरसम्भावनाद्वारेण प्रयुज्यते, इहान्योऽपि नानात्वकार्यस्ति हेतुरिति, तमाह—

**भा०—ऋजुमतिमनःपर्यायज्ञानं प्रतिपतत्यपि भूयः, विपुलमतिमनःपर्यायज्ञानं तु न प्रतिपततीति ॥ २५ ॥**

**अत्राह—अथावधिमनःपर्यायज्ञानयोः कः प्रतिविशेष इति?। अत्रोच्यते—**

टी०—ऋजुमतिमनःपर्यायज्ञानं प्राप्तमप्यप्रमत्तसंयतेन प्रतिपतति–प्रच्यवते, अपिशब्दात् कदाचिन्न प्रतिपतत्यपि, भूयः–पुनः विपुलमतीत्यादि, यस्य पुनर्विपुलमतिमनःपर्यायज्ञानं समजनि तस्य नैव प्रतिपतत्या केवलप्राप्तेरिति ॥ २५ ॥

एवं भेदे ऋजुविपुलमत्योः प्रतिपादिते अवधेर्मनःपर्यायज्ञानस्य चातीन्द्रियत्वे समाने रूपिद्रव्यनिबन्धनत्वे च विशेषमपश्यन् ब्रूते–अथावधिमनःपर्यायज्ञानयोः कः प्रतिविशेष इति ?। स चैवं पूर्वपक्षवादी चोदयति–कुतः प्रतिविशेष इति हेत्वभावं मन्यमानः, उत्तरपक्षवादी तु हेतून् विशुद्ध्यादीन् पश्यन्नेवमाह–अत्रोच्यते—

**सूत्रम्–विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्याययोः ॥ १–२६ ॥**

अवधिमनःपर्याययोर्विशेषः

**भा०—विशुद्धिकृतः, क्षेत्रकृतः, स्वामिकृतः, विषयकृतश्चानयोर्विशेषो भवत्यवधिमनःपर्यायज्ञानयोः । तद्यथा—**

टी०—विशुद्धीत्यादि । विशुद्धिः–बहुतरपर्यायपरिज्ञानकारणत्वं, क्षेत्रं–आकाशं दृश्यमानादृश्यमानरूप्यरूपिद्रव्याधारः, स्वामी–ज्ञानस्योत्पादयिता,विषयो–ज्ञानगम्यः पदार्थः,

एभ्यो हेतुभ्योऽवधिमनःपर्यायज्ञानयोर्विशेषोऽवगन्तव्यः, पञ्चम्यर्थे च कृतशब्देनाचष्टे, विशुद्ध्या कृतो विशुद्धिकृतः क्षेत्रेण कृतः स्वामिना कृतः विषयेण कृतः विषयकृत इति। अनयोरिति अवधिमनःपर्यायज्ञानयोः प्रतिविशेषो–भेदोऽवधिमनःपर्यायज्ञानयोरिति, तद्यथा–एते यथा घटन्ते तथा कथ्यन्ते—

**भा०–अवधिज्ञानात् मनःपर्यायज्ञानं विशुद्धतरम्। यावन्ति हि रूपीणि द्रव्याण्यवधिज्ञानी जानीते तानि मनःपर्यायज्ञानी विशुद्धतराणि मनोगतानि जानीते। किंचान्यत्।**

टी०—अवधिज्ञानादुक्तलक्षणात् **मनःपर्यायज्ञानं विशुद्धतरम्**, कथं? विशुद्धतरतां स्वयमेव भाष्यकृदाह–**यावन्ति**–यत्परिमाणानि नियमादनन्तानि, हिरेव इत्यस्यार्थे, यावन्त्येव, रूपमेषामस्ति रूपीणि[1], प्रदर्शनं चैतद्रूपरसगन्धस्पर्शशब्दवन्ति, द्रव्याणि गुणसङ्घातात्मकानि **अवधिज्ञानी जानीते**, पश्यति चेति दृश्यम्, तेषामवधिज्ञानेनोपलब्धानां रूपिद्रव्याणां यावन्ति मनःपर्यायज्ञानिनो विषयभूयमास्कन्दन्ति **तान्यसौ मनःपर्यायज्ञानी विशुद्धतराणि**–बहुतरपर्यायाणि जानीते इत्यर्थः। तान्यपि च **मनोगतानीति**[2]–मनोव्यापारभाञ्जीत्यर्थः, असञ्चिन्त्यमानानि तु नैव **जानीते** साक्षात्। **किञ्चान्यदिति**, अयं चापरो भेदहेतुरिति ॥

**भा०—क्षेत्रकृतश्चानयोः प्रतिविशेषः। अवधिज्ञानमङ्गुलस्यासङ्ख्येयभागादिषूत्पन्नं भवत्यासर्वलोकात्, मनःपर्यायज्ञानं तु मानुषक्षेत्र[3] एव भवति, नान्यक्षेत्र इति ॥ किंचान्यत्।**

टी०—**क्षेत्रकृतश्चानयो**रवधिमनःपर्याययोः **प्रतिविशेषो**–भेदो दृश्यः, एतद् भावयति–**अवधिज्ञानमङ्गुले**त्यादि। अङ्गुलस्यासङ्ख्येयानि खण्डानि कृतानि, तत्रैकस्मिन्नसङ्ख्येयभागमात्रे क्षेत्रे यावन्ति रूपिद्रव्याणि समवगाढानि सर्वस्तोकानि यः पश्यति, ततः स एव वर्धमानेन तेन बहूनि बहुतराणि च द्रव्याण्यवगच्छति यावत् सर्वलोकावस्थितानि रूपिद्रव्याणि पश्यति, शुभाध्यवसायविशेषादिति, एतदाह–**अङ्गुलस्यासङ्ख्येयभागादिषूत्पन्नं भवत्यासर्वलोकादिति**। मनःपर्यायज्ञानस्य तु नैतावत् क्षेत्रमस्ति, यतो **मनःपर्यायज्ञानं मानुषे**त्यादि, **मानुषक्षेत्रे**–अर्धतृतीयेषु द्वीपसमुद्रेष्वित्यर्थः, **नान्यक्षेत्रे इति** न वा शर्कराप्रभादिनरकेष्विति ॥

**भा०—स्वामिकृतश्चानयोः प्रतिविशेषः। अवधिज्ञानं संयतस्य, असंयतस्य, [संयतासंयतस्य च[4]] (वा) सर्वगतिषु भवति, मनःपर्यायज्ञानं तु मनुष्यसंयतस्यैव भवति, नान्यस्य ॥ किंचान्यत्।**

---

१ 'रूपाणि' इति घ-पाठः। २ 'मनोरहस्यगतानीव' इत्यपि ग-टी-पाठः। ३ 'मनुष्यक्षेत्रे' इति क-ख-पाठः। ४ 'वा' इति घ-पाठः।

टी०—स्वामिकृत इत्यादि । अवधिज्ञानं संयतस्य–साधोर्विरतस्येत्यर्थः । असंयतस्य–अविरतस्य, वाशब्दात् संयतासंयतस्य वा, सर्वगतिषु नारकादिकासु चतसृष्वपि भवेत्[1], यतो नारकादीनां सर्वेषामवधिज्ञानमुत्पद्यते, मनःपर्यायज्ञानं पुनर्मनुष्यसंयतस्यैव भवति, मनुष्यग्रहणात् नारकादिव्युदासः, संयतग्रहणात् मिथ्यादृष्ट्यादीनां प्रमत्तान्तानां षण्णां व्युदासः, एवकारेण नियमयति–मनुष्यसंयतस्यैव फलं नियमस्य दर्शयति–नान्यस्येति, देवादेर्नैतदुत्पद्यत इत्यर्थः ॥

भा०—विषयकृतश्चानयोः प्रतिविशेषः । रूपिद्रव्येष्वसर्वपर्यायेष्ववधेर्विषयनिबन्धो भवति । तदनन्तभागे मनःपर्यायस्येति ॥

टी०—विषयकृत इत्यादि । रूपिषु परमाणुद्रव्येषु[2], असर्वपर्यायेष्विति । सर्वे–सम्पूर्णाः पर्याया–उत्पादादयो येषां तानि सर्वपर्यायाणि न सर्वपर्यायाण्यसर्वपर्यायाणि तेषु, तानि हि रूपिद्रव्याण्यवधिज्ञानी सर्वाणि जानाति न तु तेषां सर्वान् पर्यायानिति, एकैकस्य तु परमाणोः कदाचिदसङ्ख्येयान् पर्यायान् जानाति कदाचित् सङ्ख्येयान्, जघन्येन चतुरो रूपरसगन्धस्पर्शानिति, न पुनरेकैकस्य परमाणोरनन्तान् ज्ञातुं प्रत्यलं स्यात् पर्यायानिति, यदि च सर्वानेव जानीयात् केवल्येवासौ स्यात् ॥ "जे एगं जाणति से सव्वं जाणति"[3] इति [ आचाराङ्गनामकात् (सू० १२२) ] आगमात् ॥ अतोऽसर्वपर्यायेषु अवधेः–अवधिज्ञानस्य विषयनिबन्धः–विषयगोचर इति । मनःपर्यायज्ञानस्य तु रूपिद्रव्याणि न सर्वाणि विषयः, यतस्तेषामवधिज्ञानानां[4] द्रव्याणामनन्तभागीकृतानां य एकोऽनन्तभागस्तस्मिन् मनःपर्यायज्ञानस्य विषयनिबन्धः । तस्मादतीन्द्रियत्वे तुल्येऽपि विशुद्ध्यादेर्भेदोऽवधिमनःपर्याययोरिति ॥

भा०—अत्राह–उक्तं मनःपर्यायज्ञानम् । अथ केवलज्ञानं किमिति ? । अत्रोच्यते–केवलज्ञानं दशमेऽध्याये वक्ष्यते–मोहक्षयात् ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलमिति ( १०-१ ) ॥ २६ ॥

केवलानभिधानकारणम्

अत्राह–एषां मतिज्ञानादीनां ज्ञानानां कः कस्य विषयनिबन्ध इति ? । अत्रोच्यते—

टी०—अत्रावकाशे ब्रवीति–प्रतिपादितं मनःपर्यायज्ञानं, तदनन्तरं केवलज्ञानमुद्दिष्टं, तत् किंस्वरूपमिति प्रक्ष्यति–केवलज्ञानं किंस्वरूपमिति । उच्यते–क्रमागतमपीह न भण्यते, यस्मात् केवलज्ञानस्योत्पत्तिः ज्ञानावरणीयादीनां घातिकर्मणामात्यन्तिकक्षयात्, स चात्यन्तिकक्षयः संवरेण प्राप्यते, संवरश्च नवमेऽध्याये वक्ष्यते, तत्समनन्तरं केवलज्ञानं दशमेऽध्यायेऽभिधास्यते, दशमाध्यायादिसूत्रं च तस्य प्रदेशकं[5] पठति–मोहक्षयादित्यादि । मोहनं-

१ 'भवति' इति ग–टी–पाठः । २ 'सूक्ष्मद्रव्याणि' इति ख–पाठः । ३ य एकं जानाति स सर्वं जानाति । ४ '०मवधिज्ञानज्ञातानां' इति प्रतिभाति । ५ 'प्रदर्शकं' इति क–ख–पाठः ।

मोहः–मोहनीयं दर्शनमोहादिभेदमष्टाविंशतिविधं तस्य क्षयो–नाशस्तस्मात् मोहक्षयादात्यन्तिकात् ज्ञानं–मत्यादि, दर्शनं–चक्षुर्दर्शनादि, तयोर्ज्ञानदर्शनयोरावरणीयं–आच्छादकं, अन्तरायं–दानलब्ध्यादिविघाति, अत एषां च ज्ञानदर्शनावरणीयान्तरायाणां क्षयात्–शाटादात्यन्तिकात् केवलज्ञानं प्रादुरस्ति सकलद्रव्यभेदसंग्राहीति ॥ २६ ॥

एवं मतिज्ञानादीनां पञ्चानामपि ज्ञानानां स्वरूपेऽवधृते तस्य मत्यादेर्यो विषयस्तमजानन् पृच्छति–एषां पूर्वोदितानां मतिज्ञानादीनां को विषयनिबन्धः कस्य ज्ञानस्येति । उच्यते—

## सूत्रम्–मतिश्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु ॥ १–२७ ॥

**भा०—मतिज्ञानश्रुतज्ञानयोर्विषयनिबन्धो भवति सर्वद्रव्येष्वसर्वपर्यायेषु ।**

मतिश्रुतयोर्निबन्धः **ताभ्यां हि सर्वाणि द्रव्याणि जानीते, न तु सर्वैः पर्यायैः ॥२७॥**

**टी०–मतिश्रुतयोर्निबन्ध** इत्यादि । प्रकृतेन ज्ञानेन मतिश्रुते विशेषयन्नेवमुक्तवान्–**मतिज्ञानश्रुतज्ञानयोर्विषयनिबन्ध** इति । विषयव्यापारो–विषयगोचरो **भवतीति**, **सर्वद्रव्येषु** सर्वाणि च तानि द्रव्याणि च सर्वद्रव्याणि तेषु धर्माधर्माकाशपुद्गलजीवास्तिकायाख्येषु । **असर्वपर्यायेष्विति** सर्वे निरवशेषा उत्पादादयः पर्याया येषां तानि सर्वपर्यायाणि, न सर्वपर्यायाण्यसर्वपर्यायाणि तेषु । एतदेव भावयति–ताभ्यां हीत्यादि, **हि**–यस्मात् **ताभ्यां**–मतिश्रुताभ्यां **सर्वाणि द्रव्याणि**–धर्मादीनि जानाति, न तु तेषां सर्वान् पर्यायानुत्पादादीनिति । कथं पुनस्ताभ्यां सर्वद्रव्यविषयोऽवबोधः ? । मतिज्ञानी तावत् श्रुतज्ञानेनोपलब्धेष्वर्थेषु यदाऽक्षरपरिपाटीमन्तरेण स्वभ्यस्तविद्यो द्रव्याणि ध्यायति तदा मतिज्ञानविषयः सर्वद्रव्याणि, न तु सर्वान् पर्यायान्, अल्पकालत्वान्मनसश्चाशक्तेरिति, तथा श्रुतग्रन्थानुसारेण सर्वाणि धर्मादीनि जानाति, न तु तेषां सर्वपर्यायानिति ॥ २७ ॥

सम्प्रत्यवधिज्ञानस्य विषयनिबन्धनं कथयति—

## सूत्रम्—रूपिष्ववधेः ॥ १–२८ ॥

**भा०–रूपिष्वेव द्रव्येष्ववधिज्ञानस्य विषयनिबन्धो भवति, असर्वपर्यायेषु ।**

अवधेर्विषयः **सुविशुद्धेनाप्यवधिज्ञानेन रूपीण्येव द्रव्याण्यवधिज्ञानी जानीते, तान्यपि न सर्वैः पर्यायैरिति ॥ २८ ॥**

**टी०–रूपिष्ववधेरिति । रूपिष्वेव**–पुद्गलद्रव्येष्वेव **अवधेः** अतीन्द्रियस्य **विषयनिबन्धो भवति** सर्वेषु **असर्वपर्यायेषु** । किं योऽपि परमावधिरत्यन्तज्ञानविशुद्धस्तेनापि रूपीण्येव, नारूपीणि जानातीत्यारेकित आह–**सुविशुद्धेनापि**–परमप्रकर्षप्राप्तेनापि, यो ह्यलोके लोकप्रमाणान्यसंख्येयानि खण्डानि पश्यति तेनाप्यवधिना पुद्गलद्रव्याण्येवावसीयन्ते, न

१ 'अत्यन्तविशुद्ध' इति ग–पाठः ।

धर्मादीनि चत्वारि । किं सर्वपर्यायैः ? नेत्याह—तान्यपि न सर्वैरित्यादि । तान्यपि—रूपिद्रव्याणि न सर्वैः अतीतानागतवर्तमानैरुत्पादव्ययध्रौव्यादिभिरनन्तैः पर्यायैरिति ॥२८॥

मनःपर्यायज्ञानस्याधुना[1] विषयनिबन्धनमाचिख्यासुराह—

## सूत्रम्—तदनन्तभागे मनःपर्यायस्य ॥ १–२९ ॥

मनःपर्यायस्य विषयः

भा०— यानि रूपीणि द्रव्याण्यवधिज्ञानी जानीते ततोऽनन्तभागे मनःपर्यायस्य विषयनिबन्धो भवति । अवधिज्ञानविषयस्यानन्तभागं मनःपर्यायज्ञानी जानीते, रूपिद्रव्याणि मनोरहस्यविचारगतानि च मानुषक्षेत्र[2]पर्यापन्नानि विशुद्धतराणि चेति ॥ २९ ॥

टी०—तदनन्तभागे मनःपर्यायस्य । तेषामवधिज्ञानविषयीकृतरूपिद्रव्याणामनन्तभागस्तदनन्तभागस्तस्मिन् मनःपर्यायज्ञानस्य विषयनिबन्धः । एतद् विवृणोति—यानि शुक्लादिगुणोपेतानि रूपीणि द्रव्याणि जानात्यवधिज्ञानी तेषामवधिज्ञानदृष्टानामनन्तभागो यस्तस्मिन्ननन्तभागे एकस्मिन् मनःपर्यायस्य विषयनिबन्धो दृश्यः। तदित्यनेन अवधिज्ञानविषयोऽभिसंबध्यते । तस्यावधिज्ञानविषयस्य सर्वरूपिद्रव्यात्मकस्य योऽनन्तभागः एकस्तं मनःपर्यायज्ञानी जानीते । एतदाह—अवधिज्ञानविषयेत्यादिना । तान्यपि चावधिविषयानन्तभागवर्तीनि रूपीण्यवगच्छति—रूपरसाद्युपेतानि एवंगुणसम्प्राप्तात्मकानि द्रव्याणि, तान्यपि न कुडयाद्याकारव्यवस्थितानि जानाति, किन्तु मनोरहस्यविचारगतानि मनः—अनिन्द्रियं प्रतिविशिष्टपुद्गलप्रचितं चेतस्तदेव च रहस्यम्—अप्रकाशस्वरूपं अन्तर्वर्तमानं मनोरहस्ये विचारो—विचारणा अन्वेषणा, कथमयं पदार्थोऽवस्थित इत्येवंरूपा, तत्र मनोरहस्यविचारणायां गतानि—प्रविष्टानि चिन्त्यमानानि जीवेनेतियावत्, तान्यपि न सर्वलोकवर्तीनि, किन्तु मनुष्यक्षेत्रम् आमानुषोत्तरात् तस्मिन् मनुष्यक्षेत्रे पर्यापन्नानि व्यवस्थितानीतियावत्, अवधिज्ञानिनश्च सकाशाद् विशुद्धतराणि बहुतरपर्यायाणि जानीत इतियावत् ॥ २९ ॥

सम्प्रति केवलज्ञानस्य विषयमाचष्टे—

## सूत्रम्—सर्वद्रव्यपर्यायेषु केवलस्य ॥ १–३० ॥

केवलस्य विषयः

भा०—सर्वद्रव्येषु सर्वपर्यायेषु च केवलज्ञानस्य विषयनिबन्धो भवति । तद्धि सर्वभावग्राहकं सम्भिन्नलोकालोकविषयम् । नातः परं ज्ञानमस्ति । न च केवलज्ञानविषयात् परं किञ्चिदन्यज्ज्ञेयमस्ति ॥

टी०—सर्वद्रव्येत्यादि । सर्वद्रव्येषु धर्मादिषु सर्वपर्यायेषु उत्पादादिषु, धर्मादीनां च त्रयाणां परत उत्पादविगमौ, पुद्गलानां जीवानां च स्वतः परतश्च,

---

१ 'पर्यायस्याधुना' इति ग–पाठः । २ 'मनुष्य०' इति घ–टी–पाठः ।

यथा शुक्लतया विगच्छन्नीलतयोपजायमानः पुद्गल इत्यवतिष्ठते, जीवोऽपि सुरतयोत्पद्यते मनुष्यतया विगच्छति जीवत्वेन च सदावस्थित इति, अतः सर्वेषु पर्यायेष्वेवमात्मकेषु **केवलज्ञानस्य विषयनिबन्धो गोचरो भवति**। कथं पुनः केवलस्य सर्वाणि द्रव्याणि सर्वे पर्यायाश्च गोचरीभवन्ति ?। उच्यते-**तत्** केवलज्ञानं यस्मात् **सर्वभावग्राहकं** सर्वेषां भावानां **ग्राहकं**-द्रव्यक्षेत्रकालभावविशिष्टानां तत् परिच्छेदकम्-अवभासकम्, अत एव **सम्भिन्नलोकालोकविषयं** लोको-धर्माधर्मद्रव्यद्वयाविच्छिन्नमाकाशं, यत्र त्वाकाशे तौ धर्माधर्मौ न स्तः सोऽलोकः, लोकश्चालोकश्च लोकालोकौ सम्भिन्नौ च तौ लोकालोकौ च सम्भिन्नलोकालोकौ विषयो-गोचरो यस्य तत् सम्भिन्नलोकालोकविषयम्। एतदुक्तं भवति—यदिह लोके अलोके वा[1]ऽस्ति किञ्चिज्ज्ञेयं तद् यथा बहिः पश्यत्येवमन्तः, एवं सम्भिन्नलोकालोकविषयं, सम्भिन्नमिति सम्पूर्णम्, अथवा सर्वैः पर्यायैरथवा यथात्मानं तथा परम्, अथवा स्वपर्यायैः परपर्यायैश्च। अथ किमेतस्माज्ज्ञानात् प्रकृष्टतरमन्यत् किञ्चिज्ज्ञानमस्तीति ?। उच्यते-**नातः परं ज्ञानमस्ति** अस्मात्-केवलात् परं-प्रधानतरं ज्ञानं-ज्ञेयपरिच्छेदि नास्ति किञ्चित्। एतस्माद् यद्यपि ज्ञानं न प्रधानतरमस्ति विषयस्तर्हि अप्रकाशितोऽस्ति तेन केवलज्ञानेनेति, तन्न, यतः--**न च केवलेत्यादि**। केवलज्ञानस्य विषयः सर्वद्रव्याणि सर्वपर्यायाश्च, एतस्माद् **विषयात् परमन्यत् किञ्चिज्ज्ञेयं नास्ति** यदप्रकाशितं **केवलेनेति**॥ एवं विषयमाख्याय केवलस्य तस्यैव पर्यायकथनं करोति—

केवलस्वरूपम्

**भा०—केवलं परिपूर्णं समग्रमसाधारणं निरपेक्षं विशुद्धं सर्वभावज्ञापकं लोकालोकविषयमनन्तपर्यायमित्यर्थः ॥ ३० ॥**

**अत्राह—एषां मतिज्ञानादीनां युगपदेकस्मिन् जीवे कति भवन्तीति ?। अत्रोच्यते—**

**टी०—केवलं परिपूर्णं** भण्यते, सकलं द्रव्यभावजा[2]लं परिच्छिन्दन् परिपूर्णमिति, यथैकं जीवपदार्थं तथा परमपि परिच्छिन्दत् **समग्रमिति** व्यपदिश्यते, **असाधारणं** मत्यादिज्ञानैरतुल्यत्वात्, निर्गता आलोकेन्द्रियादिरूपा अपेक्षा यत्र तन्निरपेक्षं, ग्राह्यं मुक्त्वा नेन्द्रियादीन्यपेक्षत इतिवायत्, **विशुद्धं** अशेषज्ञानदर्शनावरणमलविलयनात्, **सर्वभावज्ञापकमिति** सर्वेषां जीवादीनां भावानां **ज्ञापकं**-प्ररूपकम्॥ ननु च मूकं तत् केवलज्ञानं, तत् कथं प्ररू[3]पकं भण्यते ? शब्दो हि ज्ञापको मतः, उच्यते—उपचारात् ज्ञापकं, यतः केवलज्ञानेन सर्वद्रव्यभावान् दृष्टान् शब्दः प्रकाशयति, ततः केवलज्ञानमेव प्रकाशकं भण्यते। लोकालोकौ विषयोऽस्य तत् **लोकालोकविषयम्**। कथमिति चेत्, यतः अनन्ताः **पर्यायाः**-परिणामाः यस्य तत् **अनन्तपर्यायं**, ज्ञेयं वाऽनन्तपर्यायमितिकृत्वा तदप्यनन्तपर्यायमभिहितं, ज्ञेयानुरोधेन ॥ ३० ॥

---

१ 'चास्ति' इति क-पाठः। २ 'जातं' इति क-ख-पाठः। ३ 'प्ररूपकं ज्ञापकं भण्यते' इति ग-पाठः।

एवं सर्वेषां मत्यादीनां विषये प्रकाशितेऽत्रावकाशे ब्रूते अन्तेवासी—एषामनन्तरख्यापितानां **मतिज्ञानादीनां युगपद्**—एकस्मिन् काले **एकस्मिन् जीवे कति भवन्त्याधेयानि?** किमेकं द्वे त्रीणि चत्वारि पञ्चापि? सर्वाणि तावन्न सङ्गच्छन्ते सर्वप्राणिनाम्, एवं सति समता स्यात्, सर्वेषां च सर्वज्ञता भवेत्, विरोधश्च स्यात् क्षायिकक्षायोपशमिकानां परस्परेण, तस्माद् यथैते दोषा न सन्ति तथा वाच्यम्, **उच्यते** अत्र—

**सूत्रम्—एकादीनि भाज्यानि युगपदेकस्मिन्ना चतुर्भ्यः ॥ १-३१ ॥**

युगपदेकजीवे ज्ञानसंख्या

**भा०—एषां मत्यादीनां ज्ञानानामादित एकादीनि भाज्यानि युगपदेकस्मिन् जीवे आ चतुर्भ्यः। तद्यथा—कस्मिंश्चिज्जीवे मत्यादीनामेकं भवति। कस्मिंश्चिज्जीवे द्वे भवतः। कस्मिंश्चित् त्रीणि भवन्ति। कस्मिंश्चिच्चत्वारि भवन्ति ॥**

**टी०—एकादीत्यादि**। एकशब्दः प्राथम्ये वर्तते, एकः—प्रथम आदिरेषां तान्येकादीनि—प्रथमादीनि **भाज्यानि**—विकल्प्यानि स्युर्न वा, **युगपद्**—एकस्मिन् कालेऽवधीकृते **एकस्मिन्** प्राणिनि, **आ चतुर्भ्य** इति आङभिविधौ न मर्यादायाम्, यत्रास्य मर्यादाऽभिप्रेता सूरेः तत्र प्राग्ग्रहणं करोति, 'विग्रहवती च संसारिणः प्राक् चतुर्भ्यः' (अ० २, सू० २९) तथा 'प्रदेशतोऽसंख्येयगुणं प्राक् तैजसात्' (अ० २, सू० ३९) तस्मादिहाभिविधावाङ्, आ चतुर्भ्यो ज्ञानेभ्यः[1] एकस्मिन् जीवे सम्भव इति, चत्वार्येकत्र जीवे सम्भवन्तीति। भजनां च दर्शयति—**कस्मिंश्चिदित्यादिना**। **कस्मिंश्चिन्**मनुष्यादिके जीवे **मत्यादीनां** पञ्चानां ज्ञानानामेकं सम्भवति, कथं? येन निसर्गसम्यग्दर्शनं प्राप्तं तस्य मतिज्ञानमाद्यमेवैकं समस्ति, न श्रुतं, यतस्तल्लब्धा सामायिकादिश्रुतं न पठति, अन्तरेणापि च श्रुतज्ञानमष्टौ प्रवचनमातरः संगृह्यन्ते तेन, अतस्तस्य ग्रन्थानुसारि विज्ञानं श्रुताख्यं न सम्भवति, **एकं**—प्रथमं मतिज्ञानमेव। **कस्मिंश्चिज्जीवे द्वे भवतः**—सम्यग्दर्शनसमन्वितस्य श्रोत्रेन्द्रियोपलब्धिः श्रुतं द्वादशाङ्गं, शेषेन्द्रियोपलब्धिर्मतिज्ञानम्। **कस्मिंश्चित्** प्राणिनि **त्रीणि**, द्वे मतिश्रुते तृतीयं चावधिज्ञानं यस्योत्पन्नम्। **कस्मिंश्चिच्चत्वारि**, एतानि त्रीणि चतुर्थं मनःपर्यायज्ञानम्, प्रतिपन्नचारित्रस्य तीर्थकृत इव ॥ अथ यस्मिन् श्रुतज्ञानमेकं क्वचित् प्राणिनि स किं न प्रदर्श्यते? यतो मतिरेवैका प्रदर्श्यते, उच्यते—यत्र श्रुतज्ञानं तत्रावश्यं मतिज्ञानम्, यत्र मतिज्ञानं तत्र श्रुतं स्याद् वा न वेति, तस्मान्मतिज्ञानमेवैकं क्वचिन्निदर्श्यते, एतदाह—

**भा०—श्रुतज्ञानस्य तु मतिज्ञानेन नियतः सहभावस्तत्पूर्वकत्वात्। यस्य श्रुतज्ञानं तस्य नियतं मतिज्ञानम्। यस्य तु मतिज्ञानं तस्य श्रुतज्ञानं स्याद् वा न वेति। अत्राह—अथ केवलज्ञानस्य पूर्वैर्मतिज्ञानादिभिः किं सहभावो भवति नेति?। अत्रोच्यते—**

१ 'ज्ञातेभ्यः' इति क-ख-पाठः।

टी०—श्रुतज्ञानेत्यादि । **श्रुतज्ञानस्य** एवं ग्रन्थानुसारिणो **मतिज्ञानेन** इन्द्रियानिन्द्रियनिमित्तेन **नियतो**—निश्चितः **सहभावः** एकत्रवृत्तिरूपः, किं कारणम् ? तत आह--**तत्पूर्वकत्वात्**—मतिज्ञानपूर्वकत्वात् श्रुतस्य, सति हि मतिज्ञाने श्रुतज्ञानसम्भव इति, अतो **यस्य** जन्तोः श्रुतज्ञानं ग्रन्थानुसार्यस्ति **तस्य** जन्तोर्नियतमिन्द्रियानिन्द्रियनिमित्तं **मतिज्ञानं** सम्भवति, तस्माच्छ्रुतज्ञानं यत्र प्राणिनि तत्र द्वे मतिश्रुते अवश्यं दृश्ये, **यस्य** तु जीवस्य **मतिज्ञानं** केवलं निसर्गसम्यग्दर्शनकालेऽनवाप्ताक्षरश्रुतस्य **तस्य श्रुतज्ञानं स्याद्** उत्तरकालं पठतो, **न वा**ऽनधीयानस्येति, तस्माद् यत्रैकं दृश्यते तत्र मतिज्ञानं निदर्श्यते, श्रुताभावेऽपि भावादिति । एवं भजनायां निदर्शितायां चोदयत्यत्रावसरे--अथ **केवलज्ञानस्य** सकलज्ञेयग्राहिणः **पूर्वैः**—पूर्वकालप्राप्यैः पूर्वैर्वा सन्निवेशमङ्गीकृत्याभिधीयते **मतिज्ञानादिभिश्चतुर्भिः**-सह किं **सहभावः**—सहावस्थानं **भवति नेति** ? । **उच्यते**—अन्यमतप्रचिकटयिषयाऽऽह—

भा०—**केचिदाचार्या व्याचक्षते--नाभावः, किन्तु तदभिभूतत्वादकिञ्चित्कराणि भवन्तीन्द्रियवद्। यथा वा व्यभ्रे नभसि आदित्य उदिते भूरितेजस्त्वादादित्येनाभिभूतान्यन्यतेजांसि ज्वलनमणिचन्द्रनक्षत्रप्रभृतीनि प्रकाशनं प्रति अकिञ्चित्कराणि भवन्ति तद्वदिति ।**

केवले शेषज्ञानासद्भावेऽन्यमतम्

टी०—**केचिदि**त्यादि, मत्तोऽन्ये[1] **व्याचक्षते** सूरयः, नाभाव एवास्ति, कथं हि सतो वस्तुनः आत्यन्तिको नाशः स्यात् ? यदि च स्यात् ततो यथैव केवलभास्वति जाते ज्ञानचतुष्टयमेवमन्येऽपि शमवीर्यदर्शनसुखितत्वादयो नश्यन्तु, न च तेषां नाशोऽभ्युपेयते, तस्मात् सहावस्थानमस्त्येव, यदि तर्ह्यस्ति सहावस्थानं मत्यादिज्ञानचतुष्टयस्य केवलेन सह ततः किमिति स्वमर्थं न प्रकाशयन्ति ? उच्यते-अभिभवात्, तदाह—**किन्त्वभिभूतत्वात्**-हतप्रभावत्वात् **अकिञ्चित्कराणि** न किञ्चिदपि कर्तुं प्रकाशनं प्रभवन्ति । तत्र दृष्टान्तमाह—यथा हि केवलिनः सदपि चक्षुरादीन्द्रियं न व्याप्रियते विषयग्रहणं प्रति, प्रकाशितत्वात् केवलज्ञानेन, एवं मत्यादिचतुष्टयमपि अकिञ्चित्करं, तदीयस्य ज्ञेयस्य केवलभास्वता प्रकाशितत्वात् । अथैतदपि सन्दिह्यते भगवतः केवलिनो यन्नेत्रं तद् विषयग्रहणं प्रति अकिञ्चित्करमिति, एवं सति असन्देहरूपं दृष्टान्तं दर्शयामः—**यथा वा व्यभ्र** इत्यादि, येन प्रकारेणैतत् स्थितं लोके, विगतान्यभ्राणि यत्र तत् व्यभ्रं तस्मिन् व्यभ्रे **नभसि**—वियति **आदित्ये**—किरणमालिनि **उदिते**—प्रकटीभूते ज्वलनादीनि प्रकाशनं प्रत्यसमर्थानि भवन्ति, किमिति ? **भूरितेजस्त्वाद्**—बहुतेजस्त्वात्, **आदित्येन**—सवित्रा **अभिभूतानि**-तिरोहितस्वसामर्थ्यानि अन्येषां तेजांसि **अन्यतेजांसि**, अन्यानि वा तेजआत्मकानि ज्वलनादीनि, **ज्वलनो**ऽग्निः **मणिः**-सूर्यकान्तादिः **चन्द्रः**-शशी **नक्षत्रम्**-अश्विन्यादि, एतानि ज्वलनादीनि **प्रभृतिः**—आदिर्येषां तेजसां तानि ज्वलनमणिचन्द्रनक्षत्रप्रभृतीनि तेजांसि—तेजोमयानि **प्रकाशनम्**—

१ 'न्यथाऽऽचक्षते' इति क-पाठः ।

उद्द्योतनं प्रति अकिञ्चित्कराणि भवन्ति न किञ्चिद् बहिरवस्थितं कुडयादि विषयं प्रकाशयन्ति, हतप्रभावत्वात्, तद्वदिति तेन प्रकारेण केवलभास्वता भूरितेजसाऽऽक्रान्तानि न विषयप्रकाशनं प्रति व्याप्रियन्ते ॥

सम्प्रति पराभिप्रायेणैव मत्यादिज्ञानचतुष्टयस्य केवलेन सहानवस्थानं दर्शयति—

**भा०—केचिदप्याहुः—अपायसद्द्रव्यतया मतिज्ञानं, तत्पूर्वकं श्रुतज्ञानम्, अवधिज्ञानमनःपर्यायज्ञाने च रूपिद्रव्यविषये, तस्मान्नैतानि केवलिनः सन्तीति ॥**

टी०—केचिदप्याहुरित्यादि। केचित् पुनर्ब्रुवते—**नैतानि मत्यादीनि केवलिनः सन्ति, यस्मान्मतिज्ञानं अपायसद्द्रव्यतया** भवति, अपायो नाम श्रोत्रादीन्द्रियोपलब्धस्येहितस्यार्थस्य निश्चयः, नैवंविधोऽपायः केवलिनोऽस्ति, यावच्च शोभनानि सम्यग्दलिकानि सन्ति तावन्मतिज्ञानं, तदेतद् द्वयमपि दूरोत्सारितं केवलिन इति नास्ति मतिज्ञानं केवलिनः, मतिज्ञानाभावे च मतिपूर्वकस्य श्रुतस्य सुतरामभाव इत्यतः श्रुतमपि नास्ति, **अवधिमनःपर्यायज्ञाने च रूपिद्रव्यविषये** गदिते, न चैवंविधोऽस्ति विषयः केवलिनः, सम्भिन्नलोकालोकग्राहित्वात्, **तस्मात्** ते अपि न स्त इति, तस्मादुपपत्तिबलादेतानि चत्वारि केवलिनो दिव्यदृश्वनो न सन्ति।

**भा०—किश्चान्यत्। मतिज्ञानादिषु चतुर्षु पर्यायेणोपयोगो भवति, न युगपत्। सम्भिन्नज्ञानदर्शनस्य तु भगवतः केवलिनो युगपत् सर्वभावग्राहके निरपेक्षे केवलज्ञाने केवलदर्शने चानुसमयमुपयोगो भवति ॥ किं चान्यत्।**

क्रमयुगपदुपयोगौ

**टी०—किश्चान्यदित्यादिना** स्वाभिप्रायद्वयं प्रकाशयन्ति-**मतिज्ञानादिषु चतुर्षु** मतिश्रुतावधिमनःपर्यायज्ञानेषु **पर्यायेण**—क्रमेण **उपयोगः**—स्वीयविषयग्राहिता **भवति न युगपत्**, कस्मिन् काले न स्वस्वविषये एषां व्यापारः ? यदा मतिज्ञानी मतिज्ञानेनोपयुक्तो न तदा श्रुतादीनामन्यतमेन केनचित्, यदा च श्रुतज्ञानेनोपयुक्तो न तदा मत्यादीनामन्यतमेनेति, केवलिनस्तु न क्रमेणैतज्ज्ञानगतोऽस्त्युपयोगः, यतः **सम्भिन्न** इत्यादि। ज्ञानं—विशेषग्राहि, दर्शनं--सामान्यग्राहि, ज्ञानं च दर्शनं च ज्ञानदर्शने, सम्भिन्ने—सर्वद्रव्यपर्यायग्राहके ज्ञानदर्शने यस्य स **सम्भिन्नज्ञानदर्शनः** तस्य, एवं माहात्म्यादिगुणान्वितस्य **भगवतः**, केवलं—सर्वार्थग्राहि ज्ञानं यस्यास्ति तस्य **केवलिनः**, **युगपत्**—एकस्मिन् समये, केवलज्ञाने अनुसमयमुपयोगो भवति दर्शने च । कीदृशि केवलज्ञाने दर्शने वा ?। उच्यते—**सर्वभावग्राहके** । सर्वे भावाः—पञ्चास्तिकायास्तेषां ग्राहकं, विशेषेण परिच्छेदकमित्यर्थः। **निरपेक्षे** । निर्गता अपेक्षा ज्ञेयं मुक्त्वाऽन्यत्र इन्द्रियादौ यस्य तन्निरपेक्षं तस्मिन्निरपेक्षे **केवलज्ञाने** विशेषग्राहिणि **दर्शने च** सर्वभावग्राहके निरपेक्षे सामान्यग्राहिणि । **अनुसमयमुपयोगो भवतीति** । अनुगतः—अव्यवहितः समयः—अत्यन्ताविभागः कालो यत्र कालसन्ताने स कालसन्तानोऽनुसमयस्तमनुसमयं कालसन्तानमुपयोगो भवति, "कालाध्व-

नोरत्यन्तसंयोगे" (पाणिनिः अ० २, पा० ३, सू० ५) इति द्वितीया, "अव्ययीभावो वा विभक्त्यादिषु" (पा० अ० २, पा० १, सू० ६) वारंवारेणोपयोगो भवतीतियावत्। एकस्मिन् समये केवलज्ञानोपयोगे वृत्ते ततोऽन्यस्मिन् केवलदर्शनोपयोग इति, एवं सर्वकालमवसेयम्। यद्यपि केचित् पण्डितम्मन्याः सूत्राण्यन्यथाकारमर्थमाचक्षते तर्कबलानुविद्धबुद्धयो[1] वारंवारेणोपयोगो नास्ति, तत् तु न प्रमाणयामः, यत आम्नाये भूयांसि सूत्राणि वारंवारेणोपयोगं प्रतिपादयन्ति—"नाणम्मि दंसणम्मि य एत्तो एगयरम्मि उवउत्ता[2]" (प्रज्ञापनायाम्)। तथा—"सव्वस्स केवलिस्सवि जुगवं दो नत्थि उवओगा[3]" (वि० ३०९६) इत्यादीनि। अथैवं मन्येथाः सूत्राणामेषामन्य एवार्थोऽन्य एवाव्युत्पन्नबुद्धिभिराख्यायत[4] इत्येतदपि तु दुःश्रद्धानम्, यतः सर्वसूत्राण्यन्धपुरुषस्थानीयानि सुधिया गृहीतानि शक्नुवन्त्यर्थं ख्यापयितुं, यथा श्वेतो धावतीत्यादि, एवंविधेषु च सूत्रेष्ववश्यमाप्तसम्प्रदाय एवान्वेषणीयो भवति, स चाविच्छेदेनार्थसम्प्रदायः समस्तश्रुतधरादधिकारिणः परिप्लवमानो मुनिपरम्परया यावदद्येत्यागमादविगानेन वारंवारेणोपयोग इति, कुतः पुनरर्थागमोऽकस्मात् उपयोगवादिनः? स्वत एव चेत् प्रेक्षितः स्वमनीषिका सिद्धान्तविरोधिनी न प्रमाणमित्यभ्युपेयते॥ अथागमात् प्रदर्शनीयः तर्ह्यसौ तस्माद् यत्किञ्चिदेतदिति। अथ मन्यसे साकारोऽनाकार इति शब्दभेदः केवलमत्र केवलिनि अर्थस्त्वभिन्न एव, यतः सर्वमेव विशेषपरिच्छेदकं ज्ञानं केवलिनि समस्ति न दर्शनमिति, इदमपि न जाघट्यते ज्ञानावरणं भगवतः क्षीणं दर्शनावरणीयं च निरवशेषं, तत्रैकत्वे सति कोऽयमावरणभेदाभिमानो निष्प्रयोजनः?। तथा साकारोपयोगोऽष्टधा दर्शनोपयोगश्चतुर्धेति, तथा ज्ञानं पञ्चधा दर्शनं चतुर्धेति, एकत्वे सति कुत इदमपि घटमानकं? न चातीवाभिनिवेशोऽस्माकं युगपदुपयोगो मा भूदिति, वचनं न पश्यामस्तादृशम्, क्रमोपयोगार्थप्रतिपादने तु भूरि वचनमुपलभामहे, न चान्यथा जिनवचनं कर्तुं शक्यते सुविदुषाऽपीति, प्रकृतमनुस्रियते। एतस्मात् केवलज्ञानोपयोगात् केवलदर्शनोपयोगाच्च विनाऽन्यस्य उपयोगस्य अभावात् केवलिनि मत्यादिज्ञानचतुष्टयसहभावो न गम्यते। किंचान्यदित्युपपत्त्यन्तरमालम्बते—

क्षायोपशमिकक्षायिकतया भेदः

**भा०—क्षयोपशमजानि चत्वारि ज्ञानानि पूर्वाणि, क्षयादेव केवलम्। तस्मान्न केवलिनः शेषाणि ज्ञानानि भवन्तीति[5]॥ ३१॥**

टी०—मत्यादीनि चत्वारि मनःपर्यायपर्यवसानानि ज्ञानानि मतिश्रुतावधिमनःपर्यायावरणीयकर्मणां क्षयोपशमावुररीकृत्य प्रवर्तन्ते, तदावरणीयकर्मक्षयोपशमनिमित्तानि, केवलं पुनः क्षयकारणमेव, तस्मान्न केवलिनः शेषाणि ज्ञानानि सन्तीति। अन्येषां तु

१ '०नुविशुद्धबुद्धयः' इति क-ख-पाठः, 'तर्कबलात् तु विशुद्धबुद्धयः' इति घ-टी-पाठः।

२ ज्ञाने दर्शने च अनयोरेकतरस्मिन् उपयुक्ताः। ३ सर्वस्यापि केवलिनो युगपद् द्वावुपयोगौ न स्तः।

४ 'एव व्युत्पन्न' इति क-ख-ग-पाठः। ५ 'सन्तीति' इति घ-पाठः।

ग्रन्थः 'ज्ञानदर्शनावरणयोस्तु कृत्स्नक्षयात् केवलज्ञानदर्शने भवतः तस्मान्न केवलिनः शेषाणि ज्ञानानि सन्ति,' ज्ञानदर्शनयोर्विशेषसामान्यग्राहकयोर्ये आवरणे-आच्छादने तयोरेव कृत्स्नक्षयात् केवले ज्ञानदर्शने-विशेषसामान्यग्राहके उत्पद्येते, अतश्चत्वारि क्षयोपशमनिमित्तान्येकं क्षयादेव केवलं कथं पुनरत्र सहावस्थायिता घटेत?॥३१॥

एवं मत्यादि ज्ञानपञ्चकं प्रमाणं प्रदर्श्य प्रमाणाभासोविविक्षिकीर्षया आह—

## सूत्रम्—मतिश्रुतावधयो विपर्ययश्च ॥ १-३२ ॥

मत्यादीनां विपर्ययः।

**भा०—मतिज्ञानं, श्रुतज्ञानं, अवधिज्ञानमिति विपर्ययश्च भवति, अज्ञानं चेत्यर्थः। ज्ञानविपर्ययोऽज्ञानमिति। अत्राह—तदेव ज्ञानं तदेवाऽज्ञानमिति, ननु छायातपवच्छीतोष्णवच्च तदत्यन्तविरुद्धमिति। अत्रोच्यते—**

टी०—मतिश्रुतावधयो विपर्ययश्च, यथोक्तलक्षणा **मतिश्रुतावधयस्त्रयोऽपि विपर्ययश्च भवत्यज्ञानं चेत्यर्थः**, ज्ञानाधिकारस्य प्रकृतत्वात् **ज्ञानस्य विपर्ययो**-विपरीतता **अज्ञानं**, प्रमाणाभास इतियावत्। यदा यथार्थपरिच्छेदि तदा ज्ञानं, यदा त्वयथार्थं प्रवर्तते तदा ज्ञानाभासम्। एवमुक्ते पर आह-एकस्य विरुद्धधर्मद्वयसमारोपो न युक्त इति, **तदेव** मत्यादित्रयं प्रमाणं **तदेव** चाप्रमाणमिति छायातपवद् विरोधित्वादेकत्रासाम्प्रतम्, एतदाह—**ननु छायातपवद्** विरुद्धमेतत्, यो हि छायायामेवातपं मन्यते आतपे वा छायां **तदत्यन्तविरुद्धं** स्यात्। प्रतीतिविरोधश्च तथा, यो हि शीतमुष्णं ब्रूयात् उष्णं च शीतमिति प्रत्यक्षविरुद्धं च जायते। **अत्रोच्यते**—न ब्रूम एकत्राधारे एतत्त्रयं ज्ञानमज्ञानं च, किन्त्वन्यत्र ज्ञानमन्यत्र चाज्ञानमिति। क्व तर्हि ज्ञानम्? सम्यग्दृष्टौ योऽवबोधस्तज्ज्ञानम्, आधारान्तरे मिथ्यादृष्टौ योऽवबोधस्तदज्ञानम्। एतदाह—

**भा०—मिथ्यादर्शनपरिग्रहाद् विपरीतग्राहकत्वमेतेषाम्। तस्मादज्ञानानि भवन्ति, तद् यथा—मत्यज्ञानं, श्रुताज्ञानं, विभङ्गज्ञानमिति। अवधिर्विपरीतो विभङ्ग इत्युच्यते ॥**

मिथ्यादृशामज्ञानिता

टी०—**मिथ्यादर्शनेत्यादि। मिथ्यादर्शनेन**-तत्त्वार्थाश्रद्धानरूपेण **परिग्रहो** यदा मत्यादित्रयस्य तदा **विपरीतग्राहकत्वं**-अयथार्थवस्तुपरिच्छेदित्वम् **एतेषामिति** मतिश्रुतावधीनां **तस्मात्** कारणात् **अज्ञानानि** कुत्सितान्ययथार्थपरिच्छेदीनि **भवन्ति** मत्यादीनि। मिथ्यादृष्टिपरिगृहीता मतिर्मत्यज्ञानं, मिथ्यादृष्टिपरिगृहीतं श्रुतं श्रुताज्ञानं, मिथ्यादृष्टिपरिगृहीतोऽवधिर्विभङ्ग इति। विभङ्ग इत्यस्य चार्थं प्रकाशयति—**अवधिर्भवक्षयोपशमनिमित्तो विपरीतोऽन्यथावस्तुपरिच्छेदी विभङ्ग इति**, यथावस्थितवस्तुपरिच्छेदि च प्रमाणमिष्टं, न चैतत् तथेत्यतः अप्रामाण्यं मिथ्यादृष्टिपरिगृहीतानामिति। अत्राप्रामाण्ये ख्यापिते मिथ्यादृष्टिपरिगृहीतस्य मत्यादित्रयस्य चोदक आह—

**भा०**-अत्राह-उक्तं भवता सम्यग्दर्शनपरिगृहीतं मत्यादि ज्ञानं भवत्यन्यथाऽज्ञानमेवेति । मिथ्यादृष्टयोऽपि च भव्याश्चाभव्याश्चेन्द्रियनिमित्तानविपरीतान् स्पर्शादीनुपलभन्ते, उपदिशन्ति च स्पर्शं स्पर्श इति रसं रस इति, एवं शेषान्, तत् कथमेतदिति ?। अत्रोच्यते—तेषां हि विपरीतमेतद् भवति ॥ ३२ ॥

**टी०**—**उक्तं भवता**-प्रतिपादितं त्वया **सम्यग्दर्शनेन** जीवादितत्त्वश्रद्धानरूपेण **परिगृहीतं मत्यादि ज्ञानं भवति** । यथावद् वस्तुपरिच्छेदीतियावत् । **अन्यथा** तु मिथ्यादृष्टिना परिगृहीतं मत्यादित्रयं कुत्सितं ज्ञान**मज्ञानमेवेति**, तदेतन्न मृष्यते, यतः **मिथ्येत्यादि** । **मिथ्यादृष्टयो**ऽभिगृहीतमिथ्यादर्शनाः **शाक्यादयः**, अनभिगृहीतमिथ्यादर्शनाः, प्रवचनार्थसन्देहिनश्च त्रिविधा इति । **अपिः** सम्भावने, **चः** समुच्चये, ते मिथ्यादृष्टयो द्विधा **भव्याश्चाभव्याश्च**, सेत्स्यन् भव्यः, नैव कदाचित् सेत्स्यति यः सोऽभव्यः । ते मिथ्यादृष्टयो द्विविधा अपि, **इन्द्रियनिमित्तानिति** इन्द्रियाणि-श्रोत्रादीनि तानि निमित्तं-कारणमाश्रित्य **अविपरीतान्**-यथावस्थितान् **स्पर्शादीनिति** स्पर्शरसगन्धरूपशब्दान् **उपलभन्ते** आत्मना, **उपदिशन्ति च** अन्येभ्यः । कथमुपलभन्ते कथं चोपदिशन्ति ? अवैपरीत्येन, तच्चावैपरीत्यं दर्शयति-**स्पर्शं**-शीतादिकं **स्पर्शमिति** अविपरीततामाचष्टे, **रसं**-मधुरादिकं **रसमिति** एवमविपरीतमेवं **शेषान्**-शब्दरूपानवैपरीत्येन । **तत् कथमेतदिति**, बाधके हि प्रत्यये सत्ययथार्थता प्रत्ययान्तरस्य आश्रयितुं शक्या, यथा शुक्तिकाबुद्ध्या रजतबुद्धिर्बाधिकया शुक्तिकाबुद्ध्या निवर्त्यते, नैवमत्र बाधकं कश्चित् प्रत्ययं पश्यामो यद्बलान्मिथ्यादृष्टीनां तदयथार्थं ज्ञानं मन्येमहीति ?। **अत्रोच्यते**-**तेषां**-मिथ्यादृष्टीनां यस्मात् तद् विज्ञानं **विपरीतमेवेति**, अयथार्थपरिच्छेदित्वात् ॥ ३२ ॥ कुतः?

मिथ्यादृष्टीनां प्रकाराः

## सूत्रम्—सदसतोरविशेषाद् यदृच्छोपलब्धेरुन्मत्तवत् ॥ १-३३ ॥

**टी०**—**सदसतोरित्यादि** । सद्-विद्यमानं असद्-अविद्यमानं तयोः सदसतोः-विद्यमानाविद्यमानयोः **अविशेषाद्**-यथावदवबोधाभावाद्, विद्यमाने हि पदार्थे उत्पादादिरूपेणान्यथाववबोध एकनयाश्रयेणेति, अविद्यमानेऽपि ललाटदेशाध्यास्यात्मा सामस्त्येन हृदयाधिष्ठानो वा, एवं सदसतोरविशेषादयथावबोधात् तदज्ञानं, **यदृच्छोपलब्धेरिति** अनालोचिता अर्थोपलब्धिस्तस्या यदृच्छोपलब्धेः स्पर्शादिपरिज्ञानं भवति, **उन्मत्तस्येव** ॥

**भा०**—**यथोन्मत्तः कर्मोदयादुपहतेन्द्रियमतिर्विपरीतग्राही भवति । सोऽश्वं गौरित्यध्यवस्यति गां चाश्व इति लोष्टं सुवर्णमिति सुवर्णं लोष्ट इति लोष्टं च लोष्ट इति सुवर्णं सुवर्णमिति तस्यैवमविशेषेण लोष्टं सुवर्णं सुवर्णं लोष्टमिति विपरीतमध्यवस्यतो नियत-**

मिथ्यादृष्टेः अज्ञानित्वे हेतुः

१ 'चाश्व इति' इति घ-पाठः, 'चाश्वमिति' इति ग-पाठः ।

**मज्ञानमेव भवति । तद्वन्मिथ्यादर्शनोपहतेन्द्रियमतेर्मतिश्रुतावधयोऽप्यज्ञानं भवन्ति ॥ ३३ ॥**

टी०—**यथोन्मत्तो** वायुपिशाचादिगृहीतः **कर्मोदयात्**—कर्मणां पुराकृतानां विपाकाद् यदा **उपहतेन्द्रियमतिः** उपहतेन्द्रिय उपहतमनाश्च संवृत्तो भवति तदा **विपरीतग्राही**—अन्यथावस्थितवस्तुपरिच्छेदी भवति, यतः स उन्मत्तः **अश्वं** सन्तं **गौरयमित्येव**-**मध्यवस्यति** एवं गृह्णात्युपदिशति च, **गां** च सतीं **अश्वोऽयमित्यध्यवस्यति** स्वयमन्येभ्य-श्चोपदिश्यत्यश्वोऽयमिति । सर्वपदार्थेष्वेव चोन्मत्तस्य यदृच्छयोपलब्धिर्न कतिपयेष्वित्येत-दुदाहरणभूयस्त्वेन कथयति—**लोष्टं सुवर्णमित्यादिना । लोष्टं** पृथिवीपरिणामं सन्तं मृदा-त्मकं **सुवर्णमित्यध्यवस्यति**, **सुवर्णं** च **लोष्टमित्यध्यवस्यति**, कदाचिच्च **लोष्टं लोष्टमेवा**-ध्यवस्यति, कदाचिद् वा **सुवर्णं सुवर्णमित्येव**, **तस्योन्मत्तस्यैवमुक्तेनाविशेषेण** अयथावदव-बोधेन **लोष्टं सुवर्णमित्येवं विपरीतमध्यवस्यतः नियतं**—निश्चितम**ज्ञानमेव**, कुत्सित-मेव तज्ज्ञानं **भवतीति** । सम्प्रति दार्ष्टान्तिके योजयति—**तद्वन्मिथ्यादर्शनेनोपहते-न्द्रियमनस्कस्य मतिश्रुतावधयस्त्रयोऽप्यज्ञानमेव भवन्ति**, एकनयमतसमाश्रयणे तु न सर्ववस्तुपरिच्छेदः, न च तावन्मात्रं तद् वस्तु, नयमतान्तरेणान्यथापि परिच्छेदात्, अतः अज्ञानता त्रयाणाम्, समग्रनयसामग्रीप्रत्ययेनैकैकनयावलम्बी प्रत्ययो निवर्त्यत इति विद्यते हि सर्वनयसामग्रीप्रत्ययो बाधक इति ॥ ३३ ॥

चारित्रानभिधाने हेतुः

**भा०—उक्तं ज्ञानम् । चारित्रं नवमेऽध्याये वक्ष्यामः । प्रमाणे चोक्ते । नयान् वक्ष्यामः । तद्यथा—**

टी०—प्रकृतपरिसमाप्तिं सूचयति—**उक्तं ज्ञानम्**, सम्यग्दर्शनज्ञानचारित्राणीत्युपक्षिप्तं त्रयमिति, सम्प्रत्यवसरप्राप्तं चारित्रं, तच्चेह लब्धावकाशमपि नाभिधीयते, यत इहाभिधा-यापि पुनः संवरप्रस्तावे 'आश्रवनिरोधः संवरः', 'स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजय-चारित्रैः' (अ० ९, सू० १-२) इत्यत्र चारित्रद्वारे संवरप्ररूपकेऽभिधातव्यमेवातो ग्रन्थस्य लाघवमिच्छता तत्रैव नवमेऽभिधास्यते इत्याह—**चारित्रं नवमेऽध्याये वक्ष्यामः** । 'प्रमाणनयैरधिगमः' (अ० १, सू० ६) इति च यदुक्तं तत्र प्रमाणमेतदेव पञ्चविधं सम्यग्दृष्टि-परिगृहीतं ज्ञानं, तदाह—**प्रमाणे च** प्रत्यक्षपरोक्षे **उक्ते**, नयास्तु पूर्वं नोक्ता इत्यतो **नयान् वक्ष्यामः**, ते च **यथा** स्वरूपतो व्यवस्थितास्तथा निर्दिश्यन्ते—

## सूत्रम्—नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दा नयाः ॥ १-३४ ॥

नयभेदाः

**भा०—नैगमः, सङ्ग्रहः, व्यवहारः, ऋजुसूत्रः, शब्द इत्येते पञ्च नया भवन्ति ॥ ३४ ॥**

टी०—**नैगमेत्यादि** । कृतद्वन्द्वसमासानां पञ्चानामपि प्रथमाबहुवचनान्तता । **नया**

१ 'नयानत्र' इति ख-पाठः ।

इति च अनेकधर्मकदम्बकोपेतस्य वस्तुन एकेन धर्मेणोन्नयनमवधारणात्मकं नित्य एवानित्य एवेत्येवंविधं नयव्यपदेशमास्कन्दति, स चाध्यवसायविशेष इति। निगम्यन्ते–परिच्छिद्यन्ते इति निगमाः–लौकिका अर्थाः, तेषु निगमेषु भवो योऽध्यवसायो ज्ञानाख्यः स

नैगमस्य निर्देशः

**नैगमः**। स च सामान्येनापि व्यवहरति सामान्यबुद्धिहेतुना सामान्यवचनहेतुना च, अत्यन्तं भेदेभ्योऽन्यत्वरूपेण सत्तामात्रेण, तथा विशेषेणापि विशेषबुद्धिहेतुना विशेषवचनहेतुना च अत्यन्तं सामान्यादन्यत्वरूपेण व्यवहरति परमाणुनिष्ठितेन, तथा सामान्यविशेषेणापि गवादिना सर्वगोपिण्डेष्वनुवृत्त्यात्मकेन अश्वादिव्यावृत्त्यात्मकेन च व्यवहरति, यथा लोको व्यवहरति तथाऽनेन व्यवहर्तव्यमिति, लोकश्चोपदिष्टैः प्रकारैः समस्तैर्व्यवहरति। प्रवचने च वसतिप्रस्थकनिदर्शनद्वयेन विभावितः काणभुजराद्धान्तहेतुरवगन्तव्यः। अभेदेन सङ्ग्रहात् सर्वस्य सङ्गृह्णाति इति **सङ्ग्रहः**।

सङ्ग्रहस्य स्वरूपम्

यदि भवनाभिसम्बद्धस्यैव भावस्य भावत्वमभ्युपगम्यते ततः परिसमापितात्मस्वरूपित्वाद् भावस्य भ्रान्तिसमुपनिबन्धनघटादिविकल्पप्रकल्पनानर्थक्यम्, यदि घटादि वस्त्वपि भवनप्रवृत्तितन्त्रमेवेत्येवं सति भाव एव, तदनर्थान्तरत्वात् तत् स्वात्मवत्, भवनार्थान्तरत्वे वा व्योमोत्पलादिवदसत्त्वं विकल्पानां रासभविषाणादिसत्त्वं वा घटादिवद् भवनार्थान्तरत्वात्, एतद्दर्शनपुरस्सरा एव च सर्वनित्यत्वैकत्वकारणमात्रत्वादिवादाः कालपुरुषस्वभावदैवादयश्चेति भावः। निश्चयासद्गृहीतानां विधिपूर्वकमवहरणं **व्यवहारः**। यदि घटादिभेदश्रुत्या स्वसामान्यानुबद्धस्य

व्यवहारस्य व्याख्या

निरस्तसामान्यान्तरसम्बन्धस्य श्रूयमाणत्वानुगुणमेव ग्रहणं न स्यात्, किन्तु सर्वव्यपदेशविशेषाभिव्यङ्ग्यो भाव एव तेन तेन रूपेणाभिव्यज्यते, ततो घटाद्यन्यतरभेदश्रुतौ सर्वरूपभेदभावप्रतीतिप्रसङ्गस्ततश्च घटपटोदकादिरूपव्यतिकरभावान्निश्चयाभावप्रसङ्गः, उपदेशक्रियोपभोगापवर्गव्यवस्थादीनां चाभावात् सर्वसंव्यवहारोच्छेदः, सर्वविशेषव्याकरणे च निर्निबन्धनभवनाभावाद् भावाभाव एव, अविशेषत्वाभेदत्वानिरूप्यत्वादितश्च[3] नैवासौ भावः खरविषाणादिवत्, तस्माद् व्यवहारोपनिपतितसामान्योपनिबन्धनं तु यदेव यद् यदा द्रव्यं पृथिवीघटादि व्यपदिश्यते तदेव तत् तदा त्रैलोक्याविभिन्नरूपं सततमवस्थितापरित्यक्तात्मसामान्यं महासामान्यप्रतिक्षेपेण संव्यवहारमार्गमास्कन्दतीति। एवंविधवस्तूपनिबन्धनैव च वर्णाश्रमप्रतिनियतरूपा यमनियमगम्यागम्यभक्ष्याभक्ष्यादिव्यवस्था, कुम्भकारादेश्च मृदानयनावमर्दनशिवकस्थासकादिकरणप्रवृत्तौ वेतनकादिदानस्य साफल्यम्, अव्यवहार्यत्वाच्च शेषमवस्तु, व्योमेन्दीवरादिवदिति। ऋजु–सममकुटिलं सूत्रयति ऋजु

ऋजुसूत्रस्य विचारः

वा श्रुतम् आगमोऽस्येति सूत्रपातनवद् वा **ऋजुसूत्रः**, यस्मादतीतानागतवक्रपरित्यागेन वर्तमानपदवीमनुधावति, अतः साम्प्रतकालावरुद्धपदार्थत्वात् ऋजु-

१ 'निश्चितेन' इत्यपि पाठः। २ 'भावनिश्चया०' इति क-ग-पाठः। ३ 'दितश्च' इति ग-पाठः।

सूत्रः, एष च भावविषयप्रकारातीतानागतविषयवचनपरिच्छेदे प्रवृत्तः सर्वविकल्पातीतातिसम्प्रमुग्धसङ्ग्रहग्रहाविशिष्टत्वाद् व्यवहारस्यायथार्थतां मन्यमानः अचरणपुरुषगरुडवेगव्यपदेशवद् वतमानक्षणसमवस्थितिपरमार्थवस्तु व्यवस्थापयति, अतीतानागताभ्युपगमस्तु खरविषाणास्तित्वाभ्युपगमान्न भिद्यते, दग्धमृतापध्वस्तविषयश्चानाश्वासो न कस्यचिदपि स्यात्, अघटादिलक्षणमृदाद्यनर्थान्तरत्वाच्च घटादिकालेऽपि घटादितैव स्यात्, न च तदेव तदेकं मृद् द्रव्यमन्यथा वर्तते, किं तर्हि ? अन्यदेव, अन्य[1]प्रत्ययवशाद् वाऽन्यथोत्पद्यत इति न पिण्डादिक्रियाकाले कुम्भकारव्यपदेशः, यदि चान्यदपि कुर्वन्नन्यस्य कर्तेत्युच्यते पटादिकरणप्रवृत्तोऽपि प्रत्याख्यातविज्ञानान्तरसम्बन्धः स्यादेव कुम्भकारः, ततश्चाशेषलोकव्यवहारोपरोध इत्यतः पूर्वापरभागवियुतः सर्ववस्तुगतो वर्तमानक्षण एव सत्यः, नातीतमनागतं चास्तीति, एतद्दर्शननिबन्धनं चैतदुपदिश्यते, "पिब च खाद च" इत्यादि "एतावानेष पुरुषः" इत्यादि वेति । शब्दनयः—शब्द एव, सोऽर्थकृतवस्तुविशेषप्रत्या[2]ख्यानेन शब्दकृतमेवार्थविशेषं मन्यते, यद्यर्थाधीनो विशेषः स्यात् न शब्दकृतः, तेन घटवर्तमानकाले घट एव निर्विशेषः स्यात् कर्मकरणसम्प्रदानापादानस्वाम्यादिविशेषान् नाप्नुयात्, ततश्च घटं पश्यत्येवमादिकारककृतो व्यवहारः छिद्येत, समानलिङ्गादिशब्दसमुद्भावितमेव वस्त्वभ्युपैति नेतरत्, नहि पुरुषः स्त्री, यदीष्येत वचनार्थहानिः स्यात्, भेदार्थं हि वचनम्, अतः स्वातिः तारा नक्षत्रमिति लिङ्गतः, निम्बाम्रकदम्बा वनमिति वचनतः, स पचति त्वं पचसि अहं पचामि पचावः पचामः इति पुरुषतः, एवमादि सर्वं परस्परविशेषव्याघातादवस्तु, परस्परव्याघाताच्चैवमाद्यवस्तु प्रतिपत्तव्यम्, यथा शिशिरो ज्वलनः, तथा विरुद्धविशेषत्वात् तटस्तटी तटमित्यवस्तु, रक्तनीलमिति यथा, यद् वस्तु तदविरुद्धविशेषमभ्युपयन्ति सन्तः यथा घटः कुटः कुम्भ इति । तथा चोच्यते—यत्र ह्यर्थो वाचं न व्यभिचरत्यभिधानं तत्, एवमयं समानलिङ्गसङ्ख्यापुरुषवचनः शब्दः, एतद्दर्शनानुगृहीतं चोच्यते—"अर्थप्रवृत्तितत्त्वानां शब्द एव निबन्धनम्[3]" इति, एवमेते मूलनयाः पञ्च नैगमादयः । अत्र चाद्याश्चत्वारोऽर्थप्रधानत्वादर्थतन्त्रत्वात्, शब्दनयः पुनरर्थोपसर्जनः शब्दप्रधानः शब्दतन्त्र इति ॥ ३४ ॥

अधुनैषां यथासम्भवं भेदप्रतिपिपादयिषयाऽऽह—

## सूत्रम्—आद्यशब्दौ द्वित्रिभेदौ ॥ १-३५ ॥

टी०—तत्र आद्यशब्दावित्यादि । तत्र[4] नैगमादिषु पञ्चसु यौ आद्यशब्दौ तौ यथासङ्ख्यं द्वित्रिभेदौ भवतः, आद्यौ च तौ शब्दौ चेति समानाधिकरणसमासाशङ्कायामाह—

आद्यशब्दनयभेदाः

---

१ 'अन्यत्प्रत्यय' इति ख-ग-पाठः । २ 'ख्यातेन' इति ख-पाठः । ३ अस्योल्लेखो हरिकारिकायां शब्दाद्वैते । ४ 'तत्र आद्यशब्दौ' इति ग-पाठः ।

**भा०**—आद्य इति सूत्रक्रमप्रामाण्यान्नैगममाह । **स द्विभेदो-देशपरिक्षेपी सर्वपरिक्षेपी चेति । शब्दस्त्रिभेदः-साम्प्रतः, समभिरूढः**, एवम्भूत इति ॥

**टी०**—आद्य इति **सूत्रक्रमे**त्यादि । आदौ भव आद्यः इत्यनेन सूत्रकारः कमाह?। उच्यते-**नैगमं**, कुत इति चेत्? **सूत्रक्रमप्रामाण्यात्** अर्थसूचनात् सूत्रं नैगमादि **क्रमः**-परिपाटी तस्य **प्रामाण्य**मेवमाश्रयणं तस्मान्नैगमनयं ब्रवीति, **स** आद्यो नैगमो **द्विभेदो** द्वौ भेदावस्येति द्विभेदः, तौ च भेदावाचष्टे-**देशपरिक्षेपी सर्वपरिक्षेपी च** । देशो-विशेषः परमाण्वादिगतस्तं परिक्षेप्तुं शीलमस्येति देशपरिक्षेपी, विशेषग्राहीत्यर्थः । **सर्वपरिक्षेपी** सर्व-सामान्यम् एकं नित्यं निरवयवादिरूपं तत् परिक्षेप्तुं शीलमस्य स सर्वपरिक्षेपी, सामान्यग्राहीतियावत् । सामान्यविशेषरूपस्तु नोक्तः, अनुवृत्तिलक्षणश्चेत् सामान्यं, व्यावृत्तिलक्षणश्चेत् विशेषः, ततोऽन्यस्याभावात् । अथवा आद्यन्तयोर्ग्रहणात् तन्मध्यगतस्यापि ग्रहणम् । **शब्दस्त्रिभेद** इति शब्दनयस्त्रिभेदः त्र्यंश इति, तानाह-**साम्प्रत** इत्यादिना,

नैगमस्य द्वैविध्यम्

**साम्प्रतं**-वर्तमानं भावाख्यमेव वस्त्वाश्रयति यतोऽतः **साम्प्रतः**, सम्प्रतिकाले यद् वस्तु भवत् तत् साम्प्रतं तद्वस्त्वाश्रयन् साम्प्रतोऽभिधीयते ॥ ननु च 'कालाट्ठु(ट्ठ?)ञ्' (पा० ४।३।११) इति साम्प्रतिक इति भवितव्यम्, नैष दोषः, वर्तमानक्षणवर्तिवस्तुविषयोऽध्यवसायस्तद्भवः शब्दः साम्प्रतः, स्वार्थिको वा प्रज्ञादित्वात् । एष च मौलशब्दनयाभिप्रायाविशिष्ट इति न पृथगुदाहरणैर्विभावितः । यां यां संज्ञामभिधत्ते तां तां समभिरोहतीति **समभिरूढः**, सोऽभिदधाति-यदि लिङ्गमात्रभिन्नमवस्तु, विसंवादित्वात् रक्तनीलतादिवत्, एवं सति मूलत एव भिन्नशब्दं कथं वस्तु स्यात्? शब्देन ह्यर्थो निरुक्तीक्रियते एतस्मान्निरुक्तादेष इति, यत्र तद्भेदस्तद्भिन्नमेव, यथा तु पूर्वनयेनैकं कृत्वोच्यते इन्द्रशक्रादि तथा यदवस्तु, घटज्वलनादिवद् भिन्ननिमित्तत्वात्, अनयोरेकत्वेनावस्तुता । एवं घटकुटयोरपि चेष्टाकौटिल्यनिमित्तभेदात् पृथक्ता, तथा प्रकृतिप्रत्ययोपात्तनिमित्तभेदाद् भिन्नौ शक्रेन्द्रशब्दावेकार्थौ न भवतः, विविक्तनिमित्तावबद्धत्वात् गवाश्वशब्दवत् । अथापि प्रतीतत्वादसंप्रमोहाल्लोके चैवं निरूढत्वात् इन्द्रशब्दस्य पुरन्दरादयः पर्याया इत्येतदनुपपन्नम्, एवं हि सामान्यविशेषयोरपि पर्यायशब्दत्वं स्यादेव, यतः प्लक्ष इत्युक्ते द्राक् वृक्षेऽस्ति सम्प्रत्ययः, अस्तित्वासम्प्रमोहे च संज्ञान्तरकल्पनायामिहापि तद्युक्तादनुक्तप्रतिपत्तौ सत्यां पर्यायत्वप्रसङ्गः प्रविश पिण्डीं, भक्षयेत्यस्य गमात्, तथाऽस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्तीति गम्यते, वृक्षः प्लक्षोऽस्तीति गम्यते, न्यायादस्तिः पर्यायः प्राप्तः, तस्माद् भेदः साधीयान् दन्तिहस्तिनोश्चैकत्वाद् दन्तहस्तैकत्वप्रसङ्ग इति । एवं संज्ञान्तरोक्तेः संज्ञा-

शब्दस्य त्रैविध्यम्

१ 'किमाह' इति क-ख-पाठः । २ 'गमनात्' इति क-ख-पाठः ।

न्तराभिधानमवस्त्विति प्रतिपादिते एवम्भूतनय आह–निमित्तं क्रियां कृत्वा शब्दाः प्रवर्तन्ते, नहि यदृच्छाशब्दोऽस्ति, अतो घटमान एव घटः, कुटंश्च कुटो भवति, पूर्दारणप्रवृत्त एव पुरन्दरः, यथा दण्डसम्बन्धानुभवनप्रवृत्तदासस्यैव दण्डित्वम्, अन्यथा व्यवहारलोपप्रसङ्गः। न चासौ तदर्थः, अनिमित्तत्वाद् यथा बहुत्वैकवचनम्, इति समुच्चये परिसमाप्तौ च ॥

**भा०–अत्राह—किमेषां लक्षणमिति ?। अत्रोच्यते—**

टी०–अत्राहेत्यादि। अस्मिन्नवसरे नैगमादीनामध्यवसायविशेषाणां लक्षणजिज्ञासया विविक्तचिह्नपरिज्ञानाभिप्रायेणाह–**किं लक्षणमेषामिति**। **अत्रोच्यते**–लक्षणम्—

नैगमलक्षणम् **भा०–निगमेषु येऽभिहिताः शब्दास्तेषामर्थः शब्दार्थपरिज्ञानं च देशसमग्रग्राही नैगमः ॥**

टी०–**निगमेष्वित्यादि**। न चैतानि सूत्राण्य[1]वृत्तित्वात्, कैश्चि[2]त् पुनर्भ्रान्त्या सूत्राणीति प्रतिपन्नम्, तत्र नैगम इत्यस्यावयवप्रविभागेन व्याख्यानं–निश्चयेन गम्यन्ते–उच्चार्यन्ते–प्रयुज्यन्ते येषु शब्दास्ते निगमा–जनपदाः तेषु **निगमेषु**–जनपदेषु **ये** इत्यक्षरात्मकानां ध्वनीनां सामान्यनिर्देशः **अभिहिता**–उच्चारिताः **शब्दा**–घटादयस्**तेषामर्थो**–जलधारणाहरणादिसमर्थः, **शब्दार्थपरिज्ञानं चे**ति शब्दस्य घटादिरर्थोऽभिधेयस्तत्परिज्ञानम्–अवबोधः, घट इत्यनेनायमर्थ उच्यते अस्य चार्थस्य अयं वाचक इति, यदेवंविधमध्यवसायान्तरं स **नैगमः**, स सामान्यविशेषावलम्बीत्येतद् दर्शयति–**देशसमग्रग्राहीति**। यदा हि स्वरूपतो घटमयं निरूपयति तदा सामान्यघटं सर्वसमानव्यक्त्याश्रितं घट इत्यभिधानप्रत्ययहेतुमाश्रयत्यतः समग्रग्राहीति। तथा विशेषमपि सौवर्णो मृण्मयो राजतः श्वेत इत्यादिकं विशेषं निरूपयत्यतो देशग्राहीति भण्यते **नैगमनयः** ॥

सम्प्रति सङ्ग्रहस्य लक्षणमाह—

सङ्ग्रहलक्षणम् **भा०–अर्थानां सर्वैकदेशग्रहणं सङ्ग्रहः ॥**

टी०—**अर्थानामित्यादि**। **अर्थानां**–घटादीनां **सर्वैकदेशग्रहणमिति** सर्वं–सामान्यं एकदेशो–विशेषः तयोः सर्वैकदेशयोः–सामान्यविशेषात्मकयोरेकीभावेन ग्रहणम्–आश्रयणमेवंविधोऽध्यवसायः **सङ्ग्रहो** भण्यते। एकीभावेन ग्रहणमेवं द्रष्टव्यम्—यौ हि सामान्यविशेषौ नैगमाभिमतौ तौ सम्पिण्ड्य सङ्ग्रहनयः सामान्यमेव केवलं स्थापयति सत्तास्वभावम्, यतः सत्तातो न व्यतिरिच्यते विशेषः ॥

व्यवहारलक्षणाभिधित्सयाऽऽह—

व्यवहारलक्षणम् **भा०–लौकिकसम उपचारप्रायो विस्तृतार्थो व्यवहारः ॥**

टी०–**लौकिकेत्यादि**। लोके–मनुष्यादिस्वभावे विदिताः लौकिकाः–पुरुषास्तै

[1] 'सूक्ष्माण्य' इति ख–पाठः। [2] 'किंचित्' इति ख–ग–पाठः।

**समः**–तुल्यः, यथा लौकिका विशेषैरेव घटादिभिर्व्यवहरन्ति तथाऽयमपीत्यतस्त त्समः, **उपचारप्राय** इति। उपचारो नामान्यत्र सिद्धस्यार्थस्यान्यत्राध्यारोपो यः, यथा कुण्डिका स्रवति, पन्था गच्छति, उदके कुण्डिकास्थे स्रवति कुण्डिका स्रवतीत्युच्यते, पुरुषे च गच्छति पन्था गच्छतीति। एव**मुपचारप्राय** उपचारबहुल इत्यर्थः। विस्तृतो--विस्तीर्णोऽनेकोऽर्थो ज्ञेयो यस्य स **विस्तृतार्थः** अध्यवसायविशेषो **व्यवहार** इति निगद्यते ॥

ऋजुसूत्रलक्षणव्याचिख्यासया[1] आह—

ऋजुसूत्रलक्षणम् **भा०—सतां साम्प्रतानामर्थानामभिधानपरिज्ञानमृजुसूत्रः॥**

**टी०—सतामि**त्यादि। **सतां**–विद्यमानानां, न खपुष्पादीनामसतां, तेषामपि **साम्प्रतानां**--वर्तमानानामितियावत् **अर्थानां** घटादीनां **अभिधानं**–शब्दः **परिज्ञानम्**–अवबोधो विज्ञानमितियावत्, अभिधानं च **परिज्ञानं** चाभिधानपरिज्ञानं यत् स भवति **ऋजुसूत्रः**। एतदुक्तं भवति–तानेव व्यवहारनयाभिमतान् विशेषानाश्रयन् विद्यमानान् वर्तमानक्षणवर्तिनोऽभ्युपगच्छन्नभिधानमपि वर्तमानमेवाभ्युपैति नातीतानागते, तेनानभिधीयमानत्वात् कस्यचिदर्थस्य, तथा परिज्ञानमपि वर्तमानमेवाश्रयति, नातीतमागामि वा, तत्स्वभावानवधारणात्, अतो वस्त्वभिधानं विज्ञानं चात्मीयं वर्तमानमेवान्विच्छन्नध्यवसायः स ऋजुसूत्र इति ॥

शब्दनयस्य त्रिभेदस्य लक्षणप्रचिकाशयिषया आह—

शब्दलक्षणम् **भा०—यथार्थाभिधानं शब्दः ॥**

**टी०—यथे**ति। येन कारणेन भावरूपेण नामस्थापनाद्रव्यवियुतेनार्थो घटादिर्यथार्थः तस्याभिधानं शब्दः **यथार्थाभिधानं**, तदाश्रयी योऽध्यवसायः स **शब्दनय**तयाऽभिधीयते। वर्तमानमात्मीयं विद्यमानं भावघटमेवाश्रयति नेतरानिति ॥

इदानीमस्य शब्दनयस्य यत् पुरस्तात् त्रैविध्यं दर्शितं 'शब्द–स्त्रिभेदः साम्प्रतः, समभिरूढ एवम्भूत' इति, अस्याद्यभेदलक्षणोद्विभावयिषया[2] आह—

साम्प्रतलक्षणम् **भा०—नामादिषु प्रसिद्धपूर्वाच्छब्दादर्थे प्रत्ययः साम्प्रतः ॥**

**टी०—नामे**त्यादि। नामस्थापनाद्रव्यभावेषु नम्यमाने वस्तुनि घटादौ स्थाप्यमाने वाऽऽकारात्मना द्रव्ये च गुणसंद्रावात्मके भावे च प्रतिविशिष्टपर्यायरूपे **प्रसिद्धपूर्वात्** प्रसिद्धो–निर्ज्ञातः पूर्वमिति–संज्ञासंज्ञिसम्बन्धकाले प्रसिद्धोऽसौ घटादिशब्दोऽभिधानतया तेषां नामादीनामस्य घटादेरर्थस्यायं वाचक इत्येवं प्रसिद्धपूर्वाद् वाच्यवाचकलक्षणसम्बन्धसङ्केतनाद् योग्यतालक्षणसम्बन्धावगतेर्वा, **शब्दा**दिति, अभिधानात् नाम्न इतियावत् **अर्थे**–अभिधेये यः **प्रत्ययो**–विज्ञानं स **साम्प्रतो** नयः। एतदुक्तं भवति–नामादिषु प्रतिविशिष्टवर्तमानपर्यायापन्नेष्वेव प्रसिद्धो वाचकतया यः शब्दस्तस्माच्छब्दात् भावाभिधा-

---

१ 'लक्षणाचिख्यासया' इति ग–टी–पाठः। २ 'लक्षणान्विभावयिषया' इति पाठः।

यिनः तद्वाच्येऽर्थे भावरूपे प्रवृत्तोऽध्यवसायः साम्प्रताख्यामासादयति। यतो भाव एव शब्दाभिधेयो भवति, तेनाशेषाभिलषितकार्यकरणादिति ॥

अधुना समभिरूढलक्षणं दर्शयन्नाह—

समभिरूढलक्षणम् **भा०—सत्स्वर्थेष्वसङ्क्रमः समभिरूढः ॥**

**टी०—सत्स्वर्थेषु** इत्यादि। **सत्सु**—विद्यमानेषु वर्तमानपर्यायापन्नेष्वित्यर्थः, **अर्थेषु**—घटादिषु **असङ्क्रम** इत्यन्यत्रागमनं शब्दस्य यत् सोऽसङ्क्रमः। यथा घट इत्यस्य शब्दस्य विद्यमानं घटं चेष्टात्मकं विरहय्य नान्यत्र कुटाद्यर्थे घटाभिधानसामर्थ्यमस्ति, अनभिधेयत्वात्, यदि चास्य घटशब्दस्य कुटादिरर्थोऽभिधेयो भवेदेवं सति यथोक्ताः सर्वसङ्करत्वादयो दोषा उपजायेरन् नित्यतो न शब्दान्तराभिधेयोऽर्थोऽन्यस्य शब्दस्याभिधेयो भवति, एवमसङ्क्रमगवेषणपरोऽध्यवसायः **समभिरूढः** ॥

एवम्भूतनयलक्षणोन्निनीषया आह—

एवंभूतलक्षणम् **भा०—व्यञ्जनार्थयोरेवम्भूत इति ॥**

**टी०—व्यञ्जनेत्यादि** । व्यञ्जनं—शब्दस्तस्यार्थः—अभिधेयो वाच्यम् तयो**र्व्यञ्जनार्थयोरेवं** संघटनं करोति घट इति यदिदमभिधानं तच्चेष्टाप्रवृत्तस्यैव जलधारणाहरणसमर्थस्य वाचकं, चेष्टां च जलाद्यानयनरूपां कुर्वाणो घटो मतः, न पुनः क्रियातो निवृत्तः, इत्थं यथार्थतां प्रतिपद्यमानोऽध्यवसाय एवम्भूतोऽभिधीयते इति ॥

**भा०—अत्राह—उद्दिष्टा भवता नैगमादयो नयाः। तत्र[1] नया इति कः पदार्थ इति ?। अत्रोच्यते—नयाः प्रापकाः कारकाः साधका निर्वर्तका निर्भासका उपलम्भका व्यञ्जका इत्यनर्थान्तरम् ॥**

नयस्य शब्दार्थः

**टी०—अत्रावकाशे** चोदकः प्रश्नयति—**उद्दिष्टाः**—अभिहिताः लक्षणतस्त्वया—**नैगमादयः** पञ्च। तत्र नैगमादिसूत्रे, **नया** इति यदभिधानं तस्यानेककारकसन्निधाने सति कः प्रत्ययार्थो ग्राह्य इति संशयानः पृच्छति—**तन्नया इति कः पदार्थः** ?। तदित्यनेन बहुवचनान्तमभिधानं नया इत्येतन्निर्दिशति, **नया इति तु** इतिशब्दः नया इत्यस्य पदार्थविपर्यासकृत्, नया इत्यस्य शब्दस्य कः पदार्थः॥ ननु च कोऽर्थ इयता सिद्धः ? तत्र पदार्थ इति पदग्रहणमतिरिच्यते ?। उच्यते—शब्दस्य हि सिद्धोऽर्थो वाच्यो गम्यश्च, यथा गुड इत्युक्ते द्रव्यं वाच्यम्, माधुर्यादयस्तु गम्याः, एवमिहापि वाच्योऽर्थो यः कश्चित् कर्त्रादिरूपः शेषस्तु गम्य इति, तत्रेह वाच्यमर्थं पदग्रहणेन प्रश्नयति, पदस्यार्थो वाच्यः क इति, न तु गम्यमानम्, सूरिराह—**अत्रोच्यते—नयाः** प्रापका इत्यादिना, कर्त्रर्थः प्रदर्श्यते—नयन्त इति नयाः, सामान्यादिरूपेणार्थं प्रकाशयन्तीत्यर्थः। प्रापका इत्यनेन नयतेरन्तर्णीतण्यर्थता ख्यायते, प्रापयन्ति आत्मनि तं तमर्थं स्वाभिमताभिरुपपत्तिभिरिति। कुर्वन्तीत्यादिभिस्तु

१ 'वाच्यः' इति ख-पाठः। २ 'तन्नया' इति ध-पाठः, स एव च टीकाकारसम्मतः।

नयतेरर्थान्तरतापि शक्या कल्पयितुमित्येतद् दर्शयति–कुर्वन्ति तद् तद् विज्ञानमात्मन इति **कारकाः**, अपूर्वं प्रादुर्भावयन्ति विज्ञानमितियावत्। तथा सिद्धिवचनोपायं साधयन्ति शोभनामन्योन्यव्यावृत्त्यात्मिकां विज्ञप्तिं जनयन्त्यतः **साधकाः**। तथा वर्तमानार्थोऽपि निर्वर्तका इति निश्चितेन स्वेनाभिप्रायेणोत्पन्नाः तेऽध्यवसायविशेषा नाशमनासादयन्तो **निर्वर्तका** इति। तथा दीप्त्यर्थोऽप्ययम्। **निर्भासकाः** वस्त्वंशज्ञापनपरत्वात्। तथोपलब्ध्यर्थताऽप्यस्य उपलम्भका इति दर्शयत्यनेन, प्रतिविशिष्टक्षयोपशमापेक्षत्वात् तांस्तानर्थविशेषानत्यन्तसूक्ष्मानवगाहमानाः **उपलम्भका** इति। व्यञ्जनार्थोऽप्ययं **व्यञ्जका** इत्यनेन कथयति, व्यञ्जयन्ति–स्पष्टयन्ति–स्फुटीकुर्वन्ति स्वाभिप्रायेण वस्तु, यथाऽऽत्मस्वभावे स्थापयन्तीत्यर्थः। एवमेते किञ्चिद् भेदं प्रतिपन्ना अपि शब्दा भाष्यकारेणानर्थान्तरमिति व्यपदिष्टा **इत्यनर्थान्तरमिति** ॥

सकर्मकाणां प्राप्येण कर्मणा भवितव्यमिति दर्शयति—

**भा०—जीवादीन् पदार्थान् नयन्ति प्राप्नुवन्ति कारयन्ति साधयन्ति निर्वर्तयन्ति निर्भासयन्ति उपलम्भयन्ति व्यञ्जयन्तीति नयाः ॥**

टी०—**जीवादीन् पदार्थान् नयन्तीत्यादि**। अत्र च णीञः प्रयोगो नयतेरर्थ इति **जीवादीन्** शास्त्रप्रतिपाद्यान् सप्त **पदार्थान्**इत्यनेन वाच्यान् व्यपदिशति, न गम्यान्, **तान् नयन्ति इति नयाः**। नयन्तीत्यादिना च यः कर्ता दर्शितस्तमेवानन्यं क्रियातो दर्शयति, यतो नयाः नयन्त इत्यनेन कर्तुः प्राधान्यं क्रियायां गुणभाव इति कैश्चित् प्रतिपन्नं क्रियायाः प्राधान्यं कर्तुर्गुणभाव इति, इह तथा नात्यन्तिकः कर्तृक्रिययोर्भेदोऽस्तीति, यतः स एव पदार्थः कर्तेत्येव व्यपदिश्यते स्वतन्त्रत्वात्, तथा स एव च साध्यात्मना वर्तमानः क्रियेत्याख्यायते, अतः कर्तृक्रिययोरनेनात्यन्तिकं भेदं निरस्यति–**नयन्ति** इत्यादिना ॥

नयशब्दार्थे निरूपिते चोदकोऽचूचुदत्—

नयानामध्यवसानान्तरता

**भा०—अत्राह–किमेते तन्त्रान्तरीया वादिन आहोस्विद् स्वतन्त्रा एव चोदकपक्षग्राहिणो मतिभेदेन विप्रधाविता इति ?। अत्रोच्यते–नैते तन्त्रान्तरीयाः, नापि स्वतन्त्राः मतिभेदेन विप्रधाविताः। ज्ञेयस्य त्वर्थस्याध्यवसायान्तराण्येतानि।**

टी०—य एते नैगमादयो वस्त्वंशपरिच्छेदव्यापृता नयाः **किमेते तन्त्रान्तरीया** इत्यादि, तन्यन्ते–विस्तार्यन्तेऽस्मिन्ननेन वा जीवादयः पदार्थाः तन्त्रं–जैनप्रवचनं तस्मादन्यत् काणभुजादिशास्त्रं तन्त्रान्तरं तस्मिन् भवाः कुशला वा **तन्त्रान्तरीयाः**। गहादित्वाच्छः। स्वशास्त्रसिद्धानर्थानवश्यं वदन्तीति **वादिनः**, तत् किं वैशेषिकादयो वादिनो नया भण्यन्ते ? **आहोस्वित्** अथवेत्यस्य पक्षान्तरसूचकस्य निपातस्यार्थे प्रयुक्तः। **स्वतन्त्रा एवेति**। स्वं–आत्मीयं तन्त्रं–शास्त्रं येषां ते स्वतन्त्राः, स्वप्रधानाः जिनवचनमेव

१ 'तानासादयन्तो' इति क–ख–पाठः।

स्वबुद्ध्या विभजन्त एवमाहुः । **चोदकपक्षग्राहिण इति ।** चोदको–दुरुक्तानुक्तादिसूचकस्तस्य पक्षो–विषयः तं चोदकपक्षं ग्रहीतुं शीलमेषामिति चोदकपक्षग्राहिणः **मतिभेदो**–बुद्धिभेदस्तेन **विप्रधाविताः**,अयथार्थनिरूपका इतियावत् । एवं चोदयतोऽयमभिप्रायः–यद्ययं तन्त्रान्तरीयत्वमेषां दर्शयिष्यति नास्य वक्ष्यमाणो विप्रतिपत्तिदोष आपत्स्यते, अथ स्वतन्त्रा एवेति निश्चेष्यति तथा सति नैव स्वेच्छास्वतन्त्राणामभ्यनुज्ञातो वस्त्वंशोऽभ्युपेयो वस्तुभागश्च प्रोज्झ्यः, यस्मादेकस्यापि पदस्यारोचनान्मिथ्यादर्शनमिति । एवंविधदोषोपचिक्षिप्सया चोदयति ।। अथ पक्षान्तरमाश्रयिष्यति तत्राप्यस्य सुखेन विप्रतिपत्तिदोषं चोदयिष्यामीति मत्वा प्रश्नयति, सूरिस्तूभयमप्येतत् परित्यजन् पक्षान्तरमाश्रयते अत्रोच्यते इति ।। **नैते तन्त्रान्तरीयाः, नापि स्वतन्त्राः,** किं तर्हि ? तदाह–**ज्ञेयस्ये**त्यादि । विज्ञानगम्यस्य जीवादेः स्वसंवेद्यस्य वाच्यस्यार्थस्य घटपटादेः **अध्यवसायान्तराणि** विज्ञानभेदाः, आधिक्येनावसीयन्ते–परिच्छिद्यन्ते ततो येन सोऽध्यवसायः–प्रत्ययो विज्ञानम् अन्तराणीति भेदाख्यानम्, **एतानीति** नैगमादीनि पञ्च, एतत् कथितं भवति–वस्त्वेवानेकधर्मात्मकमनेकाकृतिना ज्ञानेन निरूप्यत इत्यतः स्वशास्त्रनिरूपणमेवेदम्, एतच्च दर्शयति—

घटे नयावतारः

**भा०—तद्यथा—घट इत्युक्ते योऽसौ चेष्टाभिनिर्वृत्त ऊर्ध्वकुण्डलौष्ठायतवृत्तग्रीवोऽधस्तात् परिमण्डलो जलादीनामाहरणधारणसमर्थ उत्तरगुणनिर्वर्तनानिर्वृत्तो द्रव्यविशेषस्तस्मिन्नेकस्मिन् विशेषवति तज्जातीयेषु वा सर्वेष्वविशेषात् परिज्ञानं नैगमनयः ।।**

**टी०—तद्यथेत्यादिना ।** यथा ह्येते एकवस्तुविषया विज्ञानविशेषास्तथोदाहरणेन भावयति–**घट इत्युक्ते** नैगमाध्यवसाय एवं मन्यते–**योऽसाविति** लोकसिद्धः, **चेष्टाभिनिर्वृत्त** इति धात्वर्थानुगतिमाविष्करोति, कुम्भकारचेष्टाभिनिर्वृत्तोऽर्थो निष्पन्नः । किमाकार इति चेद् ? अत आह–**ऊर्ध्वमित्यादि । ऊर्ध्वमुपरि कुण्डलौ** वृत्तावोष्ठौ यस्य **आयता**–दीर्घा **वृत्ता**–समपरिधिः ग्रीवा यस्य ऊर्ध्वकुण्डलौष्ठश्चासावायतवृत्तग्रीवश्चेति समानाधिकरणः, उपरि तावदेवमाकारः । अथ **अधस्तात्** किमाकार इत्यत आह–अधोभागे **परिमण्डलः**, समन्ताद् वृत्त इत्यर्थः । कस्य पुनः कार्यस्यासौ क्षम इत्याह–**जलादीनामित्यादि ।** जलघृतक्षीरादीनामा**हरणे**–देशाद् देशान्तरसञ्चारणे **समर्थः**–शक्तः आनीतानां च धारणे प्रत्यलः । **उत्तरेत्यादि** । पाकजरक्तादिगुणपरिसमाप्त्या निष्पन्नद्रव्यविशेष इति । न द्रव्यं सामान्यमात्रं, किं तर्हि ? **द्रव्यविशेषः,** परमार्थे सति, वाचा न संवृत्तिसतीति, **तस्मिन्** एवमात्मके **एकस्मिन् विशेषाः** शुक्लपीतादयः कनकरजतादयः खण्डहुण्डादयो वा तद्वति **तज्जातीयाः**–तत्प्रकाराः व्यावर्णितघटप्रकाराः तेषु च **सर्वेषु** लोकप्रसिद्धेषु **अविशेषात्** अभेदेन **परिज्ञानं**–निश्चितावबोधः **नैगमः** देशसमग्रग्राही नैगम इति, पूर्वाभिहितलक्षणप्रपञ्चोऽयं सामान्यविशेषवैचित्र्यप्रदर्शनार्थः ।।

---

१ 'एवं च' इति ख–ग–पाठः ।

अथ सङ्ग्रहः कथं घटमिच्छतीत्याह—

**भा०—एकस्मिन् वा बहुषु वा नामादिविशेषितेषु साम्प्रतातीतानागतेषु घटेषु सम्प्रत्ययः सङ्ग्रहः ॥**

टी०—एकस्मिन्नित्यादि । **एकस्मिन्** घटे **बहुषु** घटेषु **वा नामादिविशेषितेष्विति** नामस्थापनाद्रव्यभावघटेष्वित्यर्थः । **साम्प्रतेषु**-वर्तमानेष्वतीतेषु-अतिक्रान्तेष्वनागतेषु-आगामिषु घटेषु यः **सम्प्रत्ययः**-सामान्यं घटो घट इति परिज्ञानं **स सङ्ग्रहः**, यस्मात् सामान्यमेव घटादिरूपेण निर्भासते, न सामान्यादन्ये विशेषाः सन्ति ॥

व्यवहाराभिप्रायप्रकटनायाह—

**भा०—तेष्वेव लौकिकपरीक्षकग्राह्येषूपचारगम्येषु यथास्थूलार्थेषु सम्प्रत्ययो व्यवहारः ॥**

टी०—तेष्वित्यादि । एकद्विबहुत्वनामादिरूपेषु लोके विदिता लौकिकाः परीक्षकत्वेन ज्ञाताः **लौकिकपरीक्षकाः**-पर्यालोचकाः तेषां **ग्राह्याः**-आदेयाः जलाद्याहरणार्थं ये घटास्तेषु, **उपचारगम्येष्विति** लोकक्रियाधारेषु, **यथास्थूलार्थेष्विति** सूक्ष्मसामान्योपसर्जनेषु, यतोऽस्य विशेषैरेव व्यवहारो भूयसा, न सामान्येनेति ॥

ऋजुसूत्रनयमतं विवृणोति—

**भा०—तेष्वेव सत्सु साम्प्रतेषु सम्प्रत्ययः ऋजुसूत्रः ॥**

टी०—तेष्वेवेत्यादि । घटेषु **सत्सु**-विद्यमानेषु वर्तमानसमयावधिकेषु **सम्प्रत्ययः ऋजुसूत्र** इति ॥

अधुना साम्प्रताभिप्रायं निरूपयति—

**भा०—तेष्वेव साम्प्रतेषु नामादीनामन्यतमग्राहिषु प्रसिद्धपूर्वकेषु घटेषु सम्प्रत्ययः साम्प्रतः शब्दः ॥**

टी०—तेष्वेवेत्यादि । ऋजुसूत्राभिप्रेतेषु वर्तमानकालावधिकेषु नामस्थापनाद्रव्यभावघटानां ये वाचकाः शब्दास्ते चान्यतमग्राहिणः, यस्माद् यस्य शब्दस्य नम्यमानः पदार्थो वाच्यो न तस्य स्थापना, यस्य वा स्थापना न तस्य द्रव्यं, यस्य द्रव्यं न तस्य भावः इत्यतो **नामादीनां** घटानां ये शब्दाः अन्यतमं-नामस्थापनादिकं गृह्णन्ति तेऽन्यतमग्राहिणस्तेषु शब्देषु उच्चारितेष्वन्यतमग्राहिषु[1] यद् विज्ञानं स साम्प्रतः, ते शब्दा यदि प्रसिद्धाः पूर्वं भवन्ति-निर्ज्ञाताभिधेयसम्बन्धाः अस्येदं वाच्यमित्यनेन रूपेण, तथा गमका इत्येतदाह-**प्रसिद्धपूर्वकेषु**, प्रसिद्धः पूर्वो येषां प्रथमं सङ्केतस्ते प्रसिद्धपूर्वकास्तेषु नामादीनामन्यतमवाचकेषु **सम्प्रत्यय** इति ॥

समभिरूढमतोद्विभावयिषया आह—

1 'उच्चरितेषु' इति ख-पाठः ।

**भा०—तेषामेव साम्प्रतानामध्यवसायासङ्क्रमो वितर्कध्यानवत् समभिरूढः ॥**

टी०—**तेषामेव** घटानां सतां–विद्यमानानां वर्तमानकालावधिकानां सम्बन्धी योऽध्यवसायासङ्क्रमः स समभिरूढः, अध्यवसायो–विज्ञानं तस्य विज्ञानस्योत्पादकत्वाभिधानमप्यध्यवसायस्तस्या**सङ्क्रमः**–अन्यत्र वाच्येष्वप्रवृत्तिः, नहि घट इत्यस्याभिधानस्य कुटो वाच्यः, कुट इत्यस्य वा घट इति । अध्यवसायासङ्क्रमं च दृष्टान्तेन भावयति–**वितर्कध्यानवदिति** । अन्यतमैकयोगानामेकत्वं वितर्कमिति वक्ष्यति नवमेऽध्याये (सू०४१), वितर्कः श्रुतं, वितर्कप्रधानं ध्यानं वितर्कध्यानं तद्वत् ॥ नन्वाद्येऽपि शुक्लभेदे वितर्कप्रधानता समस्ति ? नैवम्, तत्र सङ्क्रमाभ्युपगमात् 'अविचारं द्वितीयम्' (अ०९,सू०४४) इति वचनात् एकत्ववितर्कपरिग्रह इति ॥

एवम्भूताभिप्रायमाविष्करोति—

**भा०—तेषामेव व्यञ्जनार्थयोरन्योन्यापेक्षार्थग्राहित्वमेवम्भूत इति ॥**

टी०—**तेषामेवेत्यादि** । **तेषामेवा**नन्तरनयपरिगृहीतघटानां यौ **व्यञ्जनार्थौ** तयोरन्योन्यापेक्षार्थग्राही योऽध्यवसायः स **एवम्भूतः** परमार्थः व्यञ्जनं वाचकः शब्दः, अर्थोऽभिधेयो वाच्यः । अथ का पुनरन्योन्यापेक्षा ?, यदि यथा व्यञ्जनं तथार्थो यथा चार्थस्तथा व्यञ्जनम्, एवं हि सति वाच्यवाचकसम्बन्धो घटते अन्यथा न, योग्यक्रियाविशिष्टमेव वस्तुस्वरूपं प्रतिपद्यत इति ॥

एवं भाविते नयानामभिप्राये चोदकः स्वाभिप्रायमभिव्यनक्ति—

**भा०—अत्राह–एवमिदानीमेकस्मिन्नर्थेऽध्यवसायनानात्वात् ननु विप्रतिपत्तिप्रसङ्ग इति । अत्रोच्यते—**

टी०—**एवमिदानीमेकस्मिन्नि**त्यादिना भाष्येण । **एवमिति** यथा प्रतिपादितैरेकवस्तुनि परस्परविलक्षणैर्भेदैः, **इदानीमि**त्येतत् पूर्वाभिहितनयवादकालापेक्षया प्रयुज्यते, एवमवस्थिते नयप्रस्थानेऽधुना इदमापनीपद्यते–**एकस्मिन्नर्थे** घटवस्तुनि, बहुष्वर्थेषु न दोषाशङ्काऽस्ति, प्रतिवस्तु नयप्रवृत्तेः, एकस्मिन् पुन**रध्यवसायनानात्वाद्** विज्ञानभेदात्, **ननु**-शब्दो मीमांसायां, मीमांसनीयमेतदेवं, **विप्रतिपत्तिप्रसङ्ग** इति, विरुद्धत्वप्रतीतिर्विप्रतिपत्तिस्तस्याः प्रसङ्गोऽनिष्टमितियावत्, न ह्येकमेव वस्तु सामान्यं सत् पुनर्विशेषो भवति, त्रिकालिकः[1] वर्तमानक्षणावधिको वा, नामादित्रयनिरासाद् वा भावमात्रं पर्यायशब्दानभिधेयो वा विशिष्टक्रियाविष्टो वा वस्तुविशेष इति, विरुद्धाः प्रतीतयः सकलाः प्रतीयन्त इति, न च विरुद्धप्रतीतिकः पदार्थो निश्चेतुं शक्यते, न चानिश्चयात्मकं तत्त्वज्ञानमित्याकुमारसिद्धिः । शास्त्रकारस्तु येनाभिप्रायेण ज्ञेयस्यार्थस्याध्यवसायान्तराण्येतानीत्युक्तवान् तं प्रचिकटयिषुराह–**अत्रोच्यते** विप्रतिपत्तिपरिहारः—

---

१ 'त्रैकालिकः' इति ख–पाठः ।

सर्वस्यैकत्वादि

**भा०-यथा सर्वमेकं सदविशेषात्। सर्वं द्वित्वं जीवाजीवात्मकत्वात्। सर्वं त्रित्वं द्रव्यगुणपर्यायावरोधात्। सर्वं चतुष्टयं चतुर्दर्शनविषयावरोधात्। सर्वं पञ्चत्वं पञ्चास्तिकायात्मकत्वात्। सर्वं षट्कं षड्द्रव्यावरोधादिति। यथैता न विप्रतिपत्तयोऽथ चाध्यवसायस्थानान्तराण्येतानि, तद्वन्नयवादा इति॥**

टी०-यथेत्यादि। सकलं जगदनेकावयवात्मकमपि सत्तामात्रव्याप्तेरविशेषादेकमुच्यते। एकं च सद् द्विधा, जीवाजीवमात्रविवक्षावशात्। कथं पुनरेकसङ्ख्याव्यवच्छिन्नं सद् द्वित्वसङ्ख्याया गोचरीभवति?, न च काल्पनिकमेतत्, अंशसद्भावात्, तस्मान्नास्ति विरोधः, एवं नयेष्वप्यविरोधप्रतिपत्तिः साधीयसीति। तथा तदेवैकं त्रिधा, द्रव्यगुणपर्यायेषु सर्वस्यावरुद्धत्वाद्, गुणपर्यायाणामन्वयि द्रव्यं, गुणा रूपादयः, पर्यायाः कपालादयः, सहभूत्वं क्रमभूत्वं चादाय भेदेनोपादानमिति। तथा तदेवैकं चतुर्धा, चक्षुर्दर्शनादिभिश्चतुर्भिः सर्वस्य विषयीकृतत्वात् तन्मात्रता। तथा तदेव पञ्चस्वभावं निरूप्यते, **पञ्चास्तिकायात्मकत्वात्**, एतदाह-**सर्वं पञ्चत्वमस्तिकायावरोधात्**, पञ्चस्वभावं सर्वमिदं जगत्, पञ्चभिरस्तिकायैरवरुद्धत्वात्, धर्माधर्माकाशजीवपुद्गलास्तिकायात्मकं यतः। तथा तदेव पञ्चस्वभावं षट्स्वभावं, षट्द्रव्यसमन्वितत्वात्, तदाह-**सर्वं षट्कं षड्द्रव्यावरोधात्**, सर्वं षड्स्वभावं जगत्, कुतः? षड्द्रव्यावरोधादिति। षड् द्रव्याणि कथम्? उच्यते-पञ्च धर्मादीनि कालश्चेत्येक इति। **यथा**-येन प्रकारेण **एताः** एकद्वित्रिचतुःपञ्चषडात्मिका अवस्थाः एकत्र जगत्युपादीयमाना **न** विरुद्धाः **प्रतिपत्तयो** भवन्ति, **अथ च** ज्ञेयस्य जगतः **अध्यवसायान्तराणि**-परिच्छेदकारिविज्ञानान्येकादिरूपेण, **तद्वत्** तेन प्रकारेण **नयानां वादा**-जल्पा अध्यवसायकृता न विरुध्यन्ते। एतत् कथयति-यो हि नाम यत्र वस्तुनि धर्मो न विद्यते स तत्र स्वेच्छयोपादीयमानस्तत्स्थेनापरेण धर्मेण विरोधं प्रतिपद्यते, यथाऽऽत्मनि अज्ञानिता उपादीयमाना ज्ञानरूपेणात्मस्थेन धर्मेण विरुद्धा सती त्यज्यते, नैवं नयेषु, यथा वा व्योम्नि मूर्तता तत्स्थेनापरेणामूर्तेन धर्मेण विरुद्धा सती विप्रतिपत्तिरुच्यते, नैवं नयेषु, यतो वस्तु सामान्यविशेषधर्मसमन्वितं कश्चित् केनचिदाकारेण परिच्छिनत्ति। यदि ह्यसन्नेवासौ धर्मस्तेन नयेन तत्र वस्तुन्यध्यारोप्येत स्याद् विप्रतिपत्तिप्रसङ्ग इति, न तु तथा।

**भा०-किंचान्यत्। यथा मतिज्ञानादिभिः पञ्चभिर्ज्ञानैर्धर्मादीनामस्तिकायानामन्यतमोऽर्थः पृथक् पृथगुपलभ्यते, पर्यायविशुद्धिविशेषादुत्कर्षेण, न च ता[2]नि विप्रतिपत्तयो भवन्ति, तद्वन्नयवादाः॥**

---

१ 'अस्तिकायावरोधात्' इति घ-पाठः। २ 'ता' इति घ-पाठः।

**टी०**–किञ्चान्यदित्यनेनोपपत्त्यन्तरमप्यस्ति विप्रतिपत्तिदोषस्य परिहारार्थमिति दर्शयति–**यथा मतिश्रुतावधिमनःपर्यायकेवलज्ञानैः पञ्चभिर्धर्माधर्माकाशजीवपुद्गलानामस्तिकायानामिति**, अस्तीति–त्रैकालिकसत्तासंसूचको निपातः, अभूवन् भवन्ति भविष्यन्ति च यतोऽतः सूच्यन्तेऽस्तीत्यनेन, काय इत्यनेन प्रदेशावयवबहुत्वमाचष्टे, वक्ष्यति पञ्चमे असङ्ख्येयाः प्रदेशाः (अ०५,सू०७) इत्यादि, अतोऽस्ति च ते कायाश्चेति, तेषा**मन्यतमः अर्थ** इति धर्मादिः, **पृथक् पृथगुपलभ्यत** इति, अन्यथा चान्यथा च परिच्छिद्यत इत्यर्थः ॥ ननु चैकस्वभावस्य धर्मादेरस्तिकायस्य मत्यादिज्ञानैरयुक्तोऽन्यथात्वेन परिच्छेद इत्येवं चोदिते आह–**पर्यायविशुद्धीत्यादि**। पर्याया–भेदाः–विज्ञानस्वभावा मत्यादिरूपाः तेषां विशुद्धिः–स्वच्छता स्वावरणापगमजनिता तस्याः पर्यायविशुद्धेर्विशेषो–भेदस्तस्मात् **पर्यायविशुद्धिविशेषाद् उत्कर्षेण**–प्रकर्षेण तैर्मत्यादिभिस्तेषामस्तिकायानां पृथक् पृथगुपलब्धिर्भवति, तद्यथा मतिज्ञानी मनुष्यपर्यायं वर्तमानं चक्षुरादिनेन्द्रियेण साक्षात् परिच्छिनत्ति, तमेव च श्रुतज्ञानी आगमानुमानस्वभावेन, तमेवावधिज्ञानी अतीन्द्रियेण ज्ञानेन, तमेव मनःपर्यायज्ञानी तस्य मनुष्यपर्यायस्य यः प्रश्ने प्रवर्तते तद्गतानि मनोद्रव्याणि दृष्ट्वा अनुमानेनैव तं मनुष्यपर्यायमवच्छिनत्ति, केवलज्ञानी पुनरत्यन्तविशुद्धेन केवलेनावबुध्यते। न चैता मत्यादिका विप्रतिपत्तयः–विरुद्धाः प्रतिपत्तयः, स्वसामर्थ्येन विषयपरिच्छेदात्, तद्वन्नयवादा इति किं नाश्रीयते?। अथवा पर्यायविशुद्धिविशेषादुत्कर्षेणेत्यन्यथा वर्ण्यते, पर्यायाणां–क्रमभुवां मनुष्यादीनां जीवास्तिकायादिसम्बन्धिनां मत्यादिभिर्ज्ञानैः पृथक् पृथगुपलब्धिर्भवति, कथं? प्रकर्षेण, कस्मादिति चेत्? उच्यते–विशुद्धिविशेषात् ज्ञानादीनां मत्यादीनां, यतो मतिज्ञानी मनुष्यादेर्जीवस्य काँश्चिदेव पर्यायान् परिच्छिनत्ति ततो बहुतरांश्च श्रुतज्ञानी जानीते, यतोऽभिहितं—"संखातीतेऽवि भवे"[1] ( **आव० नि०** ) इत्यादि। श्रुतज्ञानिनोऽपि सकाशाद् बहुतरानवधिज्ञानी पर्यवस्यति, विशुद्धिप्रकर्षात्, ततो मनःपर्यायज्ञानी, ततश्च सर्वात्मना केवलीति। न चैवमनेकधा परिच्छेदप्रवृत्ता मत्यादिका ज्ञानशक्तयो विप्रतिपत्तिव्यपदेशमश्नुवते,तद्वन्नयवादा इति किं नाभ्युपेयते?॥

उपपत्त्यन्तरमाह—

प्रमाणार्थवत् तन्त्रान्तरता न

**भा०—यथा वा प्रत्यक्षानुमानोपमानाप्तवचनैः प्रमाणैरेकोऽर्थः प्रमीयते, स्वविषयनियमात्, न च ता विप्रतिपत्तयो भवन्ति, तद्वन्नयवादा इति ॥**

**टी०—यथा वेत्यादिना**। यथा वा गिरिगुहावस्थितोऽग्निरेकोऽनेकेन प्रत्यक्षादिना परिच्छिद्यते प्रमाणेन, सन्निकृष्टवर्तिना प्रत्यक्षेण, विप्रकृष्टवर्तिना लिङ्गज्ञानेन, अपरेणोपमया कनकपुञ्जपिञ्जरप्रकाशोऽग्निरिति, अन्यः आप्तोपदेशादध्यवस्यत्यत्र वनगहनेऽग्निरिति, अत एवं प्रत्यक्षादिभिः **प्रमाणैरेकोऽर्थः प्रमीयते**, कुतः? **स्वविषयनियमात्**, स्वः–आ-

१ सङ्ख्यातीतानपि भवान्।

त्मीयो विषयो–ज्ञेयः स्वश्चासौ विषयश्च स्वविषयः तस्मिन्नियमात्–नियतत्वात्, यतः प्रत्यक्षादीनि स्वविषयमेव परिच्छिन्दन्ति, **न च ताः**–प्रत्यक्षादिका ज्ञानशक्तयः **विरुद्धाः**–अयथात्मिकाः प्रतिपत्तय इति च युज्यतेऽभिधातुं, तद्वन्नयैरपि स्वविषयनियमान्नास्ति विप्रतिपत्तिप्रसङ्ग इति ॥

सम्प्रति प्रक्रान्तनयलक्षणमुदाहरणं चादर्शितं संक्षिप्तरुचीनामनुग्रहार्थमार्याभिर्वक्तुकाम एवं प्रक्रमते—

**भा०—आह च—**

नयकारिकाः

**नैगमशब्दार्थाना–मेकानेकार्थनयगमापेक्षः।**

**देशसमग्रग्राही, व्यवहारी नैगमो ज्ञेयः ॥ १ ॥**–आर्या

**टी०—आह चेत्यादि।** आह चेत्यात्मानमेव पर्यायान्तरवर्तिनं निर्दिशति, निगमो–जनपदस्तत्र भवाः **नैगमाः–शब्दास्तेषाम् अर्थाः**–अभिधेयाः अतस्तेषां नैगमशब्दार्थाना–मेको–विशेषः अनेकं–सामान्यम् अनेकव्यक्त्याश्रितत्वात् तावेव चार्थौ एकानेकार्थौ तयोरेकानेकार्थयोर्नयः–प्रकटनं प्रकाशनं एकानेकार्थनयः स एव गमः–प्रकारः एकानेकार्थनयगमस्तमपेक्षते–अभ्युपैति यः स **एकानेकार्थनयगमापेक्षः**, पूर्ववाचोयुक्त्या पुनरमुमेवार्थमनुस्मरयन्नाह–**देशे**त्यादि। **देशो**–विशेषः **समग्रं**–सामान्यं तयोर्**ग्राही**–आश्रयिता, व्यवहारोऽस्य सामान्यविशेषाभ्यां परस्परविमुखाभ्यां अस्तीति **व्यवहारी, नैगमो** ज्ञातव्यः ॥ १ ॥

सङ्ग्रहस्य स्मरणकारिकामाह—

**भा०—यत् सङ्गृहीतवचनं, सामान्ये देशतोऽथ च विशेषे।**

**तत् सङ्ग्रहनयनियतं, ज्ञानं विद्यान्नयविधिज्ञः ॥ २ ॥**

**टी०—यत् सङ्गृहीते**त्यादि। यदिति ज्ञानं सम्बध्यते, कीदृशं तदिति[३]? **तत् सङ्गृहीतवचनं** सङ्गृहीतं–सामान्यं वचनम् उच्यते तदिति वचनं, ज्ञेयमित्यर्थः। सङ्गृहीतं वचनं यस्मिन् ज्ञाने, सामान्यं ज्ञेयं यस्य ज्ञानस्येत्यर्थः, तज्ज्ञानं सङ्गृहीतवचनं, तत् पुनरेवं ज्ञानं प्रवर्तते–**सामान्ये**–सत्तायां **देश** इति सामान्यविशेषे गोत्वादिके, **अथ च**ेति अथवा **विशेषे** खण्डमुण्डादिके। एतेषु सर्वेषु सम्पिण्डनारूपेण प्रवर्तते यतः सामान्यं विशेषो वा,न सत्तामन्तरेण कश्चिदस्तीत्येवं सम्पिण्डय यत् सत्तायां प्रक्षिपत् प्रवर्तते ज्ञानं **तत् सङ्ग्रहनयनियतं** तज्ज्ञानं सङ्ग्रहस्य नयस्य निश्चितमेवंस्वरूपं **विद्यात्**–जानीयात् **नयविधिज्ञ** इति नयभेदज्ञः ॥ २ ॥

व्यवहाराभिप्रायानुस्मरणायाह—

**भा०—समुदायव्यक्त्याकृति–सत्तासंज्ञादिनिश्चयापेक्षम्।**

**लोकोपचारनियतं, व्यवहारं विस्तृतं विद्यात् ॥ ३ ॥**

---

१ 'न युज्यते' इति क–ख–पाठः। २ 'देशतो विशेषाच' इति ख–पार्श्वलिखितपाठः। ३ 'तदिति चेत्' इति क–पाठः।

टी०—**समुदायेत्यादि**। **समुदायः**—सङ्घातः **व्यक्तिः**—मनुष्य इति **आकृतिः**—संस्थानमवयवानां **सत्ता**—महासामान्यं **संज्ञादयो**—नामस्थापनाद्रव्यभावाः एषां समुदायादीनां **निश्चयो**—विशेषस्तमपेक्षते—अभ्युपैति यः स—**समुदायव्यक्त्याकृतिसत्तासंज्ञादिनिश्चयापेक्षः**। कथं निश्चयमेवापेक्षते न समुदायादीनीति ? उच्यते—नहि समुदायस्त्रैलोक्यादिरूपः समुदायिनोऽन्तरेण कश्चिदप्यस्ति, न च व्यक्तिः सामान्यविशेषरूपा मनुष्य इत्यादिका मनुष्यानन्तरेणास्ति, न चाकार आकारवन्तमन्तरेणास्ति, न वा सत्ता सत्तावन्तमन्तरेणास्ति, न वा नामादयो नम्यमानादीनन्तरेण केचन सम्भवन्ति, अनुपलभ्यमानत्वाद् व्यवहाराकरणादित्यर्थः विशेषस्तु स्वप्रत्यक्ष इति, तस्मात् स एव सत्य इत्येवं समुदायादिनिश्चयापेक्षस्तं विद्यादिति सम्बन्धः। **लोकोपचारनियतमिति**। लोके उपचारः गिरिर्दह्यत इत्यादिकः, तस्मिन् लोकोपचारे नियतं—निष्पन्नं **व्यवहारनयं विस्तृतमिति** उपचरितानुपचरितार्थाश्रयणाद् विस्तीर्णमित्यर्थः, विद्याद्—अवबुध्येत ॥ ३ ॥

ऋजुसूत्रस्वभावमाह—

**भा०—साम्प्रतविषयग्राहक—मृजुसूत्रनयं समासतो विद्यात्।**
**विद्याद् यथार्थशब्दं, विशेषितपदं तु शब्दनयम् ॥ ४ ॥ इति ॥**

टी०—**साम्प्रतेत्यादि**,**साम्प्रतो**—वर्तमानः **विषयो**—ज्ञेयस्तस्य ग्राहकं, वर्तमानार्थाश्रयमित्यर्थः। **समासत** इति संक्षेपतः, यतो वर्तमानमात्मीयं नामादिकमित्यादिविशेषणोपेतं, सङ्गच्छत्ययम्। उत्तरार्धेन शब्दस्वरूपमाह—**विद्याद् यथार्थशब्दमिति**। अनेन तु एवम्भूत इव प्रकाशितो लक्ष्यते, सर्वविशुद्धत्वात् तस्येति, यतः स एवमभ्युपैति—यदाऽर्थश्चेष्टाप्रवृत्तस्तदा तत्र घट इत्यभिधानं प्रवर्त्यं, नान्यदिति। साम्प्रतसमभिरूढौ कस्मान्नाम्रेडिताविति चेत् ? उच्यते—तावपि समाश्रितावेव, यत आह—**विशेषितपदं तु शब्दनयमिति**, **विशेषितपदमिति** विशेषितज्ञानं, यतः साम्प्रतसमभिरूढयोरन्यादृशं ज्ञानं, नामादिषु प्रसिद्धपूर्वाच्छब्दादर्थे प्रतीतिः साम्प्रतः शब्दान्तरवाच्यश्चार्थः शब्दान्तरस्य नाभिधेयीभवतीत्येवं समभिरूढविज्ञानमिति, **इतिः** नयानुसरणपरिनिष्ठासूचकः ॥

**भा०—अत्राह—अथ जीवो नोजीवः अजीवः नोअजीवः इत्याकारिते केन नयेन कोऽर्थः प्रतीयते ? इति।**

जीवादौ नय-विचारः

टी०— **अत्राह** परः—घटाद्यजीवपदार्थोद्देशेन नैगमादयो नया विभाविताः, सम्प्रति जीवपदार्थे विभावयन्नाह—**अथ जीवो नोजीव** इत्यादि। अथवा घटोदाहरणे विधिरेव केवलः प्रदर्शितः, अधुना विधिप्रतिषेधौ जीवे निरूपयति—**अथेति** प्रस्तुतानन्तर्यं द्योतयति, शुद्धपदे केवले **आकारिते**—उद्दिष्टे[२] उच्चरिते वा जीव इति, **नोजीवः** अजीव इति देशसर्वप्रतिषेधयुक्तयोर्वा

---

१ '०संज्ञादि निश्चयाः०' इति क-घ-पाठः, '०संज्ञाविनिश्चया०' इति ग-पाठः। २ 'केवले आदिष्टे' इति क-ख-पाठः।

जीवशब्दयोरुच्चरितयोः, नोअजीव इति प्रतिषेधद्वयसमन्विते जीवशब्दे उच्चरिते, **केन नैगमादिना कोऽर्थः प्रतीयते ?** सूरिराह—

**भा०—अत्रोच्यते-जीव इत्याकारिते नैगमदेशसङ्ग्रहव्यवहारर्जुसूत्र-साम्प्रतसमभिरूढैः पञ्चस्वपि गतिष्वन्यतमो जीव इति प्रतीयते। कस्मात् ?। एते हि नया जीवं प्रत्यौपशमिकादियुक्तभावग्राहिणः। नोजीव इत्यजीवद्रव्यं, जीवस्य वा देशप्रदेशौ। अजीव इत्यजीवद्रव्यमेव। नोअजीव इति जीव एव, तस्य वा देशप्रदेशाविति ॥**

टी०—शुद्धपदे जीव **इत्याकारिते** नैगमं समग्रग्राहिणं विहाय एवम्भूतं च शेषै-र्देशनैगमादिभिः सर्वासु गतिषु वर्तमानोऽभ्युपगम्यते, तदाह-**नैगमदेशेत्यादि**। नैगमेन देशग्राहिणा तथा व्यवहारेण-विशेषग्राहिणा ऋजुसूत्रेण-वर्तमानवस्तुग्राहिणा साम्प्रतेन-वर्तमानभावग्राहिणा समभिरूढेन च-प्रतिशब्दं भिन्नार्थग्राहिणा, पञ्चस्वपीति नरकतिर्यङ्मनुष्यदेवसिद्धिगतिषु, **अन्यतम** इति नरकादिगतिवर्ती जीवः प्राणी **प्रतीयते,** नाभावो नापि च भावान्तरम्। **कस्मादिति** चोदयति परः-किमत्रोप-पत्तिरस्त्युत स्वेच्छया नैगमादयोऽभ्युपगच्छन्त्येवमिति ?। सूरिराह-अस्त्युपपत्तिः, तां च कथयति-**एते हि नया** इत्यादिना। एते नैगमादयो नया यस्मात् **जीवं प्रति**-जीवमङ्गीकृत्य, कीदृशं जीवमिच्छन्ति ? औपशमिकादिभिर्यो युक्तः स जीवः, औप-शमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिकैर्युक्तः **औपशमिकादियुक्तः, भाव** इत्यर्थः। औपशमिकादियुक्तो योऽर्थः तं ग्रहीतुं शीलं येषां ते तद्ग्राहिणः। सर्वासु च नारकादि-गतिषु अवश्यमौपशमिकादीनां भावानां यः कश्चित् सम्भवति भावः, सिद्धिगतौ च यद्यप्यौपशमिकक्षायोपशमिकौदयिकाः न सन्ति, तथापि क्षायिकपारिणामिकौ सम्भवतः इत्यसावपि जीवः। **नोजीव** इत्युच्चरिते किं प्रतीयते तैर्नयैः ? उच्यते-यदा नोशब्दः सर्वप्रतिषेधे वर्तते तदा 'नञ्युक्तमवियुक्तं च' इत्यनया कल्पनया वस्त्वन्तरमेव प्रतीयते, नाभावः, तच्चाजीवद्रव्यं पुद्गलादिकमित्यर्थः। यदा तु नोशब्दो देशप्रतिषेधकस्तदा देशस्यानिषिद्धत्वाज्जीवस्य देशश्चतुर्भागादिकः प्रदेशो वाऽत्यन्ताविभजनीय उच्यते नोजीव इत्यनेन, एतदाह-**जीवस्य वा देशप्रदेशाविति**। **अजीव इति** तूच्चरिते सर्वप्रतिषेधकत्वाद-कारस्य पर्युदासस्य वाऽऽश्रितत्वाज्जीवादन्यः अजीव इति अजीवद्रव्यमेव प्रतीयते पुद्ग-लादिकम्। **नोअजीव इति** पुनरभिहिते द्वयोरपि नोकाराकारयोः सर्वप्रतिषेधे यदा वृत्तिः आश्रिता तदा 'द्वौ प्रतिषेधौ प्रकृतं गमयतः' इति जीव इति प्रतीयते, यदा पुनरकारः सर्वनिषेधको नोशब्दश्च देशनिषेधको नोअजीव इत्याश्रीयते तदा नोनञोरपि कृतार्थतैवं स्याद् यदि तस्य जीवस्य देशप्रदेशौ गम्येते इत्यतो जीवस्य देशप्रदेशावत्र गम्येते, तदाह-

१ 'देशस्य' इति ग-पाठः। २ 'तस्याजीवस्य' इति क-ख-ग-पाठः।

तस्य वा देशप्रदेशाविति। एवं तावन्नैगमादयश्चतुर्षु जीव इत्यादिषु विकल्पेषु प्रवृत्ताः, एवम्भूतस्तु नैवं प्रतिपद्यते, कथं तर्हीति चेदुच्यते—

भा०—एवम्भूतनयेन तु जीव इत्याकारिते भवस्थो जीवः प्रतीयते। कस्मात्?। एष हि नयो जीवं प्रत्यौदयिकभावग्राहक एव। जीवतीति जीवः, प्राणिति प्राणान् धारयतीत्यर्थः। तच्च जीवनं सिद्धे न विद्यते, तस्माद् भवस्थ एव जीव इति। नोजीव इत्यजीवद्रव्यं सिद्धो वा। अजीव इत्यजीवद्रव्यमेव। नोअजीव इति भवस्थ एव जीव इति।

टी०—एवम्भूतेत्यादि। एवम्भूतनयेन जीव इत्युच्चरिते भवस्थो जीवः प्रतीयते, भवः—संसारश्चतुर्विधस्तस्मिन् स्थितो भवस्थः—संसारिजीवः प्रतीयते। कस्मात् सिद्धिस्थं त्यजतीति चेत्? उच्यते—एष हीत्यादि, एष[1] यस्मादेवम्भूतनयो जीवं प्रत्येवं[2] प्रवर्तते—य एव औदयिकेन गतिकषायादिस्वभावेनावस्थाविशेषेण युक्तस्तस्यैव ग्राहकः—तमेवौदयिकभावयुक्तं जीवमिच्छति, यतः शब्दार्थ एवमवस्थितो 'जीव प्राणधारणे' जीवतीति जीवः। किमुक्तं भवति? प्राणितीति, 'अन प्राणने' इति वाऽस्यार्थे, जीव इत्यस्य च धातोः सकर्तृकत्वं कथयति प्राणान् धारयतीति। प्राणाः—इन्द्रियाणि, मनोवाक्कायास्त्रयः, प्राणापानौ एकः आयुश्च तान् धारयति न मुञ्चति यावत् तावदसौ जीव इति मन्तव्यः, एतत् स्याद् इन्द्रियादयः प्राणाः सिद्धेऽपि सन्ति, तन्न, सिद्धे हि सर्वकर्मापगमान्न सन्तीन्द्रियादयः प्राणा इत्येतदाह—तच्च जीवनमित्यादि। तदिति शब्दार्थतया जीव इत्यस्य जीवनं—प्राणधारणं सिद्धे—मोक्षप्राप्ते नास्ति, तस्माद् भवस्थ एव संसार्येव जीवः, न सिद्ध इति। तथा नोजीव इत्युच्चरिते नोशब्दः सर्वप्रतिषेधक एव, देशस्याभावात्, देश्येव देशो न वस्त्वन्तरं, न च देशिनो देशो भिन्न इत्यभिधातुं युक्तम्, यदि हि भिन्नः स्यात् नासौ तस्य, भिन्नत्वाद् वस्त्वन्तरवत्, अथाभिन्नः देश्येव तर्ह्यस्ति न कश्चिद् देशो नामेत्यतः सर्वप्रतिषेधको नोशब्दोऽतः नोजीव इत्युक्ते जीवादन्यद् वस्तु सम्पूर्णं परमाणुप्रभृति प्रतीयते, तदाह—नोजीव इति अजीवद्रव्यमेव सिद्धो वा, प्राणधारणस्याभावात्, सोऽपि निर्जीव एवेति, अतः सिद्धो वा गम्यते। अजीव इति तूच्चरिते अजीवद्रव्यमेव परमाण्वादिकं, सर्वप्रतिषेधकत्वादकारस्य प्रतीयते। नोअजीव इत्युक्ते 'प्रतिषेधौ द्वौ प्रकृतं गमयतः' इति भवस्थः—संसार्येव जीवो गम्यते॥ अथ कस्मान्नोजीव इत्यस्मिन् विकल्पे नोअजीव इत्यस्मिन् वा देशप्रदेशौ न गम्येते?। उच्यते—देशप्रदेशयोरनभ्युपगमादनेन नयेनेति, एतदाह—

भा०—समग्रार्थग्राहित्वाच्चास्य नयस्य नानेन देशप्रदेशौ गृह्येते। एवं जीवौ जीवा इति द्वित्वबहुत्वाकारितेष्वपि, सर्वसङ्ग्रहणे तु जीवो, नोजीवः।

---

१ 'एष स्यादेवंभूत' इति क-ख पाठः। २ 'प्रत्येवं' इति ख-पाठः, प्रतीत्येवं इति ग-पाठः।

**अजीवो नोअजीवो जीवौ नोजीवा अजीवौ नोअजीवौ इत्येकत्वद्वित्वाकारितेषु शून्यम्। कस्मात्?॥**

टी०—**समग्रार्थे**त्यादि। समग्रः–सम्पूर्णः अर्थो–वस्तु सम्पूर्णं वस्तु समग्रार्थः तं ग्रहीतुं शीलमस्य समग्रार्थग्राही, सम्पूर्णमेव हि वस्तु गृह्णातीत्ययं नयः, न देशं प्रदेशं वा, समग्रार्थग्राहिणो भावस्तथावर्तिता **समग्रार्थग्राहित्वम्**, अतो **नानेनै**वम्भूतनयेन **देशप्रदेशौ** स्थूलसूक्ष्मावयवात्मकौ **गृह्येते**। एवं तावच्चत्वारो विकल्पा एकवचनेन दर्शिताः, यथा चैकवचनेन दर्शिताः एवं द्विवचनेन चत्वारो विकल्पा नेयाः, जीवौ १ नोजीवौ २ अजीवौ ३ नोअजीवौ ४, तथा च बहुवचनेनापि चत्वार एव, जीवाः १ नोजीवाः २ अजीवाः ३ नोअजीवा ४ नेयाः, एकवचनप्रतिपत्त्येव, केवलं तु द्विवचनं बहुवचनं वा विशेष इत्येतदाह–**एवं जीवा जीवा इति**। इतिशब्द आद्यार्थः, **द्वित्वबहुत्वाकारितेषु**–द्विवचनबहुवचनाभ्यामुच्चारितेषु एवमेवाभ्युपगमो नैगमादीनाम्॥ अथैतांश्चतुरो विकल्पान् सङ्ग्रहनयः कथमभ्युपैतीति?। उच्यते- **सर्वसङ्ग्रहे**णेत्यादि। सर्वसङ्ग्रहेण सामान्यवस्तुग्राहिणा एकवचनद्विवचनान्ता विकल्पा नाभ्युपगम्यन्ते, तांश्च विकल्पान् दर्शयति—**जीवो नोजीव** इत्यादिना। एकद्विवचनान्तेषूच्चरितेषु **शून्यं** भवतीति, नास्त्यैवं काचित् प्रतिपत्तिरस्तीत्यर्थः। **कस्मान्नास्तीति** चेत्? उच्यते—

भा०—**एष हि नयः सङ्ख्यानन्त्याज्जीवानां बहुत्वमेवेच्छति यथार्थग्राही। शेषास्तु नयाः जात्यपेक्षमेकस्मिन् बहुवचनत्वम्, बहुषु च बहुवचनं सर्वाकारितग्राहिण इति। एवं सर्वभावेषु नयवादानुगमः कार्यः॥**

टी०—**एष ही**त्यादि। एषः–सङ्ग्रहो यस्मात् **सङ्ख्याया** जीवगताया **आनन्त्यं** प्रतिपद्यते, **जीवानां** पञ्चगतिवर्तिनां बहुत्वमेवेतिकृत्वा बहुवचनान्तानेव विकल्पान् समाश्रयते। अयं विशेषोऽनेन प्रतिपन्नो देशसङ्ग्रहव्यवहारादिभ्यः, भावना तु तद्वदेव, जीवा इत्युक्ते पञ्चस्वपि गतिषु वर्तमानानाश्रयति, नोजीवा इत्यजीवास्तेषां च देशप्रदेशानिति, अजीवा इति तु अजीवद्रव्याणि पुद्गला इति, नोअजीवा इति जीवानेव तेषां च देशप्रदेशानिति। अस्यैव बहुवचनान्ता प्रतिपत्तिः, **शेषास्तु** नैगमादयो **नया** एकद्विबहुवचनान्तानप्याश्रयन्ति एतान् विकल्पान्, यदा च जीवशब्दस्य एकोऽर्थो वाच्यो भवति तदैकत्वादेकवचनम्, यदापि च सामान्यं वाच्यं तदापि चैकत्वात् एकवचनप्राप्तौ सत्यां बहुवचनमन्विच्छन्ति नैगमादयः। कथमिति चेत्? उच्यते–**जात्यपेक्षं** जातिः–सामान्यरूपा तामपेक्षते यत् तज्जात्यपेक्षं बहुवचनम्, **एकस्मिन्न**पि पदार्थेऽभिधेये "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" (पा०अ०१,पा०२,सू०५८) इत्येनेन लक्षणेन। यदा पुनर्बहव एव अभिधेया जीवशब्दस्य प्राणिनस्तदा नैव बहुवचनं "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" उत्पादयन्ति, किन्तु लक्षणान्तरेण, तल्लक्षणं दर्शयति–"बहुषु चैव बहुवचनं भवति"

१ 'न्यस्तं कस्मात्' इति क–ख–पाठः। २ 'नयवादाधिगमः' इति घ–पाठः

इत्यनेन, अतः सङ्ग्रहो बहुवचनान्तानेव विकल्पानाश्रयति, शेषास्तु नया एकवचनबहुवचनान्तानप्याश्रयन्तीत्येतदाह—**सर्वाकारितग्राहिण** इति। सर्ववचनैरेकवचनादिभिराकारितानेतान् विकल्पान् गृह्णन्ति तच्छीलाश्च सर्वाकारितग्राहिण इति। सम्प्रति ग्रन्थगौरवं मन्यमान एकत्र च विकल्पानां दर्शितत्वादन्यत्र सुखेन ज्ञास्यतीत्येतदतिदिशति—**एवं सर्वभावेष्वित्यादिना**। सर्वभावेषु–सर्वार्थेषु धर्मास्तिकायादिषु **नयवादानुगम** इति नयवादेनानुगमं–अनुसरणं–निभालनं कार्यं तत्त्वान्वेषिणा पुंसा॥ एवं तावत् प्रमेयेण नयानां विचारः कृतः। सम्प्रति प्रमेयपरिच्छेदकेषु प्रमाणेषु को नयः कथं प्रवर्तते इत्यस्मिन्नवसरे पर आह—

**भा०—अत्राह–अथ पञ्चानां सविपर्ययाणां कानि को नयः समाश्रयत इति ?। अत्रोच्यते—**

**टी०—अथ पञ्चेत्यादि**। **अथे**त्येतस्माद् विचारादनन्तरं **पञ्चानां** मत्यादीनां ज्ञानानां ज्ञेयस्वतत्त्वतया ग्राहकाणां **सविपर्ययाणामि**ति सह विपर्येयेण अज्ञानस्वभावेन यानि वर्तन्ते तेषां सविपर्ययाणां **कानि** मत्यादीनि **को नयो** नैगमादिः **श्रयते**–अभ्युपगच्छति ?। **अत्रोच्यते—**

ज्ञानाज्ञानेषु नयविचारः

**भा०—नैगमादयस्त्रयः सर्वाण्यष्टौ श्रयन्ते, ऋजुसूत्रनयो मतिज्ञानमत्यज्ञानवर्जानि षट्॥**

**टी०—नैगमादिनयास्त्रयः**–नैगमसङ्ग्रहव्यवहाराः **सर्वाणि** निरवशेषाणि, कियन्तीति चेदुच्यते–**अष्टौ**, मतिज्ञानं, मत्यज्ञानं, श्रुतज्ञानं, श्रुताज्ञानं, अवधिज्ञानं, विभङ्गज्ञानं, मनःपर्यायज्ञानं, केवलज्ञानमष्टमम्। एतान्यष्टावपि यतोऽर्थं परिच्छिन्दन्ति, अतोऽभ्युपगच्छन्त्यष्टावपि। **ऋजुसूत्रः** पुनः षडेषां मध्ये श्रयते, **मतिज्ञानमत्यज्ञानवर्जानि षट्**, मतिं मत्यज्ञानं च नाभ्युपैति॥

**भा०—अत्राह–( अथ ) कस्मात् मतिं सविपर्ययां न श्रयत इति ?। अत्रोच्यते–श्रुतस्य सविपर्ययस्योपग्रहत्वात्, शब्दनयस्तु द्वे एव श्रुतज्ञानकेवलज्ञाने श्रयते॥**

**टी०—अत्राह–अथ कस्मात् मतिं सविपर्ययामिति** मत्यज्ञानसहितामित्यर्थः **न श्रयते** नेच्छतीति ?। **अत्रोच्यते**–यस्मान्मतिमत्यज्ञाने **श्रुतज्ञानस्य सविपर्ययस्येति** श्रुताज्ञानसहितस्य **उपग्रहं** कुरुतः। कथमिति चेदुच्यते–यदेतदिन्द्रियजं चक्षुरादिभ्य उपजातं तद् हि अवग्रहणमात्रेण प्रवर्तमानं न वस्तुनो निश्चयं कर्तुमलम्, यदा श्रुतज्ञानेनासावालोचितोऽर्थो भवति तदा यथावन्निश्चीयते इति, तस्मात् तदेवाभ्युपगन्तव्यं श्रुतज्ञानं, किं मतिज्ञानेन ? इत्येवं श्रुतस्योपग्रहकरत्वात् न मतिज्ञानं सविपर्ययमाश्रीयते। **शब्दनयस्तु** भावार्थावलम्बी **द्वे एव** नान्यत् ताभ्यामित्युक्तम्, के ते ? उच्यते–**श्रुतज्ञानकेवलज्ञाने**। अत्र शब्दमते परोऽसूयया ब्रूते—

**भा०—अत्राह-अथ कस्मान्नेतराणि श्रयत इति ? । अत्रोच्यते-मत्यवधिमनःपर्यायाणां श्रुतस्यैवोपग्राहकत्वात्, चेतनाज्ञस्वाभाव्याच्च सर्वजीवानां नास्य कश्चिन्मिथ्यादृष्टिरज्ञो वा जीवो विद्यते । तस्मादपि विपर्ययान न श्रयत इति । अतश्च प्रत्यक्षानुमानोपमानाप्तवचनानामपि प्रामाण्यमभ्यनुज्ञायत इति ॥**

टी०-अथ कस्मान्नेतराणि मत्यादीनि श्रयते ? । अत्रोच्यते-**मत्यवधिमनःपर्यायाणां श्रुतस्यैवा**गमानुरक्तस्य **उपग्राहकत्वाद्**-उपकारकत्वात्, यतो मत्याद्यालोचितोऽर्थः न मत्यादिभिः शक्यः प्रतिपादयितुं मूकत्वान्मत्यादिज्ञानानाम्, अतस्तैरालोचितोऽप्यर्थः पुनरपि श्रुतज्ञानेनैवान्यस्मै स्वपरप्रत्यायकेन प्रतिपाद्यते, तस्मात् तदेवालम्बितुं युक्तं, नेतराणि । केवलज्ञानं तु यद्यपि मूकं तथाप्यशेषार्थपरिच्छेदात् प्रधानमितिकृत्वाऽवलम्ब्यत एव, तथा विपर्ययं नाभ्युपैत्यस्मात् **चेतनाज्ञस्वाभाव्याच्चे**त्यादि, चेतना-जीवत्वं परिच्छेदकत्वसामान्यं गृह्यते, ज्ञ इत्यनेन तु विशेषपरिच्छेदिता ग्राह्या, तयोश्चेतनाज्ञयोः स्वाभाव्यं-तथाभवनं तस्माच्चेतनाज्ञस्वाभाव्यात् **सर्वजीवानां** पृथिवीकायिकादीनां **न विद्यते** तेषां **कश्चित्** प्राणी **मिथ्यादृष्टिः**-अयथार्थपरिच्छेदी, सर्वे प्राणिनः स्वस्मिन् स्वस्मिन् विषये परिच्छेदकत्वेन प्रवर्तमानाः स्पर्शं स्पर्श इत्येवं परिच्छिन्दन्ति रसं च रस इत्यादि, **अज्ञो वा** अज्ञानी वा, न कस्यचित् प्राणिनो ज्ञानमविद्यमानं अस्य नयस्य मतेन । यथाऽभिहितम्-'सव्वजीवाणंपि[2] य णं अक्खरस्स अणंतो भागो निच्चुग्घाडितओ" (नन्दी० सू० ४२), अतः सर्वे सम्यग्दृष्टयः सर्वे च ज्ञानिनः, अतो विपर्ययो नास्ति मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानरूप इति, अतः-अभावादेव **विपर्ययान्** मत्यज्ञानादीन् **नाश्रयते** यतश्च छद्मस्थज्ञानानि सर्वाण्येव श्रुते[3]ऽन्तर्भवन्ति, अतो यत् 'प्रत्यक्षमन्यत्' (अ० १ सू० १२) इत्यस्मिन् सूत्रे प्रतिज्ञातं नयवादान्तरेण तु यथा मतिश्रुतविकल्पजानि भवन्ति तथा पुरस्ताद् वक्ष्याम इति तदुपपन्नम्, अस्मिंश्चोपपन्ने सर्वप्राणिनां सम्यग्दृष्टित्वात् ज्ञानित्वाच्च सर्वज्ञानानां प्रामाण्यम्, तदाह-**अतश्च प्रत्यक्षानुमानोपमानाप्तवचनानामपि प्रामाण्यमभ्युपगतं** भवति । उक्तं चैषां प्राक् स्वरूपं प्रत्यक्षादीनां, प्रमाणनयविचारमनन्तरं सकलं चाध्यायार्थमुपसंहरन् कारिकाः पपाठ—

**भा०—आह च—**

अध्यायार्थोपसंहारः **विज्ञायैकार्थपदान्यर्थपदानि च विधानमिष्टं च ।**
**विन्यस्य परिक्षेपात्, नयैः परीक्ष्याणि तत्त्वानि ॥१॥**-आर्या
**ज्ञानं सविपर्यासं, त्रयः श्रयन्त्यादितो नयाः सर्वम् ।**
**सम्यग्दृष्टेर्ज्ञानं, मिथ्यादृष्टेर्विपर्यासः ॥ २ ॥**-आर्या
**ऋजुसूत्रः षट् श्रयते, मतेः श्रुतोपग्रहादनन्यत्वात् ।**
**श्रुतकेवले तु शब्दः, श्रयते नान्यच्छ्रुताङ्गत्वात् ॥ ३ ॥**-आर्या

१ 'विपर्ययो न श्रयत' इति ग-पाठः ।
२ सर्वजीवानामपि चाक्षरस्यानन्तो भागो नित्योद्घाटितः ।
३ 'श्रुतेन भवन्ति' इति ग-पाठः ।

**मिथ्यादृष्टयज्ञाने, न श्रयते नास्य कश्चिदज्ञोऽस्ति ।**
**ज्ञस्वाभाव्याज्जीवो, मिथ्यादृष्टिर्न चाप्यस्ति ॥ ४ ॥**–आर्या
**इति नयवादाश्चित्राः, क्वचिद् विरुद्धा इवाथ च विशुद्धाः ।**
**लौकिकविषयातीताः, तत्त्वज्ञानार्थमधिगम्याः ॥ ५ ॥**–आर्या

टी०–आह चेत्यादि । **विज्ञाय**–ज्ञात्वा **एकार्थानि पदानि** जीवः प्राणी जन्तुरित्यादि, **अर्थपदानि च** निरुक्तपदानि परैरुक्षा–सम्बन्धनमुपक्रियेति परोक्षमित्यादीनि, **विधानं** नामस्थापनादिकम्, **इष्टं चेति** निर्देशस्वामित्वादि सत्सङ्ख्यादीनि च, एतज्ज्ञात्वा ततो **विन्यस्य** नामादिभिः **परिक्षेपात्**–समन्तात् **नयैः परीक्ष्याणि**–मीमांस्यानि **तत्त्वानि**–जीवादीनि सप्त ॥ १ ॥

**ज्ञानं**–मत्यादि **सविपर्यासं**–मत्यज्ञानादित्रयानुगतं नैगमादयस्त्रयः **श्रयन्ति**–अभ्युपगच्छन्ति **आदित**–आदेरारभ्य **नयाः**–वस्त्वंशग्राहिणः **सर्वम्**–अष्टविधम् । कस्य पुनर्ज्ञानं कस्य च विपर्यासो भवतीत्येतदाह—**सम्यग्दृष्टेः**–अर्हदभिहिततत्त्वश्रद्धायिनः यदिन्द्रियजमनिन्द्रियजं च तत् सर्वं ज्ञानं, **मिथ्यादृष्टेः** सर्वमेव **विपर्यासः** ॥ २ ॥

**ऋजुसूत्र** उक्तस्वरूपः **षट्**–मतिमत्यज्ञानरहितानि श्रुतादीनि **श्रयते**, मतिं तु सविपर्यासां न श्रयते,अ(य)तः श्रुतस्य ग्रन्थारूषितस्य **उपग्रहत्वात्**–उपकारकत्वाद् **उक्तेन** विधिना, ततश्च श्रुतादनन्या मतिरतोऽनन्यत्वान्नाश्रयते । **शब्दस्तु** श्रुतज्ञानकेवलज्ञाने **श्रयते**, **नान्यत्**, किं कारणम् ? श्रुताङ्गत्वात् श्रुतस्य प्रतिविशिष्टबलाधानहेतुत्वादुक्तेन विधिना, शब्द एव नयः ॥ ३ ॥

**मिथ्यादृष्टयज्ञाने**, मिथ्यादृष्टम् अज्ञानं च अपरिच्छेदात्मकं **न श्रयते**, किं कारणम् ? यतो **नास्य कश्चिदज्ञोऽस्ति** नास्त्यस्य कश्चिदज्ञः शब्दस्य मतेन कश्चित् प्राणी । किं कारणमिति चेत् ? उच्यते–**ज्ञस्वाभाव्यात्** सर्वप्राणिनां ज्ञातृस्वरूपत्वाज्जीवो **मिथ्या, दृष्टिर्नास्ति न चाप्यज्ञोऽस्ति** ॥ ४ ॥

**इति**–एवमनेनोक्तेन स्वरूपेण **नयवादाः** नैगमादिविचाराः **चित्राः**–बहुरूपाः, विचित्रैः प्रकारैर्वस्तुनः परिच्छेदित्वात्, ते चित्राः **क्वचिद् विरुद्धाः** क्वचिद् वस्त्वंशे रुचिगृहीते विरुद्धा इव लक्ष्यन्ते, यतः सामान्ये आश्रिते यस्तत्रैव विशेषं कल्पयति तदा पूर्वापरेण विरुध्यते, विशेषे वा त्रैकालिकेऽभ्युपेते वर्तमानावधिके विशेष आश्रिते पूर्वः परेण विरुद्ध इति लक्ष्यते, एवं सर्वेष्वायोजनीयम् । एवं क्वचिद् विरुद्धा इव । अथवा सम्यगालोच्यमानाः **विशुद्धाः**, सामान्यादीनां धर्माणां सर्वेषां तत्र वस्तुनि भावात् ॥ अथैवमेव लौकिकानामपि वैशेषिकादीनां वस्तुविचारणायां सम्पतन्त्युत नेति ? । उच्यते–न सम्पतन्ति, यदि सम्पतेयुर्जैनशासनवत् तान्यपि निरवद्यानि मतानि स्युः, नैव

१ 'चाप्यज्ञः' इतिघ–पाठः ।

तत् तथा, एतदाह-**लौकिकविषयातीताः** लौकिकानां-वैशेषिकादीनां विषयाः-शास्त्राणि तान्यतीताः-अतिक्रान्ताः, न सन्ति तेष्वित्यर्थः ॥ अथ यथा ते वैशेषिकादयो नालोचयन्त्येभिर्वस्तु तथाऽत्रापि किमाश्रयते उत नेति ? उच्यते-न तथा नालोचनीयं वस्तु, किन्त्वालोचनीयमेवेति, एतदाह-**तत्त्वज्ञानार्थमधिगम्याः** तत्त्वं-सद्रूपं सर्वदोषरहितं यज्ज्ञानं तत् तत्त्वज्ञानं **तत्त्वज्ञानाय**-तत्त्वज्ञानार्थं-तत्त्वज्ञानप्रयोजनार्थम् **अधिगम्याः**--ज्ञेयाः । एतत् कथयति-समस्तनयसामग्र्या आलोच्यमानं वस्तु सुधियां प्रीतिमाधिनोति, अन्यथा यथावस्तु संवादो दुःखेनापाद्येत, यत एकनयमतावलम्बिनां वस्तुस्वरूपसम्पादने सामर्थ्याभावात् समग्रया नयविचारणया वस्तुस्वरूपप्रतिपादनं सुकरमवगतस्याद्वादसद्भावैरिति ॥ ५ ॥ ३५ ॥

ग्रन्थाग्रमङ्कतः ४३५९

इति **श्रीतत्त्वार्थाधिगमे**ऽर्हत्प्रवचनसङ्ग्रहे भाष्यानुसारिण्यां तत्त्वार्थटीकायां प्रथमोऽध्यायः ॥ १ ॥

## ॥ इति प्रथमोऽध्यायः ॥



॥ श्रीगौडीपार्श्वनाथाय नमः ॥

# द्वितीयोऽध्यायः २

अध्यायसम्बन्धः **भा०—अत्राह—उक्तं भवता जीवादीनि तत्त्वानीति, तत्र को जीवः कथंलक्षणो वेति ?। अत्रोच्यते—**

टी०—**अत्राह—उक्तं भवते**त्यादिः सम्बन्धग्रन्थः, स चाध्यायप्रकरणसूत्रकृतस्त्रिधा तत्राध्यायकृतस्तावत् 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' (अ० १, सू० १) इत्यव्यतिरिक्तकरणतयाऽऽत्मनः कर्तुस्ताद्रूप्येण निर्दिष्टानि मोक्षसाधनानि, अधुना तान्येवानेककर्मोपशमादिकारणकलापजन्यानि परिस्फुटविविक्तहेतुभाञ्जि प्रकाशयन्नाह—**औपशमिक** इत्यादि। तथाऽनुयोगद्वारप्रकरणप्रस्तावे निर्देशादिसूत्रव्याख्यायामुक्तम्, तद्यथा निर्देशः। को जीवः? औपशमिकादिभावयुक्तो द्रव्यं जीवः, ते चामी जीवस्य औपशमिकादयो भावाः स्वतत्त्वेयत्ताभ्यामभिधीयन्ते—औपशमिक इत्यादि, तथा तत्त्वोद्देशः, तत्रादौ जीवपदार्थोपन्यासोऽकारि सूत्रकारेण, तत्स्वरूपावगमेच्छया च परः प्रश्नयति—**को जीवः कथंलक्षणो वेति**। किं पुनरत्र प्रयोजनं यदयमपहायाध्यायप्रकरणसम्बन्धौ सूत्रकृतमेव सम्बन्धमाविश्चकार भाष्यकारः ?। उच्यते—स्वल्पवक्तव्यत्वात्, सम्बन्धानां चानेकरूपत्वाद् अतो यत् किञ्चिद् घटमानकं सम्बन्धान्तरमुपादाय भाष्यकृत् कृती जायते, नैवावश्यमशेषसम्बन्धाभिधानमात्रर्तव्यमिति कचिन्नियमः, यच्च भाष्यकारोपात्तसूत्रसम्बन्धव्यतिरिक्तसम्बन्धद्वयप्रदर्शनमाविष्कृतं तदन्योपनिबन्धकारशैल्या न त्वपूर्वसम्बन्धोद्घट्टनेच्छयेति॥ नन्वौदयिकौपशमिकक्षायिकक्षायोपशमिकपारिणामिकसान्निपातिका भावा इति क्रमसङ्ख्यानियमः प्रावचनोऽयं स एषः, किमर्थं परमर्षिप्रणीतप्रवचनन्यस्तक्रमसङ्ख्याभेदः सूत्रकारेणाकारि ?। अत्रोच्यते—क्रमभेदस्तावल्लाघवार्थमाश्रितः, कथम् ? औपशमिकभेदद्वयमधीत्य क्षायिकभेदपाठे चशब्दानुकृष्टौ च पूर्वकौ द्वावित्येवं नवभेदमवदत् क्षायिकम्, ननु प्रवचनक्रमेऽप्यौपशमिकक्षायिकावनन्तराविति न कश्चिद् विशेषः अस्ति, विशेषश्चशब्देन, किमनन्तरभेदद्वयाकर्षणमुतौदयिकैकविंशतिराकृष्यत इति सन्देहः, नन्वनन्तरभेदद्वयमेवाभिसम्भन्त्स्यते न व्यवहितम्, तदेतदेतावद् व्याख्यानमल्पधियः क्लेशयन्ति गौरवं च जायते, तस्मादस्तु क्रमभेदः, अपिच—स्वल्पकालस्वामित्वादिविशेषादप्यौपशमिकादिर्युज्यते क्रमः, आन्तर्मौहूर्तिकत्वादल्पकाल औपशमिकः, अल्पस्वामिकश्चायम्, यतो न खलु बहुविधाः प्राणिनः प्राप्नुवन्ति तादृशं परिणतिविशेषम्, तदनन्तरं क्षायिकः, तस्मात् सामान्यभेदत्वाद् बहुतरकालस्वामित्वाच्च, ततः क्षायोपशमिको—बहुतरभेदकालस्वामित्वाच्च, ततः औ—

यिकः पूर्वस्वामिसाधर्म्यात् तदन्यकर्माश्रयत्वाच्च, ततः पारिणामिको महाविषयत्वादत्यन्तभेदाच्च पूर्वकेभ्य इति। सान्निपातिकोऽपि लाघवैषिणा पृथक् नोपात्तः, मिश्रग्रहणादेव प्रतिलब्धः, यत एषामेवौपशमिकादीनां द्विकादिसंयोगेन सान्निपातिको निष्पद्यते षड्विंशतिविकल्पः, तत्रैकादश विरोधित्वादसम्भवतस्त्यक्ता विकल्पाः, पञ्चदशोपात्ताः **प्रशमरतौ** सम्भविनः, "षष्ठश्च सान्निपातिक इत्यन्यः पञ्चदशभेदः" (**प्रशम०** प० १९७) इति वचनात्, ते च विकल्पाः पञ्चदश औदयिकक्षायोपशमिकपारिणामिकास्त्रयोऽपि युगपदेकस्मिन् निपतन्ति जन्तौ, नारकतिर्यङ्मनुष्यदेवगतिभेदेन चैते चत्वारो विकल्पाः, तथौदयिकौपशमिकक्षायोपशमिकपारिणामिकाः क्वचिदकृतत्रिपुञ्जोपशमसम्यक्त्वसद्भावाद् गतिभेदेनैव चत्वारो विकल्पाः, पुनरौदयिकक्षायिकक्षायोपशमिकपारिणामिकाः क्वचित् क्षायिकसद्भावात् श्रेणिकादिवद् गतिभेदतः, पुनश्चौदयिकौपशमिकक्षायिकक्षायोपशमिकपारिणामिकाः दर्शनसप्तकवर्जं समस्तमोहनीयोपशमाच्छेषकर्मक्षयोपशमादित्वे सति मनुष्यगतावेवोपशमश्रेणिसद्भावे सत्येको विकल्पः, तथा औदयिकक्षायिकपारिणामिका एक एव भङ्गः, केवलिनो मनुष्यत्वकैवल्यजीवत्वाप्तेः, तथा क्षायिकपारिणामिकावेको भङ्गः, सिद्धे केवलसम्यक्त्वादिजीवत्वतः, पञ्चदश सान्निपातिका भावभेदाः पञ्चकचतुष्कत्रिकद्विकसंयोगनिष्पन्नाः चतुरादिगतिभेदैर्मिश्रग्रहणाल्लब्धाः, मिश्रग्रहणेन च सान्निपातिकः संयोगमात्रं परिगृह्यते, न क्षयोपशमाविति, कृतसमासयोश्च पूर्वयोर्निर्देश उत्पत्तिविगमकालसाम्यात् संहतोत्तरकारणत्वाच्च, औपशमिकक्षायिकौ हि संहितौ मिश्रस्य कारणीभवतः, मिश्रे चासमासकरणं स्वामिबाहुल्यप्रतिपिपादयिषयाऽकारि, पूर्वभावद्वयवर्तिभ्यो जीवेभ्यो भूयिष्ठाः क्षायोपशमिकभावभाजः प्राणिनः, चरमयोः पृथक्करणं जीवाजीवसाधारणत्वख्यापनार्थम्, पूर्वकास्त्रयो जीवानामेव, इतरौ तु साधारणौ, समासश्चावियोगप्रचिकाशयिषयाऽनयोर्द्वयोरपि। अत्र चाद्यास्त्रयो भावाः कर्मविघातापेक्षाः प्रादुःष्यन्ति, बहलरजोवितानविघाते सति तिग्मरश्मेर्दीधितिकलापोत्पत्तिवत्, स पुनर्विघातो द्विविधः—स्ववीर्यापेक्षो देशक्षयः कर्मणः सर्वक्षयश्च, कर्मव्यापारापेक्षश्चतु(इत्य?)र्थः, स्वोपात्तकर्मोदयात् गत्यादयो भावाः समुपजायन्त आत्मनः सुरापानजनितनृत्यादिविकारवत्, मदोद्रेकान्नृत्यति हसति रोदति गायति क्रुध्यति च यथा शीलवानपि तथा गत्यादिकर्मोद्रेकाज्जीवस्तां[1] तां विक्रियां प्रतिपद्यते गतिकषायादिकाम्। पारिणामिकस्तु निर्निमित्तः, स्वार्थे प्रत्ययविधानात्, परिणाम एव पारिणामिको राक्षसवदिति॥

अधुना भाष्यमनुस्रियते—अत्रेति। द्वितीयाध्यायावसरे शिष्य आह—प्रथमाध्यायेऽभिहितं **भवता जीवादीनि सप्त तत्त्वानि**, तत्प्रतिपत्तिः सम्यक्त्वम्, इतिशब्दः शब्दपदार्थः, कः? उक्तमात्रस्मरणात् तत्रेति तेषु तत्त्वेषु निर्धार्यतामादावुपन्यस्तो जीवः क इति किंस्वरूपः, किंसतत्त्वः, किमसौ द्रव्यं, गुणः, कर्मेति सन्दिहानस्य प्रश्नः, कथंलक्षणो वेति द्वितीयः, प्रश्नः कथमिति केन प्रकारेण किमनपायिना सता लक्षणेन सर्वास्ववस्थासु गम-

१ 'वृत्त्यादि' इति क-ख-पाठः।

केनाविनाभाविना हुताशन इवोष्णत्वेन लक्षयितव्यः, आहोस्विदपायभाजा व्यतिरिक्तेन धूमेनेव हुतभुगवबोद्धव्य इति पृच्छति–**कथंलक्षणो वेति**। लक्ष्यते अनेनेति लक्षणं–लिङ्गमित्यर्थः, कथं लक्षणमस्येति कथंलक्षणः, वाशब्दश्चशब्दार्थे, को जीवः कथंलक्षणश्चेति, इतिशब्दः शिष्याभिप्रायेयत्ताप्रकाशनार्थः। एवं प्रश्नद्वयप्रदर्शने प्रबोधने सति आचार्य आह—**अत्रोच्यते** इति। अत्रास्मिन् प्रश्नद्वयेऽपि भण्यते प्रतिवचनम्, तत्राद्यं प्रश्नमधिकृत्य सूरिः सूत्रमधिजगे—

**सूत्रम्–औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च ॥ २–१ ॥**

भावेषु औपशमिकाद्या भेदाः

**भा०—औपशमिकः, क्षायिकः, क्षायोपशमिकः, औदयिकः, पारिणामिकः, इत्येते पञ्च भावा जीवस्य स्वतत्त्वं भवन्ति ॥ १ ॥**

टी०—**औपशमिक** इत्यादि। समुदायार्थस्त्वयम्–औपशमिकादिभावयुक्तो द्रव्यं जीव इति कर्मगुणनिरासद्वारेण प्रतिपादयति। तत्रोपशमनमुपशमः—कर्मणोऽनुदयलक्षणावस्था भस्मपटलावच्छन्नाग्निवत् सः प्रयोजनमस्येत्यौपशमिकस्तेन वा निर्वृत्तः। तथा तदत्यन्तात्ययात् स क्षयः स प्रयोजनमस्य तेन वा निर्वृत्त इति क्षायिकः, भवनं भावः तेन पर्यायेण आत्मलाभः, कर्मण उपशमाद् यद् दर्शनं चरणं वा श्रद्धानलक्षणं विरतिलक्षणं वा तथोद्भवति तदौपशमिकशब्देनोच्यते, तथा क्षायिकशब्देन त एव दर्शनादिपर्यायाः श्रद्धानादिलक्षणाः शीर्णाशेषस्वविघातिकर्मांशाः प्रतिपाद्यन्त आत्मनः स्वरूपतयेति, क्षयोपशमाभ्यां निर्वृत्तो मिश्रः दरविध्या(ताव)च्छन्नज्वलनवत्, कथं पुनः भाव्यते? यदुदयावलिकाप्रविष्टं कर्म तत् क्षीणं शेषमनुद्रेकक्षयावस्थमिमामुभयीमवस्थामाश्रित्य मिश्रः प्रजायते॥ ननु चायमेवौपशमिकान्न भिद्यते, यतस्तत्राप्युदितं क्षीणमनुदितं चोपशान्तमिति। अत्रोच्यते–क्षयोपशमे ह्युदयोऽप्यस्ति, प्रदेशतया कर्मणो वेदनानुज्ञानात्, न त्वसाविति विघाताय, अनुभावं पुनर्न तत्र वेदयते, उपशमे तु प्रदेशकर्मापि नानुभवति मनागपि नोदयोऽयं विशेष इतियावत्। आगमश्चायम्–"से[2] णूणं भंते! णेरइयस्स वा तिरिक्खजोणियस्स वा मणुस्सस्स वा देवस्स वा जे कडे ( पावे ) कम्मे णत्थि णं तस्स अवेइत्ता मोक्खो? हंता गोयमा०! से केणट्ठेणं भंते! एवं वुच्चइ? एवं खलु गोयमा! मए दुविहे कम्मे पन्नत्ते, तंजहा पदेसकम्मे अणुभावकम्मे य, तत्थ णं जं तं पएसकम्मं तं नियमा वेएइ, तत्थ णं जं तं अनुभावकम्मं तं अत्थेगइयं

औपशमिकक्षायोपशमिकयोर्भिन्नता

१–'सतत्त्वं' इति क–ख–पाठः।

२ अथ नूनं भदन्त! नैरयिकस्य वा तिर्यग्योनिकस्य वा मनुष्यस्य वा देवस्य वा यत् कृतं ( पापं ) कर्म नास्ति तस्यावेदित्वा मोक्षः?। हन्त गौतम! तत् केनार्थेन भदन्त! एवमुच्यते? एवं खलु गौतम! मया द्विविधं कर्म प्रज्ञप्तं, तद्यथा–प्रदेशकर्म अनुभागकर्म च। तत्र यत् तत् प्रदेशकर्म तद् नियमेन वेदयति, तत्र यत् तद् अनु-

वेएइ अत्थेगइयं नो वेएइ, णायमेवं अरहता विण्णायमेयं अरहता–अयं जीवे इमं कम्मं अज्झोवगमियाए वेयणाए वेदिस्सति, अयं जीवे इमं कम्मं उवक्कमियाए वेयणाए वेदिस्सति अहाकम्मं अहाक(निग)रणं जहा जहा तं भगवया दिट्ठं तहा तहा विपरिणमिस्सतीति–से तेणं अट्ठेणं गोयमा ! एवं वुच्चति" (**भगवत्यां** श० १, उ० ४, सू० ४०) अतोऽस्ति विशेषः औपशमिकक्षायोपशमिकयोरिति । अत्रापि त एव दर्शनादिपर्यायाः श्रद्धानादिलक्षणाः प्रदेशकर्मोदययुजः क्षायोपशमिकशब्दवाच्या भवन्ति, चशब्दः समुच्चयार्थः, औपशमिकक्षायिकौ स्वतत्त्वं मिश्रश्च स्वतत्त्वमिति । जीवस्येति कर्तृलक्षणा षष्ठी, जीवस्यैवैते त्रयो भावाः, नान्यस्य स्तम्भकुम्भादेः, वक्ष्यमाणदर्शनादिकलापानुपलब्धेः, इह च जीवशब्द आत्मपर्यायः शुद्धो गृह्यते, नायुःप्राणसम्बन्धोद्भासितो जीवनाज्जीव इति, मुक्तानां तदनभिसम्बन्धात् । अथवा द्रव्यभावप्राणसामान्याङ्गीकरणे सति प्रतिविशिष्टसम्बन्धापेक्षः शब्दो भवत्येव जीवनाज्जीवः, संसारिणः द्रव्यप्राणाः पञ्चेन्द्रियादयः, सिद्धानां भावप्राणाः ज्ञानोपयोगादय इति । स्वतत्त्वमित्ययं स्वशब्द आत्मात्मीयादिषु प्रसिद्धः, तत्रात्मनि वर्तमानोऽङ्गीक्रियते, तत्त्वशब्दो भावाभिधायी, ततश्चायं समुदायार्थः–जीवस्यायमात्मा भावः जीवस्यायमात्मस्वरूपभवनम्, एवमौपशमिकादिरूपेणात्मनैव स तथा भवतीति, अव्यतिरेकलक्षणा चेयं कर्तुरनर्थान्तरं षष्ठी, स्वतत्त्वं च पदार्थानामनध्यारोपितमनपोदितं च भवति, सर्वदा जीवश्चेतनालक्षण इति नाध्यारोपितं, नापोदितं किंचित्, चेतनायाः सुखदुःखादिसाधारणसंवेदनलक्षणायाः प्रति स्वं प्राणिविशेषप्रतिसंवेद्यत्वात्, तत्राध्यारोपो विभुनिरवयवनिष्क्रियादिधर्मकत्वेन, अपवादो नास्त्यात्मा न प्रमाणविषयो न च त्वक्पर्यन्तशरीरसम्बन्धीति, स्वानुभवविरुद्धत्वात्, अध्यारोपे चाप्रमाणकत्वात्, यदेव प्रत्यात्मप्रसिद्धं तदेवास्य लक्षणम्, वक्ष्यति च द्वितीयप्रश्नमधिकृत्य कथंलक्षणो वेति, 'उपयोगो लक्षणं' (अ० २, सू० ८) इति, चेतनाविशेषलक्षितस्य च कर्मोदयाद्यपेक्षाणि भावान्तराण्यधिकृत्य को जीव इत्यत्र प्रश्ने प्रतिपत्तिराहिता आत्मनः, एकरूपमपि चैतन्यस्वतत्त्वं कर्मक्षयोपशमाद्यवस्थाविशेषनिमित्ताद्व्यपदेशाद्भावेयत्तानियमं प्रतिपद्यते, उपलक्षणभूताश्चैते प्रायः कर्मापेक्षत्वाद् भवन्ति स्वतत्त्वं, यथा चक्षुर्द्वारकज्ञानविषयो रूपमिति, उपयोगः पुनः स्वतत्त्वं यथा मूर्तौ रूपमिति, तथा चाग्नेरुष्णत्ववच्चैतन्यलक्षणमहेयमात्मनः, तस्यैवाग्नेर्धूमवदौपशमिकादि प्रायो हेयमुपलक्षणमिति । कर्मविपाकाविर्भाव उदयः तत्प्रयोजनस्तन्निर्वृत्तो वा औदयिको भावः । तद्यथा—नरकगतिनामकर्मोदयान्नरकगतिरौदयिकोऽभिधीयते भावः, कषायमोहनीयोदयाच्च क्रोधी मानीत्याद्यौदयिकः, सर्वत्रैवं वासनाऽऽधेया, यद् यत्र

---

भागकर्म तदस्त्येकक वेदयति, अस्त्येकक नो वेदयति, ज्ञातमेतदर्हता, विज्ञातमेतदर्हता–अयं जीव इदं कर्म आभ्युपगमिक्या वेदनया वेदयिष्यति । अयं जीव इदं कर्म औपक्रमिक्या वेदनया वेदयिष्यति, यथाकर्म यथानिकरणं यथा यथा भगवता दृष्टं तथा तथा विपरिणंस्यति इति तत् तेनार्थेन गौतम ! एवमुच्यते ।

१ 'अज्झोद गमियाए' इति ग–टी–पाठः । २ 'निमित्ताद्यपदेशात्' इति ग–टी–पाठः ।

नरकगतिनाम विपक्कं सदौदयिकशब्देनोच्यते कषायमोहनीयं च विपक्कं क्रोधादि तत् कथं जीवस्य स्वतत्त्वं स्यात्? यतः कर्म पौद्गलिकं मूर्तमचेतनं,आत्मस्वभावस्तु तद्विपरीत इति। उच्यते—ननूक्तमेव प्राग् उपलक्षणभूताश्चैते प्रायः पार्थक्येनापि वर्तमाना धूमवदग्नेरात्मनो भावाः गमका भवन्ति हेयाश्च, अथवा य एते गत्याद्याः परिणामविशेषाः स जीव एव कर्मावष्टम्भजनितपरिणामानन्यत्वात्, अन्योऽन्यानुगतौ सत्यामविभागात्, तदात्मकत्वमुदकदुग्धयोरिवात्मकर्मणोः, अतः स्वतत्त्वमात्मनो गत्यादयः, सैव हि चेतनाऽनपायिनी कर्ममलदिग्धाऽनेकावस्थान्तरावस्कन्दिनी तथा व्यपदिश्यते इति न दोषः । कश्चिदाढौकते—परिणाम एव हि पारिणामिक इति स्वार्थे प्रत्ययो न प्रयोजननिर्वृत्त्योः, किं कारणम् ? आदिमत्त्वप्रसङ्गाज्जीवभव्याभव्यत्वादेः, यदि परिणामः प्रयोजनमस्येति व्युत्पत्तिः पारिणामिको जीव इति ततः प्रागवस्थायां नाभूज्जीव इति, युक्त्यागमाभ्यां चैष पक्षो विरुध्यते, एवं निर्वृत्त्यर्थेऽपि प्रागनिर्वृत्तौ निर्वर्त्येत, स एव दोषः, तथा भव्याभव्यत्वादिष्वपि योज्यम् । युक्तिविरोधस्तावत् कथमसन् खरविषाणकल्प आत्मोत्तरकालं सम्भवेत् ? । आगमश्चायम्—"[1]एस णं भंते! जीवे तीत[2]मणंतं सासयं समयं [3]भवतीति वत्तव्वं सिया ? हंता गोयमा ! एस णं भंते ! जीवे पडुप्पण्णं सासयं समयं भवतीति वत्तव्वं सिया ? हंता गोयमा ! एस णं जीवे अणागयमणंतं [4]सासतं समयं भविस्सतीति वत्तव्वं सिया ? हंता गोयमा" (**भगवत्यां** श० १४, उ० ४, सू० ५११) तस्माद् युक्त्यागमविरोधौ मा भूतामिति । परिणाम एव हि पारिणामिक इति स्वार्थे प्रत्ययो न प्रयोजननिर्वृत्त्योः, किं कारणम् ? आदिमत्त्वप्रसङ्गात् पारिणामिकोऽनादिप्रसिद्धः सकलपर्यायराशेः प्रह्वतामभिमुखतां प्रतिपद्यमानोऽशेषभावाधारतां बिभर्तीति नामुना विना कस्यचिद् भावस्य निष्पत्तिः, अतश्च प्राधान्यमस्यैव भावानां मध्ययिति । पारिणामिकशब्देन च द्रव्यभावप्राणावस्थाख्यः परिणाम उच्यते, तथा सेधनयोग्यः परिणामो भव्यः, अभव्यस्तु न कदाचित् सेधनयोग्यः परिणाम इति । सूत्रपर्यन्तवर्ती चशब्दः समुच्चये, औपशमिकादयो भावाः जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च स्वतत्त्वमिति भावानां पर्यन्ते च वृत्तावितिशब्दोऽर्थपदार्थः; क एते औपशमिकाद्यर्थाः पञ्च भावाः ? जीवस्य स्वतत्त्वं भवन्ति, विनाऽप्येवकारेण सङ्ख्याशब्दोपादानादवधृतिर्गम्यते पञ्चैवाऽन्यूनाधिका भावाः पर्यायाः जीवस्य स्वतत्त्वमुपलक्षणद्वारेण भूयसा भवन्ति । एते च सर्वजीवेषु सर्वदा साकल्येन न भवन्तीत्युपलक्षणमात्रमतो द्रष्टव्याः। एवमौपशमिकादिभावयुक्तो द्रव्यं जीवः सङ्कोचविकासस्वभावो लोकाकाशप्रदेशमाना-

---

१ एष भदन्त ! जीवः अतीतेऽनन्ते शाश्वते समये भवतीति वक्तव्यं स्यात् ? हन्त गौतम !, एष भदन्त ! जीवः प्रत्युत्पन्ने शाश्वते समये भवतीति वक्तव्यं स्यात् ? हन्त गौतम !, एष जीव अनागतेऽनन्ते शाश्वते समये भविष्यतीति वक्तव्यं स्यात् ? हन्त गौतम !

२ 'नीयमाणं' इति ग–टी–पाठः । ३ 'भुवीति' इति ग–टी–पाठः । ४ 'सासयं' इति ग–टी–पाठः ।

संख्येयप्रदेशोऽपि प्रदीपवदाश्रयमात्रावभासी प्रमाणत्वात् अमूर्तेभ्योऽप्याकाशादिभ्यो भिन्न-जातीय इति ॥ १ ॥

एवमेते जीवस्य स्वनिमित्ताः कर्मक्षयावस्थानिमित्ताश्च भावा मूलभेदतो व्याख्याताः। अधुनैषां प्रत्येकं सम्भविनो भेदाः प्रतायन्ते, यथैव निमित्तान्तरादविलक्षणस्यापि जीवस्य भावानां पञ्चत्वं तथा पञ्चानामपि पृथक् पृथक् निमित्तापेक्षा भेदा भवन्ति, ते चामी—

## सूत्रम्—द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् ॥ २–२ ॥

**भा०—एते औपशमिकादयः पञ्च भावाः द्विनवाष्टादशैकविंशतित्रि-भेदा भवन्ति। यथा औपशमिको द्विभेदः। क्षायिको नवभेदः। क्षायिकोपशमिकोऽष्टादशभेदः। औदयिक एक-विंशतिभेदः। पारिणामिकस्त्रिभेद इति। यथाक्रममिति येन सूत्रक्रमेणात ऊर्ध्वं वक्ष्यामः ॥ २ ॥**

औपशमिकादीनां भेदसंख्या

टी०—**द्विनवाष्टादशेत्यादि** सूत्रम्, द्वौ च नव चेत्यादि द्वन्द्वः, पश्चाद् बहुव्रीहिः, द्विनवाष्टादशैकविंशतित्रयो भेदा येषां ते **द्विनवाष्टादशैकविंशतित्रिभेदा** औप-शमिकादयः, प्रागुपन्यस्तसूत्रानुपूर्व्यपेक्षं **यथाक्रम**ग्रहणम्। एतच्च व्यतिकरदोषनिवृ-त्त्यर्थं मा भूत् पञ्चानामेकस्यैते भेदाः, समस्तानां वा एतावन्त एव, किन्तु एकैकस्य भावस्य वक्ष्यमाणाः सम्यक्त्वचारित्रे इत्यादयो यथा स्युरिति यथाक्रमग्रहणम्। इह केचिद् विद्वांसः संसार[2]स्थानामिति वाक्य[3]शेषमधीयते सिद्धव्यावृत्त्यर्थं, न किलैते ब्यादि-भिन्नास्तेषु सम्भवन्ति भावाः, एकरूपः पारिणामिक एव सम्भवति, तदेतदयुक्तम्, तत्र हि यथासम्भवं ग्रहीष्यन्ते, नावश्यं सर्वैः स्वभेदैः सर्वत्र भवितव्यम्, यथा संसा-रिणामपि मिथ्यादृष्टीनां न कदाचिदौपशमिकक्षायिकौ भवतः, अभव्यानां वा, तथा सिद्धेष्वपि यथासम्भवग्रहणमिति न किञ्चिद्वाक्यशेषेण। तथैवंरूपः पारिणामिक एव सम्भ-वति, तदेतदयुक्तम्, यस्मात् क्षायिकसम्यक्त्ववीर्यसिद्धत्वदर्शनज्ञानैः आत्यन्तिकैः स युक्तोऽति-निर्द्वन्द्वेनापि च सुखेन, ज्ञानादयस्तु भावप्राणाः, मुक्तोऽपि जीवति स तर्हि, तस्माज्जीवत्वं नित्यं सर्वस्य जीवस्येत्येवमादयः पारिणामिका अपि भावाः सन्ति, न परिणाम एवेत्यवधृतिः ॥

सम्प्रति भाष्याक्षराणि विव्रियन्ते–**एत** इति प्रत्यक्षासन्नवाचिना सर्वनाम्नाऽनन्तर-सूत्रनिर्दिष्टान् भावानभिमुखीकरोति, **औपशमिकादय** इति प्रतिविशिष्टं क्रममाचष्टे, **भावा** इति भवनलक्षणा जन्तोः परिणतिविशेषाः, **पञ्चे**ति सङ्ख्ययाऽवधारणं तेषाम्, एतावता भाष्येणानूद्य पूर्वकमर्थमधुना भेदान् विधत्ते **द्विनवे**त्यादिना। इदं च सूत्रमेक-मेवाचार्येण खण्डीकृत्याधीतम्, न पुनर्विवरणमस्य, कुत एतद् भवतीति ? सूत्रमध्ये उच्चार-

---

१ 'क्षायोपशमिक' इति घ–पाठः। २ 'संसारस्थायिनाम्' इति ग–टी–पाठः। ३ 'वाक्यशेषमभिदधत' इत्युचितं प्रतिभाति।

णाद् विभक्त्यश्रवणाच्च द्यादिषु निश्चीयते, पुनः सूत्रपाठे तर्हि किं प्रयोजनम् ? एतावल्लक्ष्यते- पूर्वं सूत्रार्थमनूद्य यथाक्रमं सूत्रं सम्बन्धयति–**औपशमिको द्विभेद** इत्यादि। विवरणं सुगमम्। **पारिणामिकस्त्रिभेद इति**, अयमितिशब्द आदिशब्दार्थे; शेषपारिणामिकभेदसङ्ग्रहार्थम्, **यथाक्रमामिति**, अत्रेतिशब्दः शब्दपदार्थकः; अनेन शब्देनायमर्थः प्रत्याय्यते, **येन सूत्रक्रमेणात ऊर्ध्वं वक्ष्यामः**, येनेति वक्ष्यमाणेन सम्यक्त्वचारित्रे इत्यादिना अस्मात् सूत्रादुपरिष्टात् भणिष्यामः तेन क्रमेण यथाक्रममौपशमिकादयो द्रष्टव्याः। वाक्यान्तरेण प्रकृतार्थनिगमनमादर्शितम्, वाक्यान्तरनिरूपणं च व्याख्यायाः प्रधानाङ्गमिति सङ्ख्यानमात्रश्रवणादुद्देशसूत्रमिदं, न तु भेदनिर्देशः ॥ २ ॥

सम्प्रति संख्येयान् भावविशेषान् निर्दिशति; औपशमिकस्य तावत् सूत्रक्रमप्रामाण्यात् भेदद्वयं प्रतिपिपादयिषुराह–

## सूत्रम्—सम्यक्त्वचारित्रे ॥ २–३ ॥

औपशमिकस्य द्वौ भेदौ

**भा०—सम्यक्त्वं चारित्रं च द्वावौपशमिकौ भावौ भवत इति ॥ ३ ॥**

**टी०—सम्यक्त्वचारित्रे** सम्यक्त्वमुक्तं प्रथमेऽध्याये लक्षण-विधानाभ्याम्, चारित्रं नवमे वक्ष्यते। एतदुभयमपि सिद्धं गृहीत्वा इहौपशमिकभावो नियम्यते, सम्यक्त्वचारित्रे त्वनियते क्षायिकक्षायोपशमिकयोरपि भवतः, औपशमिक-भावस्तु द्वयमिदमपहाय न भेदान्तरमवरुणद्धि, अयं च नियमो द्विनवाष्टादिसूत्रारम्भ-सामर्थ्याल्लभ्यते, औपशमिको द्विभेद एवेति गम्यते, सङ्ख्याशब्दोपादानेऽप्येवकारेण तद्यथेत्यादिभाष्ये अनन्तरसूत्रनिर्दिष्टं द्विभेदत्वमौपशमिकस्य तदधुना यथा भवति तथा प्रकाश्यते–सम्यक्त्वचारित्रे चेति, तत्त्वरुचिः **सम्यक्त्वम्**, सदसत्क्रियाप्रवृत्तिनिवृत्तिलक्षणं **चारित्रम्**, चशब्दः समुच्चये, एतदुभयमपि इष्टनियमप्रदर्शनार्थम्, **द्वाविति** सङ्ख्योपादानम्, स च प्रकटीकृत एव प्राक्। **औपशमिकावित्यनेन** नियम्य पदार्थं दर्शयति–**भावा-विति**। सम्यक्त्वचारित्रयोरात्मपर्यायत्वं दर्शयति–**भवत इति**। श्रद्धानचरणक्रिययोः क्रियावतः सकाशादनन्यत्वमाह, अतः समुदायार्थोऽयम्–सम्यक्त्वचारित्रे द्वे एव औपश मिको भावो भवति, नान्यथेति ॥ ३ ॥

अथ क्षायिको नवभेद उद्दिष्टः सोऽधुना निर्दिश्यते—

## सूत्रम्–ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ २–४ ॥

क्षायिकस्य नव भेदाः

**भा०—ज्ञानं, दर्शनं, दानं, लाभः, भोगः, उपभोगः, वीर्यमि-त्येतानि सम्यक्त्वचारित्रे च नव क्षायिका भावा भवन्तीति ॥४॥**

टी०—**ज्ञानदर्शने**त्यादि सूत्रम्। कृतद्वन्द्वानां निर्देशः, **च**शब्दोऽनन्तरद्वयानुकर्षणार्थः सूत्रोक्ताः सप्त च द्वौ चशब्दानुकृष्टावित्येवं नव भेदाः ॥ ननु च सिद्धत्वमपि क्षायिको भावः, स चेह न निर्दिष्टः सूरिणा, कोऽभिप्राय इति ? । उच्यते—कर्माष्टकैकदेशक्षयादेते क्षायिकाः सूत्रेण प्रतिबद्धाः, सिद्धत्वं तु सकलकर्मक्षयजं भवप्रपञ्चपरिवर्ति[1] परां विशुद्धिकाष्ठामितं परमक्षायिकं कालस्वभावभेदात् मुक्तकाल एव सर्वकर्माभावस्वभाव इत्यतो न प्रतिबद्धम्, ज्ञानादयस्तु संसृतौ मुक्तौ च केचित् सम्भवन्तीति विशेषप्रतिपादनार्थमग्रहणं सिद्धत्वस्येति[2]। कथं पुनरयमाचार्याभिप्रायो गम्यते ? । उच्यते—वक्ष्यति हि दशमे 'औपशमिकादिभव्यत्वाभावाच्चान्यत्र[3] केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः' (अ०१०,सू०४) इति, तन्न खलु विस्मृत इहाचार्यस्यायं सिद्धत्वलक्षणो भावः, किन्तु मोक्षकाष्ठा परासाविति **तत्रैवोपादास्यामहे**—मोक्षाधिकार एव पठिष्यामः इत्यमुनाऽभिप्रायेण नेहाधीतः, ये पुनः कर्माष्टकैकदेशक्षयात् जातास्त इहावध्रियन्ते नवेत्यदोषः ॥

भाष्याक्षराण्यधुनाऽनुगम्यन्ते—**ज्ञानमिति** केवलं सकलज्ञेयग्राहि समस्तज्ञानावरणक्षयप्रभवं परिगृह्यते, न शेषमसम्भवात्, **दर्शनमपि** केवलाख्यमशेषदर्शनावरणीयक्षयसमुद्भूतमुपात्तम्, न शेषं चक्षुराद्यसम्भवात्, **दानमिति** वक्ष्यते लक्षणतः ' स्वस्यातिसर्गो दानं ' ( अ० ७, सू० ३३ ) तच्च सकलदानान्तरायक्षयादेकस्मादपि तृणाग्रात् त्रिभुवनविस्मयकरं यथेप्सितमर्थिनो न जातुचित् प्रतिहन्यते प्रयच्छत इति, **लाभ** इति परस्माच्चतुर्वर्गस्यान्यतमसमस्तसाधनप्राप्तिः, स चाशेषलाभान्तरायकर्मक्षयादचिन्त्यमाहात्म्यविभूतिराविर्भवति। येन यत् प्रार्थयते तत् समस्तमेव लभते, न तु प्रतिषिध्यते। शुभविषयसुखानुभवो **भोगः**, अथवा भक्ष्यपेयलेह्यादिसकृदुपयोगाद् भोगः, स च कृत्स्नभोगान्तरायक्षयाद् यथेष्टमुपपद्यते, न तु सप्रतिबन्धः कदाचिद् भवति, न वा न भवत्यभिलषित[4] इति । विषयसम्पदि सत्यां तथोत्तरगुणप्रकर्षात् तदनुभवः **उपभोगः**, पुनः पुनरुपभोगाद् वा वस्त्रपात्रादिरुपभोगः, स च निरवशेष उपभोगान्तरायकर्मणि क्षीणे यथेष्टमुपतिष्ठते। अप्रतिघः शक्तिविशेष आत्मनो **वीर्यम्**, तच्चाप्रतिहतमपास्ताशेषवीर्यान्तरायकर्मणो भवति, तेन च यदिच्छति तत् सर्वमायत्तीकरोति। **सम्यक्त्वं** पुनरनन्तानुबन्धिकषायमिथ्यात्वमिश्रसम्यक्त्वदर्शनसप्तकक्षयादात्यन्तिकादप्रतिहतं जीवादिपदार्थश्रद्धानलक्षणमसंहार्यमुपजायते। **चारित्रं** तु सकलमोहक्षयात् क्षायिकमाविर्भवति। **वीर्यमित्यत्रायमितिशब्दो**ऽर्थपदार्थकः, **एतानीति** सूत्रोक्तानि, **चशब्दः** समुच्चये, **सम्यत्वचारिते च, नव क्षायिका भावा भवन्तीति** ॥ ४ ॥

उद्दिष्टः क्षायोपशमिकोऽष्टादशधा, स इदानीमाविर्भाव्यते—

---

१ ' पारावर्त्ती ' इति **ग**-टी-पाठः । २ ' पादनार्थग्रहणं सिद्धस्येति ' इति **क-ख**-पाठः । ३ ' भव्यत्वाभव्यत्वान्यत्र ' इति **क-ख**-पाठः । ४ ' त्यभिलाष इति ' **ख**-पाठः ।

**सूत्रम्—ज्ञानाज्ञानदर्शनदानादिलब्धयश्चतुस्त्रित्रिपञ्चभेदाः यथाक्रमं सम्यक्त्वचारित्रसंयमासंयमाश्च ॥ २–५ ॥**

क्षायोपशमिकस्याष्टादश भेदाः

**भा०—ज्ञानं** चतुर्भेदं–मतिज्ञानं, श्रुतज्ञानं, अवधिज्ञानं, मनःपर्यायज्ञानमिति । अज्ञानं त्रिभेदं–मत्यज्ञानं, श्रुताज्ञानं, विभङ्गज्ञानमिति । दर्शनं त्रिभेदं–चक्षुर्दर्शनं, अचक्षुर्दर्शनं, अवधिदर्शनमिति। लब्धयः पञ्चविधाः–दानलब्धिः, लाभलब्धिः, भोगलब्धिः, उपभोगलब्धिः,वीर्यलब्धिरिति । सम्यक्त्वं चारित्रं संयमासंयम इत्येतेऽष्टादश क्षायोपशमिका भावा भवन्तीति ॥ ५ ॥

**टी०—ज्ञानाज्ञाने**त्यादि सूत्रम्, ज्ञानादीनां लब्धिपर्यन्तानां द्वन्द्वः, चतुरादीनामपि पञ्चानां द्वन्द्वः, पश्चाद् बहुव्रीहिः, चतुःत्रित्रिपञ्च भेदा यासां ताश्चतुस्त्रित्रिपञ्चभेदाः । अत्र च यथासङ्ख्यमभिसम्बन्धो ज्ञानादीनाम्, सम्यक्त्वादीनामपि कृतद्वन्द्वानां बहुवचनेन निर्देशः, अशक्यप्रतिबन्धमन्यथा सूत्रमतो विच्छेदमकरोत् सूत्रकारः ॥ ननु च सम्यक्त्वचारित्रयोरधिकारादेवानुवृत्तिर्भविष्यतीह सूत्रे, नार्थः शृङ्गग्रहणेनेति । उच्यते–'चानुकृष्टमुत्तरत्र नानुवर्तत' इत्यभिप्रायः । चशब्दः समुच्चितौ, ज्ञानादयो लब्ध्यन्ताः सम्यक्त्वादयश्च । क्षायोपशमिकोऽष्टादशधा ॥

अधुना भाष्यार्थः–**ज्ञानं चतुर्भेद**मित्युद्देशभाष्यम्, **मतिज्ञान**मित्यादिनिर्देशः, एतानि च लक्षणविधानतः प्रथमे व्याख्यातानि, सम्प्रति तु नियममात्रं भावस्यावद्योत्यते । अत्र च मत्यादिचतुष्टयज्ञानावरणीयकर्मणां सर्वोपघातीनि देशोपघातीनि च फड्डकानि, तत्र सर्वेषु सर्वघातिफड्डकेषु ध्वस्तेषु देशोपघातिफड्डकानां च समये समये विशुद्ध्यपेक्ष्यं भागैरनन्तैः क्षयमुपगच्छद्भिर्देशोपघातिभिर्भागैश्चोपशान्तैः सम्यग्दर्शनसाहचर्याज्ज्ञानी भवति, तच्चास्य क्षयोपशमजं ज्ञानचतुष्टयमुच्यते, इतिशब्दः क्षायोपशमिकज्ञानेयत्ताप्रतिपत्त्यर्थः। **अज्ञानं त्रिभेद**मित्युद्देशः, **मत्यज्ञानादि** निर्देशः, ज्ञानमेव मिथ्यादर्शनसहचरितमज्ञानम्, कुत्सितत्वात् कार्याकरणादशीलवदपुत्रवद् वा, अज्ञानता च प्रपञ्चतः प्रथमे प्रतिपादिता, मिथ्यादृष्टेरवधिर्विभङ्ग उच्यते, भङ्गः–प्रकारः, कुत्सार्थो विरुपसर्गः, विगर्हितो भङ्गः विभङ्गः, विभङ्गं च तज्ज्ञानं च विभङ्गज्ञानम्, अत्र विभङ्गशब्देन कुत्सा गतेति न ज्ञानशब्दादौ नञ्[1]योगस्तेन विभङ्गज्ञानम् । तदेतत् त्रिविधमपि ज्ञानावरणक्षयोपशमजमवसेयम् । अज्ञानेयत्तापरिच्छेदार्थमितिशब्दः। **दर्शनं त्रिभेद**मित्युद्देशः, **चक्षुर्दर्शन**मित्यादि निर्देशः, चक्षुषा दर्शनम्–उपलब्धिः सामान्यार्थग्रहणं स्कन्धावारोपयोगवत् तदहर्जातबालदारकनयनोपलब्धिवद् वा व्युत्पन्नस्यापि, **अचक्षुर्दर्शनं**–शेषेन्द्रियैः श्रोत्रादिभिः सामान्यार्थग्रहणम्, **अवधिदृ**गावरणक्षयोपशमनाद् विशेषग्रहणविमुखोऽवधिदर्शनमित्युच्यते, नियमतस्तु तत् सम्यग्दृष्टि-

---

१ 'नञ्प्रयोगः' इति ग–टी–पाठः ।

स्वामिकम्, एवमेतत् त्रिविधमपि दर्शनावरणकर्मणः क्षयोपशमादुपजायत इति। अत्र अपीति शब्दः क्षायोपशमिकदर्शनेयत्ताधिगमार्थः। **लब्धयः पञ्चविधाः** इत्यमुना विवरणेन यथासङ्ख्यमुपदर्शयति- **दानलब्धिरि**त्यादिना भाष्येण, आदिशब्दाक्षिप्ताः प्रतिविशिष्टा एव लब्धीरुपवर्णयति, अनेकरूपत्वाल्लब्धीनाम्॥ नन्वनन्तरसूत्रनिर्दिष्टाः प्रतिपदमेता एव ग्रहीष्यन्ते न पुनरुपादेया इति उच्यते-अत एव सूत्रे नोपात्ताः, प्रतिपदविवरणे पुनर्न दोषः कश्चित्, यथा यथा सुविवृतं भवति तथा तथा विवृणोति। एताः पञ्चापि लब्धयोऽन्तरायकर्मणां क्षयोपशमाद् भवन्ति, **सम्यक्त्वम**नन्तानुबन्धिकषायदर्शनमोहक्षयोपशमादाविश्चकास्ति, **चारित्रमपि** दर्शनमोहकषायद्वादशकक्षयोपशमाज्जायते सकलविरतिलक्षणम्, **संयमश्चासावसंयमश्च संयमासंयमः**--सङ्कल्पकृतात् प्राणातिपातान्निवृत्तिरारम्भकृतादनिवृत्तिः तथा मृषावादादिष्वपि योज्यम्। सङ्क्षेपतो द्वादशविधः श्रावकधर्मः संयमासंयमो व्यावृत्तिप्रवृत्तिलक्षणः। स च दर्शनमोहापोहादनन्तानुबन्ध्यप्रत्याख्यानकषायाष्टकक्षयोपशमाज्जायते। **इतिशब्दः** क्षायोपशमिकभेदेयत्ताप्रतिपादनार्थः। **एतत्** प्रतिपदमुद्दिष्टाः। **अष्टादशेति** सङ्ख्यावच्छिन्नाः। **क्षायोपशमिका** इति शेषभावव्युदासः। भवनलक्षणास्त्वेते **भावाः** प्रादुष्ष्यन्तीति॥ ५॥

औदयिकस्त्वेकविंशतिविधान उद्दिष्टः, सोऽधुना भण्यते—

**सूत्रम्—गतिकषायलिङ्गमिथ्यादर्शनाज्ञानासंयतासिद्धत्वलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः॥ २–६॥**

**भा०—गतिश्चतुर्भेदा-नारक-तैर्यग्यौन[1]-मानुष्य-देवा इति। कषायश्चतुर्भेदः-क्रोधी, मानी, मायी, लोभीति। लिङ्गं त्रिभेदं-स्त्री, पुमान्, नपुंसकमिति। मिथ्यादर्शनमेकभेदं, मिथ्यादृष्टिरिति। अज्ञानमेकभेदं, अज्ञानीति। असंयतत्वमेकभेदं, असंयतोऽविरत इति। असिद्धत्वमेकभेदं, असिद्ध इति। एकभेदमेकविधमिति। लेश्याः षड्भेदाः- कृष्णलेश्या, नीललेश्या, कापोतलेश्या, तेजोलेश्या, पद्मलेश्या, शुक्ललेश्या। इत्येते एकविंशतिरौदयिकभावा भवन्ति॥ ६॥**

२१ भेदा औदयिकस्य

**टी०—गतिकषाये**त्यादि सूत्रम्। गत्यादीनां लेश्यान्तानां द्वन्द्वः। चतुरादीनां षडन्तानां द्वन्द्वगर्भो बहुव्रीहिः। एवमियमेकविंशतिरौदयिकभेदानामवसेया॥ ननु च बहवोऽसङ्गृहीताः कर्मभेदाः प्राप्नुवन्त्यौदयिकाः, त्वया च परिसङ्ख्या क्रियते, दर्शनावरणे तावन्निद्रादिपञ्चकं वेदनीयमुभयं मोहनीये हास्यादिषट्कं आयुश्चतुर्विधं नामकर्म सकलम्, गतिरुपात्ता केवलं तत्रत्या, गोत्रमुभयमपि, सर्वे एते औदयिका भावाः तत् कथमेषां परिगणनेन सङ्ग्रहः? उच्यते—अज्ञानग्रहणान्निद्रादिपञ्चकमाक्षिप्तम्, यतो ज्ञानदर्शनावरण-

[1] 'तिर्यक्' इति ख-पाठः।

दर्शनमोहनीयोदयादज्ञानं भवति, गतिग्रहणाच्छेषनामभेदाः गोत्रवेदनीयायूंषि चाक्षिप्तानि, यस्माद् गतिरायुष्कजात्यादिनामगोत्रवेदनीयानामन्यतमाभावेऽपि न सम्भाव्यते, भवधारणकारणत्वात् एषां कर्मणामिति, तथा लिङ्गग्रहणाद् हास्यादिषट्कग्रहणम्, हास्यादिषट्कस्य लिङ्गोपग्रहकारकत्वात्, कषायग्रहणाद् वा हास्यादिपरिग्रहः, यस्मादेते नव नोकषायाः कषायसहवर्तित्वादुच्यन्त इति ॥ ननु च कर्मप्रकृतिभेदानां द्वाविंशत्युत्तरशतं प्रकृतिगणनया प्रसिद्धमाम्नाये, न च तत्र लेश्याः परिपठितास्तत् कथम्?। उच्यते—वक्ष्यते नामकर्मणि मनःपर्याप्तिर्नाम, पर्याप्तिश्च करणविशेषो येन मनोयोग्यान् पुद्गलानादाय चिन्तयति, ते च मन्यमानाः पुद्गलाः सह करणेन मनोयोग उच्यते, मनोयोगपरिणामश्च लेश्याः, ताश्च नोपात्ताः सूत्रभाष्ययोरिहोत्तरोत्तरभेदत्वादिति। अपरे मन्यन्ते—कर्माष्टकोदयादसिद्धत्व एव लेश्या ग्राह्याः, तदेतत् सर्वं सूत्रकारेण लाघवमिच्छता लेशत उपात्तं न साक्षात् ॥

अधुना भाष्यमनुस्रियते[1]—**गतिश्चतुर्भेदा** नारकादिचतुर्विधपर्यायोत्पादनव्यपदेशकारणसमर्थं यत् कर्म तद् गतिशब्देनोच्यते, तस्य कर्मण उदयादयं निर्वर्तते भावो नारकादिः नरकगतिनामकर्मोदयान्नारक इत्येवं सर्वत्र, आत्मगतिनामकर्मणोश्चाभेदमभिसन्धायाचार्येण प्रेक्षापूर्वकारिणा नारक इति निरदेशि, न तु नरकगतिमात्रमौदयिकस्य जीवस्वतत्त्वप्रतिपादनार्थम्, इतिशब्दः सर्वभेदान्तेष्वियत्ताप्रदर्शनार्थः। कषः—संसारस्तस्यायमुपादानकारणविशेषः **कषायः**। स चतुर्धा क्रोधादिस्तदुदयात् क्रोध्यादिव्यपदेशः। अत्रापि जीवस्वतत्त्वप्रतिपत्तये क्रोधीति व्यपादेशि न क्रोध इति। **लिङ्गं त्रिभेदं**—स्त्रीत्वादि, तच्च लीनत्वाल्लिङ्गमुच्यते, यस्मात् पुरुषलिङ्गनिर्वृत्तावतिप्रकटायामपि कदाचित् स्त्रीलिङ्गमुदेति न च स्पष्टं बहिरुपलभ्यते नपुंसकलिङ्गं वा, तथा स्त्रियाः स्वलिङ्गनिर्वृत्तावतिस्पष्टायामेव जातुचित् पुन्नपुंसकलिङ्गोदयः, नपुंसकस्याप्येवं स्वलिङ्गनिर्वृत्तावुत्तरकालभाविनी कदाचित् पुंस्त्रीलिङ्गे भवतो न च निर्वृत्तितो लक्ष्यते, कपिलवदिति सर्वत्र योज्यम्। एतदेव त्रिविधं लिङ्गं वेद उच्यते, यस्य कर्मण उदयात् पौंस्नं स्त्रैणं नपुंसकत्वं च भवति तल्लिङ्गम्, अत्राप्यभेदेन निर्देशः **पुमान्, स्त्री, नपुंसकमिति। मिथ्यादर्शनमेकभेदं** तत्त्वार्थाश्रद्धानलक्षणम्, यस्य कर्मणः उदयान्न किञ्चित् तत्त्वं श्रद्धत्ते तन्मिथ्यादर्शनम् ॥ ननु च अभिगृहीतानभिगृहीतसन्देहतस्त्रिधोक्तम्[2], उच्यते—सर्वत्राश्रद्धानलक्षणं न भिद्यत इत्येकभेदमुक्तम्, अत्राप्यभेदोपचारात् मिथ्यादृष्टिरिति। **अज्ञानमेकभेदं** ज्ञानदर्शनावरणसर्वघातिदर्शनमोहनीयोदयादज्ञानमनवबोधस्वभावमेकरूपम्, तथैवाभेदमाधाय मनसि व्यपादिशद् **अज्ञानीति। असंयतत्वमेकभेदं** सञ्ज्वलनवर्जकषायद्वादशकोदयादसंयतत्वमेकरूपम्, अत्राप्यभेदेन निर्देशः पर्यायतश्च **असंयतः अविरत इति। असिद्धत्वमेकभेदं** वेदनीयायुर्नामगोत्रोदयादसिद्धत्वमेकरूपम्, तथैवाभेदादसिद्ध इति प्रदर्शितम्। एकभेदमित्यस्य पर्यायान्तरं कथयति पर्यन्ते

१ 'भ्रियते' इति ख-पाठः। २ उक्तमेतत् ११३ तमे पृष्ठे।

सर्वत्र सम्बन्धनार्थम्-एकविधमिति, व्याख्याधर्मश्चायं पर्यायान्तरकथनमिति। **लेश्याः षड्भेदाः**। लिश्यन्त इति लेश्याः, मनोयोगावष्टम्भजनितपरिणामः, आत्मना सह लिश्यते एकीभवतीत्यर्थः। अनेकत्वेऽपि परिणामस्य परिस्थूरकतिपयभेदकथनमेव सुज्ञानत्वात् क्रियते, न त्वशेषपरिणामभेदाख्यानमशक्यत्वात्, इत्याह—**षड्भेदा** इति। सम्प्रति तारतम्यविशुद्धिक्रममाविर्भावयन् पठति-कृष्णलेश्येत्यादि। कृष्णा चासौ लेश्या **कृष्णलेश्या**, सर्वत्रैवमायोज्यम्। लेश्येति परिणाम उक्तः स कथं कृष्णादिवर्णसम्बन्धी स्यादात्मनः। उच्यते-द्विविधा लेश्या द्रव्यभावभेदतः। तत्र द्रव्यलेश्याः कृष्णादिवर्णमात्रम्, भावलेश्यास्तु कृष्णादिवर्णद्रव्यावष्टम्भजनिता परिणामकर्मबन्धनस्थितेर्विधातारः, श्लेषद्रव्यवद् वर्णकस्य चित्राद्यार्पितस्येति, तत्राविशुद्धोत्पन्नमेव कृष्णवर्णस्तत्सम्बद्धद्रव्यावष्टम्भादविशुद्धपरिणाम उपजायमानः कृष्णलेश्येति व्यपदिश्यते। आगमश्चायं-"जल्लेसाइं[2] दव्वाइं आदिअंति तल्लेस्से परिणामे भवति" (**प्रज्ञा**०लेश्यापदे)। तथा नीलवर्णद्रव्यावष्टम्भान्नी**ललेश्या**, नीललोहितवर्णद्वययोगिद्रव्यावष्टम्भात् **कापोतलेश्या**, लोहितवर्णद्रव्यावष्टम्भात् **तेजोलेश्या**, पीतवर्णद्रव्यावष्टम्भात् **पीतलेश्या**, शुक्लवर्णद्रव्यावष्टम्भात् **शुक्ललेश्या**, वर्णाशुद्ध्यपेक्ष्या भावाशुद्धिः तच्छुद्ध्यपेक्ष्या भावशुद्धिरिति। तेजोलेश्यायाः शुभपरिणामापेक्षा इष्टा इष्टतरा इष्टतमा चेति। कापोतलेश्यायाः प्रातिलोम्येनानिष्टपरिणामापेक्षा अनिष्टा अनिष्टतरा अनिष्टतमा चेति। आसां च षण्णामपि लेश्यानां जम्बूवृक्षफलभक्ष[क]दृष्टान्तेनागमप्रसिद्धेन ग्रामदाहकपुरुषषट्केन च प्रसिद्धिरापाद्या, एवं सर्वान् भेदानाख्यायोपसंहरति—**एत** इत्यादि। **एकविंशतिरेवान्यूनाधिका भावाः कर्मोदयापेक्षाः प्रादुर्भवन्तीति** ॥ ६ ॥

लेश्यास्वरूपम्

पारिणामिकस्त्रिभेद उद्दिष्टः, स उच्यते—

## सूत्रम्—जीवभव्याभव्यत्वादीनि च ॥ २-७ ॥

**भा०—जीवत्वं, भव्यत्वं, अभव्यत्वमित्येते त्रयः पारिणामिका भावा भवन्ति। आदिग्रहणं किमर्थमित्यत्रोच्यते-अस्तित्वं, अन्यत्वं, कर्तृत्वं, भोक्तृत्वं, गुणवत्त्वं, असर्वगतत्वं, अनादिकर्मसन्तानबद्धत्वं, प्रदेशवत्त्वं अरूपत्वं, नित्यत्वमित्येवमादयोऽप्यनादिपारिणामिका जीवस्य भावा भवन्ति, धर्मादिभिस्तु समाना इत्यादिग्रहणेन सूचिताः। ये जीवस्यैव वैशेषिकास्ते[1] स्वशब्देनोक्ता इति। एते पञ्च भावास्त्रिपञ्चाशद्भेदा जीवस्य स्वतत्त्वं भवन्ति, अस्तित्वादयश्च ॥ ७ ॥ किञ्चान्यत्।**

३ भेदाः पारिणामिकाः

**टी०—जीवभव्याभव्यत्वादीनि च।** अत्र भावे त्वप्रत्ययः प्रत्येकमभिसम्बध्यत इति प्रदर्शयन्नाह—**जीवत्वमित्यादि**। जीवभावो जीवत्वं स्वार्थिको भावप्रत्ययः।

१ 'विशेषकास्ते' इति ग-पाठः।

२ यल्लेश्यानि द्रव्याण्याददते तल्लेश्यः परिणामो भवति।

जीव एव जीवत्वमसङ्ख्येयप्रदेशाः चेतनेति, भव्या सिद्धिर्यस्यासौ भव्यः, उत्तरपदलोपाद् भीमादिवत्, भव्य एव **भव्यत्वम्**, अभव्यः सिद्धिगमनायोग्यः कदाचिदपि यो न सेत्स्यति अभव्य एवा**भव्यत्वम्** ॥ ननु वन्ध्यापुत्रोऽप्येवमभव्यः स्यात्, नैतत्, कुतः ? तुल्याधिकरणेऽन्यस्मिन् नञ्प्रयोगादब्राह्मणवत्। एतेनाकाशाभव्यत्वं प्रत्यस्तम्, इतिशब्दो व्यवच्छिनत्ति, भावत्रयमप्यसाधारण्येन जीवस्य। **एते त्रयः पारिणामिका भावा भवन्तीत्यनेन** भाष्येणैतत् प्रतिपादयति–न कर्मकृताः, स्वाभाविका एते जीवस्य त्रयोऽपि भवन्ति। **आदिग्रहणं किमर्थमिति** प्रश्नयतः[1] कोऽभिप्रायः ? एवं मन्यते–द्विनवाष्टादिसूत्रेण (अ० २, सू० २) त्रिपञ्चाशद् भावभेदा नियताः, तद्यदि सन्त्यन्येऽपि ततश्चानियतः सङ्ख्याभेदः, तथा चानर्थकं सूत्रम्, अथ तावन्मात्रा एव न सन्त्यन्ये ततोऽनर्थकमादिग्रहणमतः पृच्छति, अत्रोत्तरमुच्यते–द्विनवाष्टादिसूत्रेण जीववर्तिन एव त्रिपञ्चाशद् भेदाः सङ्गृहीता इति सङ्ख्यानियमो न भिद्यते, न चानर्थक्यं सूत्रस्य, जीववर्तिनोऽजीववर्तिनश्च (ये) साधारणाः पारिणामिकास्ते तत्र नोपात्ताः, तदुपादानायेदमादिग्रहणम्। अतस्तान् दर्शयति–**अस्तित्वादिना** भाष्येण ॥ **अस्तित्वं** भावानां मौलो धर्मः सत्तारूपत्वम्, तच्चात्मनो ज्ञानादिसद्भावात् प्रसिद्धमपह्नोतुमशक्यमादावुपन्यस्तम्, इदं च परमाण्वादीनामपि सामान्यम्। **अन्यत्वमिति** शरीरादात्मनः, तद्विलक्षणत्वात् परलोकसद्भावाच्चावश्यमन्यत्वमभ्युपेयम्, तथाऽण्वादीनामपि परस्परेणास्ति। **कर्तृत्वमिति** शुभाशुभकर्मणो निर्वर्तकत्वं योगप्रयोगसामर्थ्यात्, कर्तृत्वादेव च **भोक्तृत्वं** स्वप्रदेशव्यवस्थितशुभाशुभकर्मकर्तृत्वात्, कर्तृत्वं सूर्यकान्तेऽपि सवितृकिरणगोमयसङ्गमादुपलभ्यतेऽग्निनिर्वृत्तौ अतः सामान्यम्, भोक्तृत्वं मदिरादिष्वत्यन्तप्रसिद्धं भुक्तोऽनया गुड इति। क्रोधादिमत्त्वात् **गुणवत्त्वं** ज्ञानाद्यात्मकत्वाद् वा, परमाण्वादावपि गुणवत्त्वमेकवर्णादित्वात् समानम्। त्वक्पर्यन्तशरीरमात्रव्यापित्वात् **असर्वगतत्वं** संसार्यात्मनः, मुक्तस्यापि समन्ततः परिमितत्वात् स्वदेहप्रमाणत्रिभागहीनावगाहात्मकत्वादसर्वव्यापिता, परमाण्वादिभिस्तुल्या। **अनादिकर्मसन्तानबद्धत्वमिति** अविद्यमानादिकर्मसन्तत्या वेष्टितः संसारी संसृतौ पर्यटतीति, न मुक्त इति यथासम्भवमेतद् योज्यम्। कार्मणशरीरमप्यनादिकर्मसन्तानबद्धमिति सामान्यः चेतनाचेतनयोर्धर्मः। **प्रदेशवत्त्वं** तु लोकाकाशप्रदेशपरिमाणप्रदेश एक आत्मा भवति, धर्मादिद्रव्यसामान्यमेतत्। **अरूपत्वमिति** रूपरसगन्धस्पर्शविरहितत्वादात्मनः, तच्चाकाशादिभिस्तुल्यम्, **नित्यत्वमिति** 'तद्भावाव्ययं नित्यम्' (अ० ५, सू० ३०) इति वक्ष्यते, नित्यश्च ततो ज्ञानादिसद्भावादयमात्मा, तुल्यं चैतदाकाशादिभिः। एवमेते दश धर्माः साधारणा भाष्यकृतोपदर्शिता आदिशब्दाक्षिप्ताः। पुनरप्यादिग्रहणं कुर्वन् ज्ञापयत्यत्रानन्तधर्मकमेकम्, तत्राशक्याः प्रस्तारयितुं सर्वे धर्माः प्रतिपदं, प्रवचनज्ञेन पुंसा यथा-

अस्तित्वादयः साधारणाः

---

१ 'प्रश्नयति' इति ग-पाठः।

सम्भवमायोजनीयाः, क्रियावत्त्वं पर्यायोपयोगिता प्रदेशाष्टकनिश्चलता एवम्प्रकाराः सन्ति भूयांसः। अपिः समुच्चये। एवम्प्रकाराश्च **अनादिपारिणामिका** भवन्ति जीवस्य भावाः, **धर्मादिभिस्तु समाना इत्यादिग्रहणेन सूचिताः**।

क्रियावत्त्वादयः

**एवमादयोऽपीत्यादि** भाष्यम्। **एवम्प्रकारा**-**एवमादयः** क्रियावत्त्वप्रकाराः, धर्मादिभिरिति क्वचिद्, पुद्गलद्रव्यं यथासम्भवमुपदर्शितमेव, तथा केचिदात्मन एव वैशेषिका आदिशब्देनाक्षिप्यन्ते पर्यायोपयोगितादयः। तुशब्दो विशेषकः। धर्मादिविशिष्टास्तत्समाश्च। इतिः परिसमाप्तौ। अयमादिग्रहणार्थस्यादिग्रहणेन **सूचिताः** इति गमयति विधृतमर्थमनेन ग्रन्थेन॥ **ये जीवस्यैवेत्यादि** ग्रन्थ आत्मन एवासाधारणा ये धर्मा जीवभव्याभव्यत्वलक्षणास्त इह सूत्रे स्वशब्देन यो यस्य वाचकः शब्दो जीवादिस्तेनैवोक्ता इति। एतेनादिशब्दस्य त्रितयपर्यन्तवर्तित्वं व्याख्यातम्, अन्यथा जीवत्वादीनि चेति सूत्रं स्यात्। सूत्रपर्यन्तवर्ती चशब्दः समुच्चये। सम्यक्त्वचारित्रादयो जीवस्य स्वतत्त्वं जीवत्वादयश्च स्वतत्त्वमिति। **इत्येते पञ्च भावा** इत्यादि भाष्यम्। **इति**शब्दः सकलभावोपसंहारार्थः, **एत** इति प्रतिपदं ये उद्दिष्टा औपशमिकादयः **पञ्चैवा**ऽन्यूनाधिका भावाः पर्यायान्तराण्यात्मनः त्रिपञ्चाशद्भेदा येषां ते **त्रिपञ्चाशद्भेदा** भवन्ति आत्मनः स्वतत्त्वं, द्विनवाष्टादिसूत्रे (अ० २, सू० २) च सङ्ख्या प्राक् नियता सैवानेनोपसंहृतेति। एते च भावविकल्पा जीवानां यथासम्भवमायोज्याः, न सर्वे सर्वेषामिति, क्षायिकपारिणामिकावेव सिद्धानाम्, औपशमिकवर्जा नारकतिर्यग्योनीनाम्, देवमनुष्याणां पञ्चापि, न त्वौपशमिकक्षायिके सम्यक्त्वचारित्रे वा युगपद् भवत इति, एवमयमात्मा परिणामैरेभिरौपशमिकादिभिर्युक्तः परिणामी द्रव्यमिति निश्चेतव्यः, नहि श्रद्धानादिलक्षणाः परिणामाः केनचिद् घटादिषूपलब्धपूर्वाः, तस्मादेषां भावानामवश्यं केनचिदन्वयिना पदार्थेन भवितव्यम्, स चात्मेति॥ ७॥

अधुना द्वितीयप्रश्नमतिबहुग्रन्थप्रतानव्यवच्छिन्नमनुसन्दधान आह-**किञ्चान्यदिति**। भावपञ्चकमव्यापित्वान्न परितोषमाधातुमलमस्य श्रोतुः पश्यन्नाचार्यः सकलजीवपदार्थव्यापीदमव्यभिचारि त्रिकालविषयं लक्षणमात्मनो निर्दिदिक्षुः सम्बन्धयति भावपञ्चकाद् अन्यच्च-किं लक्षणमस्याव्यभिचारीति यदप्राक्षीत् तदिदमुच्यते—

## सूत्रम्—उपयोगो लक्षणम्॥ २-८॥

**भा०—उपयोगो लक्षणं जीवस्य भवति**॥

**टी०—उपयोगो लक्षणं भवति** जीवस्येत्येतावद् भाष्यमस्य सूत्रस्य। **उपयोगः** उपलम्भः, ज्ञानदर्शनसमाधिः ज्ञानदर्शनयोः सम्यक्-स्वविषयसीमानुल्लङ्घनेन धारणं समाधिरुच्यते, अथवा युञ्जनं योगः-ज्ञानदर्शनयोः प्रवर्तनं विषयावधानाभिमुखता, सामीप्यवर्ती योग उपयोगो नित्यसम्बन्ध इत्यर्थः। लक्ष्यतेऽनेनेति **लक्षणम्**, उपयोगेन लक्ष्यत इति। जीवस्येति कर्मलक्षणा इह

उपयोगस्य लक्षणता

---

१ 'सदृशाश्च' इति ख-पाठः।

षष्ठी द्रष्टव्या । उपयोगेनोपलभ्यते इतियावत् । समुदायार्थस्त्वयम्–सामान्यविशेषावबोधदर्शनान्निश्चीयतेऽस्त्यत्रात्मा यस्यामू सामान्यविशेषावबोधौ, न चास्ति कश्चित् कचिज्जीवो यस्य न स्तः साकारानाकारोपयोगावित्यतोऽनपायीदं लक्षणमस्य जन्तोः, आगमश्चायम्–"सव्वजीवाणंपि य णं अक्खरस्स अणंतभागो निच्चुग्घाडियओ" ( **नन्दी० सू० ४२** ) । सर्वजीवानामपीति अशेषसर्वकग्रहणेन संसारिणां परिग्रहः पृथिवीकायादीनाम्, अपिः सम्भावनायां, णमिति वाक्यालङ्कारार्थः, अक्षरमिति–सामान्यविशेषरूपोऽवबोधस्तस्यानन्तभागोऽवबोधस्य नित्यमेव-सर्वदा उद्घाटः–प्रकाशो निरावरणः, यस्मात् सकलत्रैलोक्यान्तर्वर्तिनोऽपि हि पुद्गलाः कर्मतया परिणताः सन्तोऽपि न समावरीतुमलमेकस्यात्मनः सर्वात्मनाऽवबोधम्, यथा च नितान्तघनपटलपिहितेऽपि सवितुर्मण्डले ज्योतिर्लेशः कियानपि चकास्त्येव, न सर्वथैव प्रणश्यति तथाऽऽत्मनोऽप्यवबोधलेशः स्फुरत्येव कियानपि सर्वदा, यदि चावृणुयुस्ते[2] पुद्गलाः सर्वात्मना ततो निर्जीवतैव स्यादात्मनः, तस्माद् या च यावती च मात्राऽऽवरतः प्रबोधस्य सर्वजीववर्तिनी स्वभावादेव निरावरणा समस्ति सा च सर्वजघन्योपयोगमात्रा प्रथमसमये सूक्ष्मनिगोदापर्याप्तानामेव भवति, ततः परंतु सैवोपयोगमात्रा शेषैकेन्द्रियद्वित्रिचतुःपञ्चेन्द्रियभेदेन भिद्यमाना सम्भिन्नश्रोत्रत्वादिलब्धिकलापेन च लब्धिनिमित्तकरणशरीरेन्द्रियवाङ्मनःसापेक्षा प्रवर्धमाना नानारूपक्षयोपशमापादितवैचित्र्याऽवग्रहादिभेदात् सर्वक्षयमवाप्य सकलज्ञेयग्राहिणीं परां विशुद्धिकाष्ठां समासादयति केवलज्ञानसंज्ञिताम्, अत एव जीवस्वभावचैतन्यविशेषाणां सर्वेषां प्रमाणाख्यानामुपयोगरूपाणां स्वसंवेद्यत्वमवश्यमभ्युपगन्तव्यम्, उत्तरकालं तदनुस्मारणोपपत्तेः, अनुस्मरणं हीदं स्वयमनुभूतस्यार्थस्य दृष्टं नान्यथा, तस्माज्ज्ञात्वा योऽनुस्मरत्युत्तरकालं स एक आत्माऽन्वयी प्रतिपत्तव्यः । न खलु ज्ञानस्मृती भिन्नपदार्थाधारे क्वचिद् दृष्टे, तस्मादस्त्येक आत्मेति, तथा परत्र हिताहितप्राप्तिपरिहारविषयां क्रियां दृष्ट्वा बुद्धिपूर्वकत्वानुमानं स्वदेह इव, ताश्च बुद्धयः प्रमाणं जीव इत्येकोऽर्थ इति । यथाऽऽह–"आया[3] भंते! नाणे अण्णाणे? गोयमा! आया सिय नाणे सिय अण्णाणे, णाणे पुण नियमा आया" ( **भगवत्यां** )। बुद्धिरूपस्य चात्मनोऽनुमानगम्यत्वमवसेयम्, स्वदेहे च क्रिया बुद्धिपूर्वा स्वानुभवसिद्धा, तत्क्रियाजनिते च सुखदुःखे, रूपाद्यर्थज्ञानानि चानुभवसिद्धत्वात् प्रत्यक्षप्रमाणविषयत्वं बुद्धीनाम्, स एव चात्मेति, स्वदेहव्यापी स्वात्मा, परदेहव्यापी पर इति । तथा शरीरकारणयोः शुक्रौजसोर्धात्विन्द्रियाङ्गोपाङ्गादिपरिणामगतेरभिसन्धिमानाहर्तानुमीयते, तथाऽऽहारपरिणामित्वात् तच्छवशरीरं केनाप्यभिसन्धिमता क्वापि गच्छतोत्सृष्टं, स चोत्स्रष्टाऽऽत्मेति निश्चीयते, एवमयमुपयोग-

उपयोगस्य नित्यता

१ सर्वजीवानामपि अक्षरस्यानन्तभागो नित्यमुद्घाटितकः ।

२ 'वा' इति ख–पाठः ।

३ आत्मा भदन्त! ज्ञानं अज्ञानं? गौतम! स्यात् ज्ञानं स्यात् अज्ञानं, ज्ञानं पुनर्नियमादात्मा ।

लक्षितः कर्ता भोक्ता चात्माऽध्यवसातव्यः । अथात्र पर आरेकते—ज्ञानरूप आत्मा चेत् अनवरतमेव कस्मान्न पश्यति सोऽर्थान् ? जानानं हि ज्ञानमुच्यते, ज्ञानं च न जानीते च विप्रतिषिद्धमिदम्, आत्मा च ज्ञानरूपोऽतः सर्वदा तेन जानानेनैव भवितव्यम्, न जातुचिदन्यथेति, कस्माद् विज्ञानात्मकत्वे पूर्वोपलब्धार्थविषयमस्य विस्मरणमविनष्टज्ञानस्य सतो भवति ? किं वा कारणमव्यक्तबोधो भवत्यात्मा ? नाव्यक्तमिष्यते ज्ञानमुपलब्धिस्वरूपत्वात्, न च ज्ञानात्मकत्वात् संशयेनास्य कदाचिदुत्पत्तव्यम्, अशेषविषयग्रहणं च स्यात् निरङ्कुशत्वाज्ज्ञानस्येति ? अत्रोच्यते—ज्ञानात्मत्वे सत्यपि नानवरतोपयोगप्रसङ्गः, कथम् ? कर्मवशादयमात्मा सर्वप्रदेशेषु प्रदेशाष्टकमपहाय मध्यवर्तिपिठरान्तर्वर्तिज्वलनज्वालाकलापतप्तोद्वर्तमानवारिवच्चलः सततमेव कृकलाशवदर्थान्तरेषु परिणमते, अनवस्थितोद्भ्रान्तमनस्त्वाच्च कथमुपयुज्येत स चिरमेकस्मिन्नर्थे ? स्वभावादेव चोपयोगस्थितिकालोऽन्तर्मुहूर्तपरिमाणः प्रकर्षाद् भवति, ज्ञानावरणकर्मपटलावच्छन्नत्वाच्च न सर्वदाऽवैति, यथा प्रकाशमयत्वेऽपि भास्वान् बहलाभ्रपटलाभिभूतमूर्तिर्न प्रकाशते स्पष्टं तथाऽयमात्मेति, स्मृतिरप्यत एव नावश्यम्भाविनी भवति तस्येति प्रत्येतव्यम् । अव्यक्तबोधसंशयासर्वार्थग्रहणानि चावरणशीलज्ञानावरणकर्मसद्भावादभ्युपेयानि, यदा च लब्धिरूपान्तःकरणेन्द्रियाभोगिकानाभोगिकवीर्यसम्पन्नस्य ज्ञानावरणक्षयोपशमो भवति करणानुरूपस्तदा च ज्ञानं तत्क्षयोपशमानुरूपमाविर्भवति, लब्ध्यनुरूपकरणवीर्यानुसारितया, वीर्यापगमे च पुनरपि तदेव कर्मावृणोति सद्यस्तमात्मानं प्रागपाकीर्णशैवलमलानामपामच्छत्वमिव, पुरुषकारव्यापारोपरमसमनन्तरमेव शैवलपटलानि यथा पुनराच्छादयन्ति, यथा वा भस्माद्यनेकद्रव्योद्घृष्टविमलदर्पणतलमागन्तुकश्यामिकामलीमसमाशु जायते तथाऽस्यात्मनो मुहुर्मुहुर्ज्ञानावरणजलधौ निमज्जनोन्मज्जने कुर्वतः स्पष्टः स्पष्टतरः स्पष्टतमो मलीमसो मलीमसतरो मलीमसतमश्च बोधः प्रादुरस्ति, अभ्यन्तरीकृतोभयविशेषसामर्थ्यस्थित्युत्पत्तिव्ययानेकधर्माजहद्वृत्तिः सोऽयमात्मा प्रकाशस्वभावतिग्मांशुरिव चैतन्यस्वतत्त्वः स्वपरविभासी साकारानाकारोपयोगद्वयलाञ्छनोऽस्तीति प्रतिपद्यध्वमपास्तसमस्तशङ्कमिति ॥ ८ ॥

ज्ञानस्वभावत्वेऽपि अज्ञानादयः

एतावज्जीवस्वतत्त्वं विचार्यम्, नातः परं किञ्चिदस्ति स्वनिमित्तानां परनिमित्तानां च जीवधर्माणामभिहितव्यतिरेकेणासम्भवात्, स चोपयोगो यावता भेदेन वर्तते तावता सङ्गृह्यतेऽधुनेत्यत आह—

**सूत्रम्—स द्विविधोऽष्टचतुर्भेदः ॥ २–९ ॥**

**भा०—स उपयोगो द्विविधः—साकारोऽनाकारश्च । ज्ञानोपयोगो दर्शनोपयोगश्चेत्यर्थः । स पुनर्यथासङ्ख्यमष्टचतुर्भेदो भवति । ज्ञानोपयोगोऽष्टविधः—मतिज्ञानोपयोगः, श्रुतज्ञानोपयोगः, अवधि-**

उपयोगस्य भेदाः

ज्ञानोपयोगः, मनःपर्यायज्ञानोपयोगः, केवलज्ञानोपयोग इति, मत्यज्ञानोपयोगः, श्रुताज्ञानोपयोगः, विभङ्गज्ञानोपयोग इति। दर्शनोपयोगश्चतुर्भेदः, तद्यथा–चक्षुर्दर्शनोपयोगः, अचक्षुर्दर्शनोपयोगः, अवधिदर्शनोपयोगः, केवलदर्शनोपयोग इति ॥ ९ ॥

तच्छब्दस्य सार्थकता

**टी०—स** द्विविधोऽष्टचतुर्भेदः, तच्छब्देन भाष्यकारोऽनन्तरमुपयोगं सम्बन्धयति, स उपयोगः सकलजीवराशेश्चिह्नभूतो द्विविधो–द्विप्रकारो भवति। अपरे पुनस्तच्छब्दं नाधीयतेऽनन्तरत्वात् किल स एव सम्भन्त्स्यते[1] नार्थस्तत्पाठेन, तदेतदयुक्तम्, अन्यत्रापि हि तच्छब्दोपन्यासेऽनन्तर एव सम्बध्येत ततश्च न क्वचित् तच्छब्दः प्रयोक्तव्यः स्यात्, तथा च 'कायवाङ्मनःकर्म योगः', 'स आस्रवः' ( अ० ६, सू० १-२ ) इति, 'सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते', 'स बन्धः' ( अ० ८, सू० २–३ ) इति। पुनस्त एवाहुः—नहि योगः भेद्यत्वेन विवक्षितः किन्त्वास्रवता विधीयते योगानां तत्र, अयं पुनरुपयोगो विभित्सितस्तत्र किमन्यः स्याद् यो द्विविधत्वादिना भिद्येत ? तथेतरत्रापि पुद्गलादानस्यात्मसात्कृतस्य बन्धविधानम्, अतो न समानम्। उच्यते–कः खल्वयं नियमो यत्र भेदविधिस्तत्र तच्छब्दो न प्रयुज्यते इति ? रुचिमात्रमेवमङ्गीकृतं स्यात्, अविगानेन च भाष्यमेवं पठ्यते–स उपयोगो द्विविधस्तदेतदगमितं स्यात्, तस्मादस्तु तच्छब्दः। द्विविध एवोपयोगो भवतीत्यवधार्यते मूलभेदतः, तच्च द्वैविध्यं आचार्यः स्पष्टयति–**साकारोऽनाकारश्चेति।** आकारो–विकल्पः सह आकारेण साकारः, अनाकारस्तद्विपरीतः, निर्विकल्प इत्यर्थः। एतद् व्याख्यानमन्ये[2]ऽपवदन्ते–साकारानाकारयोर्यत्केवलदर्शने

साकारानाकारशब्दार्थः

शक्त्यभावः प्रसज्यते मनःपर्याये च दर्शनप्रसङ्गः, तयोर्हि घटादिसामान्यग्रहणेऽपि ज्ञानमेव तन्न दर्शनमिति, तस्मादाकारो लिङ्गम्, स्निग्धमधुरादिशङ्खशब्दादिषु यत्र लिङ्गेन ग्राह्यार्थान्तरभूतेन ग्राह्यैकदेशेन वा साधकेनोपयोगः स साकारः, यः पुनर्विना लिङ्गेन साक्षात् सोऽनाकारः, एवं सति पूर्वकं दोषद्वयं परिहृतं भवति, तदेतदयुक्तम्, यत् तावदुच्यते–केवलदर्शने शक्त्यभावः प्रसजतीति का पुनरसौ शक्तिः ? यदि तावद् विशेषविषयः परिच्छेदः शक्तिशब्दवाच्यस्तस्याभावश्चोद्यते ततोऽभिलषितमेव सङ्गृहीतं स्यात्। अथ सामान्यार्थग्रहणशक्त्यभावश्चोद्यते ततस्तस्य दर्शनार्थतैवानुपपन्ना स्यात्, किं हि तेन दृश्यते ? यदप्युक्तं मनःपर्याये दर्शनप्रसङ्ग इति तदागमानवबोधादयुक्तम्। न ह्यागमे मनःपर्यायदर्शनमस्ति, चतुर्विधदर्शनश्रवणात्, आगमप्रसिद्धं चेहोपनिबध्यते, न स्वमनीषिका प्रत-

---

१ 'सम्बध्यते' इति क-ख-पाठः। २ 'मन्ये एवं वदन्त' इति क-ख-पाठः।

न्यत इति। मनःपर्यायज्ञानिनो हि भगवत्यामाशीविषोद्देशके (श०८, उ०२, सू०३२१) द्वे त्रीणि वा दर्शनान्युक्तानि, अतो गम्यते यो मनःपर्यायविदवधिमांस्तस्य त्रयमन्यस्य द्वयम्, अन्यथा हि त्रयमेवाभविष्यदिति। तत्रागमप्रसिद्धस्य व्याख्या क्रियते-निर्विकल्पोऽर्थोऽनाकारार्थः यद् दर्शनं तन्निर्विकल्पम्, अतो न मनःपर्यायदर्शनप्रसङ्गः, तस्मात् तदेवास्तु पूर्वव्याख्यानम्, पर्यायाः-विकल्पास्तैः सहवर्ति साकारम्, अनाकारमालोचनमात्रं निर्विकल्पकमिति। उपयोगक्रमश्च द्रष्टव्यः-प्रागनाकारः पश्चात् साकार इति, प्रवृत्तौ क्रमनियमः, यतस्तु नापरिमृष्टसामान्यो विशेषाय धावति। यद्येवं ततः सूत्रमित्थमध्येयं-स द्विविधश्चतुरष्टभेद इति। उच्यते-पारमर्षप्रवचनप्रसिद्धक्रमानुवृत्त्या सूत्रं न्यबध्नीत सूत्रकारः-"[1]कतिविहे णं भंते! उवओगे पण्णत्ते? गोयमा! दुविहे पण्णत्ते, तंजहा-सागारोवओगे य अणागारोवओगे य" (प्रज्ञा० प० २९, सू० ३१२)। अथार्ष एव कैमर्थक्यात् क्रमभेदः?। उच्यते-बहुभेदत्वाद् बहुवक्तव्यत्वाच्च प्राक् साकारोपन्यासस्ततोऽनाकारः स्वल्पभेदवक्तव्यत्वात्, मत्यादिज्ञानेषु च व्याख्यातेषु प्रायश्चक्षुर्दर्शनाद्यपि व्याख्यातमेवेति यत्किञ्चिदुत्तरत्र व्याख्येयं स्यात्, अतोऽपि युज्यते प्रथमतः साकारोपयोग इति। चशब्दः समुच्चितौ। साकारश्चोपयोगोऽनाकारोपयोगश्च। एतदेवोपयोगद्वयं प्रसिद्धतरवाक्यान्तरेण निरूपयन्नाह-ज्ञानोपयोगो दर्शनोपयोगश्चेत्यर्थः। एतावानुपयोगो भवन् भवेद् यदुत ज्ञानरूपो दर्शनरूपश्चेति, नातोऽन्य उपयोगः समस्ति॥ ननु च ज्ञानदर्शनाभ्यामर्थान्तरभूत उपयोगोऽस्त्येकान्तनिर्विकल्पः, एवं च विग्रहगतिप्राप्तानां ज्ञानदर्शनोपयोगासम्भवेऽपि जीवलक्षणव्याप्तिरन्यथा ह्यव्यापकं लक्षणं स्यात्, तेषां हि द्रव्येन्द्रियमनसामभावादुपयोगोऽस्त्येकान्तनिर्विकल्पः, एवं च विग्रहगतिप्राप्तानां ज्ञानदर्शनोपयोगासम्भवेऽपि तन्निमित्तं मतिज्ञानं नास्ति, ततश्च तत्पूर्वकं श्रुतमपि न सम्भवति, अतस्तेषां ज्ञानदर्शनोपयोगाभावादजीवत्वं स्यादिति, तदेतत् सर्वमयुक्तमुक्तम्, स्वसिद्धान्तानवबोधात्, इह प्रवचने मत्यादीनि लब्धित उपयोगतश्च चिन्त्यन्ते, तत्र सम्यग्दृष्टेरविरतो जघन्यतरोऽन्तर्मुहूर्तपरिणामकालं प्रकर्षतः षट्षष्टिसागरोपमाणि साधिकानि लब्धिमङ्गीकृत्याधीतः, उपयोगतोऽन्तर्मुहूर्तमेव जघन्योत्कर्षाभ्याम्, मिथ्यादृष्टेरनादिमत्यज्ञानादि कस्यचित्, कस्यचित् तु सादि भवति लब्धितः, उपयोगतस्तु तस्याप्यन्तर्मुहूर्तमवस्थानम्, तत्र यदेतदुच्यते द्रव्येन्द्रियमनसामभावान्मतिज्ञानं नास्ति तत्पूर्वकं श्रुतमपि नास्ति तन्मिथ्या, आगमविरोधश्च-"[2]जाईस्सरो उ भगवं, अप्पडिवडिएहिं तिहिं उ नाणेहिं" (आव० नि० ऋषभजन्माधिकारे)। यदि तदा मतिश्रुते न स्तः कथमप्रतिपतितज्ञानश्च्युवे भगवान् नाकपृष्ठतः?। तथाऽमुनाऽ-

उपयोगे ज्ञानदर्शनभिन्नताया निरासः

---

१ कतिविधो भदन्त! उपयोगः प्रज्ञप्तः? गौतम! द्विविध उपयोगः प्रज्ञप्तः, तद् यथा-साकारोपयोगश्चानाकारोपयोगश्च। २ जातिस्मरस्तु भगवान्, अप्रतिपतितैस्त्रिभिर्ज्ञानैर्युक्त एव।

प्याचार्येणोक्तम्–'ज्ञानैः पूर्वाधिगतैः' (सम्बन्ध–का० १२) इत्यादि, तथा **भगवत्यामा-शीविषोद्देशके** (श०८, उ०२, सू० ३१९) "[1]अपज्जत्तगा णं भंते! जीवा किं नाणी अण्णाणी? तिन्नि गोयमा! नाणा तिन्नि अण्णाणा भयणाए", तथा तस्यामेवैकोनविंशतिशते "[2]मइअण्णाणी णं भंते! मतिअण्णाणभावेणं किं पढमे अपढमे? गोयमा! नो पढमे अपढमे, एवं सुअअण्णाणीवि"॥ ननु चागम एवोपयोगात्मा ज्ञानदर्शनव्यतिरिक्त उक्तः, **भगवत्यां** द्वादशशते–द्रव्यकषाययोगोपयोगज्ञानदर्शनचरणवीर्यात्मानोऽष्टौ भवन्ति, अत्र चोपयोगात्मा पृथगुपात्तः, स च विग्रहगतौ जीवानां भविष्यति, एतदपि वार्तम्, यस्मात् तस्मिन्नेवात्माऽष्टकाधिकारे (श०१२, उ०१०, सू०४६७) उक्तम्–"[3]जस्स दवियाता तस्स उवयोगाता णियमा अत्थि, जस्स उवयोगाता तस्स नाणाया वा दंसणाया वा णियमा अत्थि" एवं सूत्रेऽतिस्पष्टेऽपि विभक्ते न विद्मः कुत इदं तेषां मोहमलीमसधियामागतम्? अपिच–सूत्रे ज्ञानदर्शने एवोपयोगतामापन्ने बहिरर्थाकारपरिणतिनी सती समुपात्ते उपयोगग्रहणेन, न पुनर्ज्ञानदर्शनव्यतिरिक्तः कश्चिदुपयोग इति, तथा तु ज्ञानदर्शनात्मैव, क्रोधादिकषायपरिणतः कषायात्मा उच्यते, न तद्व्यतिरिक्तोऽन्यस्तथाऽयमपि भविष्यति। एतेन कर्मानावृतप्रदेशाष्टकाविकृतचैतन्यसाधारणावस्थोपयोगभेदः प्रत्यस्तोऽवगन्तव्यः, तथा विग्रहगतिभाजामपर्याप्तकानां च जीवानामागमे लब्धीन्द्रियमुक्तम्–"[4]जीवे णं भंते! गब्भाओ गब्भं वक्कममाणे किं सइंदिए वक्कमइ अणिंदिए वक्कमइ? गोयमा! सिय सइंदिए सिय अणिंदिए, से केणट्ठेणं भंते! एवं वुच्चइ? गोयमा! दव्विन्दियाइं पडुच्च अणिंदिए वक्कमति, लद्धिन्दियाइं पडुच्च सइंदिए वक्कमति" (**भग०** श०१, उ०७, सू०६१)। तस्मादात्मनोऽवस्थाद्वयवर्तिनोऽवश्यं लब्धीन्द्रियमभ्युपेयम्, तदाश्रितं च मतिज्ञानादि, केवलं बाह्यकरणानिर्वृत्तौ ज्ञानविभागो नास्ति करणकृतस्तत्रेति। अथैतत् स्यात्, न ज्ञानसद्भावमपह्नुमहे तदा वयम्, किन्तु ज्ञाने सत्यप्युपयोगो नास्तीति ब्रूमः, तदेतत् सुप्ताद्यवस्थास्वपि समानम्, अथवा विलक्षवचनमित्यपकर्ण्यम्। तस्मादवस्थितमिदम्–द्विविध एवोपयोगो ज्ञानदर्शनाख्यः तद्व्यतिरिक्तस्तु नास्ति। **स** इदानीं द्विविध उपयोगो **यथासङ्ख्यं** यथानिर्देशमष्टभेदश्चतुर्भेदश्च भवति। पुनःशब्दः संख्यानियमार्थः। नातः परं विकल्पमर्हति, ज्ञानोपयोगो दर्शनोपयोगो वा। तमेवाधुना सङ्ख्यानियममाविष्करोति–**ज्ञानोपयोगोऽष्टभेद** इत्यादिना भाष्येणोद्देशनिर्देशरूपेण। **मतिज्ञानोपयोग** इति। मतिज्ञानाकारपरिणामस्तदात्मकत्व-

---

१ अपर्याप्ता भदन्त! जीवाः किं ज्ञानिनोऽज्ञानिनः? त्रीणि गौतम! ज्ञानानि त्रीणि अज्ञानानि भजनया।

२ मत्यज्ञानी भदन्त! मत्यज्ञानभावेन किं प्रथमोऽप्रथमः? गौतम! न प्रथमः, अप्रथमः, एवं श्रुताज्ञान्यपि।

३ यस्य द्रव्यात्मा तस्य उपयोगात्मा नियमादस्ति, यस्योपयोगात्मा तस्य ज्ञानात्मा वा दर्शनात्मा वा नियमादस्ति।

४ जीवो भदन्त! गर्भात् गर्भं व्युत्क्रामन् किं सेन्द्रियो व्युत्क्रामति अनिन्द्रियो व्युत्क्रामति?, गौतम! स्यात् सेन्द्रियः स्यादनिन्द्रियः, तत् केनार्थेन भदन्तैवमुच्यते?, गौतम! द्रव्येन्द्रियाणि प्रतीत्य अनिन्द्रियो व्युत्क्रामति, लब्धीन्द्रियाणि प्रतीत्य सेन्द्रियो व्युत्क्रामति।

मात्मनः, तथा श्रुतज्ञानादिष्वपि योज्यम् । इतिशब्दः साकारोपयोगपरिसमाप्त्यर्थः । इतरत्राप्यज्ञानपरिसमाप्तये । **चक्षुर्दर्शनोपयोग** इति चक्षुरालोचनाकारपरिणाम आत्मनस्तदात्मकत्वं तद्रूपता, औपचारिकनयश्च ज्ञानप्रकारमेव दर्शनमिच्छति, शुद्धनयः पुनरनाकारमेव सङ्गिरते दर्शनमाकारवच्च विज्ञानम् । आकारश्च विशिष्यनिर्देशो भावस्य पर्यायतः प्रोक्तः, स च दर्शनसमनन्तरमेव सम्पद्यतेऽन्तर्मुहूर्तकालभावित्वात् । आकारपरिज्ञानाच्च प्रागालोचनमवश्यमभ्युपेयम्, अन्यथा प्रथमत एव पश्यतः किमपीदमिति कुतोऽव्यक्तबोधनं स्यात्? यदि चालोचनमन्तरेणाकारपरिज्ञानमुत्पादत एव पुंसः स्यात् तथा सत्येकसमयमात्रेण स्तम्भकुम्भादीन् विशिष्य गृह्णीयात्, न च तथोपलभ्यते, अपिच–समयमपि स[1]ङ्गृह्णीयान्न च केवलिनमन्तरेण समयग्रहणमस्ति ? । अपरे वर्णयन्ति–वर्तमानकालविषयं तु सदर्थग्रहणं दर्शनम्, त्रिकालविषयं साकारं ज्ञानमिति, एतदपि वार्तम्, वर्तमानस्य परमनिरुद्धसमयरूपत्वाद् विवेचनाभावः, तस्मात् छद्मस्थानामनाकाराद्धाऽल्पत्वादेवाव्यक्ता, साकाराद्धा[2]ऽऽधिक्याच्चान्तर्मुहूर्तिकी व्यक्ता भवति, न चान्तर्मुहूर्तादुपर्येकत्रावधानमस्ति वस्तुनि, प्रत्यक्षमेतत्, अनाकाराद्धा साकाराद्धा द्वयपरावृत्तिश्च प्राणिनां स्वभावादुपजायमाना स्वसंवेद्या च नापहन्तुं शक्याऽतिबहुभिरपि हेतुभिः । अत्र च यथा साकाराद्धायां सम्यङ्मिथ्यादृष्ट्योर्विशेषः, नैवमस्ति दर्शने, अनाकारत्वे द्वयोरपि तुल्यत्वादित्यर्थः । चक्षुर्दर्शनवदचक्षुर्दर्शनं वाच्यं शेषेन्द्रियविषयम्, अथवेन्द्रियनिरपेक्षमेव तत् कस्यचिद् भवेद् यतः पृष्ठत उपसर्पन्तं सर्पं बुद्ध्यैवेन्द्रियव्यापारनिरपेक्षं पश्यतीति । अवधिदर्शनं तु सम्यग्दृष्टेरेव, न मिथ्यादृष्टेः, चक्षुर्दर्शनमेव किल तस्येति पारमर्षी श्रुतिः । केवलज्ञानोपयोगप्रवाहविच्छेदेऽनाकाराद्धा केवलदर्शनमुच्यते स्वाभाविकम्, अनाकारग्रहणकालश्च तत्र नाकर्तुमलमल्पत्वाद् भावात्, न पुनस्तन्नाकरोति, यथा समयमात्रेणागृह्णानः पुमान् घटकमन्य इति न व्यपदिश्यते तद्ग्रहणशक्तियुक्तत्वाद्, अल्पिष्ठकालत्वादशक्तस्तद्ग्रहे तथा भगवानपीति ॥ ९ ॥

एवमेतत् सर्वगतिवर्तिनां जीवानामिन्द्रियकषायलेश्यादिविशेषवतामप्यविलक्षणं लक्षणमुक्तम्, ते पुनरुपयोगलक्ष्याः कतिविधा जीवा इति प्रकारान्तरेण तावद् द्वैविध्यं वर्णयितुकाम आह—

## सूत्रम्—संसारिणो मुक्ताश्च ॥ २–१० ॥

**भा०—ते जीवाः समासतो द्विविधा भवन्ति–संसारिणो मुक्ताश्च ॥ १० ॥ किञ्चान्यत् ।**

**टी०—संसारिणो मुक्ताश्च** । यदवष्टम्भेनात्मनः संसरणम्–इतश्चेतश्च गमनं भवति

१ 'स गृह्णीयान्न' इति प्रतिभाति । २ 'द्धान्तमुहूर्तिकी' इति क-ख-पाठः ।

संसारस्य शब्दार्थः

स संसारः-कर्माष्टकरूपः, स येषां विद्यते ते संसारिणः । अथवा बलवतो मोहस्याख्या संसारस्तत्सम्बन्धात् संसारिणः, नारकाद्यवस्था वा संसारः, तदवस्थायोगात् संसारिणः । मुच्यन्ते स्म मुक्ताः । कुत इति चेत् ? अनन्तरत्वात् संसारादिति वाच्यम् । अतो निर्धूताशेषकर्माणः संसारान्मुक्ता इति व्यपदिश्यन्ते । समस्य कस्माल्लाघवैषिणा निर्देशो नाकारि सूरिणेति ? उच्यते-भिन्नस्वभावप्रतिपादनार्थमुभयेषाम्, संसारिणो हि प्रागभिहितौपशमिकादिस्वभावास्तद्विनिर्मुक्तास्तु मुक्ताः । तथोभयत्रोभयोर्बहुवचनमानन्त्यप्रतिपत्तये, संसारिणोऽनन्ताः । मुक्ताश्चेति । संसारिणामादावुपन्यासः प्रत्यक्षबहुभेदवाच्यार्थः, तदनु मुक्तवचनं संसारिपूर्वकत्वप्रसिद्धयर्थं तत्साहचर्यादभावनिषेधार्थं च । एकैकानेकविकल्पज्ञापनार्थश्चशब्दः । संसारिणां तावत् समनस्कादिभेदोऽनन्तर एव वक्ष्यते, मुक्तानामप्यनन्तरपरम्परतद्भेदाः शास्त्रपरिसमाप्तिदेशे वक्ष्यन्ते, प्रधानगुणभावख्यापनार्थो वा चशब्दो द्रष्टव्यः । ते जीवाः **समासत** इत्यादि भाष्यम् ॥ त इति औपशमिकादिभावभाजः समनन्तरव्यावर्णितोपयोगलाञ्छना जीवाः परामृश्यन्ते, **समासतः**-संक्षेपात् द्विप्रकारा भवन्ति, न तु विस्ताराभिधानतः, तच्च द्वैविध्यं दर्शयति-**संसारभाजो मुक्तिप्राप्ताश्चेति** ॥ १० ॥

किञ्चान्यदित्यनेन सम्बन्धमाचष्टे सूत्रस्य भाष्यकारः, जीवाधिकारानुवृत्तावन्यदपि किञ्चिद्भेदान्तरमुपदिश्यते—

## सूत्रम्—समनस्कामनस्काः ॥ २-११ ॥

**भा०—समासतस्त एव जीवा द्विविधा भवन्ति-समनस्काश्च अमनस्काश्च । तान् पुरस्ताद् ( अ० २, सू० २५ ) वक्ष्यामः ॥ ११ ॥**

**टी०—समनस्कामनस्काः**, कृतसमासनिर्देशात् संसारिण एव सम्बध्यन्ते न मुक्ताः, यदि च मुक्ता अपि सम्बध्येरन् न तर्हि समस्य निर्दिशेदाचार्यः, विशकलीकृत्य पूर्ववत् स्पष्टमभिदध्यादसमस्तमेव । कृतसमासनिर्देशे चायमभिप्रायः-नैष सङ्घातो विशकलीभूतः प्रयुज्यते विशेषणतया, किन्तु संहतरूप एवैकस्य, सम्भवतो विशेषणमिति, उभयसम्भवश्च संसारिणाम्, न मुक्तानाम्, अथवा व्याख्यानाद् विशेषप्रतिपत्तिः, संसारिणोऽभिसम्बध्यन्ते, न मुक्ताः, अथवा नेदं विधायकम्, किन्त्वनुवादकम्, येषां नामाम्नायेऽभिहितं समनस्कामनस्कत्वं तेषामेवानूद्यते, सिद्धानां पुनरमनस्कत्वमेव, नोभयमिति । अपरे पुनर्योगमुत्तरं विभजन्ते-संसारिण इति, यथोक्तलक्षणाः संसारिणो भवन्ति, ततः संसारिण इत्यनुवर्तमाने त्रसस्थावरा इति, अन्ये पुनः सूत्रमेव विपर्यासयन्ति विभज्य, प्राक् तावत् संसारिणः पश्चात् त्रसस्थावराः ततः समनस्कामनस्का इति, तदेतदयु-

१ समासं कृत्वा इत्यर्थः । २ 'परस्ताद्' इति घ-पाठः ।

क्तमनाचार्यत्वात्। अधुना सूत्रार्थः-**समासत** एवेत्यादि भाष्यम्। पुनरपि सङ्क्षेपादेव द्वैविध्यमभिधीयते, जीवा इति प्रेक्षापूर्वकारितयोदचीचरद् इदं कषति चेतसि सूरेर्मुक्तानामप्यभिसम्बन्धप्रसङ्गः समनस्कामनस्कत्वेनेत्यतो जीवाः प्रतिविशिष्टायुर्द्रव्यसहिताः परिगृह्यन्त इति सिद्धव्युदासः। **समनस्काश्चे**ति सह मनसा समनस्काः, तद्विरहितास्त्वितरे। किं पुनस्तन्मनो येन सम्बन्धात् समनस्का इति व्यपदिश्यन्ते?। उच्यते-द्विविधं तद् द्रव्यभावभेदात्, तत्र मनोऽभिनिर्वृत्त्यै यद् दलिकद्रव्यमुपात्तमात्मना सा मनःपर्याप्तिर्नाम करणविशेषः, तेन करणविशेषेण सर्वात्मप्रदेशवर्तिना यानन्तप्रदेशान् मनोवर्गणायोग्यान् स्कन्धान् चित्तार्थमादत्ते ते करणविशेषपरिगृहीताः स्कन्धाः द्रव्यमनोऽभिधीयते(न्ते)। भावमनस्तु जीवस्योपयोगः, चित्तचेतनायोगाध्यवसानावधानस्वान्तमनस्काररूपः परिणामः। श्रुतज्ञानावरणक्षयोपशमजतया चैतन्मनोरूपं करणमिष्यतेऽर्हद्भिः, धारणा च मनोयुक्तस्यैव च जन्तोर्भवति, नेतरस्येति। अत्र ये द्रव्यभावमनोभ्यामुभाभ्यामपि युक्तास्ते समनस्काः, ये पुनर्भावमनसैवोपयोगमात्रेण मनःपर्याप्तिकरणविशेषनिरपेक्षेण युक्तास्ते अमनस्काः, एषां मनःपर्याप्तिकरणनिर्वृत्त्यभावात्, चेतना तु तया पटीयसी भवति यथेतरेषां द्रव्यमनोऽवष्टम्भाद्, वृद्धयष्टिस्थानीयद्रव्यमनोऽवष्टम्भेन संज्ञिनः स्पष्टमनुचिन्तयन्ति। तत्रविभागश्चायम्-नारकदेवगर्भव्युत्क्रान्तिकमनुष्यतिर्यञ्चः समनस्काः, शेषास्त्वमनस्काः, **तान् पुरस्ताद् वक्ष्याम** इति 'संज्ञिनः समनस्काः', पुरो-भविष्यति सूत्रे (अ० २, सू० २५) व्याख्यास्यामः समनस्कामनस्कविशेषमिह पुनर्भेदमात्राख्यानमित्यावेदयति भाष्यकार इति ॥ ११ ॥

मनसो द्वैविध्यम्

अथ जीवप्रकारान्तरसङ्ग्रहप्रस्तावमेवोपजीवयन्नाहाचार्यः—

## सूत्रम्—संसारिणस्त्रसस्थावराः ॥ २-१२ ॥

संसारिजीवभेदप्रदर्शनम्

**भा०—संसारिणो जीवा द्विविधा भवन्ति-त्रसाः स्थावराश्च ॥ १२ ॥ तत्र।**

**टी०**—संसारिणस्त्रसाः स्थावराः[1]। इतः प्रभृति संसार्यधिकार एव आ अजीवकायाध्यायाद् वेदितव्यः। मुक्ताः पुनर्दशमेऽध्याये वक्ष्यन्ते। उक्तलक्षणः संसारः, स येषामस्ति ते तथोच्यन्ते॥ ननु च संसारिणो मुक्ताश्चेति इह सूत्रे यत् संसारिग्रहणं तदेवानन्तरसूत्रसम्बन्धितमधिकरिष्यते नार्थः पुनः संसारिग्रहणेन। उच्यतेपूर्वकं संसारिग्रहणं भेदकथनाभिप्रायेण जीवानामवाचि, तच्च समनस्कामनस्कसूत्रे प्रयत्नतः सम्बन्धमुपनीतं नोत्तरत्र प्रवर्तितुमुत्सहते, इदं पुनर्न[2] भेदप्रतिपत्तये, किन्तु

१ '०त्रसाः स्थावराः' इति ग- पाठः। २ 'पुनर्भेद' इति क-ख-पाठः।

यदितः प्रभृति वक्ष्यते आ चतुर्थाध्यायपरिसमाप्तेस्तत् सर्वं संसारिणामित्यधिक्रियते। ते च **संसारिणो जीवा द्विविधा भवन्ति**, तद्यथा–**त्रसाः स्थावराश्चेति**। परिस्पष्टसुखदुःखेच्छाद्वेषादिलिङ्गास्त्रसनामकर्मोदयात् त्रसाः, अपरिस्फुटसुखादिलिङ्गाः स्थावरनामकर्मोदयात् स्थावराः, आदौ च त्रसाभिधानं सुखग्रहणार्थम्, स्पष्टलिङ्गत्वात्, समास उभयेषां परस्परसङ्क्रमार्थम्, त्रसाः स्थावरेषु स्थावराः त्रसेषु मृत्वोपंजायन्त इति। एवं तावत् संसारिणो द्वैविध्येन विकल्पिताः–त्रसाः स्थावराश्चेति ॥ १२ ॥

**सूत्रम्—पृथिव्यम्बुवनस्पतयः[2] स्थावराः ॥ २–१३ ॥**

**भा०—पृथ्वीकायिकाः, अप्कायिकाः, वनस्पतिकायिकाः इत्येते त्रिविधाः स्थावरा जीवा भवन्ति। तत्र पृथिवीकायोऽनेकविधः शुद्धपृथिवीशर्करावालुकादिः। अप्कायोऽनेकविधः हिमादिः। वनस्पतिकायोऽनेकविधः शैवलादिः ॥ १३ ॥**

स्थावराणां ३ भेदाः

टी०—तत्र स्थावरानेव तावद् वच्मः–**पृथिव्यम्बुवनस्पतयः स्थावराः** ॥ ननु च यथोद्देशं निर्देशः कर्तव्यः, प्रथमं त्रसा वक्तव्याः ततः स्थावराः। उच्यते–प्रेक्षापूर्वकारितयाऽऽचार्येण स्वरचितव्यवस्थां भित्त्वा स्थावरास्तावदभिहिताः। का पुनरसौ प्रेक्षापूर्वकारिता? भण्यते–वक्ष्यत्युत्तरसूत्रं(१४) 'तेजोवायू द्वीन्द्रियादयश्च त्रसाः,' तत्र इन्द्रियप्रकरणमधीत्य वक्ष्यति 'वाय्वन्तानामेकम्' (अ० २, सू० २३) तत्रायमर्थः–पृथिव्यादीनां वाय्वन्तानामेकेन्द्रियं स्पर्शनं भवति, यदि पुनः पूर्वं त्रसाभिधानं कुर्यात् पश्चात् स्थावरानभिदध्यात् तथा( दा ) गौरवं जायेत, अर्थलाघवैषिणा सता क्रमो भिन्नः। तत्रेत्यनेन सूत्रं सम्बन्धयति, तत्र द्वितये प्रस्तुते स्थावरास्तावदुच्यन्ते प्रयोजनार्थम्–पृथिवीकायिका इत्यादि भाष्यम् ॥ ननु च सूत्रे कायग्रहणं नास्ति, भाष्ये कथमकस्माद् विहायसोऽपतदिति?। उच्यते–लाघवार्थिना[3] सूत्रे नोपात्तम्, विनाऽपि तेन सिद्धेः, भाष्ये तु यथेष्टमधिकमप्युच्चार्यते सूत्रार्थमनुश्वतेति। तत्र पृथिव्येव कायः पृथिवीकायः, स येषां विद्यते ते **पृथिवीकायिकाः** ॥ ननु च लघुत्वात् प्रक्रमस्य बहुव्रीहौ सति तदभिहितत्वान्मत्वर्थीयेन न भाव्यम्, ततश्च पृथिवी कायो येषां ते पृथिवीकायाः, सत्यमेवमेतत्, तथाप्यनरवन्ति चक्राणीत्येवमाद्यनेकप्रयोगदर्शनात् साधुत्वमत्रापि प्रतिपत्तव्यम्। अथवा पृथिवीकायादयो जातिशब्दास्ततश्च मत्वर्थीयः सिद्धः कृष्णसर्पवद्वल्मीकन्यायेनेति, एवमितरयोरपि[4] योज्यमेतत्। इतिशब्दोऽर्थपदार्थकः। त्रिविधा एव स्थानशीला भवन्ति जीवाः पृथिव्यादयः, न पुनः स्थावरनामकर्मोदयनिर्वृत्तानां त्रैविध्यं निर्धारयति, तेजोवाय्वोरपि तन्निर्वृत्तेरिति। स्थूलोत्तरद्वयाधारत्वादादौ न्यस्ता पृथिवी, तदन्वापस्तदाधेयत्वाल्लेश्याप्र-

१ 'मृत्वोपयात' इति क–ख पाठः। २ 'पृथ्व्यब्व०' इति घ–पाठः। ३ 'लाघवार्थं' इति ख–पाठः। ४ 'इतरेतरयोरपि' इति क–ख–पाठः।

त्येकशरीरासङ्ख्येयत्वसाम्याच्च, ततो वनस्पतिरनन्तत्वात्, समासश्च परस्परसङ्क्रमज्ञानार्थः। अधुना स्वस्थान एव पृथिव्यादीनामनेकभेदमाचिख्यासुराह–**पृथिवीकायोऽनेकविध** इत्यादि भाष्यम्। पृथ्वीकायजात्यनतिक्रमेणानेकभेदता दर्श्यते–**शुद्धपृथिवी** वक्ष्यमाण-

पृथ्वीकायिकानामनेके भेदाः

शर्करादिभेदरहिता मृत्तिकारूपा गोमयकचवराद्यनेकेन्धनरहिता वा, तथा **शर्करापृथिवी** परिलघुकाश्मशकलव्यतिमिश्रा, **वालुकापृथिवी** वालुकाव्यतिमिश्रा मृत्तिकेति। **आदि**शब्देनोपल-शिला-लवणोषायस्त्रपुता-म्र-सीसक-रजत सुवर्ण-वैर-हरिताल-हिङ्गुलक-मनःशिला-सस्यकाञ्जन-प्रवालाभ्रपटलाभ्रवालि-का[1]-गोमेद[2]-रुचकाङ्क[3]-स्फटिक-लोहिताक्ष-मरकत-मसारगल्ल-भुजगेन्द्रनील-चन्दन-गैरिक-हंसग-र्भ-पुलक-सौगन्धिक-चन्द्रसूर्यकान्त-वैडूर्य-जलकान्तप्रकाराः सर्वे बादरपृथिवीकायभेदा ग्राह्याः। एते च शुद्धपृथिव्यादयः स्वाकरस्था एव प्रायश्चैतन्यं बिभ्रति, गोमयकचवरसवितृतापादिस-म्पर्कात् तु गतचेतना अपि जायन्ते, एषां च बादराणां यत्रैको जीवस्तत्रासङ्ख्येयैर्नियमतो-भाव्यम्, स्थानमपि चैषां पृथिव्यष्टकाधोऽधः पातालभवननरकप्रस्तरादि। अपरं सूक्ष्म-पृथिवीकायाः सर्वलोकव्यापिनः, उभयेषामपि चैषाममी परमर्षिप्रणीतप्रवचनप्रसिद्धा भेदा वेदितव्याः पर्याप्तकापर्याप्तकशरीरत्रयाङ्गुलासङ्ख्येयभागशरीरसेवार्तसंहननमसूरचन्द्रसंस्थान-कषायसंज्ञाचतुष्काद्यलेश्यात्रयस्पर्शनेन्द्रियवेदनाकषायमारणान्तिकसमुद्घातासंज्ञिनपुंसकवेदप-र्याप्तिचतुष्टयमिथ्यादर्शनाचक्षुर्दर्शनाज्ञानकाययोगसाकारानाकारोपयोगाहारादिप्रकाराः, विशे-षास्तु बादरपृथिवीकायानामाद्याश्चतस्रो लेश्याः, शेषं समानम्, असङ्ख्येयाश्च प्रत्येक-मुभये। कथं पुनरिदं विज्ञायते साकारानाकारोपयोगादिजीवलिङ्गकलापोऽत्राशेषप्राणिचि-ह्नभूतोऽस्तीति ?। उच्यते–आगमतो युक्तितश्च, आगमस्तावत्–"पुढविकाइया[4] णं भंते ! किं सागारोवओगोवउत्ता अणागारोवओगोवउत्ता ? गोयमा ! सागारोवओगोवउत्तावि अणागारोवओगोवउत्तावि" (प्रज्ञा० सू० ३१२)॥ तथा "पुढविकाइए[5] णं भंते ! अक्कंते समाणे केरिसयं वेदणं पच्चणुभवति ? गोयमा ! से जहा नामए केइ पुरिसे तरुणे बलवं जुवाणे जाव निउणसिप्पोवगए एगं पुरिसं जुण्णं जराजज्जरियदेहं परिहीणसगलिंदिय-वियारं दुब्बलं किलंतं जमलपाणिणा मुद्धाणंसि अभिहणेज्जा, से णं गोयमा ! पुरिसे तेणं जमलपाणिणा मुद्धाणंसि अभिहते समाणे केरिसयं वेयणं पच्चणुभवति ?, अणिट्ठं सम-

---

१ 'वालिका' इति क-ख-पाठः। २ 'गोमेदक' इति क-ख-पाठः। ३ 'रुचकाङ्क' इति ग-टी-पाठः।
४ पृथ्वीकायिकाः भदन्त ! किं साकारोपयोगोपयुक्ताः अनाकारोपयोगोपयुक्ताः ?, गौतम ! साका० अपि अना० अपि।
५ पृथ्विकायिको भदन्त ! आक्रान्तः सन् कीदृशीं वेदनां प्रत्यनुभवति ?। गौतम ! तद्यथानामकः कश्चित् पुरुषस्तरुणो बलवान् युवा यावत् निपुणशिल्पोपगत एकं पुरुषं जीर्णं जराजर्जरितदेहं परिहीनसकलेन्द्रियव्यापारं दुर्बलं क्लाम्यन्तं पाणियमलेन मूर्ध्नि अभिहन्यात्, स गौतम ! पुरुषस्तेन पाणियमलेन मूर्ध्नि अभिहतः सन् कीदृशीं वेदनां प्रत्यनु-

णाउसो !, तस्स णं गोयमा ! पुरिसस्स वेयणाहिंतो पुढविकाइए अक्कंते समाणे अणिट्ठतरियं अकंदिततरियं चेव अमणामतरियं चेव वेयणं पच्चणुभवति" (भग०श०९,उ०३,सू०६५३)। एवमेवाप्तेजोवायुवनस्पतिकाया अपि वक्तव्याः। युक्तिरपि सास्नाविषाणादिसङ्घाता हि छेद्यभेद्योत्क्षेप्यभोग्याघ्रेयरसनीयस्पृश्यदृश्यद्रव्यत्वे सति जीवशरीरतया प्रसिद्धाः, पृथिव्यादीनां च छेद्यत्वादिदृष्टमपह्नोतुं न शक्यते, जीवशरीरत्वेन निरूपितत्वात्, पाणिपादसङ्घातानामिव पृथिव्यादीनामपि कदाचिच्चैतन्यं, न चात्यन्तमचित्ततेति, कदाचित् किञ्चिदचेतनमपि शस्त्रोपहतत्वात् पाण्यादिवदेवेति, अर्शोविकाराङ्कुरवच्च समानजातीयाङ्कुरोत्पत्तिमत्त्वे सति स्वाश्रयावस्था विद्रुमलवणोपलादयः पृथिवीविकाराश्चेतना ततश्च विद्रुमलवणादिवत् पृथिवी विकारे सति अभ्रपटलाञ्जन-हरिताल-मनःशिला-शुद्धपृथिवी-शर्कराप्रभृतयश्चैतन्यमव्यक्तं मत्तसुप्तमूर्च्छितपुरुषवदनुभवन्तीत्यागमतो युक्तितश्चैषामुपयोगो[1] लक्षणं प्रतिपत्तव्यमितरत्रापि च यथासम्भवमेतदुभयमायोजनीयम्। अप्कायोऽनेक इत्यादिग्रन्थः। अत्राप्यादिग्रहणेनावश्याय-महिका-करक-हरतनु-शुद्ध-शीतोष्ण-क्षाराम्ल-लवण-क्षीर-घृतोदकप्रकाराः परिगृह्यन्ते, बादराणां समुद्र-ह्रद-नदीप्रभृतिस्थानमितरेषां सर्वलोकस्तथैवासङ्ख्येयतापर्याप्तकादिभेदश्चाशेषस्तथैव केवलं शरीरसंस्थानं स्तिबुकबिन्दुकसंस्थितमेवावसेयम्। वनस्पतिकाय इत्यादिग्रन्थः। शैवलादिरिति।

अप्कायिकानां भेदप्रदर्शनम्

साधारणशरीरबादरवनस्पतिकायोपादानात् तदुपलक्षितास्ते चान्ये च ग्राह्याः, शैवालावकपणकहरिद्रार्द्रकमूलकाल्लुकासिंहकार्णिप्रभृतयः, तथा प्रत्येकशरीराः वृक्ष-गुच्छ-गुल्म-लतावितानप्रभृतयः। अत्र साधारणवनस्पतेरनन्तजीवानामेकं शरीरमुच्छ्वासनिःश्वाससमतासमाहारादानता चेत्यादिलक्षणमागमतोऽनुसर्तव्यम्। प्रत्येकशरीरास्त्वसङ्ख्येयजीवाः सङ्ख्येयजीवा वा बहुभेदाः, पर्याप्तकादिर्भेदस्तथैव, केवलमनित्थं स्थं शरीरसंस्थानमेषामवसेयम्, शेषमन्यत् समानम्। स्थानं घनोदधिघनवलयाद्येषां, सङ्ख्यामङ्गीकृत्यानन्ताः सर्वे वनस्पतयः, सूक्ष्माः सर्वलोकव्यापिनो वनस्पतयः॥ १३॥

वनस्पतिकायिकानां भेदनिरूपणम्

उक्ताः स्थावराः, त्रसा उच्यन्ते—

## सूत्रम्—तेजोवायू द्वीन्द्रियादयश्च त्रसाः[2] ॥ २–१४ ॥

**भा०—तेजःकायिका अङ्गारादयः। वायुकायिका उत्कलिकादयः। द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रिया इत्येते त्रसा भवन्ति। संसारिणस्त्रसाः स्थावरा इत्युक्ते एतदुक्तं भवति—मुक्ता नैव त्रसा नैव स्थावरा इति॥ १४॥**

त्रसानां भेदाः

भवति ? अनिष्टां श्रमणायुष्मन् ! तस्य गौतम ! पुरुषस्य वेदनायाः ( सकाशात् ) पृथ्वीकायिक आक्रान्तः सन् अनिष्टतरां अकान्ततरां अमनोज्ञतरामेव वेदनां प्रत्यनुभवति।

१ 'मुपयोगलक्षणत्वम्' इति ग–टी–पाठः॥ २ 'तेजोवायुद्वीन्द्रियादयः त्रसाः' इति ग–पाठः।

टी०—**तेजोवायू** इति। अङ्गारार्चिरलातशुद्धाग्न्यादिभेदं बादरं तेजः, बादरस्य तु मनुष्यक्षेत्रमेव स्थानम्, न ततः परमस्ति, सूक्ष्मं सर्वलोकपर्यापन्नम्, शरीरसंस्थानं सूचीकलापाकृति, शेषपर्याप्तकादिभेदः पूर्वकैः समानः, प्रमाणतोऽसङ्ख्येयजीवः। प्राच्यप्रतीच्याद्युत्कलिकामण्डलिकादिभेदो वायुः, बादरस्य स्थानं घनवाततनुवाततद्वलयाधोलोकपातालभवनादि, सूक्ष्मः सर्वलोकपर्यापन्नः, प्रमाणतोऽसङ्ख्येयजीवः, पूर्वकैः पर्याप्तकादिभेदः समानः, शरीरसंस्थानं तु पताकाकृति द्रष्टव्यम्॥ द्वे इन्द्रिये येषां ते द्वीन्द्रियाः, ते **द्वीन्द्रिया** आदौ येषां ते द्वीन्द्रियादय इति तद्गुणसंविज्ञानो बहुव्रीहिः, पञ्चेन्द्रियपर्यवसानाः, वक्ष्यति–'पञ्चेन्द्रियाणि' (अ० २, सू० १५) इति। पञ्चैव नातः परमिन्द्रियम्, नियमाद्धि तद्वतामवच्छेदः। चशब्दः समुच्चितौ। सर्वे **एते त्रसा भवन्ति**। इतिशब्दोऽवधृतौ। एतावन्त एव सामान्यत इति। त्रसत्वं च द्विविधं-क्रियातो लब्धितश्च। तत्र क्रिया कर्म चलनं देशान्तरप्राप्तिः। अतः क्रियां प्राप्य तेजोवाय्वोस्त्रसत्वम्, लब्धिस्तु त्रसनामकर्मोदयः, यस्माद् द्वीन्द्रियादीनां क्रिया च देशान्तराप्राप्तिलक्षणेति, लब्ध्या पृथिव्यप्तेजोवायुवनस्पतयः सर्वे स्थावरनामकर्मोदयात् स्थावरा एव, आदिवचनं तेजसश्चक्षुःप्रत्यक्षाल्पत्वात्, ततो वायोस्तदधिकसूक्ष्मत्वात्, असमासकरणं तेजोवाय्वोः संज्ञाद्वैविध्यप्रतिपादनार्थम्–त्रसौ स्थावरौ चेति, तेजोवाय्वोः समासकरणं स्थावरैः सहैकेन्द्रियत्वसाधर्म्यात्, द्वीन्द्रियाद्युत्तरवचनमिन्द्रियक्रमवृद्धेः। **संसारिणस्त्रसा** इत्यादि भाष्यम्। कोऽभिप्रायः? अर्थापत्तिरपि प्रमाणान्तरं नयवादान्तरेणेति प्रागुक्तम्, तस्याः प्रामाण्यद्वारेण विषयप्रदर्शनं क्रियते–संसारिणां त्रसस्थावरत्वविधाने मुक्तानामुभयमपोदितं भवतीति, न ते **त्रसाः स्थावरा** वा तल्लक्षणानुपपत्तेरिति॥ १४॥

त्रसत्वस्य द्वैविध्यम्

निर्दिष्टा उपयोगिनः, सम्प्रतीन्द्रियाण्युच्यन्ते–कः पुनरस्य सम्बन्धः सूत्रस्य? उच्यते–उक्तं प्रथमे 'तदिन्द्रियानिन्द्रियनिमित्तं' (अ० १, सू० १४) मतिज्ञानमनन्तरं च द्वीन्द्रियादयस्त्रसास्तत्र कियन्तीन्द्रियाणि? कतिविधानि वा तानि? तेषां वा मध्ये कस्य किमिन्द्रियमुपयोगिन इति? तत्रादौ सङ्ख्यानमेव तावन्निरूपयितुमाह—

## सूत्रम्—पञ्चेन्द्रियाणि॥ २–१५॥

टी०—अथवा येयं चैतन्यव्यक्तिर्जीवानां सेन्द्रियद्वारेणेति, तानि च न सर्वाणि सर्वस्येति विभागो वक्ष्यते, इन्द्रियनियमः पुनः पञ्चधैवेत्यत आह–**पञ्चेन्द्रियाणि**। अथवा जीवानामुपयोगो लक्षणमन्वयि सर्वत्र निगदितम्, तस्योपयोगस्य निमित्तान्यमून्यपदिशन्ति **पञ्चेन्द्रियाणि**॥ ननु च सूत्रारम्भो निष्फल एव लक्ष्यते, किमनेनोक्तेन भवति पञ्चेन्द्रियाणीति?। इन्द्रियस्वरूपमेवात्र वक्तव्यम्, द्रव्येन्द्रियमित्थंलक्षणमेवंप्रकारं च भावेन्द्रियम् इत्याशङ्कायामाह भाष्यकारः—

भा०—पञ्चेन्द्रियाणि भवन्ति। आरम्भो नियमार्थः षडादिप्रतिषेधार्थश्च। "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा" (पा० अ० २, पा० ५, सू० ९३)। इन्द्रो जीवः सर्वद्रव्येष्वैश्वर्ययोगात् विषयेषु वा परमैश्वर्ययोगात्, तस्य लिङ्गमिन्द्रियम्, लिङ्गनात् सूचनात् प्रदर्शनादुपष्टम्भनाद् व्यञ्जनाच्च जीवस्य लिङ्गमिन्द्रियम् ॥ १५ ॥

टी०—पञ्चेन्द्रियाणि भवन्तीति। आरम्भो नियमार्थः। अन्यूनाधिकतयाऽवधार्यन्ते एतावन्तीन्द्रियाणि प्रकर्षतो भवन्त्येकस्य जन्तोरित्येवंप्रकारो नियमः प्रतिपिपादयिषितः, तथा षडादिप्रतिषेधार्थश्च। षट् आदौ येषां तानि षडादीनि सामर्थ्यादिन्द्रियाण्येव सम्बध्यन्ते, अस्मादुपात्तेन्द्रियपञ्चकव्यतिरेकेण यावन्ति परैरभ्युपेयन्ते सर्वेषामत्र प्रतिषेधः, सूत्रारम्भादेव ॥ ननु च नियमादेवेदमवाप्तमन्यूनानधिकानि पञ्चैवेति, पुनः किमुच्यते षडादिप्रतिषेधार्थश्चेति ?। उच्यते—नियमस्यैतावत् फलं पञ्चैवेति सिद्धान्तोऽयं जैनः, तद्व्यतिरिक्तेन्द्रियान्तराभ्युपगमवादी तु निराकार्योऽवश्यं दूषणमुत्प्रेक्ष्य सिद्धान्तवादिना, अतस्तद्बीजभूतमिदं वचनं षडादिप्रतिषेधार्थश्चेति। तत्र मनस्तावदिन्द्रियं न भवति, इन्द्रियाणि चक्षुरादीनि स्वतन्त्राणि सन्ति रूपाद्यर्थग्रहणेषु प्रवर्तन्तेऽन्यनिरपेक्षाणि, मनः पुनश्चक्षुरादीन्द्रियकलापविषयीकृतमनुपतति रूपाद्यर्थं, न साक्षादित्यतश्चक्षुरादिवन्नेन्द्रियं मनः, किन्त्वनिन्द्रियम्, एतच्चोपरिष्टाद् वक्ष्यते। तथा वागादयः किल वचनादिव्यापारपरायणत्वादिन्द्रियव्यपदेशभाज इत्येतदप्ययुक्तम्, नहि यथा चक्षुरादिद्वारजन्मविज्ञानं परिणमतेऽर्थग्रहणायैवं वागादिद्वारजन्मविज्ञानं वचनादिषु परिणतिमुपैति, न च वाग्वचनयोः कश्चिद् भेदोऽस्ति, शब्दात्मिका चेयमात्मप्रयत्नसंस्कारप्रयोगक्रमवर्तिनीत्वात्, स च श्रोत्रेन्द्रियविषयः, न चेन्द्रियमिन्द्रियान्तरमास्कन्दिष्यते, नियतविषयत्वात्। तथा पाण्याद्यवयवक्रियाणामिन्द्रियत्वे भ्रूक्षेपस्तनभुजशिरस्फुरणक्रियाणामपीन्द्रियत्वं स्यात्, अथैता एव प्रतिविशिष्टावयवसाध्याः क्रियाः प्रदिश्यन्त इन्द्रियाकारेण नान्यास्ततो रुचिरेव युक्तितयाङ्गीकृता स्यात्, अपि च छिन्नपाणिः पादाभ्यामादत्ते, ध्वस्तचरणश्च पाणिभ्यां विहरति, विनष्टपायुप्रदेशा च भगन्दरव्याधिना योषिदुपस्थेनाप्युत्सृजतीत्येवमतिसङ्कीर्णता स्यात्, न चैवं कदाचिदन्धीभूतः श्रोत्रेण रूपमाददान उपलभ्यते, तस्माद् यत्किञ्चिदेतत्। प्रकृतमुच्यते—सङ्ख्याशब्दो व्याख्यातः। पञ्चैवेन्द्रियाणि भवन्ति। अधुनेन्द्रियाणीत्यस्यावयवस्य शब्दनिर्भेदद्दिदर्शयिषयाऽऽह—इन्द्रियमिन्द्रलिङ्गमिति। एतावता शब्दप्राभृतप्रसिद्धं लक्षणमुपलक्षयति, स्वयमेव च पुनर्व्याचष्टे—इन्द्रो जीवः सर्वद्रव्येष्वैश्वर्ययोगात्, इन्दनादिन्द्रः सर्वभोगोपभोगाधिष्ठानसर्वद्रव्यविषयैश्वर्योपभोगाज्जीवः, तच्च पर्यायतोऽस्य सम्भवत्यनादौ संसारेऽनेकजन्मान्तरवृत्तेर्देवादिस्थानापेक्षया, न चास्ति किल कश्चित् प्रदेशो लोकेऽणुमात्रोऽपि यत्रैकेन जन्तुना न जन्ममरणे समनुभूते तिप्राणापानशरी-

इन्द्रियसंख्याप्रतिपादनम्

राहारादिग्रहणं वा नाकारीति, प्रवचने चोपदिष्टमजापाटकनिदर्शनम्, अत एव भगवद्भिरालोकितसकललोकस्वभावैरतः परमेश्वरोऽयं सर्वत्र सर्वस्य सर्वदा ईश्वरत्वाद्। यो व सर्वद्रव्यविषयमुक्तन्यायेन परमेश्वरत्वमस्यापह्नुते प्रवचनाद् बहिर्वर्तमानस्तं प्रति प्रकारान्तरेण परमेश्वरतामाविष्करोति–**विषयेषु वा परमैश्वर्ययोगादिति**। प्रसिद्धाः खलु विषयाः शब्दादयस्तद्विषयश्चात्मनः परिभोगोऽविगानेन प्रतिपन्नः प्रवादिभिस्तदेवास्य परमैश्वर्यं विषयपरिज्ञानाधिकत्वात्, न खलु तं विहायात्मानमन्यो विषयान् भुङ्क्ते कश्चिज्जानीते वा। **वाशब्दो** विकल्पार्थः। तमेवमुभाभ्यां प्रकाराभ्यामात्मानमिन्द्रतायामवस्थाप्य सर्वनाम्ना परामृशति–**तस्य लिङ्गमिन्द्रियमिति**। तस्यैवंप्रकारस्यात्मन इन्द्रस्य लिङ्गं–चिह्नमविना-

इन्द्रियस्य शब्दार्थः

भाव्यत्यन्तलीनपदार्थावगमकारीन्द्रियमुच्यते, तदेव च लिङ्गमात्मावगमहेतुतयाऽनेकप्रसिद्धतरपर्यायभेदेन दर्शयति–**लिङ्गनादित्यादिना** भाष्येण। **लिङ्गनात्**–अवगमनात्, तद्यथा–कश्चिच्छ्रोत्रेणोपलभ्य शब्दान् मनोहरानुत्फुल्ललोचनयुगस्तदभिमुखदत्तावधानः सुखास्वादनिर्भरहृदयः सहसोपजायते रोमाञ्चकञ्चुकितच्छविः, तदत्रावगमयति विद्वन्मनांसि श्रोत्रमस्त्यत्रान्तर्वर्ती शरीरादिसङ्घातविलक्षणः कोऽपि परमात्मा यस्यैवंविधा विकाराः समुपलक्ष्यन्ते शब्दमागृहीतवतः। एषैव च भावना स्तवनादीनामपि, लिङ्गपर्यायत्वात्। अथवेन्द्रियमिन्द्रलिङ्गमित्यत्र पञ्चार्थास्तान् पञ्चापि दर्शयत्यनेन भाष्येण। लिङ्गार्थोऽभिहित एव, **सूचनादित्यनेन** दिष्टार्थमाख्याति–**जीवेन दिष्टानि**–सूचितानि लेशतः प्रवर्तितानि तस्मिन् सत्यर्थग्रहणनिमित्तानि राजपुरुषवत्, **जीवेन दृष्टानि** प्रकर्षेण दर्शनमुपलब्धिं ग्राहितानि नित्यसम्पृक्तत्वाज्जीवेन संसृष्टान्युपलम्भहेतुतया परिणामितानि, अन्यथा तदभावे तदनुत्पत्तिरेव, **जीवेन जुष्टानि** शब्दादीनां व्यञ्जकहेतुत्वादासेवितानि तदत्ययेऽर्थानामग्राहकत्वात्। **चशब्दः** समुच्चये। **जीवस्य लिङ्गमिन्द्रियमित्यनेनाभिहितार्थनिगममावेदयति तस्माज्जीवस्य यल्लिङ्गं तदिन्द्रियमिति** ॥ १५ ॥

एवं तर्हि सुखदुःखेच्छादयोऽपि जीवलिङ्गत्वादिन्द्रियाणि स्युः, न खल्वेवमवध्रियते जीवलिङ्गं सर्वमिन्द्रियं किन्तु यदिन्द्रियं तज्जीवलिङ्गमिति नियमः, जीवलिङ्गं पुनर्जातुचिदिन्द्रियमथवा सुखादीनि ॥

उक्तानीन्द्रियाणि सङ्ख्यातः, प्रकारवचनेनाधुनाभिधित्सुराह—

## सूत्रम्–द्विविधानि ॥ २–१६ ॥

**भा०—द्विविधानीन्द्रियाणि भवन्ति—द्रव्येन्द्रियाणि भावेन्द्रियाणि च ॥ १६ ॥**

**टी०—द्विविधानि** अविशेषोपादानात् पञ्चापि द्विप्रकाराणि भवन्ति उत्तरसूत्रद्व-

१ 'सूचनादीनां' इति ग–पाठः।

इन्द्रियाणां मुख्यभेदौ

यापेक्षया पञ्चापि द्वाभ्यां विशेषाभ्यां भिद्यन्ते निर्वृत्त्युपकरणविशेषेण लब्ध्युपयोगविशेषेण चेति ॥ ननु चैवं दशेन्द्रियाणि प्रसजन्ति द्विःपञ्चकाभिधानात् ततश्च नियमोऽनर्थकः षडादिप्रतिषेधश्चेति । उच्यते—यद्येवमभविष्यद् दशेन्द्रियाणीति सूत्रमकरिष्यत् प्राक्तनम्, न चैवमाचरितं तस्मादाश्रयप्रकारकथनमेतद् विवक्षितमेकस्यैव द्वित्वेन, यथा हि भवनद्वारं दार्वाकाशपरिच्छेदवदपि न द्वय्यामवतिष्ठते द्वित्वेऽप्याकाशदारुणोः, प्रयोजनं चास्य निर्गमप्रवेशलक्षणमेकस्यैव, तथा लब्धिनिर्वृत्त्युपकरणोपयोगाः क्रमेणामुना चतुष्टयमिन्द्रियलक्षणमविशकलितम्, न चेन्द्रियबहुत्वम्, अत एव निर्वृत्त्यभावाच्छेषत्रययोगाच्च मनोऽनिन्द्रियमुक्तं तस्मादयमदोषोऽतः सुष्ठूचे—**द्विविधानीन्द्रियाणि भवन्ति**। सामान्यतः द्रव्यमयानि द्रव्यात्मकानि द्रव्येन्द्रियाणि, **भावेन्द्रियाणि** तु भावात्मकान्यात्मपरिणतिरूपाणीति । अत्र च पुद्गलद्रव्यमेवानन्तप्रदेशस्कन्धमात्मप्रयोगापेक्षमायतते निर्वृत्त्युपकरणरूपतया सर्वाणीन्द्रियाण्यनन्तप्रदेशानि असङ्ख्येयात्मप्रदेशाधिष्ठितानि च द्रव्यात्मकानि भवन्ति इतरत्र द्वये आत्मपरिणामो भावः प्रयत्नमातिष्ठत इति॥१६॥

उक्तमिन्द्रियं द्रव्यभावभेदतो द्विविधम्, अधुना स्वरूपतो निरूपयितुकाम आह—

## सूत्रम्—निर्वृत्त्युपकरणे द्रव्येन्द्रियम् ॥ २–१७ ॥

द्रव्येन्द्रियभेदौ

**भा०—तत्र निर्वृत्तीन्द्रियमुपकरणेन्द्रियं च द्विविधं द्रव्येन्द्रियम्। निर्वृत्तिरङ्गोपाङ्गनामनिर्वर्तितानीन्द्रियद्वाराणि, कर्मविशेषसंस्कृताः शरीरप्रदेशाः, निर्माणनामाङ्गोपाङ्गप्रत्यया मूलगुणनिर्वर्तनेत्यर्थः । उपकरणं बाह्यमभ्यन्तरं च निर्वर्तितस्यानुपघातानुग्रहाभ्यामुपकारीति ॥ १७ ॥**

टी०—**तत्र निर्वृत्त्युपकरणे द्रव्येन्द्रियम्**। तत्रेत्यनेन भाष्यकारः सूत्रं सम्बन्धयति, तत्र द्वितये द्रव्येन्द्रियं तावन्निर्धार्यते, स्वरूपभेदाभ्यां निर्वर्तनं निर्वृत्तिः प्रतिविशिष्टसंस्थानोत्पादः, उपक्रियतेऽनेनेत्युपकरणं निर्वृत्तिरेवेन्द्रियं **निर्वृत्तीन्द्रियम्, उपकरणेन्द्रियमप्येवम्** । उभयमेतत् पुद्गलपरिणामरूपमपि सदिन्द्रियव्यपदेशमश्नुते भावेन्द्रियोपयोगकारणत्वात्, यस्मात् हि तत्साचिव्यं भावस्यैवोपलिङ्गने[1] समायाति आत्मभावपरिणामस्य भाविनो यत् सहायतया क्षमं द्रव्यं तदिह द्रव्येन्द्रियं प्रस्थदारुवदेषितव्यम्। तत्र निर्वृत्त्युपकरणयोः स्वरूपमाविष्करोति भाष्येणैव—**निर्वृत्तिरङ्गोपाङ्गनामे**त्यादिना। निर्माणनामकर्मान्तर्गतः कर्मभेदो वर्धकिस्थानीयः कर्णशष्कुल्याद्यवयवसन्निवेशविशेषरचनायामाहितनैपुणः, तथौदारिकादिशरीरत्रयाङ्गोपाङ्गनामकर्मभेदो यदुदयादङ्गान्युपाङ्गानि च निष्पद्यन्ते शिरोङ्गुल्यादीनि, एतत् कर्मद्वयमुभयरूपं द्रव्येन्द्रियप्रसाधनाय यतते । भाष्यभावना चैवं कार्या ।

निर्वृत्तीन्द्रियविचारः

---

१ 'वोलिङ्गने' इति क–ख–पाठः, 'वोपलिङ्गनैः' इति ग–पाठः ।

निर्वृत्तिः किंरूपेत्यत आह-अङ्गेति। अङ्गोपाङ्गनाम्ना प्रतिविशिष्टेन कर्मभेदेन **निर्वर्तितानि**-जनितानि-घटितानि **इन्द्रियद्वाराणि**-इन्द्रियविवराणि, इन्द्रियशब्देन चात्र भावेन्द्रियमुपयोगरूपं विवक्षितं तस्येन्द्रियस्य द्वाराण्यवधानप्रदानमार्गाश्चित्राः शष्कुल्यादिरूपा बहिरुपलभ्यमानाकारा निर्वृत्तिरेका, अपरा त्वभ्यन्तरनिर्वृत्तिः, नानाकारं कायेन्द्रियमसङ्ख्येयभेदत्वादस्य चान्तर्बहिर्भेदो निर्वृत्तेर्न कश्चित् प्रायः, प्रदीर्घत्र्यस्रसंस्थितं कर्णाटकायुधं क्षुरप्रस्तदाकारं रसनेन्द्रियम्। अतिमुक्तकपुष्पदलचन्द्रकाकारं किञ्चित् सकेसरवृत्ताकारमध्यविनतं घ्राणेन्द्रियम्। किञ्चित् समुन्नतमध्यपरिमण्डलाकारं धान्यमसूरवच्चक्षुरिन्द्रियम्, पाथेयभाण्डकयवनालिकाकारं श्रोत्रेन्द्रियं नालिककुसुमाकृति चावसेयम्। तत्राद्यं स्वकायपरिमाणं द्रव्यमनश्च शेषाण्यङ्गुलासङ्ख्येयभागप्रमाणानि सर्वजीवानाम्। तथा चागमः-"[1]फासिंदिए णं भंते! किंसंठिए पण्णत्ते? गोयमा! नाणासंठाणसंठिए, जिब्भिन्दिए णं भंते! किंसंठिए पण्णत्ते? गोयमा! खुरप्पसंठिए, घाणिन्दिए णं भंते! किंसंठिए पण्णत्ते? गोयमा! अतिमुत्तयचंदकसंठिए, चक्खुरिन्दिए णं भंते! किंसंठिए पण्णत्ते? गोयमा! मसूरयचंदसंठिए पण्णत्ते, सोइंदिए णं भंते! किंसंठिए पण्णत्ते? गोयमा! कलंबुयापुप्फसंठिए पण्णत्ते" (प्रज्ञा० सू० १९१)। अभ्यन्तरां निर्वृत्तिमङ्गीकृत्य सर्वाण्यमूनि सूत्राण्यधीतानि, बाह्या पुनर्निर्वृत्तिश्चित्राकारत्वान्नोपनिबद्धुं शक्या, यथा मनुष्यस्य श्रोत्रं भ्रूसमं नेत्रयोरुभयपार्श्वतः, अश्वस्य मस्तके नेत्रयोरुपरिष्टात् तीक्ष्णाग्रमित्यादिभेदाद् बहुविधाकाराः। इममेव चातिक्रान्तभाष्यार्थं पर्यायान्तरेण स्पष्टयति भाष्यकारः-**कर्मविशेषसंस्कृताः शरीरप्रदेशाः**। अथवाङ्गोपाङ्गनामैवोपात्तमतीतभाष्ये न तु निर्माणकर्म तदुपादानायेदमुच्यते-**कर्मविशेष** इत्यादि। **कर्मविशेषो** नामकर्म तस्यापि विशेष अङ्गोपाङ्गनामनिर्माणकर्म च आभ्यां कर्मविशेषाभ्यां **संस्कृता** विशिष्टावयवरचनया निष्पादिता-निर्वर्तिताः औदारिकादिशरीराणां त्रयाणां **प्रदेशाः**-प्रतिविशिष्टा देशाः कर्णशष्कुल्यादयः प्रदेशाः। कर्मविशेषाभिधानश्रवणादतिसम्प्रमुग्धबुद्धेर्व्यामोहस्तदवस्थ एव चेतसीत्यतस्तदवबोधार्थं भूयोऽप्याह-**निर्माणनामाङ्गोपाङ्गप्रत्यया मूलगुणनिर्वर्तनेत्यर्थः**। कर्मविशेषं नामग्राहमाचष्टे निर्माणनाम च अङ्गोपाङ्गं च निर्माणनामाङ्गोपाङ्गे, मध्यव्यवस्थितो नामशब्द उभयं विशेष्यतया क्षिपति, ते कर्मणी प्रत्ययः कारणं-निमित्तं यस्य निर्वृत्तेः सा निर्माणनामाङ्गोपाङ्गप्रत्यया, मूलगुणनिर्वर्तना उत्तरगुणनिर्वर्तनापेक्षयोच्यते। उत्तरगुणनिर्वर्तना हि श्रवणयोर्वेधः प्रल-

इन्द्रियसंस्थानानि

---

१ स्पर्शेन्द्रियं भदन्त! किंसंस्थानं प्रज्ञप्तम्? गौतम। नानासंस्थानसंस्थितम्, जिह्वेन्द्रियं भदन्त! किंसंस्थानं प्रज्ञप्तम्? गौतम! क्षुरप्रसंस्थितम्, घ्राणेन्द्रियं किंसंस्थानं प्रज्ञप्तम्? गौतम! अतिमुक्तचन्द्रकसंस्थितम्, चक्षुरिन्द्रियं किंसंस्थानं प्रज्ञप्तम्? गौतम! मसूरकचन्द्रसंस्थितम्, श्रोत्रेन्द्रियं भदन्त! किंसंस्थानं प्रज्ञप्तम्? गौतम! कदम्बकपुष्पसंस्थितं प्रज्ञप्तम्।

म्बतापादनं चक्षुर्नासिकयोरञ्जननस्याभ्यामुपस्कारः तथा भेषजप्रदानाज्जिह्वाया जाड्यापनयः स्पर्शनस्य विविधचूर्णगन्धवासप्रघर्षात् तदिति विमलत्वकरणम्, एवंविधानेकविशेषनिरपेक्षा यथोत्पन्नवर्तिनी औदारिकादिप्रायोग्यद्रव्यवर्गणा मूलकारणव्यवस्थितगुणनिर्वर्तनोच्यते। इतिशब्द एवशब्दार्थः, एवमेषोऽर्थः प्रवचनविद्भिराख्यात इति ॥ सम्प्रत्युपकरणेन्द्रियस्वरूपमाख्यातुमाह— **उपकरणं बाह्यमभ्यन्तरं च निर्वर्तितस्यानुपघातानुग्रहाभ्यामुपकारीति।** निर्वृत्तौ सत्यां कृपाणस्थानीयायामुपकरणेन्द्रियमवश्यमपेक्षितव्यम्, तच्च स्वविषयग्रहणशक्तियुक्तं खड्गस्येव धारा छेदनसमर्था तच्छक्तिरूपमिन्द्रियान्तरं निर्वृत्तौ सत्यपि शक्त्युपघातैर्विषयं न गृह्णाति तस्मान्निर्वृत्तेः श्रवणादिसंज्ञके द्रव्येन्द्रिये तद्भावादात्मनोऽनुपघातानुग्रहाभ्यां यदुपकारि तदुपकरणेन्द्रियं भवति, तच्च बहिर्वर्ति, अन्तर्वर्ति च, निर्वृत्तिद्रव्येन्द्रियापेक्षयाऽस्यापि द्वैविध्यमावेद्यते। यत्र निर्वृत्तिद्रव्येन्द्रियं तत्रोपकरणेन्द्रियमपि न भिन्नदेशवर्ति तस्येति कथयति तस्याः स्वविषयग्रहणशक्तेर्निर्वृत्तिमध्यवर्तिनीत्वात्। एतदेव स्फुटयति- **निर्वर्तितस्य**- निष्पादितस्य स्वावयवविभागेन यदनुपहत्यात अनुग्रहेण चोपकरोति ग्रहणमात्मनः स्वच्छतरपुद्गलजालनिर्मापितं तदुपकरणेन्द्रियमध्यवस्यन्ति विद्वांसः, आगमे तु नास्ति कश्चिदन्तर्बहिर्भेद उपकरणस्येत्याचार्यस्यैव कुतोऽपि सम्प्रदाय इति। एवमेतदुभयं द्रव्येन्द्रियमभिधीयते तद्भावेऽप्यग्रहणात् उपकरणत्वान्निमित्तत्वाच्चेति। निर्वृत्तेरादावभिधा जन्मक्रमप्रतिपादनार्थं तद्भावे ह्युपकरणसद्भावाच्छस्त्रशक्तिवदिति ॥ १७ ॥

उपकरणेन्द्रिय-स्वरूपम्

अथ भावेन्द्रियं किमित्यत्रोच्यते—

भावेन्द्रियभेदौ

## सूत्रम्—लब्ध्युपयोगौ भावेन्द्रियम् ॥ २–१८ ॥

**भा०—लब्धिरुपयोगस्तु भावेन्द्रियं भवति। लब्धिर्नाम गतिजात्यादिनामकर्मजनिता तदावरणीयकर्मक्षयोपशमजनिता च। इन्द्रियाश्रयकर्मोदयनिर्वृत्ता च[1] जीवस्य भवति। सा पञ्चविधा। तद्यथा— स्पर्शनेन्द्रियलब्धिः, रसनेन्द्रियलब्धिः, घ्राणेन्द्रियलब्धिः, चक्षुरिन्द्रियलब्धिः, श्रोत्रेन्द्रियलब्धिरिति ॥ १८ ॥**

लब्धीन्द्रियस्य कारणत्रयापेक्षत्वं भेदाश्च

**टी०—लब्ध्युपयोगौ भावेन्द्रियम्।** लब्धिः प्रतिस्वमिन्द्रियावरणकर्मक्षयोपशमः, स्वविषयव्यापारः प्रणिधानं वीर्यमुपयोगः, एतदुभयं भावेन्द्रियमात्मपरिणतिलक्षणं भवति। अत्राचार्यो लब्धिस्वरूपनिर्वर्णनायाह- **लब्धिर्नामे**त्यादि भाष्यम्। लाभो लब्धिः प्राप्तिः। नामशब्दो वाक्यालङ्कारार्थः। अथवा लब्धिरिति यदेतन्नामाभिधानं तस्यायमर्थः **गतिजात्यादिनामकर्मजनिता** लब्धिरुच्यते। गतिजाती आदिर्यस्य तद् गतिजात्यादि, गतिजात्यादि च तन्नाम-

लब्धीन्द्रिय-स्वरूपम्

१ 'वा भवति जीवस्य' इति ख–पाठः।

मकर्म च गतिजात्यादिनामकर्म तेन जनिता-निर्वर्तिता, मनुष्यगतिनामोदयान्मनुष्यस्तथा पञ्चेन्द्रियजातिनामोदयात् पञ्चेन्द्रिय इत्यतो मनुष्यत्वपञ्चेन्द्रियत्वादिलाभे प्रतिस्वं तदावरणकर्मक्षयोपशमो निर्वर्त्यते, तस्य क्षयोपशमस्य गतिजातिप्रभृतिनामकर्मकारणत्वान्निर्दिष्टमाचार्येण । आदिग्रहणेन यत् तदत्र नान्तरीयकं शरीरादिक्षयोपशमलब्धेर्नामान्तःपाति तत् सकलमादीयते । अपरे त्वायुष्कमपि[1] तदाश्रयत्वात् कारणमाचक्षते क्षयोपशमस्य, एवं विदूरवर्ति कारणमपदिश्याधुना प्रत्यासन्नतरकारणान्तरमाविष्करोति-**तदावरणीयकर्मक्षयोपशमजनिता** चेति । तस्याः खलु रूपादिग्रहणपरिणतेरावरणीयमावारकमाच्छादकं, बाहुलकात् कर्तरि व्युत्पत्तिः, तदावरणीयं च तत् कर्म च **तदावरणीयकर्म** मतिज्ञानदर्शनावरणकर्मेत्यर्थः,तस्योभयस्य **क्षयोपशमो**ऽभिहितलक्षणस्तज्ज**निता** च तन्निष्पादिता चेत्यर्थः।**चशब्दः** पूर्वकं कारणं समुच्चिनोति ॥ ननु च क्षयोपशम एव लब्धिरुक्ता तेन जनितान्या का भवेल्लब्धिः? । उच्यते-मतिज्ञानदर्शनावरणक्षयोपशमावस्थानिर्वृत्तौ यो ज्ञानसद्भावः क्षायोपशमिकः सोऽत्र लब्धिरुच्यते, कथं कृत्वोक्तं प्राक् क्षयोपशमो लब्धिरिति कारणे कार्योपचारमालम्ब्य नड्वलोदकं पादरोगवदित्यभिहितमतो न दोषाय । अन्ये पुनराहुः-अन्तरायकर्मक्षयोपशमापेक्षा इन्द्रियविषयोपभोगज्ञानशक्तिर्लब्धिरुच्यते । पुनः प्रत्यासन्नतमकारणनिर्दिदिक्षया भाष्यकृत् प्रतनुते ग्रन्थम्-**इन्द्रियाश्रयकर्मोदयनिर्वृत्ता च जीवस्य भवतीति** । इन्द्रियाण्याश्रयोऽवकाशो येषां कर्मणां तानीन्द्रियाश्रयाणि कर्माणि यावन्ति कानिचिन्निर्माणाङ्गोपाङ्गादीनि यैर्विना तानि न निष्पद्यन्ते तदुदयेन-तद्विपाकेन निर्वृत्ता-जनितात्मनो लब्धिरुद्भवति, स्वच्छे हि दर्पणतले प्रतिबिम्बोदयो भवति, न मलीमसे, तथा निर्माणाङ्गोपाङ्गादिभिरत्यन्तविमलतद्योग्यपुद्गलद्रव्यनिर्मापितानीन्द्रियाणि तस्याः क्षयोपशमलब्धेरतुलं बलमुपयच्छन्ति, कारणतां बिभ्रतीति । सैषा लब्धिः कारणत्रयापेक्षा पञ्चप्रकारा भवति । तद्यथा-**स्पर्शनेन्द्रियलब्धिरित्यादि** भाष्यम् । यथा तत् पञ्चविधत्वं तस्यास्तथा दर्श्यते-स्पृष्टिः-स्पर्शनं, स्पर्शनं च तदिन्द्रियं चेति स्पर्शनेन्द्रियम्, एतदेव लब्धिः **स्पर्शनेन्द्रियलब्धिः** शीतोष्णादिस्पर्शपरिज्ञानसामर्थ्यमनभिव्यक्तमुपयोगात्मनेतियावत् । एवं जिह्वेन्द्रियादिलब्धयोऽपि वाच्याः । इतिशब्दो लब्धेरियत्तामावेदयति ॥ १८ ॥

उक्ता लब्धिः, अधुनोपयोग उच्यते-यदि लब्धिनिर्वृत्त्युपकरणक्रमेणोपयोगस्ततोऽतीन्द्रियोपयोगाभावो निर्वृत्त्याद्यपेक्षाभावात् । एतदुक्तं भवति-अवध्यादीनामतीन्द्रियत्वादत्यन्ताभाव एव विशेषो वाच्यः? । उच्यते-न खुल सर्व उपयोगो लब्धिनिर्वृत्त्युपरकरणेन्द्रियकृतः, किं तर्हि स एवैकस्त्रितयनिमित्त इत्यत आह—

**सूत्रम्—उपयोगः स्पर्शादिषु ॥ २-१९ ॥**

**भा०—स्पर्शादिषु मतिज्ञानोपयोग इत्यर्थः । उक्तमेतदुपयोगो लक्षणम्** (अ० २, सू० ८) । **उपयोगः प्रणिधानम् । आयोगस्तद्भावः परिणाम इत्यर्थः । एषां च**

1 'चायुष्कम्' इति ख-पाठः ।

**सत्यां निर्वृत्तावुपकरणोपयोगौ भवतः, सत्यां च लब्धौ निर्वृत्त्युपकरणोपयोगा भवन्ति । निर्वृत्त्यादीनामेकतराभावेऽपि विषयालोचनं न भवति ॥ १९ ॥**

टी०—**उपयोगः स्पर्शादिषु** । स्पर्शरसगन्धवर्णशब्देषु ग्रहणरूपो व्यापार उपयोगो गृह्यते स्पर्शनेन्द्रियादिनिमित्तो नावध्याद्युपयोगः । अमुमेवार्थं स्पष्टयन् भाष्यकृदाह—**स्पर्शादिषु मतिज्ञानोपयोग** इत्यर्थः । स्पर्शादिविषयो मतिज्ञानव्यापारः प्रतिनियतविषयानुभवनमुपलम्भनमिति, अनेन शेषज्ञानव्युदासमादर्शयति मतिज्ञानोपयोग एव लब्धिनिर्वृत्त्युपकरणापेक्षः प्रवर्तते न शेष इति । अत्रोपयोगसामान्यं त्यपह्नुतावधानश्चोदयति—स्पर्शादिविषयो य उपयोगपरिसमाप्तिव्यापार इत्युक्तम् । एतच्च परमाणुद्व्यणुकादिष्वपि दृष्टम्, परमाणुरपि हि सर्वात्मनोपयुज्यते द्व्यणुकादिस्कन्धपरिणामे, ततश्च सोऽप्युपयोगलक्षणं प्राप्नोतीत्यत आह भाष्यकारः—**उक्तमेतदुपयोगो लक्षणमिति** । अथवा भाष्यकारः स्वयमेवोपयोगविशेषव्याख्यामातितनिषुराह—**उक्तमेतदित्यादि** । अभिहितमेतदुपयोगश्चैतन्यपरिणामो जीवस्य वैशेषिकं लक्षणं कः परमाण्वादिष्वत्र प्रसङ्गोत्यन्तासम्बन्ध एव । तमेवोपयोगं पर्यायतः कथयति चैतन्यलक्षणं विशेषव्याख्यानदर्शनद्वारेण—

उपयोगेन्द्रियस्वरूपम्

**उपयोग** इत्यादि । उपयोगस्तु द्विविधा चेतना—संविज्ञानलक्षणा अनुभवनलक्षणा च, तत्र घटाद्युपलब्धिः संविज्ञानलक्षणा, सुखदुःखादिसंवेदनानुभवनलक्षणा एतदुभयमुपयोगग्रहणाद् गृह्यते । **प्रणिधान**मवहितमनस्कत्वम्, एतदुत्कीर्तयति—स्पष्टो हि मतिज्ञानोपयोगो मानसोपयोगावश्यम्भावी द्रव्येन्द्रियाद्यपेक्षश्च नावध्याद्युपयोगस्तथेति **आयोग** इति । स्वविषयमर्यादया स्पर्शादिभेदनिर्भासो ज्ञानोदयः स्पर्शनेन्द्रियादिजन्माभिधीयते **तद्भाव** इति । उपयोगलाञ्छनो जन्तुस्तच्छब्देनामृश्यते तस्य भावः स्पर्शनादिद्वारजन्मज्ञानमात्मनो भूतिरुद्भव इतियावत्, **परिणामो**ऽप्यात्मन एव तद्भावलक्षणो नार्थान्तरप्रादुर्भावलक्षणः, स्पर्शनादिनिमित्तज्ञानस्यात्मपरिणतिरूपत्वादित्यर्थः ॥ सम्प्रति प्रवृत्तौ क्रमनियममापादयन्नाह—**एषामित्यादि** भाष्यम् । **एषामिति** ।

निवृत्त्यादीनां क्रमः

व्याख्यातस्वरूपाणां निर्वृत्त्युपकरणलब्ध्युपयोगेन्द्रियाणामयं प्रवृत्तिक्रमो यदुत निर्वृत्तिः प्राक् तस्यां सत्यामुपकरणमुपयोगश्च भवति निर्वृत्त्याश्रयत्वादुपकरणस्य तद्द्वारजन्मत्वाच्चोपयोगस्य । एतच्च निर्वृत्त्यादित्रयं लब्धीन्द्रियपूर्वकं दर्शयति—श्रोत्रादिक्षयोपशमलब्धौ सत्यां निर्वृत्तिः शष्कुल्यादिका भवति, यस्य तु लब्धिर्नास्त्येवंप्रकारा न खलु तस्य प्राणिनः शष्कुल्यादयोऽवयवा निर्वर्तन्ते तस्माल्लब्ध्यादयश्चत्वारोऽपि समुदिताः शब्दादिविषयपरिच्छेदमापादयन्त इन्द्रियव्यपदेशमश्नुवते । एकेनाप्यवयवेन विकलमिन्द्रियं नोच्यते, न च स्वविषयग्रहणसमर्थं भवति, अमुमर्थं भाष्येण दर्शयति—**निर्वृत्त्यादीनामिति** सूत्रोपन्यस्तक्रममङ्गीकृत्योच्यते निर्वृत्त्युपकरणलब्ध्युपयोगानामन्यतमाभावे एकेनाप्यङ्गेन विकले सति समुदाये न जातुचित् शब्दादिविषयस्वरूपावबोधो

एकोपयोगिता

भवत्यात्मनः, विकलकरणत्वात्। अत्र च यदा शब्दोपयोगवृत्तिरात्मा भवति तदा न शेषकरणव्यापारः स्वल्पोऽप्यन्यत्र कान्तद्विष्टाभ्यस्तविषयकलापात्, अर्थान्तरोपयोगे हि प्राच्यमुपयोगबलमाव्रियते कर्मणा, शङ्खशब्दोपयुक्तस्य शृङ्गशब्दविज्ञानमस्तमिततन्निर्भासं भवति, अतः क्रमेणोपयोग एकस्मिन्नपीन्द्रियविषये, किमुत बहुविधविशेषभाजीन्द्रियान्तरे, तस्मादेकेनेन्द्रियेण सर्वात्मनोपयुक्तः सर्वः प्राण्युपयोगं प्रत्येकेन्द्रियो भवति। एवं शेषविषयपरिच्छेदपरिणतावपि वाच्यम्, ये पुनरत्यन्तकान्तद्विष्टाभ्यस्ता विषयास्तानन्यमनस्कोऽपि विस्मर्तुं चेच्छन् न विस्मरति, अतः सहैवोपयोगो भवति उपयोगान्तरेणेति। एतच्चोपयोगद्वयमेकस्मिन् काले पारमर्षप्रवचनाभ्यासाहितनैपुणाः न बाढमभ्युपयन्ति, यत आर्यगङ्गनिह्नवकैर्युगपत् क्रियाद्वयोपयोगः प्रपञ्चतः प्रतिषिद्धो न चागमान्तरे क्वचिदुपनिबद्धः। क्रमस्तु तत्रोत्पलदलशतभेदवदतिशुष्कशष्कुलीभक्षणोपलब्धिवद् वाऽतिसूक्ष्मत्वात् समयादिकृतो दुर्लक्षश्छद्मस्थेनेति[1]। 'उपयोगः स्पर्शादिषु' इति केचिद् भाषन्ते सूत्रमिदं न भवति, भाष्यमेव सूत्रीकृत्य केचिदधीयते, तदेतदयुक्तम्, अविगानेन सूत्रमध्येऽध्ययनात् प्रतिविशिष्टाचार्यसम्प्रदायगम्यत्वाद् विवरणाच्च निश्चीयते सूत्रतेति ॥ १९ ॥

**भा०—अत्राह-उक्तं भवता पञ्चेन्द्रियाणि ( अ० २, सू० १५ ) इति। तत् कानि तानीन्द्रियाणीति ?। उच्यते ॥**

**टी०—अत्राह उक्तमित्यादि** सम्बन्धप्रदर्शनपरमिदं भाष्यम्, अत्रावसरे शिष्य आह-अभिहितमेतद् **भवता पञ्चै**वे**न्द्रियाणि** भवन्ति सङ्ख्यातः **तत् कानि** पुनस्तानि नामतः ? **उच्यते**-स्वरूपतोऽवधृत्य नामविषयं प्रश्नमकृतेत्यतोऽत्र प्रश्ने अभिधीयते प्रतिवचनम् ॥

## सूत्रम्—स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥ २-२० ॥

इन्द्रियनामानि

**भा०—स्पर्शनं, रसनं, घ्राणं, चक्षुः, श्रोत्रमित्येतानि पञ्चेन्द्रियाणि ॥ २० ॥**

**टी०—स्पर्शनेत्यादि सूत्रम्।** स्पृश्यतेऽनेनेति स्पर्शनम्, सर्वाणि करणकारकसाधनान्यात्मनः कर्तुरभेदेन वर्तमानान्यतिशयवत् प्रयोजनप्रधानं प्रत्याहितपाटवानि ज्ञाने निर्वर्त्ये करणानि कथञ्चिज्जीवादनन्यत्वाद् गमने प्रसाध्ये पादवद् देवदत्तो मांसपिण्डः पादाभ्यां गच्छति ग्राममित्यपराणि भेदभाञ्जि करणान्यस्य कर्तुरसिपरशुवास्यादीन्येवं भिन्नाभिन्नकरणकलापग्रामणीरयमात्मा निरवशेषक्रियानुष्ठानशक्तियुक्तः कर्ता, अन्यथोभयकरणग्रामव्युदासानुगृहीतस्तृणमपि कुटिलयितुमयोग्यः स्यात् किमुतैहिकामुष्मिकानेककार्यविषयव्यापारानुष्ठानमिति, यथैव च प्रतिविशिष्टज्ञाननिर्वृत्त्याधाने करणत्वमिन्द्रियाणाम्, एवं वीर्यबले

१ 'दुर्लक्षच्छद्मस्थोनेति उपः' इति क-ख-पुस्तकयोर्मध्ये अत्रायं भाग उपलब्धः परं त्वनुपयुक्तः प्रामादिक इव भातीति टिप्पण्यां निवेशितः।

निर्वर्त्य योगा मनोवाक्कायलक्षणाः करणान्यात्मनो वेदितव्यानि । इतिशब्द एवंशब्दार्थे । एवमेतानि नामग्राहमुपदिष्टानि पञ्चेन्द्रियाणि भवन्ति, स्पर्शनादिक्रमनियमो बुद्धिपूर्वं सूरेरमुतो नियोगाज्जन्तवो वाय्वन्ताः स्पर्शनकरणभाज इति सुखमेव वक्ष्यामि, तथा परे स्पर्शनमादौ वर्णयन्ति सर्वजीवस्वामिकत्वात् सर्वशरीरव्यापित्वात् अल्पशक्तित्वाच्च ततो रसनादीनि तरतमयोगेनाल्पस्वाम्यणुशरीरदेशस्थबहुशक्तित्वादिति ॥ २० ॥

अथात्मनो लिङ्गान्येतानीत्युक्तं तत् केन पुनः प्रयोजनविशेषेणोपकुर्वन्त्यात्मनः ? । उच्यते–विषयोपभोगतदादानकरणतयेति । विषयाश्च स्पर्शादयोऽर्थास्ते चामी यथाक्रममेषामवसातव्याः ॥

## सूत्रम्—स्पर्शरसगन्धवर्णशब्दास्तेषामर्थाः ॥ २–२१ ॥

इन्द्रियाणां विषयाः

**भा०—एतेषामिन्द्रियाणामेते स्पर्शादयोऽर्था भवन्ति यथासङ्ख्यम् ॥ २१ ॥**

टी०—**स्पर्शरसे**त्यादि सूत्रम् । स्पृश्यतेऽसाविति स्पर्शः शीतोष्णादिभेदलक्षणोऽष्टधा, रसः पञ्चधा तिक्तादिभेदलक्षणः लवणस्य मधुरान्तर्गतत्वात्, गन्धो द्विधा-सुरभिरितरश्च, साधारणश्चेत्यपरे, वर्णः पञ्चधा शुक्लादिभेदलक्षणः, वाग्योगप्रयत्ननिसृष्टोऽनन्तानन्तप्रदेशिकपुद्गलस्कन्धप्रतिविशिष्टपरिणामः शब्दः, पुद्गलद्रव्यसङ्घातभेदजन्मा वा गर्जितादिरूपः । एते स्पर्शादयो यथोक्तलक्षणास्तेषामनन्तरातीतसूत्रन्यस्तानां स्पर्शनादिकरणानामर्थाः परिच्छेद्याः प्रयोजनानि निर्वर्त्यानीतियावत् । एनमेवार्थं स्पष्टयन् भाष्यकृदाह–**एतेषामि**त्यादि । **एतेषाम्**–आत्मलिङ्गतया निरूपितानां स्पर्शनादीनां **एते स्पर्शादयो**ऽनेकभेदभाजोऽर्यमाणस्वरूपत्वाद् **यथासङ्ख्यमर्था** भवन्त्यव्यतिकररूपेण ग्रहणविशेषात् । तेषामर्था इत्यसमासकरणं सम्बन्धस्य स्पष्टताप्रतिपत्त्यर्थम्, समासे तु चतुर्थ्यर्थारेकाऽपि स्यात् सा चानिष्टा तस्मादसमासः । अर्थग्रहणं च विषयशब्दमपहाय यदकारि सूरिणा तदेतज्ज्ञापयितुमभिप्रेतमावस्थिकमेतदर्थत्वम्, एकमेव हि वस्त्वर्यमाणत्वादवस्थाभेदेन तथा तथार्थतामियर्ति, तथाहि यदेवाङ्गुल्यग्रेण स्पृश्यते तदेव च विद्रुमद्रुमच्छायानुकारिणा जिह्वाग्रेण रस्यते,

एकस्यार्थस्यानेकविषयता

मोदकद्रव्यमाघ्रायते च नासिकाविवरेण, चक्षुषा तदेवालोक्यते, तदेव चातिबहुकालपर्युषितमतिकठिनीभूतमभ्यवह्रियमाणमातनोति ध्वनिम्, न खलु तत्र क्वचिद् देशे स्पर्शः क्वचिद् रसादिरवस्थितः किन्तु य एव देशः शीत उष्णो वा स्पर्शनेनोपलब्धः स एव पुनर्मधुरो रसनेनास्वाद्योपलभ्यते, तस्मात् तदेवैकमभिन्नं पुद्गलद्रव्यमनेकग्रहणापेक्षया भेदमासादयति, पित्राद्यनेकविशेषापेक्षपुरुषभेदप्रतिपत्तिवत्, तद् हि चक्षुर्ग्रहणगोचरतामितं द्रव्यमभेदमपि नीलाद्याकारेण परिणतिमुपागच्छद् रूपमिति व्यपदिश्यते, रसनग्रहणविषयतामापन्नं तिक्तादिपरिणाममास्कन्दद् रस इति तदेवाभिधीयते,

१ 'तेषामि०' इति ग-पाठः । २ 'व्यतिरेक' इति ग-पाठः । ३ 'ग्रहणागोचरता' इति क-ख-पाठः ।

एवमितरेन्द्रियप्राप्तानामपि वाच्यम्। द्रव्यमिन्द्रियनानात्वान्नानाकारस्पर्शादिभेदमापद्यते स्वनिमित्ततस्त्वेकाकारद्रव्यस्वलक्षणविशिष्टत्वात्, यदेवास्यान्तरङ्गं लक्षणं तदेव स्वरूपं त एव हि तस्य धर्माः सर्वदाऽजहद्वृत्तित्वात् स्वलक्षणम्, परनिमित्तास्तु क्षेत्रद्रव्यकालाद-योऽपगच्छन्तोऽनुगच्छन्तश्च न स्वलक्षणं तदनादिपारिणामिकधर्माविष्कृतस्वरूपं वस्त्विन्द्रियादिव्यपदेशाद् भिद्यते, यश्च स्वरूपावस्थितस्य पश्चादिन्द्रियसम्बन्धो नासौ वस्तुनः स्वरूपं भवति तेन स्पर्शादयो न द्रव्यादर्थान्तरमथ न परनिमित्त एषां भेदो द्रव्याभेदेऽपीति। एतेन दार्शनस्पार्शनमेव च द्रव्यमिति प्रत्यस्तम्। अत्र चात्माङ्गुलप्रमितसातिरेकयोजनलक्षावस्थितं चक्षुः प्रकाशनीयरूपं गृह्णाति प्रकर्षत इति सिद्धान्तः। एतेन पुष्करार्धवर्तिपुरुषसातिरेकैकविंशतिलक्षाप्रमितप्रदेशोत्कृष्टदिवसोदयकालवर्तिसूर्यदर्शनचोद्यमपास्तमध्यवसातव्यम्। अप्राप्तकारित्वाच्च योग्यदेशव्यवस्थितमेव रूपमागृह्णाति शरीरदेशस्थम्। अप्राप्तकारिता चास्य मनोवदनुग्रहोपघातशून्यत्वात्, न चास्य हुतभुग्जलशूलाद्यालोकनाद् दहनक्लेदनपाटनादयो दृश्यन्ते। आवृताग्रहणात् प्राप्तविषयमिति चेत्, असदेतत्, मनोऽपि हि विषगराद्यावृतं न गृह्णात्यथ चाप्राप्तकारीति, स्पर्शरसगन्धास्तु योजननवकप्रमिताद् देशादागताः प्रकर्षतः स्पर्शनादिभिः शरीरव्यवस्थितैरुपलभ्यन्ते स्पर्शनरसनघ्राणानां प्राप्तकारित्वात्, प्राप्तकारित्वं चोपघातानुग्रहदर्शनादग्निचन्दनादिभिरवगन्तव्यम्। शब्दोऽपि स्वपरिणाममजहद् योजनद्वादशकप्रमितात् प्रदेशादागतः श्रोत्रेण प्राप्तकारिणोत्कर्षाद् गृह्यते स चायाति श्रोत्रदेशमाशु पुद्गलमयत्वे सति सक्रियत्वात्, सक्रियत्वं वायुना उह्यमानत्वाद् धूमस्येव, गृहादिषु तु पिण्डीभवनाद् विशेषतश्च द्वारानुविधानात् तोयवत् प्रतिघाताच्च नितम्बादिषु वायुवदिति। प्राप्तकारित्वं चानुग्रहोपघातपाटवबाधिर्यादिदर्शनादस्यावसेयम्। अवरतश्चक्षुरङ्गुलसङ्ख्येयभागप्रमितदेशवर्ति रूपं परिच्छिनत्ति, शेषाण्यङ्गुलासङ्ख्येयभागप्रमितप्रदेशादागतं विषयमाददते करणानीति॥ २१॥

द्रव्यक्षेत्रादीनामनिमित्तता

प्राप्याप्राप्यविषयता

यथा चैषां स्पर्शादयोऽर्थास्तैर्ग्रहणादेवमिदमर्हत्प्रणीतं यथास्थितजीवपदार्थख्यापनपरम्, प्रयोजनापेक्षया द्व्यनेकद्वादशभेदं श्रुतज्ञानं मनसोऽर्थ इत्याचिख्यासुराह—

## सूत्रम्-श्रुतमनिन्द्रियस्य॥ २-२२॥

**भा०—श्रुतज्ञानं द्विविधमनेकद्वादशविधं नोइन्द्रियस्यार्थः॥ २२॥**

**टी०—श्रुतमनिन्द्रियस्य।** श्रुतं ज्ञानावरणक्षयोपशमप्रभवं द्रव्यश्रुतानुसारि प्रायो निजार्थोपसङ्गतमात्मनः परिणतिप्रसादरूपं तत्त्वार्थपरिच्छेदात्मकं भावश्रुतं तदनिन्द्रियस्य मनसोऽर्थः, अथवाऽर्थावग्रहसमयात् परतो मतिज्ञानमेव श्रुतज्ञानं भवति तच्च न सर्वेषामिन्द्रियाणामर्थावग्रहात् परतः, किन्तु मनोऽर्थावग्रहादेव परतो मतिः श्रुतीभवति विशेषतस्तु श्रुतग्रन्थानुसारेणेति, द्व्यनेकद्वादशविधविशे-

अनिन्द्रियस्य विषयः

द्रव्यभावश्रुते

षपरिग्रहो न पुनर्भावश्रुतमात्रमेकेन्द्रियादीनाम्, अनिन्द्रियाभावेऽपि तत्सद्भावात् ॥ ननुच शब्द एव श्रूयमाणत्वाच्छ्रुतव्यपदेशमवरोत्स्यति, किमन्येनान्तर्वर्तिना गणतिथविशेषणक्लेशलभ्येन श्रुतेन परिकल्पितेन कारणान्तरेण च तद्विषयेणेति ? । उच्यते—श्रुतमिति ज्ञानमत्र प्रस्तुतमात्मनः परिणतिविशेषः, शब्दस्तु प्रतिघाताभिभवयुक्तत्वात् मूर्तिमान् रूपाद्यात्मकः श्रोत्रग्रहणलक्षणः स कथं भवितुमर्हति ज्ञानम्, अयमपि हि जातुचिद् द्रव्यश्रुतव्यपदेशमासादयति भावश्रुतकारणत्वाद् वा उपचारवशात्, एतच्च प्रथमाध्याये प्रायो निरूपितमिह तु मनसस्तद्विषयत्वेन नियम्यते, अनिन्द्रियं मनोऽभिधीयते रूपग्रहणादावस्वतन्त्रत्वादसम्पूर्णत्वादनुदरकन्यावत्, इन्द्रियकार्याकरणाद्वाप्यपुत्रव्यपदेशवत्, तच्चाप्राप्तकारि लोचनवत्, तोयज्वलनचिन्ताकालेऽनुग्रहोपघातशून्यत्वात्, तत्र च द्रव्यमनः स्वकायपरिमाणमात्मापि भावमनः सोऽपि त्वक्पर्यन्तदेशव्यापी, भावमनश्च मनुते द्रव्यमनः-समालम्बनद्वारेण यदिन्द्रियपरिणामं तस्य व्यापारानुविधानात् अतस्तस्यैवंरूपस्यानिन्द्रियस्य श्रोत्रप्रणालिकोपात्तशब्दवाच्यविचारिणोऽर्थः श्रुतज्ञानम्, तच्च प्रयोगविशेषसंस्कृतं वर्णपदवाक्यप्रकरणाध्यायादिभेदं मनोऽन्तरेण न करणान्तरं परिच्छेत्तुमलम्, एतद्विहिताविहितानुभयप्राप्तिपरिहारोपेक्षालक्षणपुरुषार्थनिर्वर्तनक्षमत्वात् मनसा वीक्ष्यमाणं तस्यैवार्थो नेन्द्रियान्तरस्य, यथा धर्मास्तिकायशब्दोच्चारणसमनन्तरमेव पूर्वकृतसङ्केतापेक्षो द्राग् नित्यैकामूर्तगत्यर्थलोकाकाशव्याप्यक्रियार्थं द्रव्यं मनसोपलभ्यते[1] तत् श्रुतमनिन्द्रियस्यार्थ इति स्थितमेतद्, भाष्यकारेण च भाष्ये विशिष्टश्रुतपरिग्रहार्थं विशेषणमुपात्तम् **श्रुतज्ञानमित्यादि** । श्रुतज्ञानमित्यात्मपरिणामाख्यानं शब्दव्युदासार्थम्, **द्विविधम्**—अङ्गबाह्यमङ्गान्तरगतं च, आद्यमनेकभेद**मावश्यकादि**, इतरदा**चारा**दिद्वादशभेदम्, अनेन श्रुतविशेषाख्यानं न पुनः सर्वमेव श्रुतमनिन्द्रियार्थः । **नोइन्द्रियस्यार्थ** इत्यनेन पर्यायशब्देन नञर्थं स्फुटयति । न खल्वेतदिन्द्रियम् इन्द्रियलक्षणानुपपत्तेः, एकदेशस्त्विन्द्रियलक्षणस्य समस्तत एवासम्पूर्णत्वान्नोघटवन्नोइन्द्रियमुच्यत इति ॥ २२ ॥

मनसः स्वरूपम्

उक्तानीन्द्रियाणि सङ्ख्यातः प्रकारतः स्वरूपतो विषयतश्च । अधुना तानि कति कस्य जन्तोर्भवन्तीति निरूपयन्नाह—

## सूत्रम्—वाय्वन्तानामेकम्[2] ॥ २–२३ ॥

**टी०**—तत्र सम्बन्धमेव तावदापादयति सूत्रस्य भाष्यकारः **अत्राहोक्तं भवते**त्यादिनाभाष्येण ।

**भा०—अत्राह—उक्तं भवता पृथिव्यब्वनस्पतितेजोवायवो द्वीन्द्रियादयश्च**

---

१ 'पलभते' इति ख–पाठः । २ 'वनस्पत्यन्तानामेकम्' इति क–ख–पाठः ।

स्थावराणामिन्द्रियनियमः (अ० २, सू० १३-१४) **नव जीवनिकायाः, पञ्चेन्द्रियाणि** (अ० २, सू० १५) **चेति। तत् किं कस्येन्द्रियमिति ?।**

**अत्रोच्यते—पृथिव्यादीनां वाय्वन्तानां जीवनिकायानामेकमेवेन्द्रियम्, सूत्रक्रमप्रामाण्यात् प्रथमं स्पर्शनमेवेत्यर्थः ॥ २३ ॥**

**टी०**—अत्रेन्द्रियप्रकरणप्रस्तावे पर आह—प्रतिपादितं **भवता** भू-जल-तरु-हुताशनानिला द्वि-त्रि-चतुः-पञ्चेन्द्रियाश्च **नव जीवभेदाः, पञ्चेन्द्रियाणि** सङ्ख्यातो निरूपितानि **तत् किं कस्येन्द्रियमिति** स्पर्शनादीनां मध्ये पञ्चानां किमिन्द्रियं स्पर्शनादि कस्य पृथिव्यादेरिति संशयानः प्रश्नयति ॥ नन्वनुपपन्न एव संशयः श्रोतुर्यतः प्राङ्निचायि तेनेदं स्थावरत्रसविधाने 'पृथिव्यम्बुवनस्पतयः स्थावराः' (अ०२, सू० १३) 'तेजोवायू द्वीन्द्रियादयश्च त्रसाः' (अ० २, सू० १४), तत्र द्वे एव इन्द्रिये येषां ते द्वीन्द्रियास्ते आदौ येषां ते द्वीन्द्रियादयः द्वित्रिचतुःपञ्चेन्द्रिया इत्यर्थः। सामर्थ्याच्च पृथिव्यादीनामेकमेवेन्द्रियं भविष्यति वाय्वन्तानामेवं च सिद्धे सूत्रमपि नारब्धव्यमिति ?। उच्यते—द्वीन्द्रियादीनां सत्यं द्वीन्द्रियादिता निश्चिता द्वित्वादिसामान्यान्न विशेषतः द्वे इन्द्रिये येषामिति, के पुनस्ते द्वे इति न निश्चिनुमः। एवं त्रीन्द्रियादिष्वपि योज्यम्, तथा सामर्थ्यादिलाद्यनिलान्तानामेकं कतममि(दि)न्द्रियं भवतु किं न निर्दिश्यते अतस्तदवस्थः संशयस्तस्मादुपपन्नः प्रश्नः सूत्रारम्भश्चेति। अपिच चोदनाऽनवकाशैव, यतः किमिन्द्रियं कस्य जीवस्य विशेष्या[1]भिहितम्। **पृथिव्यादीनामित्यादि** भाष्यम्। **वाय्वन्तानामित्युक्ते** न ज्ञायते किमादीनामेकं भवत्यतः सामर्थ्यलभ्यपृथिवीग्रहणमकरोद् भाष्यकारः ततः परमपरस्य जीवनिकायस्यासम्भवादिति। अथैवमाशङ्केत परतो मा भूत् सम्भव आरात् किं न सम्भवति वाय्वन्तानां वनस्पत्यादीनामबादीनां वा भवत्वेकमिति, एवं व्याचक्षाणेन शेष[2]जीवभेदपरित्यागे प्रयोजनं वक्तव्यमतो निष्फलत्वान्नैवमभिसम्बद्धुं शक्यम्। जीवनिकायानामित्यचेतनपृथिव्यादिव्युदासः, **जीवनिकायानां** जीवसङ्घातानाम**मेकमेवेन्द्रियं** भवति न द्व्यादीनि न विनिश्चितमेकं स्पर्शनादीनां मध्ये कतमदित्यत आह—**सूत्रक्रमप्रामाण्यात् प्रथमं स्पर्शनमेवेत्यर्थः**। इन्द्रियनामनिर्देशसूत्रक्रमं प्रमाणीकृत्यैकं प्रथममवसेयम्, पुनस्तदेव विशिनष्टि नामतः—**स्पर्शनमेवेति**। न चाप्रसिद्ध एकशब्दः प्रथमार्थे, 'एको गोत्रे' इत्यादिदर्शनादिति॥ २३ ॥

उक्तः क्षिति-उदक-तरु-ज्वलन-पवनानामिन्द्रियनियमः। सम्प्रति द्वीन्द्रियादीनामुच्यते इत्याह—

**सूत्रम्—कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि ॥ २-२४॥**

**भा०—कृम्यादीनां पिपीलिकादीनां भ्रमरादीनां मनुष्यादीनां च यथासङ्ख्यमेकैकवृद्धानीन्द्रियाणि भवन्ति यथाक्रमम्। तद्यथा—कृम्यादीनां अपा-**

---

१ 'विशेषोऽभिहितं' इति ग-पाठः। २ 'दोषः' इति क-ख-पाठः।

द्वीन्द्रियादीनामिन्द्रियवृद्धिः

दिक-नूपुरक-गण्डूपद-शङ्ख-शुक्तिका-शम्बूका-जलूका[1]-प्रभृतीनामेकेन्द्रियेभ्यः पृथिव्यादिभ्य एकेन वृद्धे स्पर्शनरसनेन्द्रिये भवतः। ततोऽप्येकेन वृद्धानि पिपीलिका-रोहिणिका-उपचिका-कुन्थु[2]-तुंबुरुक-त्रपुसबीज-कर्पासास्थिका-शतपद्युत्पतक-तृणपत्र-काष्ठहारक-प्रभृतीनां त्रीणि स्पर्शन-रसन-घ्राणानि। ततोऽप्येकेन वृद्धानि भ्रमर-वटर-सारङ्ग-मक्षिका-पुत्तिका-दंश-मशक-वृश्चिक-नन्द्यावत-कीट-पतङ्गादीनां चत्वारि स्पर्शन-रसन-घ्राण-चक्षूंषि। शेषाणां च तिर्यग्योनिजानां मत्स्योरग-भुजङ्ग-पक्षि-चतुष्पदानां सर्वेषां च नारक-मनुष्य-देवानां पञ्चेन्द्रियाणीति ॥ २४ ॥

टी०—कृमिपिपीलिकादि सूत्रम्। अयमादिशब्दः प्रत्येकमभिसम्बध्यते कृम्यादिषु, न समुदाय इति भाष्येण दर्शयति—कृम्यादीनामित्यादिना। गतार्थमेतत्, **यथासङ्ख्यमेकैकवृद्धानीन्द्रियाणि भवन्ति**। सूत्रे त्वेकैकवृद्धानीत्युक्तं, तत्र न ज्ञायते प्रथममेकेन कतमेन वृद्धमिति सन्देहव्यवच्छेदार्थमाह—**यथासङ्ख्यम्**, येन क्रमेणोपन्यस्तानि तमेवोररीकृत्यैकैकेन वृद्धानि भवन्ति, न क्रमोल्लङ्घनेन। एतदेव पुनः स्पष्टयति—**यथाक्रमं**—यथानुपूर्वी, तद्यथेत्यनेन तामानुपूर्वीमादर्शयितुमुपक्रमते—**कृम्यादीनां**—कृमिप्रकाराणाम्, आदिशब्दस्य प्रकारार्थत्वात्। **अपादिकादयः** प्रायः प्रसिद्धाः, एषामेकेन वृद्धे स्पर्शनरसने भवतः, पृथिव्यादिभ्यः सकाशादेकेनेन्द्रियेण (रसनेन) वृद्धे सति स्पर्शने द्वे स्पर्शनरसने भवतः, अन्यथा यद्येकेन वृद्धे स्पर्शनरसने सम्बध्येते ततस्त्रीणि प्राप्नुवन्ति, **ततोऽप्येकेन वृद्धानी**[3]त्यादिभाषितेनापि द्वीन्द्रियेभ्यः **पिपीलिकादीनामेकेन** घ्राणेन सहिते स्पर्शनरसने त्रीणि सन्ति ततो वृद्धानि भवन्ति इति, **ततोऽप्येकेन वृद्धानि भ्रमरादीनां** सुज्ञानम्, **शेषाणां च तिर्यग्योनिजानामिति** एकेन्द्रियादितिर्यग्योनिजापेक्षया शेषग्रहणम्, एतद्व्यतिरिक्ताः शेषास्तिर्यग्योनयस्तान् विस्तरतो **मत्स्यादीन्** दर्शयति—**सर्वेषां च नारक-मनुष्य-देवानां पञ्चेन्द्रियाणि**। अतिर्यग्योनित्वात् पृथगुपादानं नारकादीनाम्। किं पुनरत्र मनुष्यादीनामित्यभिधाय सूत्रे नारकमनुष्यदेवानामिति विवृतं शेषाणां च तिर्यग्योनिजानामिति, न यथा कृम्यादिषु प्रदीर्घैकदण्डकपाठस्तथेह, उच्यते—कृम्यादिष्वेकजातीया एव सर्वे दण्डकेन निर्दिष्टा इति युक्तम्, इह पुनस्तिर्यग्योनयोऽवश्यं पृथग् निवेश्याः भिन्नजातीयत्वान्नारकादिभ्यः, तथा

नारकादिक्रमे हेतुः

नारकादयोऽपि भिन्नगतिवर्तित्वात् भेदेनैवोपात्ताः। एवं तर्हि मनुष्यनारकदेवानामिति किं नोक्तमादौ मनुष्योपन्यासात्[4]? । उच्यते—लोकक्रमसन्निवेशमाचार्येणाधाय चेतसि नारकमनुष्यदेवानामित्युक्तम्। अथवा विवरणग्रन्थो यथे-

---

१ 'जलौका' इति ग-टी-पाठः। २ 'कुन्थुछुरुक' इति क-ख-पाठः। ३ 'वृद्धादीनीति' इति क-ख-पाठः।
४ 'पन्यसनात्' इति ग-पाठः।

भाष्यपाठभेदः

ष्टमारभ्यत इति नातिदोषाय। अपरेऽतिविसंस्थुलमिदमालोक्य भाष्यं विषण्णाः सन्तः सूत्रे मनुष्यादिग्रहणमनार्षमिति सङ्गिरन्ते, गौरवहेतुत्वात्, विनापि किल मनुष्यादिग्रहणेन चत्वार्येकेन वृद्धानि येषां ते सामर्थ्यान्मनुष्यादयो भविष्यन्ति, तदेतदयुक्तप्रायं लक्ष्यते, अविगानेनैवंविधसूत्राध्ययनात्, सामर्थ्यलाभे वा भ्रमरादिग्रहणमपि न कर्तव्यम्, त्रीण्येकेन वृद्धानि स्पर्शन-रसन-घ्राण-चक्षूंषि भ्रमरादीनामेवेति। इदमन्तरालमुपजीव्यापरे वातकिनः स्वयमुपरभ्य सूत्रमधीयते–'अतीन्द्रियाः केवलिनः' येषां मनुष्यादीनां ग्रहणमस्ति सूत्रेऽनन्तरे त एवमाहुः–मनुष्यग्रहणात् केवलिनोऽपि पञ्चेन्द्रियत्वप्रसक्तेः अतस्तदपवादार्थमतीत्येन्द्रियाणि केवलिनो वर्तन्त इत्याख्येयम्, तदेतद् वार्तम्, भगवतो द्रव्येन्द्रियसद्भावात्, भावेन्द्रियाभावश्चात्यन्तिको मत्यादिचतुष्टयविनिर्मुक्तत्वात् केवलस्येति किमत्रानिष्टमापद्यत इति न विद्मः ॥ २४ ॥

**भा०—अत्राह–उक्तं भवता–द्विविधा जीवाः–समनस्का अमनस्काश्चेति। तत्र के समनस्का इति?। अत्रोच्यते॥**

**टी०—अत्राह–उक्तं भवतेत्यादिः** सम्बन्धग्रन्थः। इन्द्रियनियम आपादिते मनोनियमाभिधानेच्छयाऽत्रावसरे शिष्य आह–अभिहितं त्वया प्राग् द्विप्रकारा जीवाः संसारिणः–'**समनस्का अमनस्काश्च**' (अ० २, सू०११) तत्र नारकादिषु के समनस्का इति विभक्तमिच्छामि ज्ञातुम्, के वाऽमनस्का इति नोक्तम्, अन्यतरसमूहाभिधानेऽन्यतरस्य सुज्ञानत्वात् अत्र शिष्यप्रश्नावसायेऽभिधीयते—

## सूत्रम्—संज्ञिनः समनस्काः ॥ २–२५ ॥

**भा०—सम्प्रधारणसंज्ञायां संज्ञिनो जीवाः समनस्का भवन्ति। सर्वे नारकदेवा गर्भव्युत्क्रान्तयश्च मनुष्यास्तिर्यग्योनिजाश्च केचित्। ईहापोहयुक्ता गुणदोषविचारणात्मिका सम्प्रधारणसंज्ञा। तां प्रति संज्ञिनो विवक्षिताः। अन्यथा ह्याहार-भय-मैथुन-परिग्रह-संज्ञाभिः सर्व एव जीवाः संज्ञिन इति॥२५॥**

**टी०—संज्ञिनः समनस्काः**, संज्ञा विद्यते येषां ते संज्ञिनः, शिखादित्वाद् व्रीह्यादित्वाद् वा, विद्यमानं मनो येषां ते समनस्काः सपुत्रादिवत्, संज्ञामात्रसम्बन्धात्

सम्प्रधारणसंज्ञा

सर्वे पृथिव्यादयः संज्ञिनो दशविधसंज्ञाभ्यनुज्ञानात् इत्यागममनुपश्यन्नाचार्य आह–**सम्प्रधारणसंज्ञायामित्यादि**। अथवा कालहेतुदृष्टिवादोपदेशाख्यास्तिस्रः संज्ञास्तत्र कतमां संज्ञामधिकृत्योच्यते संज्ञिनः समनस्का इति?। आह–**सम्प्रधारणसंज्ञायामित्यादि**, न सर्वा संज्ञाऽऽगमोक्ताऽत्र गृह्यते, किन्तु या सम्प्रधारणात्मिका तस्याः परिग्रहः। किं पुनः कारणमूहलोकाहारादिसंज्ञास्त्यज्यन्ते?। ऊहादिसंज्ञाः तावदतिस्तोकत्वादशोभनत्वाच्चाहारादिसंज्ञा नाधिक्रियन्ते, नहि कार्षापणमात्रेण धनवान्, मूर्ति-

मात्रेण वा रूपवानिति व्यपदिश्यते, यथा च प्रभूतद्रविणो धनवान्, प्रशस्तरूपः स्वरूपवानुच्यते तथा महत्या शोभनया चेह संज्ञया संज्ञिनो ग्रहीष्यन्ते, भूमप्रशंसातिशयनादिषु मत्वर्थीयविधानात्, कालहेतुदृष्टिवादोपदेशसंज्ञानां च मध्ये कालिक्येव परिगृह्यते नेतरे, निरूपितमिदं नन्द्यां सूत्रव्याख्याने–हेतुकालदृष्टिवादोपदेशक्रममुत्तरोत्तरविशुद्धमपहाय किं कारणं कालिक्यादौ व्यवस्थापितेत्येवमाक्षिप्तेऽभिहितमुत्तरं (हारिभद्रीये )–संज्ञ्यसंज्ञीति सर्वत्र श्रुते कालिक्याः संज्ञायाः प्रायः संव्यवहारः क्रियते, अतः क्रमविशुद्धिमनादृत्य सूत्रमुपनिबद्धम्, अतस्तां कालिकीं संज्ञामधिकृत्य भाष्यकृद् व्याख्यानयति–**सम्प्रधारणसंज्ञायां ये वर्तन्ते जीवास्ते समनस्का भवन्ति**। सम्प्रधारणमालोचनं येन सुदीर्घमपि कालमनुस्मरति भूतमागामिनं चानुचिन्तयति कथं नु कर्तव्यं किं वा तत्रानुष्ठेयमत एव दीर्घकालिकीत्युक्ताऽऽगमे पूर्वपदलोपात्। तच्च सम्प्रधारणमेवंरूपं कस्य सम्भवति ? योऽनन्तानन्तान् मनोयोग्यान् स्कन्धान् आदाय मन्यते, तल्लब्धिसम्पन्नो मनोविज्ञानावरणक्षयोपशमादिसमेतः, यथा च रूपोपलब्धिश्चक्षुष्मतः प्रदीपादिप्रकाशपृष्ठेन तद्वत् क्षयोपशमलब्धिमतो मनोद्रव्यप्रकाशपृष्ठेन मनःषष्ठैरिन्द्रियैरर्थोपलब्धिः, यथा वाऽविशुद्धचक्षुषो मन्दमन्दप्रकाशे रूपोपलब्धिरेवमसंज्ञिनः पञ्चेन्द्रियसम्मूर्च्छनजस्यात्यल्पमनोद्रव्यग्रहणशक्तेरर्थोपलब्धिः, यथा चेह मूर्च्छितादीनामव्यक्तं सर्वविषयविज्ञानमेवमतिप्रकृष्टावरणोदयादेकेन्द्रियाणाम्, अतः शुद्धतरं शुद्धतमं च द्वीन्द्रियादीनामा पञ्चेन्द्रियसम्मूर्च्छनजेभ्यः, ततस्तत्संज्ञिनामतिप्रकृष्टतरमिति ?। आह–कुतः पुनश्चैतन्यसमानतायामात्मनो यदिदमुपलब्धिनानात्वम् ? उच्यते–सामर्थ्यभेदात्, स च क्षयोपशमानन्त्याद् यथा चेह छेदनत्वे तुल्ये चक्रवर्तिनश्चक्रस्य यत् सामर्थ्यं तत् क्रमशो हीयमानसामर्थ्यानां न शरपत्रादीनामस्ति, एवमेव हि मनोविषयाणां संज्ञिनां चैतन्ये सति या पटुता सम्प्रधारणायां नासौ क्रमशो हीयमानानामसंज्ञिनामिति। एवं तावद् विशिष्टसंज्ञाभाज एव संज्ञिन इति प्रतिपादितम् ॥ इदानीं नामग्राहमाचष्टे तान् संज्ञिनः–**सर्वे नारकदेवा** इत्यादिना। पृथिवीसप्तकवर्तिनो नारकाः, भवनवनचरज्योतिषिकवैमानिकाश्च देवाः, गर्भेण व्युत्क्रान्तिर्येषां मनुष्याणां ते **गर्भव्युत्क्रान्तयः**, उपरिष्टात् (अ० २, सू० ३२) त्रिविधं जन्म वक्ष्यते, तत्र मातृपितृसंयोगाज्जीवस्योत्पादो गर्भजन्मोच्यते, तेन गर्भजन्मना विविधमुत्क्रमणं–उद्गमनं-प्रादुर्भावो येषां कदाचिच्छिरसा कदाचित् पादाभ्यां मातुरुदरान्निःसरणमित्येवंविधमनुष्याणां च समनस्कत्वम्। गर्भव्युत्क्रान्तिग्रहणात् सम्मूर्च्छनजन्ममनुष्यव्यावृत्तिः। **तिर्यग्योनिजास्त्वित्यादि**। पञ्चेन्द्रियतिर्यग्योनिजाः गो-महिषी-अजाविक-करि-केसरि-व्या-

उपलब्धिनानात्वम्

---

१ 'तथा च' इति ग-पाठः। २ 'मनोविषयिणां संज्ञानाम्' इति ग-टी-पाठः। ३ 'तत्संज्ञिनः' इति क-ख-पाठः।

घ्रादयः। केचिद्ग्रहणाद् गर्भव्युत्क्रान्तय एव परिगृह्यन्ते, न सम्मूर्च्छनजन्मभाजः। **ईहापोहयुक्ता** इति। सामान्यार्थग्रहणानन्तरभाविनी सदर्थमीमांसा ईहा-किमयं शङ्खध्वनिरुताहो शृङ्गध्वनिरिति, मधुरादिगुणयोगादयं शङ्खस्यैव ध्वनिः, न शृङ्गस्येत्यन्वयव्यतिरेकवद् विज्ञानमपोह उच्यते, ईहापोहाभ्यां युक्ता ईहापोहयुक्ता-**गुणदोषविचारणात्मिका सम्प्रधारणसंज्ञा, तां प्रति संज्ञिनोऽत्र** संज्ञिनो **विवक्षिताः**, गुणाश्च दोषाश्च गुणदोषाः, स्वार्थपुष्टिहेतवो गुणाः, तदपचयहेतवो दोषाः, तेषां विचारणम्-आलोचनं-कथं गुणावाप्तिर्दोषपरिहारश्चेति तदेवात्मा-स्वरूपं यस्याः सम्प्रधारणसंज्ञायाः सा गुणदोषविचारणात्मिका सम्प्रधारणसंज्ञा, तामेवंविधां संज्ञामभिमुखीकृत्य संज्ञिनो वक्तुमभिप्रेताः। **अन्यथा हीत्यादि**। यदि प्रतिविशिष्टा संज्ञा नाङ्गीक्रियते ततः सर्व एव जन्तवः पृथिव्यादिभेदाः समनस्काः स्युः, आहारादिसंज्ञाभिः संज्ञिन इतिकृत्वा, तस्माद् विशिष्टसंज्ञाभाजः संज्ञिनः समनस्का भवन्ति। तत्रासद्वेदनीयोदयादोजलोमप्रक्षेपभेदेनाहाराभिलाषपूर्वकं विशिष्टपुद्गलग्रहणमाहारसंज्ञा, संज्ञा नाम विज्ञानम्, तद्विषयमाहारमभ्यवहरामीति मोहनीयोदयात्, साध्वसलक्षणा भयसंज्ञा-भयपरिज्ञानं बिभेमीति, पुरुषादिवेदोदयाद् दिव्यौदारिकशरीरसम्बन्धाभिलाषासेवनं मैथुनसंज्ञा, ततोऽन्यथा वाऽपि मूर्च्छालक्षणा परिग्रहसंज्ञा, भावतोऽभिष्वङ्गो मूर्च्छा, तस्मात् सिद्धं प्रणिधानविशेषाहितसंस्कारविज्ञानपाटवादरविजृम्भितपरिणामाः संज्ञिनः॥ ननु च सम्प्रधारणसंज्ञा मनोलक्षणा, मनश्च सम्प्रधारणसंज्ञारूपम्, ततश्चायुक्तं लक्षणमन्योन्यलक्षणत्वाद् हस्तकरवत् संज्ञिनः समनस्का इति। उच्यते-लक्ष्यपदार्थो द्विविधेन लक्षणेन लक्ष्यते स्वसिद्धेन परसिद्धेन वा, स्वसिद्धेनाग्निरुष्णत्वेन, परसिद्धेनाभिनववारिवाहपटलस्निग्धतरवनखण्डबलाकाकमलसौरभादिना महान् जलाशयः, तत्रेहापि लक्ष्याः समनस्काः प्रसिद्धेन गुणदोषादानपरिहाररूपेण बहिर्वर्तिना प्रत्यक्षप्रमाणसमधिगम्येन सम्प्रधारणसंज्ञाफलेन लिङ्गभूतेन संज्ञित्वेनानुमीयन्तेऽन्तःकरणवत्तया विद्वद्भिः, न चाग्नेर्लक्षणमुष्णता तदभेदवर्तिन्यपि यथा तथा सम्प्रधारणसंज्ञाऽपि बहिरतिस्फुटहिताहितप्राप्तिपरिहाररूपफला लिङ्गिनो भेदेनापि वर्तमाना लक्षणमेव। अथवा पर्यायकथनेनेदं व्याख्यानं समनस्कानाम्, के समनस्का इति पृष्टे संज्ञिनः समनस्का इत्येकोऽर्थः, यथाऽन्यत्र 'मतिस्मृतिसंज्ञाचिन्ताभिनिबोध इत्यनर्थान्तरं' (अ० १, सू० १३), 'सम्यग्योगनिग्रहो गुप्तिः' (अ० ९, सू० ४) इति। इहापि गुणदोषविचारणाफलयोगात् प्रसिद्धतरः संज्ञिशब्दस्तेन प्रत्यायनमप्रसिद्धस्य समनस्कशब्दार्थस्य। एवंच हस्तकरवदित्यप्युपपन्नं भवति, कस्यचिदन्यतरप्रसिद्धावन्यतरो व्याख्यायते-कः करः? हस्त इति, विवक्षावशाद् वा कदाचित् कारणेन तत्कार्यमनुमीयते जातुचित् कार्येण कारणम्, अत्र च मनः कारणं सम्प्रधारणसंज्ञा कार्यतया लक्ष्यते इति, कदाचिद् वा सैव मनसा लक्ष्यत इत्यन्योन्यलक्षणताऽपि न दोषायेति॥ २५॥

आहारादिसंज्ञास्वरूपम्

सम्प्रधारणेन समनस्कतालक्षणम्

उक्तः प्रतिविशिष्टानामेव भवस्थानां मनोयोगनियमः । अथ येऽन्तर्गतौ वर्तन्ते प्राणिनस्तेषां कतमो योगः ? । उच्यते—

## सूत्रम्—विग्रहगतौ कर्मयोगः ॥ २–२६ ॥

टी०—अथवा संसारिणोऽधिकृतास्ते च संसरणधर्माणो भवाद् भवान्तरप्राप्तेः, तच्च तेषां संसरणं द्विधा–देशान्तरप्राप्तिलक्षणं भावान्तरप्राप्तिलक्षणं च, तत्र ये पूर्वशरीरपरित्यागाद् देशान्तरं गत्वा जन्म लभन्ते तेषां देशान्तरप्राप्तिलक्षणम्, ये पुनः स्वशरीर एवोत्पद्यन्ते मृताः सन्तः कृम्यादिभावेन तेषां भावान्तरप्राप्तिलक्षणम्, एतदुभयमपि न चेष्टालक्षणयोगमन्तरेण संसरणमस्ति, त्यक्तपूर्वकशरीरस्य जन्तोर्गतेरभावाद् गतिपूर्विका चोभयप्राप्तिरिति ? उच्यते—गतिहेतुसद्भावान्न गमनप्रतिषेधः, सा गतिरन्तरालवर्तिनी द्विधा–ऋज्वी वक्रा च, ऋज्वी तावत् पूर्वशरीरयोगोत्थापितप्रयत्नविशेषादेव गतिरिष्यते धनुर्ज्याविमोक्षाहितसंस्कारेषुगमनवत्, तस्यां च पूर्वकः स एव योगो वाच्यः, अतोऽन्यस्यानु विग्रहगतौ कर्मयोगः, विग्रहो वक्रमुच्यते, विग्रहेण युक्ता गतिर्विग्रहगतिः अश्वरथन्यायेन, विग्रहप्रधाना वा गतिः विग्रहगतिः शाकपार्थिवादिवत्, तस्यां विग्रहगतौ कर्माष्टकेनैव योगः, न शेषौदारिकादिकायवाङ्मनोव्यापार इति, कर्मणो योगः कर्मयोगः कार्मणशरीरकृतैव चेष्टेत्यर्थः । एतदेव व्यक्तं भाष्येण दर्शयति—

(संसरणस्य द्वैविध्यम्) (अन्तर्गतिविचारः)

**भा०—विग्रहगतिसमापन्नस्य जीवस्य कर्मकृत एव योगो भवति । कर्मशरीरयोग इत्यर्थः[1] । अन्यत्र तु यथोक्तः कायवाङ्मनोयोग इति[2] ॥ २६ ॥**

टी०—विग्रहगतीत्यादि । समासादितवक्रगतेर्जन्तोः कर्माष्टकं कर्मशब्देनोच्यते । कर्मकृत एव योगो भवतीत्यवधारणेन व्युदासमावेदयति शेषयोगानाम्,पुनः स्पष्टतरमसन्देहार्थं विवृणोति—**कर्मशरीरयोग इत्यर्थः** । कर्मैव शरीरं कर्मशरीरं कार्मणमिति स्फुटयति, स्वार्थे च व्युत्पत्तिमावेदयति कर्मैव कार्मणम्, न पुनर्जातभवाद्यर्थसम्बन्धोऽत्र कश्चित् समस्ति । अयं च नियमोऽन्तर्गतेरेव क्रियते न कार्मणस्येति ख्यापयन्नाह—**अन्यत्र तु यथोक्तः कायवाङ्मनोयोग इति** । अन्तर्गतेरन्यत्र यथाभिहित आगमे कायादियोगो भवति, तुशब्दो गत्यन्तरविशेषप्रदर्शनपरतयोक्तः । तद्यथा–नारकगर्भव्युत्क्रान्तितिर्यग्मनुष्यदेवानां त्रयोऽपि योगाः, सम्मूर्च्छनजन्मभाजां तिर्यग्मनुष्याणां कायवाग्योगावेव । अथवा **यथोक्त इति** । येन प्रकारेणोक्तः कायादियोगः पञ्चदशभेदः स तथा समायोजनीयो गत्यन्तरभेदेष्विति सूचयति, तत्र मनोयोगश्चतुर्धा–सत्यः, असत्यः, सत्यासत्यः, असत्यामृष इति, एवं वाग्योगेऽपि, काययोगः सप्तभेदः—औदारिकः, औदारिकमिश्रः, वैक्रियः, वैक्रियमिश्रः, आहारकः, आहारकमिश्रः, कार्मणश्चेति ॥ ननु च 'अनादिसम्बन्धे च'

(योगविभागः)

---

१ वक्रगतौ चेत्यधिकम् । २ 'इत्यर्थः' इति घ-पाठः ।

(अ० २, सू० ४२), 'सर्वस्य' (अ ०२, सू० ४३) इतिवचनात् तैजसयोगसद्भावोऽपि, अतोऽष्टविधेन काययोगेन भवितव्यम्, ततश्च षोडशभेदो योगः स्यात्, अवधारणं च भाष्ये कर्मकृत एवेति तदप्यसमीक्ष्य कृतं स्यात्, तत्रोच्यते–'सर्वस्य' (अ०२, सू० ४३) इत्यत्र सूत्रे तैजसयोगमाचार्योऽन्यमतेन निराकरिष्यति, 'एके त्वाचार्याः नयवादापेक्षम्' (अ०२, सू० ४३) इत्यादिना भाष्येण, अतः क्रममुदीक्षस्व मा त्वरिष्ठाः, तत्रैवेदं निर्धेष्यते, समासतस्तावद् गृहाण–तैजसं कार्मणान्न भिन्नमेकमेवेदमित्यतः पञ्चदशधा योगः, अवधारणमपि भाष्ये नासमञ्जसमिति। सोऽयमधुना जीवेषु पञ्चदशविधो योगः आयोज्यते–संज्ञिमिथ्यादृष्टेरारब्धो यावत् सयोगकेवली तावदाद्यतुर्यौ मनोयोगौ लभ्येते, एतेष्वेव च स्थानेषु सत्यवाग्योगोऽपि, तुरीयः पुनर्वाग्योगो द्वीन्द्रियमिथ्यादृष्टेरारब्धो यावत् सयोगिकेवली तावत् समस्ति, द्वितीयतृतीयवाग्योगौ संज्ञिमिथ्यादृष्टेरारब्धौ यावत् क्षीणकषायवीतरागच्छद्मस्थस्तावल्लभ्यते। एवं मनोयोगावपि द्वितीयतृतीयौ। ऋजुगत्यां यावद् भवान्तरसम्प्राप्तिस्तावदन्तराले यथासम्भवमौदारिकवैक्रियकाययोगौ भवतः, वक्रायां तु पुनस्तौ विनिवर्तेते, नारकसुरा वैक्रिययोगभाजः, तिर्यग्मनुष्या औदारिकवैक्रिययोगिनः, आहारकयोगः प्रमत्तेन निष्पाद्यते पश्चादप्रमत्तस्य भवति, एत एव हि नारकादयोऽपर्याप्तकावस्थावर्तिनो मिश्रयोगभाजो भवन्ति, औदारिकवैक्रिये येषां ग्राह्ये पुरोजन्मनि तेषां कार्मणेन मिश्रः, यस्याहारकं ग्राह्यं तस्यौदारिकेण मिश्रः, सम्यग्मिथ्यादृशमपहाय मिथ्यादृष्टेरारब्धोऽन्तर्गतौ कार्मण एव योगस्तावल्लभ्यते यावदुपशान्तकषायवीतरागच्छद्मस्थ इति। केवलिसमुद्घातकाले च तृतीयचतुर्थपञ्चमसमयेषु कार्मण एव। सूत्रे चावध्रियते विग्रहगतेः, न कर्मयोगः, ततोऽन्यत्रापि दर्शनादिति, द्वितीयषष्ठसप्तमेष्वौदारिककार्मणमस्ति, प्रथमाष्टमयोरौदारिक एव, एवमन्यत्र तु यथोक्तः कायादियोगः समायोजितो भवति॥ अथ विग्रहगतौ कर्मयोग इतिवचनादेकविग्रहायामपि गतौ कार्मण एव योगः कस्मान्न भवति? साऽपि हि विग्रहगतिर्भवत्येवेति। उच्यते–विग्रहगताविति न व्याप्तिर्विवक्षिता तिलतैलवत्, किन्तु विषयो विवक्षितः खे शकुनिरुदके मत्स्य इति यथा, अवश्यं चैतदेवं ग्रहीतव्यम्, अन्यथा द्विविग्रहायां त्रिविग्रहायां वा गतावाद्यन्तयोरपि समययोः कार्मणयोगः प्राप्नोति, इष्यते च द्विविग्रहायां मध्यमसमये त्रिविग्रहायां मध्यमयोर्द्वयोरिति॥ ननु च विग्रहगतिसमापन्नः कार्मणेन योगेन भवान्तरं सङ्क्रामति तत् कथं 'निरुपभोगमन्त्यम्' (अ० २, सू० ४५) इति वक्ष्यते, अयमेव हि तस्योपभोगो यदुत भवान्तरसङ्क्रान्तिरिति?। उच्यते–विशिष्टः सूत्रे सुखदुःखयोरुपभोगः कर्मबन्धानुभवो निर्जरालक्षणश्च प्रतिषेत्स्यते, न चेष्टारूप इति। अथ कथं सूत्रमिदम्?–"[1]जावं च णं भंते! अयं जीवे एयति वेयति चलति फंदति तावं च णं णाणावरणिज्जेणं जाव अंतराइएणं

तैजसस्य भिन्नयोगाभावः

योगस्वामिनः

विग्रगहतौ निरुपभोगता

---

१ यावच्च भदन्त! अयं जीव एजते व्येजते चलति स्पन्दते तावच्च ज्ञानावरणीयेन यावद् अन्तरायिकेण

बज्झतित्ति ? हंता गोयमा ! " कार्मणयोगकाले चास्ति चलनं, तत् कथं बन्धादिलक्षणोपभोगप्रतिषेधः ? । उच्यते–भवस्थमाश्रित्य भगवता सूत्रं प्राणायि, ज्ञानावरणाद्यास्रवाणां तदैव सद्भावात्, अपिच अल्पः कालः समयद्वयं कस्तत्रोपभोगेनाभिसम्बन्ध इति, स्याद् वा काययोगप्रत्ययस्तत्र बन्धः स तु न विवक्ष्यते भाष्यकारेण, ज्ञानावरणाद्यास्रवविशेषाहितबन्धनिराकारसूत्रं व्याख्यास्यत इति, एवं तर्ह्यानुपूर्वीनामकर्मोपभोगस्तदैव नान्यदा जन्तोरन्यत्र केवलिद्विचरमसमयात्, ज्ञानावरणाद्युपभोगश्च यथासम्भवमतः कथमुपभोगप्रतिषेध इति ?। उच्यते—पुनः पुनर्विरुवन्मुधा कदर्थयसि त्वमस्मान्, तत्रैव सूत्रे निश्चयिष्यते एतद् अभिव्यक्तरूपा हिंसादयो न तत्र सन्ति, न च तदनुरूपफलोपभोग इति व्यक्तिमावेश्य चेतसि प्राणैषीत् सूत्रमाचार्यस्तस्मादवस्थितमिदम्—विग्रहगतौ कार्मण एव योगः, न शेष इति ॥ २६ ॥

अथ येषां जीवानां गतिर्भवान्तरप्रापिणी सा किं यथाकथंचिद् भवति, आहोस्विदस्ति कश्चिन्नियमः ? । अस्तीत्युच्यते—

## सूत्रम्—अनुश्रेणिर्गतिः ॥ २–२७ ॥

टी०—अथवा किं पुनरयमात्मा भवान्तरप्राप्तौ वक्रां गतिं प्रतिपद्यते गतिनियमात् कुतश्चिदुताहो यथाकथंचिदिति ?। **गतिनियमात्** इत्याह– कः पुनरसौ गतिनियमः ? उच्यते–**अनुश्रेणिर्गतिः**। श्रेणिः–आकाशप्रदेशपङ्क्तिः स्वशरीरावगाहप्रमाणा, प्रदेशाश्चामूर्ताः क्षेत्रपरमाणवोऽत्यन्तसूक्ष्माः नैरन्तर्यभाजः, सा चासङ्ख्येयप्रदेशा जीवगतिविवक्षायाम्, अन्यत्र मौक्तिकहारलतेव एकैकाकाशप्रदेशरचनाहितस्वरूपाऽपि ग्राह्या, परमाणोस्तावत्यामेव व्यवस्थानात्, द्व्यणुकादेस्तावत्यामधिकायां चेत्येवमनन्तप्रदेशिकस्कन्धपर्यवसानं पुद्गलद्रव्यमुपयुज्य वाच्यम् । तत्रानुश्रेणीति । श्रेणिमनु अनुश्रेणि श्रेण्यामनुसारिणी गतिरितियावत्, अनुगङ्गं वाराणसी यथा। गमनं–गतिः–देशान्तरप्राप्तिः, सा चाकाशश्रेण्यभेदवर्तिनी स्वयमेव समासादितगतिपरिणतेर्जन्तोर्गतिहेतुसकललोकव्यापिधर्मद्रव्यापेक्षा प्रादुरस्ति, भवान्तरसङ्क्रान्त्यभिमुखो जीवो मन्दक्रियावत्त्वात् कर्मणो यानेवाकाशप्रदेशानवष्टभ्य शरीरवियोगं करोति तानेवाभिन्दन् देशान्तरं गच्छत्यूर्ध्वमधस्तिर्यग् वा, विश्रेणिगत्यभावाद्, धर्मास्तिकायाभावाच्च परतो लोकपर्यन्ते एव व्यवतिष्ठते, लोकनिष्कुटोपपातक्षेत्रवशाच्च भवान्तरप्राप्ताववश्यमेव धर्माज्जीवो वक्रां गतिं प्रतिपद्यते, पुद्गलानामपि परप्रयोगनिरपेक्षाणां स्वाभाविकी गतिरनुश्रेणिर्भवति यथाऽणोः प्राच्यात् लोकान्तात् प्रतीच्यं लोकपर्यन्तमेकेन समयेन प्राप्तिरिति प्रवचनोपदेशः, परप्रयोगापेक्षया त्वन्यथाऽपि गतिरस्तीति ॥

गतेरनुश्रेणितानियमः

बध्यते ? हन्त गौतम ! ।

अधुना भाष्यमनुगम्यते—

**भा०—सर्वा गतिर्जीवानां पुद्गलानां चाकाशप्रदेशानुश्रेणिर्भवति, विश्रेणिर्न भवतीति गतिनियम इति ॥ २७ ॥**

**टी०—सर्वा गतिरि**त्यादि । **सर्वे**ति ऊर्ध्वमधस्तिर्यग् वा देशान्तरप्राप्तिः, **जीवानां**-जीवनयुजां संसरणधर्माणामित्यर्थः, **पुद्गलाना**मिति, पूरणाद् गलनाच्च पुद्गलाः-निरुक्तप्राभृतानुसारेण उपचयापचयभाजः, तेषां च, समुच्चितौ चशब्दः । कथं पुनरत्र पुद्गलग्रहणमतर्कितमेव सहसा विहायसोऽपतदिति ? । उच्यते-जीवाधिकारानुवृत्तौ गतिनियमविवक्षायामनुपात्तमपि सूत्रे लाघवैषिणा भाष्यकारेणोपात्तमेकप्रयत्नसाध्यत्वात्, अन्यथा तु गौरवं जायते, अतश्चेदमवश्यमर्थतो वक्तव्यम्-पुद्गलानां चेति, उत्तरत्र सूत्रे जीवग्रहणाद्, अन्यथा जीवाधिकारानुवृत्तौ जीवग्रहणस्य न किंचित् प्रयोजनमुपलभ्यते, तस्मात् पश्यत्ययमाचार्यो जीवानां पुद्गलानां च गतिनियमं अनन्तरसूत्रेऽतः पुद्गलव्यवच्छित्तये जीवग्रहणमिति । **आकाशप्रदेशानुश्रेणिर्भवति** । जीवपुद्गलावगाहलक्षणमाकाशं तस्य प्रदेशाः-परमाणवोऽमूर्तास्तेषां पङ्क्तिः-प्रदीर्घा श्रेणिरसंख्यातप्रदेशा, पुद्गलगमने तु सङ्ख्यातप्रदेशाऽपि, तामेवंविधां श्रेणिमनुपत्य गमनमुपजायते, आकाशप्रदेशानां या श्रेणिस्तामनु जायते गतिर्भवत्ययमर्थः समासस्तु, कथमेतच्चिन्त्यम् आकाशग्रहणं, धर्मादिद्रव्यनिवृत्त्यर्थम्, तदेव ह्यवगाहदानेन व्याप्रियते, न शेषमिति । उक्तलक्षणायाः श्रेणेर्विगता या गतिः सा **विश्रेणि**र्जीवानाम्, पुद्गलानां तु स्वभावाद्, **विश्रेणिर्न भवतीति गतिर्नियम्यते** । पूर्वापरायता वियत्प्रदेशश्रेणयो दक्षिणोत्तरायताश्चापराः तथा चोर्ध्वमधश्च धर्माधर्मद्रव्यद्वयावधिका यास्तास्वेव गतिसद्भावात् ता एव विभिद्य न कदाचिदपि प्रयान्तीति ॥ २७ ॥

अत्राह—सैवंस्वभावा गतिः किमृज्वेव गत्वोपरमति, अथ कृत्वापि वक्रं पुनरुपजायते ? । उच्यते-पुद्गलानामनियमः, सिद्ध्यतस्त्वेकान्तेनैवाविग्रहेत्यत आह—

## सूत्रम्—अविग्रहा जीवस्य ॥ २-२८ ॥

सिध्यमानस्य गतिनियमः

**भा०—सिद्ध्यमानगतिर्जीवस्य नियतमविग्रहा भवति** ॥२८॥

**टी०**—एतावद् भाष्यमस्य सूत्रस्य । सेधनशक्तियुक्तः **सिद्ध्यमानः** सेधनशीलो वा तस्य गतिर्गमनं पूर्वप्रयोगादिहेतुचतुष्टयजनितम् । **जीवस्ये**ति ग्रहणात् पूर्वयोगैर्जीवाः पुद्गलाश्चेति ज्ञापितं भवति, सिद्ध्यमानस्येति सामर्थ्यलब्धमुदचीचरत् सूरिरुत्तरयोगे संसारिग्रहणात्, **नियतं** सर्वकालमेव सिद्ध्यताम्, **अविग्रहा**-ऋज्वी गतिर्भवतीति वेदितव्यमिति ॥२८॥

आह—अन्यस्य सिद्ध्यमानजीवव्यतिरिक्तस्य कथमिति ? । उच्यते—

१ 'सूत्रोक्तः' इति क-ख-पाठः ।

सूत्रम्—विग्रहवती च संसारिणः प्राक् चतुर्भ्यः ॥ २–२९ ॥

टी०—**विग्रहवती**–वक्रा चशब्दादविग्रहा वाऽनन्तरसूत्रनिर्दिष्टा गतिर्भवति, **संसारि**-ग्रहणानुवृत्तौ पुनः संसारिग्रहणं सिद्धग्रहणादपास्तस्य प्राक्तनसंसारिग्रहणस्य पुनः प्रत्युज्जीवनाय अर्थवशाच्च विभक्तिविपरिणामः **प्राक् चतुर्भ्य** इत्यन्तर्गतिकालप्रकर्षावधारणार्थः, 'एकसमयोऽविग्रहः' ( अ० २, सू० ३० ) इति वक्ष्यमाणत्वात्। चतुर्भ्यो विग्रहेभ्य आरात् सविग्रहा भवति, त्रिविग्रहा प्रकर्षत इति, प्राक्शब्दस्य मर्यादाभिधायित्वात् ॥

अधुना भाष्यानुसरणं क्रियते—

**भा०—जात्यन्तरसङ्क्रान्तौ संसारिणो जीवस्य विग्रहवती चाविग्रहा च गतिर्भवतीति, उपपातक्षेत्रवशात् तिर्यगूर्ध्वमधश्च, प्राक् चतुर्भ्य इति येषां विग्रहवती तेषां विग्रहाः प्राक् चतुर्भ्यो भवन्ति, अविग्रहा एकविग्रहा द्विविग्रहा त्रिविग्रहा इत्येताश्चतुस्समयपराश्चतुर्विधा गतयो भवन्ति, परतो न सम्भवन्ति, प्रतिघाताभावाद् विग्रहनिमित्ताभावाच्च। विग्रहो वक्रितम्, विग्रहोऽवग्रहः श्रेण्यन्तरसङ्क्रान्तिरित्यनर्थान्तरम्। पुद्गलानामप्येवमेव। शरीरिणां च जीवानां विग्रहवती चाविग्रहवती च प्रयोगपरिणामवशात्। न तु तत्र विग्रहनियम इति ॥ २९ ॥**

विग्रहगतिसङ्ख्याः

टी०—**जात्यन्तरसङ्क्रान्तावित्यादि**। जातिरेकेन्द्रियादिभेदात् पञ्चधा, जातेरन्या जातिर्जात्यन्तरं तस्मिन् सङ्क्रान्तिः-गमनं जात्यन्तरसङ्क्रान्तिस्तस्यां जात्यन्तरसङ्क्रान्तौ सत्यामिति। अथ यदा स्वजातावेवोत्पद्यते तदा कथम्? तदाऽपि ह्येवमेव गतिर्वक्तव्या, जात्यन्तरग्रहणं तु तदा प्रदर्शनमात्रकारि व्याख्येयम्। अथवा जननं–जन्म जातिशब्देनोच्यते, जन्मनो जन्मान्तरावाप्तिर्जात्यन्तरसङ्क्रान्तिरिति न कश्चिदत्र दोषः। संसारः–कर्म तदभिसम्बन्धात **संसारिणो जीवस्येति** जीवनधर्मभाजः, ऋजुगतौ पूर्वकमेवाऽऽयुर्भवति यावदुपपातदेशं प्राप्नोति, कुटिलगतौ यावद् वक्रं तावत् पूर्वकम्, तत्परतो भविष्यज्जन्मविषयमायुरुदेतीत्येवंविधार्थज्ञापनाय जीवस्येत्यवोचत्। समुच्चयार्थं दर्शयति—**वक्रा चावक्रा च उभयी गतिः**। किं पुनः कारणमत्र येन कदाचिद् वक्रा कदाचिदवक्रेति ?। अत आह–**उपपातक्षेत्रवशात्** उपपातक्षेत्रं यत्र जन्म प्रतिपत्स्यते तस्य वशः–आनुलोम्यमनुकूलता उपपातक्षेत्रवशस्तस्मादुपपातक्षेत्रवशात् कारणात्। **तिर्यगूर्ध्वमधश्च प्राक् चतुर्भ्य इति**, दिक्षु विदिक्षु च व्यावहारिकीषु स म्रियमाणो यावत्यामाकाशश्रेणाववगाढस्तावत्प्रमाणां श्रेणिममुश्चदूर्ध्वमधश्च प्राक् चतुर्भ्यो विग्रहेभ्यः सविग्रहया गत्योपपद्यते, न चायं नियमः प्रतिपत्तव्योऽन्तर्गत्याऽवश्यं विग्रहवत्या भवितव्यम्, किन्तु **येषां विग्रहवती तेषां प्राक् चतुर्भ्यो विग्रहा भवति**, येषां जीवानामुपपातक्षेत्रवशाद् विग्रहवती गतिर्भवति तेषां विग्रहत्रययुक्ता प्रकर्षतो द्रष्टव्या। अमुमेवातिक्रान्तमशेषं भाष्यार्थं व्यक्तिमा-

विग्रहे हेतुः

पादयन्नाह–**अविग्रहा** इत्यादि। यस्योपपातक्षेत्रं समश्रेणिव्यवस्थितमुत्पित्सोः प्राणिनः स ऋज्वायतां श्रेणिमनुपत्योत्पद्यते, तत्रैकेन समयेन वक्रमकुर्वाणः, कदाचित् तदेवोपपातक्षेत्रं विश्रेणिस्थं भवति **तदैकविग्रहा द्विविग्रहा त्रिविग्रहा** चेति तिस्रो गतयो निष्पद्यन्ते, आकाशप्रदेशश्रेणीः लिखित्वा प्रत्यक्षीक्रियन्ते। तथा चागमः—अपज्जत्तसुहुमपुढविकाइए[1] णं भंते! इमीसे रयणप्पभाए पुढवीए पुरच्छिमिल्ले चरमंते समोहते समोहणित्ता जे भविए इमीसे रयणप्पभाए पुढवीए पच्चच्छिमिल्ले चरमंते अपज्जत्तसुहुमपुढविकाइयत्ताए उववज्जित्तए से णं भंते! कइसमइएणं विग्गहेणं उववज्जेज्जा? गोयमा!

त्रिसमयीं यावत् विग्रहः

एगसमइएण वा दुसमइएण वा तिसमइएण वा विग्गहेण उववज्जेज्जा, से केणट्ठेणं भंते! एवं वुच्चइ? एवं खलु गोयमा! मए सत्त सेढीओ पण्णत्ताओ, तंजहा—उज्जुआयता सेढी एगओवंका दुहओवंका एगओखहा दुहओखहा चक्कवाला अद्धचक्कवाला (**भग०** श० २५, उ० ३, सू० ७३०), उज्जुआयताए सेढीए उववज्जमाणे एगसमएणं विग्गहेणं उववज्जेज्जा, एगओवंकाए सेढीए उववज्जमाणे दुसमइएणं विग्गहेणं उववज्जेज्जा, दुहओवंकाए सेढीए उववज्जमाणे तिसमइएणं विग्गहेणं उववज्जेज्जा, से तेणट्ठेणं गोयमा! एवं वुच्चइ"। एकसमयेन वा विग्रहेणोत्पद्यते द्विसमयेन वा त्रिसमयेन वेति, कः पुनः शब्दार्थ इति सन्दिहानः प्रश्नयति, कुतः पुनः सन्देहः? आचार्येण परिभाषितम्–**विग्रहो वक्रितं विग्रहोऽवग्रहः श्रेण्यन्तरसङ्क्रान्तिरिति**, अत्रायमर्थो न सङ्गच्छते, यस्मात् न ह्येकसमयायां गतौ वक्रमस्ति, अपरे व्याचक्षते–विग्रहाय गतिर्विग्रहगतिः विगृह्य वा गतिर्विग्रहगतिः, तत्र विग्रहायेति आगामिजन्मशरीरार्था गतिरिति प्रतिपादयन्ति, विगृह्य वा गतिरिति वक्रं कृत्वा या गतिः साऽपि विग्रहगतिः,

विग्रहगति-शब्दार्थः

ऋज्वी प्रथमविकल्पेन सङ्गृहीता पश्चिमविकल्पेन वक्रेति, उभय्यामपि विकल्पनायां सूत्रार्थो न घटते, विग्रहार्था या गतिस्तस्यामेष्यज्जन्मनि शरीरेण सम्बन्धः, न गमनपरिणामकाल एव, तत्र कः सम्बन्धः एकसमयेन वा विग्रहेणोत्पद्यते, यदा पुनर्विगृह्य गतिः, तदा सुतरामनुपपन्नम्, न ह्येकसमयगतौ वक्रस्य सम्भवः, भाष्यं च विगृह्यगतिपक्ष एव गमितं भवति विग्रहो वक्रितमित्यादि, नेतरत्र, तस्मादेवं सूत्रं व्याख्येयम्–एकसमयेन वा विग्रहेणोत्पद्येतेति, विग्रहशब्दोऽत्रावच्छेदवचनो न वक्रताभिधायीत्यतोऽयमर्थः–एकसमयेन वाऽवच्छेदेन विरामेण। कस्यावच्छेदेनेति चेत्?

---

१ अपर्याप्तसूक्ष्मपृथ्वीकायिको भदन्त! अस्या रत्नप्रभायाः पृथ्व्याः पूर्वस्मिन् चरमान्ते समवहत समवहत्य यो भव्योऽस्या रत्नप्रभायाः पृथिव्याः पश्चिमे चरमान्ते अपर्याप्तसूक्ष्मपृथ्वीकायिकतयोत्पत्तुं स भदन्त! कतिसामयिकेन विग्रहेणोत्पद्येत? गौतम! एकसामयिकेन वा द्विसामयिकेन वा त्रिसामयिकेन वा विग्रहेणोत्पद्यते, तत् केनार्थेन भदन्तैवमुच्यते? गौतम! मया सप्त श्रेणयः प्रज्ञप्ताः, तद्यथा–ऋज्वायता श्रेणी एकतोवक्रा द्विधावक्रा एकतःखा द्विधाखा चक्रवाला अर्धचक्रवाला, ऋज्वायतया श्रेण्योत्पद्यमान एकसमयेन विग्रहेण उत्पद्यते एकवक्रया श्रेण्योत्पद्यमानो द्विसामयिकेन विग्रहेणोत्पद्यते, द्विवक्रया श्रेण्योत्पद्यमानस्त्रिसामयिकेन विग्रहेणोत्पद्यते, तदेतेनार्थेन गौतम! एवमुच्यते।।

सामर्थ्याद् गतेरेव, एकसमयपरिमाणगतिकालोत्तरभाविनाऽवच्छेदेनोत्पद्येत, तत्रापि वक्रया श्रेण्योत्पद्यमानः समयद्वयपरिमाणगतिकालोत्तरभाविनावच्छेदेनोत्पद्येत, अत्र च वक्रशब्दोऽप्युच्चरितो विग्रहशब्दस्य, यदि च विग्रहोऽपि वक्रमेव वक्ष्यते पुनरुक्तता स्यात्, सामानाधिकरण्यं च द्विसामायिकशब्देनानुपपन्नमेव स्याद् विग्रहशब्दस्य, तस्माद् वक्रमत्र साक्षादुपात्तमेकतो वक्रा उभयतो वक्रेति, विग्रहशब्दश्चावच्छेदवचन इति न किञ्चिद् विरुध्यते ।। ननु चात्र

त्रिवक्रानुपादाने हेतुः

सूत्रे त्रिवक्रा गतिर्नोपात्तैव, तद् कथं सूत्रकारेणोपन्यस्ता प्रवचनाद् बहिर्वर्तमानेति ? । उच्यते—यद्यपि गतिपरिमाणसूत्रे नोपात्ता तथाऽप्यर्थतस्तत्प्रस्ताव एवोपरिष्टादभिहिता, यथा "अपज्जत्तसुहुमपुढविकाइए णं भंते ! अधोलोगखेत्तणालीए बाहिरिल्ले खेत्ते समोहए समोहणित्ता जे भविए उड्ढलोगखेत्तणालीए बाहिरिल्ले खेत्ते अपज्जत्तसुहुमपुढवीकाइयत्ताए उववज्जेज्जा, सेणं भंते ! कइसमइएणं विग्गहेणं उववज्जेज्जा ? गोयमा ! तिसमइएण वा चउसमइएण वा विग्गहेणं उववज्जेज्जा"[1] । चत्वारश्च समयास्त्रिवक्रायामेवेति अतो न दोषः, तथा पञ्चसमयाऽपि गतिः सम्भवति, न चोपात्ता सूत्रे, यः प्राणी महातमःप्रभापृथिवीविदिग्व्यवस्थितः कालं करोति ब्रह्मलोकविदिशि चोत्पद्यते तस्य पञ्चसमया गतिरवश्यं भवति, न च क्वचित् प्रतिबद्धा, अत्र केचिद् वर्णयन्ति—अस्ति सत्यं सम्भवः पञ्चसमयाया गतेर्न पुनस्तया कश्चिदुत्पद्यते जन्तुरित्यतो न प्रतिबद्धेति । अथवा विद्यमानाऽपि नोक्तेयं यथा चतुःसमयेति । इयांस्तु विशेषः—चतुःसमयाऽर्थतोऽभिहिता सूत्रान्तरे, पञ्चसमया तु नार्थतो न सूत्रत इति, किं पुनः कारणं सङ्ग्रहकारेण चतस्र एव गतय उपात्ताः, न पुनश्चक्रवालादयोऽपीति ? । उच्यते—

पञ्चसमयानुपादाने हेतुः

एताः प्रायः कालपरिमाणमङ्गीकृत्य एतास्वेव चतसृषु पतन्त्यतो नोपात्ताः पार्थक्येन, तथा भूयसा भवन्ति जीवानामेताः पुद्गलानां तु प्राय इत्यतोऽपि नादृताः, पारमर्षप्रवचनवेदिनस्तु सूत्रं परिज्ञास्यन्ति सर्वथा, वयं प्रकृतमेव प्रस्तुमः । सम्प्रति गतीनामियत्तामावेदयन्नाह—एवमेता ऋज्वादयश्चतुःसमयाः परा यासां ताश्चतुः-**समयपराश्चतुर्विधा एव गतयो भवन्ति,** परतः पञ्चसमयादिका न सम्भवतीत्यर्थः । सर्वत्र च पूर्वशरीरविच्छेदाविच्छेदौ मण्डूकजलूकागतिभ्यां भावनीयाविति, आसां च मध्ये नारकादीनामविग्रहैकद्विविग्रहा एव भवन्ति न तु त्रिविग्रहाः । एकेन्द्रियाणां त्रिविग्रहाश्चेतराश्च, किं पुनः कारणमेकसमयैवाविग्रहा भवति न द्विसमया त्रिसमया वा तावदसौ मृतो जात्ववक्रं यावत् समयद्वयं कालतः पूर्णमेव समयत्रयमपीत्यत आह—**प्रतिघाताभावात्** । को वा नियमोऽवग्रहत्र-

अविग्रहे हेतुः

यात् परतोऽन्यो विग्रहो नास्तीति चत्वारि पञ्च वा वक्राणि विधाय किमिति नोत्पत्तिस्थानमाप्नोतीति ? । उच्यते—**विग्रहनिमित्ताभावाच्च,** येन हि

---

१ अपर्याप्तसूक्ष्मपृथ्वीकायिको भदन्त ! अधोलोकक्षेत्रनाड्या बहिःक्षेत्रे समवहतः समवहत्य यो भव्य ऊर्ध्वलोकक्षेत्रनाड्या बहिःक्षेत्रे अपर्याप्तसूक्ष्मपृथ्वीकायिकतयोत्पद्येत स भदन्त ! कतिसामयिकेन विग्रहेणोत्पद्येत ? गौतम ! त्रिसामयिकेन वा चतुःसामयिकेन वा विग्रहेणोत्पद्येत ।

यत् स्थानमाप्नव्यमृज्वा गत्या स तदविश्राम्यन्नन्तराले स्वभावादेव केनचिदप्रतिहतः प्रतिघातहेतुना तदवश्यं प्राप्नोति, किं तत्र द्वितीयादिसमयकल्पनया ? अतः प्रतिघाताभावात् अन्तराले तस्यैकसमयैव भवति । अपरे वर्णयन्ति–सिद्ध्यमानगतेरेव प्रतिघाताभावः, प्रतिघातकं हि कर्म, तदभावादित्यर्थः, तथा जन्तुनैकविग्रहया गत्या यत् स्थानं यातव्यं तदसौ समयद्वयेनैव प्राप्नोति, उपपातक्षेत्रवशात्, न ततोऽपि श्रेण्यन्तरमाक्रामयतीति, अतो विग्रहनिमित्ताभावादुच्यते विग्रहनिमित्त उपपातक्षेत्रवश इति, एवं द्वित्रिविग्रहयोर्योजनीयम् । अन्ये प्ररूपयन्ति–गतेर्निमित्तं कार्मणशरीरं, तत्सन्तानव्युच्छेदश्च विग्रहनिमित्ताभाव इति ॥ एवं गतिनियममावेद्य अधुना विग्रहशब्दार्थं पर्यायान्तरैरादर्शयति– विग्रहणं– **विग्रहः–वक्रितं–**कुटिलमित्यर्थः ।

विग्रहशब्दस्य पर्यायाः

पुनरप्यपरितुष्यन् विशेषप्रतिपिपादयिषया आह–**विग्रहोऽवग्रहः श्रेण्यन्तरसङ्क्रान्तिरित्यनर्थान्तरम्** । विग्रहः कः ? अवग्रहः, ऋजुताया अवच्छेद इत्यर्थः, तथा श्रेणेरन्या श्रेणिः श्रेण्यन्तरं, तत्र सङ्क्रान्तिस्तदवाप्तिरिति, आलेखिते चतुरस्राकाशप्रतरे बिन्दुकश्रेणिभिः समस्तमिदमनुभवमारोहति । एवमेषामर्थो विग्रहशब्दार्थादनर्थान्तरमर्थराशिरित्युपसंहृतः । अथेदानीं पुद्गलानामप्यतिदेशं कुर्वल्लाँघवार्थमाह–**पुद्गलानामप्येवमेव** । यथा संसारिणां चतस्रो गतयः सम्भावितास्तथा पुद्गलानामपि परमाण्वादीनां विस्रसाप्रयोगाभ्यामाभावनीयाः । अन्तर्गतावयं कालनियमो विग्रहनियमश्च प्रतिपादितः । अधुना भवस्थानामेव शरीरिणां या गतिः सा कथमिति ? उच्यते–**शरीरिणा**मित्यौदारिकाद्यपेक्ष्योक्तम्, अन्यथाऽन्तरगतावपि कार्मणशरीरयोगाद् वपुष्मानेवेति न साधुः स्यात् । चशब्देनान्तर्गतिवर्तिनो जीवाः समुच्चीयन्ते पुद्गला वा, शरीरिणां च जीवानामेव गतिर्भवति **विग्रहवती चाविग्रहा च**, न कश्चिद् भेदः । सविग्रहाविग्रहसम्भावनायां

वक्रगतौ हेतुः

**प्रयोगपरिणामवशादिति** गतेः कारणमाह । स्वप्रयत्नापेक्षो वाऽसौ तथा गच्छति परप्रयत्नापेक्षो वा कृष्यमाण इति प्रयोगपरिणामवशात् उच्यते । परिणामो विस्रसास्वभावः प्रयत्ननिरपेक्षस्तद्वशाद् वा तथा गच्छति । अथवा प्रयोग एव परिणामस्तद्वशादिति शरीरिणामप्येवमेवेत्यतिदिष्टम्, अतस्तस्य देशापवादः प्रदर्श्यते–**न तु तत्र विग्रहनियम इति** । नैव तत्र–शरीरिषु विग्रहा नियम्यन्ते अल्पे वा बहवो वा यथोक्तविग्रहेभ्य इति ॥ २९ ॥

**भा०—अत्राह–अथ विग्रहस्य किं परिमाणमिति ?। अत्रोच्यते–क्षेत्रतो भाज्यम्, कालतस्तु ॥**

**टी०—अत्राहेत्यादिः** सम्बन्धग्रन्थः । अविग्रहवद्गतिविचारप्रस्तावे पर आह—**अथ विग्रहस्य किं परिमाणमिति ?** । अथेत्यनेन पूर्वक्रियानन्तर्यमावेदयति, विग्रहो वक्रं तस्य किं परिमाणं, प्रमाणमित्यर्थः, कियता कालेन विग्रहो जायत इति प्रश्नार्थः, अत्र प्रश्नेऽभिधीयते निर्णय इत्यत आह—**क्षेत्रतो भाज्यम्, कालतस्तु** ॥

## सूत्रम्—एकसमयोऽविग्रहः ॥ २–३० ॥

**टी०—क्षेत्रतो भाज्यमे**कादिप्रदेशभावित्वात् क्षेत्रतो विग्रहपरिमाणं भाज्यम्, कुतः? संहारविसर्गधर्मात्मकत्वाज्जीवप्रदेशानाम्, पूर्वशरीरावगाहनक्षेत्रादुपपातव्यपेताद्, एकादिप्रदेशादिकं चोपपातक्षेत्रमध्यवसातव्यम्, एकादिप्रदेशान्तरितं वा, लोकान्ताल्लोकान्तमिति वा, कालतः पुनर्नियतपरिमाण एव विग्रहो भवति ॥

**भा०—एकसमयोऽविग्रहो भवति। अविग्रहा गतिरालोकान्तादपि एकेन समयेन भवति, एकविग्रहा द्वाभ्याम्, द्विविग्रहा त्रिभिः, त्रिविग्रहा चतुर्भिरिति। अत्र भङ्गप्ररूपणा कार्येति ॥ ३० ॥**

विग्रहे समयमानम्

**टी०—एकसमयोऽविग्रहो भवती**त्यादि भाष्यम्। एकोऽन्यनिरपेक्षः अविभागी यः कालः परमनिरुद्धश्च समयः स एकः समयो यस्य व्यवधायकः स एकसमयो भवतीह विग्रहः। एतदुक्तं भवति–भवान्तरालवर्तितायां जन्तोर्गतिपरिणतस्यैकेन समयेनातिक्रान्तेन वक्रा गतिर्जायत इति, न चायं नियमः, सर्वस्यावश्यं समयातिक्रमे वक्रेण भवितव्यम्, किन्तु पूर्वापरसमयावधिक[1] एष विग्रहः, तेन द्वित्रिचतुःसमयासु गतिषु भवति, नैकसमयायाम्, अपिच यत्र विग्रहस्तत्रैकसमयत्वमुपलक्षणम्, न पुनः एकसमयपरिमाणे काले व्यवच्छिन्ने सर्वत्र विग्रहेण भवितव्यम्, या हि ऋज्वी गतिर्न तस्यां विग्रहोऽस्ति, अथ चैकसमयेति। सम्प्रति नियतकालपरिमाणामेकसमयां गतिं क्षेत्रतो भाज्यतया दर्शयति–**अविग्रहा गतिरालोकान्तादपि एकेन समयेन भवति**, ऋज्वी गतिः क्षेत्रमङ्गीकृत्य कदाचिदव्यवहितश्रेण्यन्तरमात्र एव विरमति जन्तोरुत्पादवशात्, कदाचिच्छ्रेणिद्वयमतिक्रम्योपरमति आलोकान्ताद् वा सिद्ध्यमानस्य भवतीत्येकसमयपरिमाणभेदवर्ति, सर्वत्र गतिविशेषात्, यथा देवदत्तयज्ञदत्तयोरेकः प्रहरेण त्रीणि योजनानि छिनत्ति, अपरो योजनमध्यर्धं यातीति, एवं तावदवक्रा गतिरेकेन समयेन भवतीति निरूप्य अविग्रहपरिमाणं चाख्याय विग्रहप्रमाणत एव सुज्ञानसमयसङ्ख्या एकद्वित्रिवक्रा गतीराख्याति[2], **एकविग्रहा द्वाभ्याम्**, एको विग्रहो यस्यां सैकविग्रहा पूर्वापरसमयावधिकत्वात् विग्रहस्य सामर्थ्यान्निश्चीयते द्वाभ्यां समयाभ्यां निष्पाद्यत एकविग्रह इति। एवं द्वित्रिविग्रहयोरपि वाच्यम्॥ अथैकस्यां नरकादिगतौ विवक्षितायां ये प्राणिनस्तत्र नरक उत्पत्स्यन्तेऽन्तर्गतिवार्तिनस्ते किं सर्वेऽपि विग्रहगत्या एकस्मिन् काले उत्पद्यन्ते, अथ अविग्रहया, उत द्वाभ्यामिति? अत आह–**अत्र भङ्गप्ररूपणा कार्या[3]**, अत्रैवंविधविचारप्रस्तावे भङ्गाः–विकल्पाः तेषां प्ररूपणा–विभावना कार्या। सा चैवं कार्या–नारकाः कदाचित् सर्व एव विग्रहगतयो भवन्ति, अथवा अविग्रहगतयश्च, विग्रहगतिश्चैकः स्यात्, अथवा अविग्रहगतयो विग्रहगतयश्चेति, एतेन विकल्पत्रयेणैकेन्द्रियान् विहाय शेषा

---

१ 'समयोपाधिक' इति ग–पाठः। २ 'गतिराख्याति' इति क–ख–पाठः। ३ 'कर्तव्या' इति क–ख–पाठः।

व्याख्याताः, एकाद्युपपादोपपत्तेर्यावत् स्वसङ्ख्यानियम इति, एकेन्द्रियास्तु नित्यमविग्रहगतयो विग्रहगतयश्चापदिश्यन्त इति ॥ ३० ॥

उक्तो विग्रहः। अथ विग्रहगतिसमापन्ना जीवाः किमाहारकाः अनाहारका इति ? अनाहारका इत्याह, यद्यनाहारकाः एवं तर्हि कियन्तं कालमिति वक्तव्यमिति, उच्यते—

**सूत्रम्–एकं द्वौ वाऽनाहारकः ॥ २–३१ ॥**

विग्रहेऽनाहारकता

**भा०—विग्रहगतिसमापन्नो जीवः एकं वा समयं द्वौ वा समयावनाहारको भवति, शेषं कालमनुसमयमाहारयति। कथमेकं द्वौ वाऽनाहारकौ न बहूनीति, अत्र भङ्गप्ररूपणा कार्या ॥ ३१ ॥**

टी०—**विग्रहगती**त्यादि भाष्यम्। उक्ता विग्रहगतिस्तां **समापन्नः**—अनुप्राप्तो **जीवः** सामर्थ्याद्—विग्रहापेक्षत्वाद् द्विविग्रहां त्रिविग्रहां वाऽनुप्राप्तो गृह्यते, तत्र द्विविग्रहायामेकं समयं मध्यमं त्रिविग्रहायां **द्वौ समयावनाहारकौ** मध्यमौ **भवति**। अनन्तरसूत्रात् समयग्रहणमनुवर्तते, वाशब्दो विकल्पार्थः कदाचिदेकं कदाचिद् द्वाविति। अपरे वाशब्दात् त्रीन् वा समयाननाहारको भवतीति व्याचक्षते, तं[1] च केवलिनमादर्शयति समुद्घातकाले त्रिचतुर्थपञ्चमसमयेषु, तदत्यन्तासम्बद्धम्, विग्रहगतिसमापन्नो जीव इत्येवंविधे भाष्यप्रक्रमे कः प्रस्तावः केवलिसमुद्घातानाहारककालस्य? अथाप्रस्तुतमप्यत्रावश्यं वक्तव्यं भाष्यादुत्तीर्य, ततोऽन्तर्मुहूर्तार्धे शैलेश्यवस्थायामनाहारक इति किं नोक्तम्? सादिकमनिधनं कालं सिद्धोऽनाहारक इति वा, अतः प्रस्तावापास्तत्वान्न विद्वन्मनांस्याराधयत्येतद् व्याख्यानम्। यदि पुनः पञ्चसमयायां गतौ वाशब्देन समयत्रयं समुच्चीयते? उच्यते—अभिहितं प्राक् न तादृश्यां गत्यां कश्चिदुपपद्यते, अथास्ति सम्भवः, न कश्चिद् दोषः॥ अथ किमाहारकविशेषमङ्गीकृत्य अनाहारकत्वमाख्यायते सूरिणा उत सर्वाहारनिषेध इति? सर्वाहारनिषेध इत्याह, कति वाऽऽहाराः? ननु त्रयः, ओजआहारो लोमाहारः प्रक्षेपाहार इति, तत्रौजआहारोऽपर्याप्तकावस्थायां कार्मणशरीरेणाम्बुनिक्षिप्ततप्तभाजनवत् पुद्गलादानं सर्वप्रदेशैर्यत् क्रियते जन्तुना प्रथमोत्पादकाले योनौ अपूपेनेव[2] प्रथमकालप्रक्षिप्तेन घृतादेरिति, एष च आन्तर्मुहूर्तिकः। लोमाहारस्तु पर्याप्तकावस्थाप्रभृति यत् त्वचा पुद्गलोपादानमाभवक्षयाच्च सः। प्रक्षेपाहारः ओदनादिकवलपानाभ्यवहारलक्षणः। अतोऽत्राहारत्रयमपि प्रतिषिध्यते, भवस्थतायामेव त्रितयाभ्यनुज्ञानात्। प्रथमान्त्यसमययोरन्तर्गतौ च्युतजन्मदेशस्थत्वादाहारक एव, पूर्वोत्तरशरीरपरित्यागादानकालाभेदवर्तित्वात्, कर्मपुद्गलादानं पुनर्योगकषायहेतुकमन्तर्गतावपि सर्वत्र सर्वकालमस्ति, वर्षणसमये समादीप्तनाराचप्रक्षेपवत्, तद् यथा जलधारा-

वाशब्दस्य विचारः

आहारस्य त्रैविध्यम्

---

१ 'स च' इति क–ख–पाठः। २ 'अपूपेनैव' इति क–ख–पाठः।

सन्निपातापादितसामर्थ्ये वर्षति पर्जन्ये नाराचद्रव्यं ज्याहस्तविप्रयोगाहितवेगमग्निज्वालाकलापादीप्तमम्भःपुद्गलग्रहणं कुर्वदेव गच्छति, एवमयमन्तरात्मा कार्मणेन शरीरेण कर्मोष्णत्वात् पुद्गलग्रहणं कुर्वन्नविच्छिन्नमागामिजन्मनेऽभिधावतीति, न खल्वेवंरूपस्य पुद्गलादानस्य प्रतिषेधः, किन्तु परिपोषहेतुको य आहार औदारिकवैक्रियशरीरद्वयस्य स विवक्षितः प्रतिषेध्यत्वेनेति, अतोऽन्तर्गतावेकं समयं समयद्वयं वाऽनाहारकः, **शेषं कालमनुसमयमाहारयति** एकद्विसमयव्यतिरिक्तः शेषकालमाहारमभ्यवहरति । अत्यन्तसंयोगप्रदर्शनार्थमनुसमयमित्युक्तम् । अनुसमयमविच्छेदेन, प्रतिसमयमित्यर्थः । उत्पत्तौ प्रथमसमयादारभ्यान्तर्मुहूर्तिक ओजआहारः, पश्चादाभवक्षयाल्लोमाहारः, कावलिकस्तु कादाचित्कः । **कथमेकं द्वौ वे**त्यादि, केन प्रकारेणैकं द्वौ वा समयावनाहारको जन्तुर्न पुनरतोऽपि **बहून्** समयानित्यत्र प्रश्ने विकल्पानां विभावना **कार्या**, सा च कृतैव द्विविग्रहायामेकं त्रिविग्रहायां द्वाविति।

जन्मसूत्रे प्रस्तावना

**भा०—अत्राह—एवमिदानीं भवक्षये जीवः अविग्रहया विग्रहवत्या वा गत्या गतः कथं पुनर्जायत इत्यत्रोच्यते—उपपातक्षेत्रं स्वकर्मवशात् प्राप्तः शरीरार्थं पुद्गलग्रहणं करोति। सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते** (अ० ८, सू० २) **इति। तथा कायवाङ्मनःप्राणापानाः पुद्गलानामुपकारः** ( अ० ५, सू० १९ )**। नामप्रत्ययाः सर्वतो योगविशेषात्** (अ० ८, सू० २५) **इति वक्ष्यामः। तज्जन्म, तच्च त्रिविधम्, तद्यथा—**

**टी०—अत्राहे**त्यादिः सम्बन्धग्रन्थः। अत्रावसरे शिष्यः पृच्छत्यजानानः—**एव**मुक्तेन प्रकारेण **इदानी**मिति, सर्वसंसारिणां स्वजीवितव्यवच्छेदविशिष्टं कालमामृशति **भवक्षये** इति, प्रागुपात्तौदारिकवैक्रियशरीरपरिक्षये सति, ऋज्वा वक्रया वा गत्या **गत** उपपत्तिदेशं प्राप्तो जीवः, केन प्रकारेण **पुनर्जायत** इति। पुनःशब्दः प्राक्तनजन्मापेक्षः, जायते—प्रादुर्भवति, औदारिकवैक्रियशरीरितयोत्पद्यत इतियावत्। अत्र **उच्यते—उपपातक्षेत्रं स्वकर्मवशात् प्राप्तः शरीराद्यर्थं पुद्गलग्रहणं करोति,** यस्मिन् क्षेत्रे उत्पत्स्यते तदुपपातक्षेत्रमवकाशस्थानमाश्रय इति पर्यायाः, तत्प्राप्तः **स्वकर्मवशा**दिति, पूर्वोपात्तकर्मपरिणतिसामर्थ्यादेव विहाय प्राणान् भवान्तरमासादयति नेश्वरादिप्रेरित इति सूचयति। सर्वं हि तस्य कर्माण्येव तदा निष्पादयन्ति, उत्पत्तिस्थानमृजु गन्तव्यमनेन वा मार्गेण यातव्यमस्यां वा वेलायां प्रवर्तितव्यमस्मिन् वा योन्यन्तरे मयोत्पत्तव्यं नान्यत्रेत्येतदशेषमचिन्त्यसामर्थ्यभाञ्जि कर्माण्यात्मपरिणामापेक्षाणि प्रसाधयन्ति, न पुनरन्तरालवर्तितायामुदीक्ष्यमाणस्तिष्ठति वेलाम्, नापि सभागसन्ततिपतितान् सत्त्वान् क्रीडतो रिरंसयाऽनुप्रविशति, असमञ्जसत्वात्, अतः कर्मानुभावादनुप्राप्त औदारिकवैक्रियशरीरनिष्पत्तये पुद्गलानां तत्प्रायोग्यानामादानं करोति।

१ 'शरीरक' इति क-ख-पाठः।

अथ कथमस्य ते पुद्गलास्तद्योग्या ग्रहणमागच्छन्ति, केन हेतुना लगन्त इतियावत्, अत आह–'**सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते**' ( अ० ८, सू० २ ), सकषायत्वाल्लगन्ति ते पुद्गलाः, स्नेहाभ्यक्तशरीरे रेणुलगनवत्, एतदष्टमेऽभिधास्यते विस्तरेण, तथा पञ्चमेऽपि द्रव्योपकारप्रस्तावेऽध्येष्यते–**कायवाङ्मनःप्राणापानाः पुद्गलानामुपकारः** ( अ० ५, सू० १५ ) इति। शरीराणि पञ्चविधान्यौदारिकादीनि पुद्गलानामुपकार इत्यतोऽपि ते पुद्गलास्तथाश्लेषात् तथा परिणमन्ते तस्यामवस्थायामिति, प्रपञ्चत एतत् प्रतिपादयिष्यते तत्रैव। तथाऽष्टमे–'**नामप्रत्ययाः सर्वतो योगविशेषात्**' ( अ० ८, सू० २५ ) सूक्ष्मा एकक्षेत्रावगाढाः स्थिताः सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशा इति प्रदेशबन्धविचारे वक्ष्यते। बन्धननामकर्मोदयहेतुतः कर्मपुद्गलग्रहणमिति आद्योपपत्तिर्बन्धसामान्ये, मध्यमा उपकारभेदविवक्षाद्वारेण, अन्त्या प्रदेशबन्धप्रस्तावाकृष्टेत्यतस्तिसृणामपि सूचनम्, न पुनरभिन्नैकवस्तुसन्निपातिन्यस्तिस्रोऽपि, पुनरुक्तदोषप्रसक्तेः, इदं च स्वस्थान एवोपपत्तित्रयमपि विविक्तमुन्मीलिष्यतीति नोत्त्रसितव्यम्, अतो यत् तदेवंविधं पुद्गलग्रहणं **तज्जन्म**, **तच्च त्रिविधम्**, आश्रयग्रहणभेदात् तत्त्रैविध्यं दर्शयितुकामस्तद्यथेत्यनेनोपक्रमते ॥ ३१ ॥

## सूत्रम्—सम्मूर्च्छनगर्भोपपाता जन्म ॥ २–३२ ॥

जन्मभेदाः

**भा०—सम्मूर्च्छनं १ गर्भ २ उपपात ३ इत्येतत् त्रिविधं जन्म** ॥ ३२ ॥

**टी०—सम्मूर्च्छनगर्भोपपाता जन्म। सम्मूर्च्छनं गर्भ उपपात इत्येतत् त्रिविधं जन्मे**त्येतावद् भाष्यमस्य सूत्रस्य। अत्र सम्मूर्च्छामात्रं सम्मूर्च्छनम्, यस्मिन् स्थाने स उत्पत्स्यते जन्तुस्तत्रत्यपुद्गलानुपसृज्य शरीरीकुर्वन् सम्मूर्च्छनं जन्म लभते, तदेव हि तादृक् **सम्मूर्च्छनं** जन्मोच्यते।

सम्मूर्च्छनजन्मनो व्याख्या

जन्म च शरीरद्वयसम्बन्धित्वेनात्मनो यः परिणामः, अतस्तत् सम्मूर्च्छनजन्मोत्पत्तिस्थानवर्तिपुद्गलजालमनुपमृद्य न प्रादुरस्ति, किण्वाद्युपमर्दनात् सुराजन्मवत्, पिष्टकिण्वोदकादीनामुपमर्दनात् सुराया जन्म दृष्टम्, तथा बाह्यपुद्गलानामाध्यात्मिकानां चोपमर्दनाद् यज्जन्म भवति तत् सम्मूर्च्छनजन्म व्यपदिश्यते, बाह्यपुद्गलोपमर्दनलक्षणं तावद् यथा कृम्यादीनां काष्ठादिषु, काष्ठत्वक्पक्वफलादिषु जीवाः कृम्यादयः समुपजायमानाः तानेव काष्ठफलत्वग्वर्तिनः पुद्गलान् शरीरीकुर्वन्त उपजायन्ते, तथा जीवद्गवादिशरीरेषु कृम्यादयः प्रादुःष्यन्तस्तानेव जीवद्गवादिशरीरावयवानादाय स्वशरीरतया परिणति-

---

१ 'कथमस्मात् पुद्गलात् तद्योग्या' इति क–पाठः। २ 'मनुपसृज्य न प्रादु' इति ख–पाठः।

मापादयन्तीत्याध्यात्मिकपुद्गलोपमर्दनलक्षणमेतज्जन्म, प्रत्यक्षं चैतत्, प्रायस्तत्र गर्ताद्युपलब्धेः । तथा योषिद्योनावैकध्यमागत्य ग्रहणं शुक्ररक्तयोर्यत् क्रियते जीवेन जनन्यभ्यवहृताहाररसपरिपोषापेक्षं तद् गर्भजन्मोच्यते, अत्रापि गर्भ एव जन्म प्रतिपत्तव्यम् । इदं पूर्वजन्मनो भिन्नलक्षणम्, आगन्तुकशुक्रशोणितग्रहणात्, न खलु योषिद्योनेस्तदेव शुक्रशोणितं स्वरूपमतोऽस्ति भेदः । तथा उपपातक्षेत्रप्राप्तिमात्रनिमित्तं यज्जन्म तदुपपातशब्देनोच्यते, यथा प्रच्छदपटस्योपरिष्टाद् देवदूष्यस्याधस्तादत्रान्तरालवर्तमानान् पुद्गलान् वैक्रियशरीरतयाऽऽददानो देवः समुद्भवति, इदं च पूर्वाभ्यां भिन्नलक्षणम्, नहि प्रच्छदपटदेवदूष्यपुद्गलानेवासौ शरीरीकरोति, नापि शुक्रादिपुद्गलानाददान उत्पद्यते, तस्मात् प्रतिविशिष्टक्षेत्रप्राप्तिरेवास्य जन्मनो निमित्तं भवति, तथा नारकाणां नरककुड्यव्यवस्थितातिसङ्कुटमुखनिष्कुटा वातायनकल्पा योनिस्तत्र वैक्रियशरीरपुद्गलानादाय निष्पीड्यमाना वज्रमयनरकतले जलमध्यक्षिप्तपाषाणवन्महता वेगेन प्रतिपतन्ति । एवमेतत् त्रिविधं जन्म वेदितव्यमात्मनः शरीरतयात्मलाभ इति । अपरे वर्णयन्ति—सम्मूर्च्छनमेवैकं सामान्यतो जन्म, तद्धि गर्भोपपाताभ्यां विशेष्यत इति ॥ ३२ ॥

(गर्भजन्मनो विचारः) (उपपातजन्मनः स्वरूपम्)

अत्र च सम्मूर्च्छनमादौ, प्रत्यक्षबहुस्वामित्वात्; तदनु गर्भः, प्रत्यक्षौदारिकशरीरसाधर्म्यात्; तत उपपातः, स्वामिवैधर्म्यात्, इति । उक्तं जन्म प्रादुर्भावमात्रं शरीरिणाम्, न तु प्रतिविशिष्टस्थाननिर्देशः कृतः, कीदृशि पुनः स्थाने प्रथमत उत्पद्यमानाः सम्मूर्च्छन्ति, शुक्रासृग्ग्रहणं वा कुर्वन्ति, वैक्रियशरीरं वा समाददते, किंगुणे धामनि नारकदेवा इति ? अतस्तेषां जन्मनां विशिष्टस्थाननिरूपणाय योनयोऽभिधीयन्ते—

(अनन्तरसूत्रसम्बन्धः)

## सूत्रम्—सचित्तशीतसंवृताः सेतरा मिश्राश्चैकशस्तद्योनयः ॥२–३३॥

**भा०—संसारे जीवानामस्य त्रिविधस्य जन्मन एताः सचित्तादयः सप्रतिपक्षा मिश्राश्चैकशो योनयो भवन्ति । तद्यथा—सचित्ता, अचित्ता, सचित्ताचित्ता, शीता, उष्णा, शीतोष्णा, संवृता, विवृता, संवृतविवृता, इति । तत्र नारकदेवानामचित्ता योनिः । गर्भजन्मनां मिश्रा । त्रिविधाऽन्येषाम् । गर्भजन्मनां देवानां च शीतोष्णा । तेजःकायस्योष्णा । त्रिविधाऽन्येषाम् । नारकैकेन्द्रियदेवानां संवृता । गर्भजन्मनां मिश्रा । विवृताऽन्येषामिति ॥**

(जन्मिनां योनिनवकम्)

१ 'देवनारकानां' इति घ–पाठः ।

टी०—अथवाऽयमात्मा पूर्वभवशरीरनाशे तदनु शरीरान्तरप्राप्तिस्थाने यान् पुद्गलान् शरीरार्थमादत्ते तान् कार्मणेन सह मिश्रयति तप्तायःपिण्डाम्भोग्रहणवच्छरीरनिर्वृत्त्यर्थं बाह्यपुद्गलान् यस्मिन् स्थाने तत् स्थानं योनिस्तत्प्रविभागार्थमिदमुच्यते—**सचित्तेत्यादि**। **संसारे जीवानामित्यादि**। अष्टप्रकारकर्मवर्तिनां जन्तूनाम्, **अस्य** अनन्तरसूत्रनिर्दिष्टस्य **त्रिभेदस्य** सम्मूर्च्छनादेः। **जन्मन** इत्यनेन च **तद्योनय** इति सूत्रावयवार्थमाचष्टे, तस्य जन्मनो योनयस्तद्योनय इति, **एताः सचित्तादयः,** एता इति प्रत्यक्षासन्नाः सचित्तशीतसंवृतास्तिस्रः, **सप्रतिपक्षाः,** सह प्रतिपक्षैरचित्तोष्णविवृतैः सप्रतिपक्षाः, प्रतिक्रुष्टः प्रत्यनीको वा पक्षः प्रतिपक्षः, **मिश्राश्च** एतद्द्वयमेकीभूतं मिश्रमुच्यते, तच्चोक्तमेव द्वयं गृह्यते प्रस्तावान्न तु तद्व्यतिरिक्तं सचित्तादित्रयमचित्तादित्रयं च एतदेवोभयं मिश्रीक्रियते, यस्य च मूलभेदस्य यत् प्रतिपक्षत्वेन निर्दिष्टं तयोर्द्वयोर्मिश्रणम्, **तद्यथा—सचित्ताचित्ता,** शीतोष्णा, संवृतविवृता, **चशब्दः** समुच्चये, एकैका **एकशः**, एकैका सेतरा सचित्तादीनाम्, एकैका च मिश्रा स्वप्रतिपक्षेणैव, एवमेता नव योनयो भवन्ति।

योनिलक्षणम्

योनिशब्दस्यार्थः

युवन्ति—मिश्रीभवन्ति यत्र स्थाने जन्महेतुद्रव्याणि कार्मणेन सह तद्योनिः, तच्च[1] स्थानमाश्रयभावेन यूयत इति योनिः। अमुमेवातिक्रान्तमर्थं स्पष्टयन्नाह—**तद्यथा—सचित्तेत्यादि**। विशिष्टप्रतिपक्षदर्शनार्थं मिश्रार्थप्रतिपादनार्थं चेदं भाष्यम्। **सचित्ता** जीवप्रदेशाधिष्ठिता १ **अचित्ता** तद्विपरीता २ **सचित्ताचित्ता** प्रस्तुतद्वयस्वभावमिश्रा ३ **शीता** शिशिरा १ तद्विपरीतोष्णा २ उभयस्वभावा **मिश्रा** ३ **संवृता** प्रच्छन्ना सङ्कटा वा १ तद्विपरीता **विवृता** २ **मिश्रो**भयस्वभावा ३ एतावत्यो योनयः।

सम्प्रति जन्मभाजां विभज्यन्ते कस्य का योनिर्भवतीत्याह—**तत्र** आसां मध्ये योनीनां **देवनारकाणामचित्ता योनिर्भवति,** शेषा व्युदस्यन्ते देवानां प्रच्छदपटदेवदूष्यान्तरालं योनिस्तच्चाचेतनं, न जीवप्रदेशाधिष्ठितम्, नारकाणां तु वज्रमयनरककुडचेषु वातायनकल्पा योनयो भवन्त्यचेतनाः, **गर्भजानां मिश्राः** तिर्यञ्चो मनुष्याश्च गर्भजन्मभाजस्तेषां मिश्राः, प्रागचित्तायाः प्रस्तुतत्वात् सचित्ताचित्तेत्यर्थः।

कस्य का योनिः

योषितां किल नाभेरधस्तात् सिराद्वयं पुष्पमालावैकक्ष्यकाकारमस्ति, तस्याधस्तादधोमुखसंस्थितकोशाकारा योनिस्तस्याश्च बहिश्चूतकलिकाकृतयो मांसमञ्जर्यो जायन्ते, ताः किलासृक् स्फुटित्वा ऋतौ स्रवन्ति, तत्र केचिदसृजो लवाः कोशकाकारां योनिमनुप्रविश्य सन्तिष्ठन्ते, पश्चाच्छुक्रसम्मिश्राँस्तानाहारयन् जीवस्तत्रोत्पद्यते, तत्र ये योन्याऽऽत्मसात्कृतास्ते सचित्ताः कदाचिन्मिश्रा इति, ये तु न स्वरूपतामापादितास्तेऽचित्ताः,

योषिद्योनिविचारः

---

१ 'तद्वा' इति क-ख-पाठः।

अपरे वर्णयन्ति—असृक् सचेतनं शुक्रमचेतनमिति, अन्ये ब्रुवते—शुक्रशोणितमचित्तं योनि-प्रदेशः सचित्त इत्यतो मिश्रा । **त्रिविधाऽन्येषामिति** । देवनारकगर्भव्युत्क्रान्तितिर्यङ्-मनुष्यव्यतिरिक्तानां सम्मूर्च्छनजन्मनां तिर्यग्मनुष्याणामित्यर्थः । तेषामनियमेन कदाचित् सचित्ता कदाचिदचित्ता कदाचिन्मिश्रेति, यथा गोकृम्यादीनां सचित्ता, काष्ठघुणादीनामचित्ता, केषाञ्चित् पूर्वकृतक्षते समुद्भवतां मिश्रेति ॥ अधुना शीतादित्रिकं विभजते[1]—**गर्भजन्मनां देवानां च शीतोष्णा** गर्भव्युत्क्रान्तीनां तिर्यग्मनुष्याणां देवानां चोभयस्वभावा स्वभावादेव जायते, देवानां साधारणा सुखबहुलत्वात् क्षेत्रानुभावाच्च, तेजसः उष्णाऽत्यन्तप्रसिद्धैव । **त्रिविधाऽन्येषाम्** । अन्येषामिति गर्भव्युत्क्रान्तितिर्यग्मनुष्यदेवतेजोव्यतिरिक्तानां सम्मूर्च्छ-नजन्मतिर्यग्मनुष्यनारकाणाम्, सम्मूर्च्छनजतिर्यग्मनुष्याणां कस्यचिच्छीता कस्यचिदुष्णा कस्यचिदुभयस्वभावा, स्थानविशेषादिति, नारकाणामाद्ये पृथिवीत्रये प्रकृष्टोष्णा, चतुर्थ्यां क्वचिन्नरके शीता क्वचिदुष्णा तथा पञ्चम्याम् । कथं पुनर्भिन्नाधारोभयस्वभावा स्यात्? उच्यते—एकस्यां पृथिव्या-मुभयमस्तीति न भिन्नाधारत्वम् ॥ ननु तत्रापि नारकभेदवर्तित्वादनुभयस्वभावत्वमेवेति ? उच्यते—चतुर्थपञ्चमपृथिवीनारकाणामुभयस्वभावेति सामान्याभिधानाददोषः । पाश्चात्ययो-र्द्वयोः प्रकृष्टशीता, न त्वेषां साधारणाऽस्ति दुःखात्मकत्वात्, यद्यप्यविशेषेणोक्तं त्रिविधाऽन्ये-षामिति तथापि यथासम्भवमत्र विभागः ।

नारकादिषु योनिविभागः

संवृतादित्रयविभागार्थमाह—**नारकैकेन्द्रिय-देवानां संवृता** । नारकाणां पृथिव्यप्तेजोवायुवनस्पतीनां च सहदेवानां सङ्कुटा, प्रच्छन्ने-त्यर्थः । नारकाणां वज्रमयनरककुड्यव्यवस्थितत्वात् सङ्कुटा सती प्रवर्धमानवपुषामति-दुःखा, देवानां पुनः ( प्रच्छन्ना अपि )[2] प्रच्छदपटदेवदूष्यान्तरालवर्तिनी समुच्छ्वसच्छरीर-भाजां सोच्छ्वासत्वादेव न दुःखा, पृथिव्यादीनां केषांचित् कथञ्चिदवगन्तव्या । **गर्भजानां मिश्रा** गर्भव्युत्क्रान्तितिर्यग्मनुष्याणां संवृतविवृता सङ्कुटप्रकाशेत्यर्थः। **विवृताऽन्येषां** नार-कैकेन्द्रियदेवगर्भव्युत्क्रान्तितिर्यङ्मनुष्यव्यतिरिक्तानां सम्मूर्च्छनजद्वीन्द्रियादितिर्यङ्मनुष्या-णामित्यर्थः । तेषां विवृता, अतिप्रकाशत्वात् ॥ अथ कथं योनिलक्षाणामशीतिश्चतुरुत्तरा प्रति-जाति प्रतिपादिता प्रवचने ? । तद् यथा—पृथिव्यप्तेजोवायूनां प्रत्येकं सप्त सप्त योनिलक्षाः, प्रत्येकवनस्पतीनां दश, साधारणानां चतुर्दश, द्वित्रिचतुरिन्द्रियाणां प्रत्येकं द्वे द्वे लक्षे, शेषतिर्यङ्नारकदेवानां प्रत्येकं चतस्रश्चतस्रो लक्षाः,

जीवयोनिसंख्या

मनुष्याणां चतुर्दश, इह तु नव योनयः प्रतिबद्धाः सूत्रे तदेतदतिविप्रकृष्टमन्तरालमुपक्षिपति चेतः संशयदोलायामस्माकमतोऽत्राभिधीयतां समाधिः । अयमुच्यते—नव योनय इति सङ्ग्राहकमेतदासां परिसङ्ख्यानमवसेयम्, विस्तरः प्रतिजाति वक्तव्यः, पृथिवीकायस्य याऽभिहिता योनिः सैव स्वजातिभेदापेक्षया सप्तलक्षपरिमाणा भवति शर्करावालुकादिभेदा

---

१ 'विभज्यते' 'विभजन्ते' इति-ग-टी-पाठौ । २ धनुश्चिह्नितो भागः ग-पाठ एव ।

यावत्यो जातयस्तावद्भेदा योनयोऽपि पृथिवीकायस्येत्यवगन्तव्यम् । न च मूलयोनिमतिवर्तन्ते ताः, किन्तु जातिभेदाद् भिद्यन्त इति, अतः सङ्ग्राहकम्, एवं शेषाणामपि वाच्यम्, स्वजातिभेदापेक्षमेतत् परिमाणमिति ॥ ३३ ॥

अत्राह–उक्तं त्रिविधं जन्म, तत्र न संविद्महे तस्य त्रिविधस्यापि जन्मनः के स्वामिन इति, तद्विभागप्रदर्शनायेदमुच्यते—

## सूत्रम्—जराय्वण्डपोतजानां गर्भः ॥ २–३४ ॥

गर्भजजन्मवतां भेदाः

**भा०—जरायुजानां मनुष्य-गो-महिष्यजाविकाश्व-खरोष्ट्र-मृग-चमर-वराह-गवय-सिंह-व्याघ्रर्क्ष-द्वीपि-श्व-शृगाल-मार्जारादीनाम् । अण्डजानां सर्प-गोधा-कृकलास-गृहकोकिलिका-मत्स्य-कूर्म-नक्र-शिशुमारादीनाम् । पक्षिणां च लोमपक्षाणां हंस-चाष-शुक-गृध्र-श्येन-पारापत-काक-मयूर-मद्गु[1]-बक-बलाकादीनाम् । पोतजानां शल्लक-हस्ति-श्वाविल्लापक-शश-शारिका-नकुल-मूषिकादीनाम्, पक्षिणां च चर्मपक्षाणां जलूका-वल्गुलि-भारण्ड-पक्षिविरालादीनां गर्भो गर्भोज्जन्मेति[2] ॥ ३४ ॥**

**टी०—जराय्वण्डपोतजानां गर्भः** । अत्रायं जनिः प्रत्येकमभिसम्बध्यते, जरायुजानां अण्डजानां पोतजानामिति । जरायुनि जायन्ते स्म जरायुजाः-जरायुमध्यगताः, जरायुवेष्टिता इत्यर्थः । **जरायुजानां मनुष्य-गो-महिष्यादीनामिति** सुज्ञानं भाष्यम् । अण्डे जायन्ते स्माण्डजाः, तेषां **अण्डजानां सर्प-गोधादीनामिति** भाष्यं सुखावबोधमेव । अण्डजजातिभेदप्रदर्शनायेदं भाष्यम् । **पक्षिणां च लोमपक्षाणां हंस-चाषेत्यादि** प्रायो गतार्थम् । लोमप्रधानाः पक्षा येषां ते लोमपक्षाः, अपरे लोमपक्षिणामित्यधीयन्ते न[3] तु च मत्वर्थीयोऽतिदुर्लभः स्याद् वा ज्ञापकादेः कथञ्चित्, अथवा पक्षिण एव विशिष्यन्ते, लोमानुगता लोमप्रधाना वा पक्षिणो लोमपक्षिणस्तत्राद्यपक्षिशब्दः पक्षिसामान्यमावेदयति, इतरस्तु व्यवच्छिद्य विशेषेऽवस्थापयतीति । पोता एव जाता इति पोतजाः शुद्धप्रसवा न जराय्वादिना वेष्टिता इतियावत् । अत्र च "अन्येष्वपि दृश्यन्ते" इति वचनाड्डः, अपरे त्वेतच्छब्दव्युत्पत्तिभीत्या जराय्वण्डजपोतानां गर्भ इत्यभिधीयते[4]–सूत्रमाहितनैपुण्यास्तत् सर्वथा त एवावयन्ति सूरिविरचितन्यासमन्यथाकर्तुम्, वयं तु प्रकृतानुसरणमेव कुर्मः । **पोतजानां शल्लकादीनामित्यादि** भाष्यमतिस्फुटत्वान्न विव्रियते । **पक्षिणां च चर्मपक्षाणामित्यादि** । अत्रापि पूर्ववद् व्याख्या कार्या, शेषमतिस्पष्टमेव । **गर्भो जन्मेति** उक्तलक्षणमेषां प्राणिनामशेषाणां गर्भो जन्म भवतीति ॥ ३४ ॥

---

१ 'मद्ग' इति घ–पाठः । २ 'गर्भो जन्मेति' इति घ–पाठः । ३ 'अत्र च' 'तत्तु च' इति पाठौ विचारणीयौ । ४ 'अभिदधते' इति प्रतिभाति ।

अथेदानीमुपपातजन्मविभक्तये सूत्रमाह—

**सूत्रम्—नारकदेवानामुपपातः ॥ २–३५ ॥**

उपपातजानां भेदाः **भा०—नारकाणां देवानां चोपपातो जन्मेति ॥ ३५ ॥**

**टी०—नारकदेवानामिति** गत्यपेक्षः क्रमव्यपदेशः । अपरे अभिदधते अभ्यर्हितत्वादल्पाच्तरत्वाच्च, यदादावाचार्येण देवा न न्यस्तास्तज्ज्ञापयति जन्मनो दुःखहेतुत्वं तच्च प्रकृष्टं किल नारकेष्विति तेषां नारकाणां देवानां च उक्तलक्षण **उपपातो** जन्म भवति ॥ ३५ ॥

अधुना सम्मूर्च्छनजन्मविभक्तुकाम आह—

**सूत्रम्—शेषाणां सम्मूर्च्छनम् ॥ २–३६ ॥**

**भा०—जराय्वण्डपोतजनारकदेवेभ्यः शेषाणां सम्मूर्च्छनं जन्म । उभयावधारणं चात्र भवति । जराय्वादीनामेव गर्भः, गर्भ एव जराय्वादीनाम् । नारकदेवानामेवोपपातः, उपपात एव नारकदेवानाम् । शेषाणामेव सम्मूर्च्छनम्, सम्मूर्च्छनमेव शेषाणाम् ॥ ३६ ॥**

संमूर्च्छनजा जीवाः

**टी०—शेषाणां सम्मूर्च्छनम् ।** उक्तव्यतिरिक्ताः शेषाः, के पुनरभिहिता जराय्वण्डपोतजनारकदेवा एभ्यः शेषाणां जीवानां पृथिवीजलानलानिलतरुद्वित्रिचतुरिन्द्रियगर्भव्युत्क्रान्तिपञ्चेन्द्रियतिर्यङ्मनुष्याणां सम्मूर्च्छनं जन्माभिहितलक्षणं भवति । शेषग्रहणं लाघवार्थमानन्त्यख्यापनार्थं च जन्मभाजां सूरिणाऽकारि । अथवा सामर्थ्यलभ्यं जन्म शेषाणामतः शेषमर्थाद् भविष्यति तस्मादुभयोर्नियमप्रतिपादनायेदं शेषग्रहणमाश्रीयते । योगत्रयमपि चैतज्जन्मवतां जन्मसङ्करनिवारणार्थमाचार्येण प्राणायीति, अतस्तन्निवारणार्थं परस्परावधारणदिदर्शयिषयाऽऽख्याति—**उभयावधारणं चात्र भवति जराय्वादीनामेव गर्भः, गर्भ एव जराय्वादीनाम्** जराय्वादयो गर्भश्च एतदुभयमस्यावधारणमवच्छेदो भवति । **चशब्द** एवशब्दार्थे । उभयावधारणमेव नान्यतरावधारणमनवधारणं वा । प्रथमोपन्यासेन गर्भोऽवधार्यते जराय्वादयोऽनवधृतास्तेऽनु पाश्चात्योपन्यासेऽवच्छिद्यन्ते—**गर्भ एव जराय्वादीनामिति** । गर्भो जराय्वादीन् न जहाति, जराय्वादयोऽपि गर्भं न त्यजन्तीति समुदायार्थः । एवमितरत्रापि योगद्वये वाच्यमवहितमानसेन । किं पुनः कारणं येनान्तराले योनिसूत्रमधीतं, न जन्मसूत्रानन्तरमेव जन्मविभागः कृत इति ? । उच्यते—जन्मनो योनेश्च यकृत्तकद्वान्तरमित्यस्यार्थस्य ज्ञापनाय जन्मसूत्रानन्तरमेव योनिसूत्रोपन्यास इति ॥ ३६ ॥

अत्राह—तेषु जन्मसु यथोक्तयोनीनां जीवानां कानि शरीराणि कियन्ति वा किंलक्षणानि वा भवन्तीति ? । अत्रोच्यते—

---

१ 'जरायुजादीनाम्' इति घ-पाठः ।

**सूत्रम्—औदारिकवैक्रियाहारकतैजसकार्मणानि शरीराणि ॥२-३७॥**

सूत्र-विचारः

टी०—अत्र केचित् सूत्रावयवमवच्छिद्य शरीराणीति पृथक् सूत्रं कल्पयन्ति, अधिकारार्थमतिबहुवाच्यमेतच्छरीरप्रकरणमतोऽधिकार इति, अत्रोच्यते-गौरवमात्रमपास्यैवमवच्छिन्दानैः सूत्रमन्यन्न किञ्चिदाप्तं स्यात् सूत्रपर्यन्ते हि वर्तमानं शरीरग्रहणं नाधिक्रियते पृथगुपन्यस्तमादावधिकाराय जायत इति काऽत्र युक्तिस्तैराश्रयणीया शरणायेति।

शरीरभेदाः

**भा०—औदारिकं, वैक्रियं, आहारकं, तैजसं, कार्मणमित्येतानि पञ्च शरीराणि संसारिणां जीवानां भवन्ति ॥ ३७ ॥**

औदारिकादिशरीराणां व्युत्पत्तिः

टी०—**औदारिकं वैक्रियमित्यादि**। तत्रोदारं बृहदसारं यद् द्रव्यं तन्निर्वृत्तमौदारिकमसारस्थूलद्रव्यवर्गणासमारब्धमौदारिकप्रायोग्यपुद्गलग्रहणकारणपुद्गलविपाक्यौदारिकशरीरनामकर्मोदयनिष्पन्नम्। एवमितरशरीरेष्वपि वैक्रियादिशब्दप्रक्षेपादेष दण्डको वाच्यः। विक्रिया विकारो बहुरूपतानेककरणं तया निर्वृत्तमनेकाद्भुताश्रयं विविधगुणर्द्धिसम्प्रयुक्तपुद्गलवर्गणाप्रारब्धं वैक्रियम्। शुभतरशुक्लविशुद्धद्रव्यवर्गणाप्रारब्धं प्रति विशिष्टप्रयोजनायाह्रियतेऽन्तर्मुहूर्तस्थित्याहारकम्, कृत्ल्युटो बहुलवचनात्। तेज इत्यग्निः, तेजोगुणोपेतद्रव्यवर्गणासमारब्धं तेजोविकारस्तेज एव वा तैजसमुष्णगुणं शापानुग्रहसामर्थ्याविर्भावनं तदेव यदोत्तरगुणप्रत्यया लब्धिरुत्पन्ना भवति तदा परं प्रति दाहाय विसृजति रोषविषाध्मातमानसो **गोशालादिवत्**, प्रसन्नस्तु शीततेजसाऽनुगृह्णाति। यस्य पुनरुत्तरगुणलब्धिरसती तस्य सततमभ्यवहृताहारमेव पाचयति, यच्च तत् पाचनशक्तियुक्तं तत् तैजसमवसेयम्। कर्मणा निर्वृत्तं **कार्मणम्**, अशेषकर्मराशेराधारभूतं कुण्डवद् बदरादीनामशेषकर्मप्रसवसमर्थं वा यथा बीजमङ्कुरादीनाम्, एषा च किलोत्तरप्रकृतिः शरीरनामकर्मणः पृथगेव कर्माष्टकात् समुदायभूतादित्यतः कर्मैव कार्मणम्। परे नेच्छन्ति स्वार्थप्रत्ययमुपपत्तीश्चाभिदधते, न किल कर्माण्येव कार्मणं ज्ञानावरणादीनां तदाश्रयत्वाच्चक्षुरादिवज्ज्ञानावरणादीनां तदाश्रयभूतकार्मणमाश्रयत्वेन व्यवतिष्ठमानं कथं ज्ञानावरणादिमात्रमेव स्याद्, यथा चक्षुरादीनामौदारिकशरीरमाश्रयकारणमन्यदन्यानि चेन्द्रियाणि तथा कार्मणमपि कर्मभ्योऽन्यद्, यदि च तन्न स्यात् कुण्डभेदाद् बदराणामिवेतस्ततः पतनं स्यात् कर्मणामनिष्टं चैतत्, तस्माद् यदेषामाश्रयकारणं तत् कार्मणं शरीरमिति। उत्पत्तिकारणभेदाच्च पृथक् कर्मभ्यः कार्मणम्, बन्धननामकर्मप्रत्ययं प्रद्वेषादिनिमित्तं च कर्मोत्पद्यत इत्याप्तोपदेशः, शरीराणां तु स्वशरीरनामकर्मोदयादुत्पत्तिरतोऽन्यत्वम्, पाकभेदाच्चान्यत् ज्ञानावरणादि कर्म पच्यमानं मूढताद्युत्पादयति, कार्मणशरीरकारणपाकस्तु कार्मणमेव शरीरमारभते, तस्मादन्यत् पूर्वोत्तरकालं बन्धाविनिवृत्तेश्चान्यत्वं मोहज्ञानावरणादिवत्, अनिवृत्तिस्थाने हि विनिवर्तते बन्धः कार्मणस्य,

कर्मणस्तु सह तेन पूर्वमुत्तरत्र च यथापूर्वं मोहक्षयः पश्चाज्ज्ञानावरणक्षय इति, तदेतत् सर्वमुपपत्तिजालमनैकान्तिकम्, अभिन्नकर्मस्वपि दर्शनात्। अन्यच्च ज्ञानावरणादिकर्माष्टकात् पृथक् कल्प्यमाने कार्मणे नवमकर्मप्रसङ्गः, कार्यकारणवादाभ्युपगमे वा कर्मकार्मणयोः स्यात् अन्यत्वं स्यात् अनन्यत्वमभ्युपेयमन्यथा वा त एव दीर्घायुषोऽवगच्छन्ति येऽत्रान्यत्वमेकान्तेनाभिनिविशन्त इति। वयं तु ब्रूमः—कर्मभिर्निष्पन्नं कर्मसु भवं कर्मसु जातं कर्मैव वा कार्मणमिति न कश्चिद् दोषः प्रक्रियायामाहितनैपुणस्येति ॥ अथैषामौदारिकादीनां किं सर्वपुद्गलद्रव्याण्येव ग्रहणप्रायोग्यानि, आहोस्वित् कानिचिदेवेति ? । उच्यते—न खलु सर्वाणि, किन्तु द्रव्यवर्गणाप्ररूपणक्रमेण कानिचिदेव योग्यानि भवन्ति, तद्यथा—परमाणूनामेका वर्गणा-वर्गो राशिरिति पर्यायाः। द्विप्रदेशानामपि स्कन्धानामेका वर्गणा, एवमेकपरमाणुवृद्ध्या सङ्ख्येयप्रदेशस्कन्धानां सङ्ख्येयवर्गणाः, असङ्ख्येयप्रदेशस्कन्धानामसङ्ख्येयाः, ततोऽनन्तप्रदेशस्कन्धानामनन्ता वर्गणाः, स्वल्पपुद्गलप्रयोगत्वादयोग्याः समुल्लङ्घ्या अनन्ता एवौदारिकशरीरयोग्या[1] वर्गणा भवन्ति, पुनस्तस्यैवाग्रहणयोग्यास्ततोऽनन्ताः अतिबहुपुद्गलात्मकत्वात्, एवमेकैकपुद्गलप्रक्षेपपरिवृद्ध्या वैक्रियाहारकतैजसभाषाप्राणापानमनःकार्मणानामेकैकस्या योग्या योग्या अयोग्याश्चेति द्रव्यवर्गणात्रयमाभावनीयम्, आद्या च अल्पत्वादयोग्या, अन्त्या तु बहुत्वात्, मध्यमा तदनुरूपत्वाद् योग्येति सर्वत्र वासनाऽऽधेया। भाषाप्राणापानमनोग्रहणमत्राप्रस्तुतमपि कार्मणशरीरयोग्यवर्गणाप्रदर्शनार्थमध्यवसातव्यम्। एवं तावत् प्रतिविशिष्टपुद्गलद्रव्यनिर्मापितान्यौदारिकादीनि निश्चितम् ॥ अथेदानीमिदं भाष्यमनुस्रियते—इत्येतानि पञ्च **शरीराणि संसारिणां जीवानां भवन्ति**, एवमेतानि पञ्चैवान्यूनानधिकानि शरीराणीति, शीर्यन्त इति शरीराणीति जीर्यमाणत्वाच्चयापचयवत्त्वाच्च विशरारुताभाञ्ज्येतानि गतिचतुष्टयवर्तिनामेव प्राणिनां यथा सम्भवन्ति, न सिद्धानामिति सामर्थ्याद् व्युदासः। निर्ज्ञातस्य संज्ञिनः संज्ञेत्यतो न लघ्वपि शरीरग्रहणमादावुपन्यस्तं विशरारुत्वाच्छरीराणि इत्यन्वर्थसंज्ञासिद्ध्यर्थं न कायग्रहणमाश्रितं लघीयोऽपि। आदावौदारिकं स्थूलाल्पप्रदेशबहुस्वामित्वात्, ततो वैक्रियं पूर्वस्वामिसाधर्म्यात्, ततोप्याहारकं लब्धिसाधर्म्यात्, ततस्तैजसं सूक्ष्मासङ्ख्येयस्कन्धात्मकत्वात्, ततः कार्मणं सर्वकारणाश्रयसूक्ष्मानन्तप्रदेशत्वादिति ॥ ३७ ॥

अत्राह—कथं पुनरयं विशेषो निश्चीयते औदारिकादीनामिति ? उच्यते—न्यायाद् वचनाच्च। न्याय उक्तः, वचनं त्विदं यथाक्रमं तेषां पूर्वस्मात्।

## सूत्रम्—परं परं सूक्ष्मम् ॥ २-३८ ॥

टी०—तेषामित्यनेन भाष्यकारः सूत्रसम्बन्धमावेदयति—

शरीराणां परस्परं महत्त्वाल्पत्वे

**भा०—तेषामौदारिकादीनां शरीराणां परं परं सूक्ष्मं वेदितव्यम्। तद्यथा—औदारिकाद् वैक्रियं सूक्ष्मम्, वैक्रियादाहारकम्, आहारकात् तैजसम्, तैजसात् कार्मणमिति ॥ ३८ ॥**

१ '०कादिशरी०' इति घ-पाठः।

टी०—**तेषाम्**, अनन्तरसूत्रोपदिष्टानामौदारिकादीनां **शरीराणां परं परं सूक्ष्मं वेदितव्यम्**। निर्ज्ञातत्वादादिशब्दप्रयोगः, औदारिकादीनामन्यार्थवाचित्वमपि सम्भवतीति, अतो विशेषणं शरीराणामिति। विशरणशीलत्वाच्छरीराणि। **परं परमिति** वीप्सया व्याप्तिं दर्शयति, पूर्वं पूर्वमपेक्ष्य औदारिकादीनां परं परं **सूक्ष्मं** सूक्ष्मगुणं द्रव्यं सूक्ष्मं तद् यत्रास्ति तत् सूक्ष्मम्, अर्शआदिपाठाच्छरीरम्, अतोऽयमर्थः सूक्ष्मपरिणामपुद्गलद्रव्यारब्धं **वेदितव्यम्**—अवसेयम्। एतेन प्रामाण्याधिकृतं चोद्यमपास्तं भवति, सूक्ष्मत्वादेव च प्रायो वैक्रियादिचतुष्कस्य दर्शनमनुपपन्नम्, इह परिणतिविशेषमङ्गीकृत्य पुद्गलाः केचिदतिस्थूलतया वर्तन्तेऽल्पेऽपि सन्तो भेण्डकाष्ठादिषु, केचिन्निचिततरपरिणामभाजोऽतिभूयांसोऽपि सूक्ष्मावस्थामासादयन्ति करिदशनादिषु, प्रसिद्धं चैतत् प्रायस्तुलामारोपिते भेण्डदन्तखण्डे प्रमाणतः सदृशे परिणामागतामतिविप्रकृष्टां[1][2] धियमाधत्ते इति, तदेतत् परिशिथिलां परिणतिमनपेक्ष्य निचिततरां पुद्गलानामन्यथा लाघवं गौरवं वा प्रतिपत्तुमशक्यं तुल्यप्रमाणत्वे सति, अतः पूर्वपूर्वमुत्तरोत्तरापेक्षया शरीरं परिस्थूरद्रव्यारब्धमतिशिथिलनिचयमदभ्रं च भवत्युत्तरं सूक्ष्मं प्रत्यारब्धमतिघननिचयमणु च भवतीति पुद्गलद्रव्यपरिणतेर्वैचित्र्यात्। अमुमेवार्थं भाष्यकारः प्रकाशयन्नाह—**तद्यथा—औदारिकादित्यादि**। तदेतद् यथा स्पष्टतरं भवति तथा वेद्यते—**औदारिका**च्छरीराद् **वैक्रियं सूक्ष्मम्**, औदारिकमल्पद्रव्यं स्थूलं शिथिलनिचयम्, वैक्रियं बहुतरद्रव्यं सूक्ष्मघननिचयं चेति, अतः सूक्ष्ममुच्यते॥ ननु चौदारिकं योजनसहस्रप्रमाणमुत्कर्षात् वैक्रियं तु योजनलक्षप्रमाणम्, अतः कथं सूक्ष्ममिति?। उच्यते—यद्यपि प्रमाणतस्तदतिमहद् वैक्रियं तथापि सूक्ष्ममेवादृश्यत्वात् इच्छया तु तत्कर्तुर्दृश्यत इत्यतो नो दोषः, तथा **वैक्रियादाहारकं** सूक्ष्ममित्यभिसम्बन्धः, सूक्ष्मतरपरिणामपरिणतं बहुतरपुद्गलद्रव्यारब्धमाहारकम्, **आहारकात् तैजसं** बहुतरद्रव्यमतिसूक्ष्मपरिणामपरिणतं च, **तैजसात् कार्मण**मतिबहुकद्रव्यप्रचितमतिसूक्ष्मं च भवति, अतः सूक्ष्मताऽऽपेक्षिकी प्रतिपत्तव्या, न सूक्ष्मनामकर्मोदयजनितेति॥ ३८॥

(शरीराणां सूक्ष्मतादर्शनम्)

एवं तावत् कारणानां सूक्ष्मात् **परं परं** सूक्ष्ममभिहितमतिबहुपुद्गलद्रव्यारब्धमपि प्रचयविशेषात् तत् कथमुत्तरोत्तरेषु बहुतरद्रव्यारब्धमिति? अत आह—

**सूत्रम्—प्रदेशतोऽसङ्ख्येयगुणं प्राक् तैजसात्॥ २-३९॥**

**भा०—तेषां शरीराणां परं परमेव प्रदेशतोऽसङ्ख्येयगुणं भवति प्राक् तैजसात्, औदारिकशरीरप्रदेशेभ्यो वैक्रियशरीरप्रदेशा असङ्ख्येयगुणाः, वैक्रियशरीरप्रदेशेभ्य आहारकशरीरप्रदेशा असङ्ख्येयगुणा इति॥ ३९॥**

(प्रदेशापेक्षया शरीरतारतम्यम्)

---

१ 'परिमाणतां' इति ग-पाठः। २ 'मविप्रकृष्टां' इति क-पाठः।

**टी०—तेषां शरीराणामित्यादि** भाष्यम् । तेषामित्यौदारिकादीनामनन्तरसूत्रात् परं परमित्येतदनुवर्तते, अभिसम्बध्नाति भाष्यकारः **परं परमेव,** एवशब्दस्तमेव क्रमनियममवद्योतयति परं परमित्यमुमेव क्रममङ्गीकृत्यासङ्ख्येयगुणता विधीयते नान्यथेति । **प्रदेशत** इति । प्रवृद्धो देशः प्रदेशः, अनन्ताणुकस्कन्धः प्रदेशोऽत्राभिधीयते, एवंविधैः प्रदेशैः प्रदेशतः "इतरेभ्योऽपि दृश्यन्ते" इति वचनात् **असङ्ख्येयगुणं भवति** । एतदुक्तं भवति—औदारिकशरीरग्रहणयोग्यो यः स्कन्धोऽनन्तप्रदेश एकः स यदाऽन्यैरनन्ताणुकैः स्कन्धैरसङ्ख्येयैर्गुणितो भवति तदा वैक्रियग्रहणयोग्यो जायते, एवं वैक्रियग्रहणयोग्योऽनन्तप्रदेशस्कन्धः, एको यदाऽन्यैरनन्ताणुकस्कन्धैरसङ्ख्येयैरभ्यस्तो भवति तदाऽऽहारकग्रहणयोग्यतामेति । **प्राक् तैजसादिति** मर्यादां दर्शयति, न खलु सर्वेष्वयं क्रमो ग्राह्यः, किन्तु तैजसकार्मणे विहायाद्येषु त्रिषु शरीरेष्वेतद् विधानम् । अमुमेवार्थं स्पष्टतरमाचष्टे भाष्येणामुना—**औदारिकशरीरप्रदेशेभ्यो वैक्रियप्रदेशा असङ्ख्येयगुणाः,** औदारिकशरीरयोग्यस्कन्धोऽनन्ताणुकोऽपि सर्वस्तोकः, उत्तरस्कन्धापेक्षयाऽनन्तसङ्ख्यायाश्चानन्तभेदत्वात्, अत एक औदारिकयोग्यः स्कन्धो यदाऽन्यैरनन्तप्रदेशस्कन्धैरसङ्ख्येयैर्गुणितो भवति तदा वैक्रिययोग्य इति पिण्डार्थः । औदारिकशरीरे प्रदेशाः औदारिकशरीरप्रदेशाः अनन्ताणुकाः स्कन्धा इत्यर्थः । न पुनः प्रदेशाः परमाणवो गृह्यन्तेऽर्थासम्भवात्, वैक्रियशरीरप्रायोग्याः प्रदेशाः स्कन्धा जायन्ते असङ्ख्येयैरनन्तपरमाणुप्रचितस्कन्धैरन्यैर्गुणिताः, औदारिकयोग्या ये स्कन्धास्तेऽत्र गुण्यतया विवक्षिताः । बहुवचनमौदारिकशरीरयोग्यस्कन्धबहुत्वापेक्षं वैक्रियस्कन्धबहुत्वापेक्षं चेति । तथा **वैक्रियशरीरप्रदेशेभ्य आहारकशरीरप्रदेशा असङ्ख्येयगुणा इति,** वैक्रियशरीरयोग्यस्कन्धेभ्यः आहारकशरीरयोग्याः स्कन्धा अनन्ताणुभिरसङ्ख्येयैः स्कन्धैर्गुणिता भवन्ति वैक्रिययोग्याः स्कन्धाः, प्रत्येकमनन्तप्रदेशैरसङ्ख्येयैः स्कन्धैरभ्यस्ताः सन्त आहारकयोग्या जायन्त इति, बहुवचनमत्राप्युभययोग्यस्कन्धबहुत्वापेक्षमिति ॥ ३९ ॥

अत्राह—प्राक् तैजसादित्युक्तम् । अथ कः पुनस्तैजसकार्मणयोः स्कन्धप्रदेशनियम इति ? । अत्रोच्यते—

## सूत्रम्—अनन्तगुणे परे ॥ २–४० ॥

**भा०—परे द्वे शरीरे—तैजसकार्मणे पूर्वतः पूर्वतः प्रदेशार्थतयाऽनन्तगुणे भवतः । आहारकात् तैजसं प्रदेशतोऽनन्तगुणम् । तैजसात् कार्मणमनन्तगुणमिति** ॥ ४० ॥

तैजसकार्मणयोः प्रदशमानम्

**टी०—परे द्वे शरीरे** इत्यादि भाष्यम् । परे इत्युक्तेऽपि द्विशब्दोपादानं सप्तम्याशङ्काव्यावृत्त्यर्थम्, द्वित्वमन्यथाऽपि सम्भवतीति प्रतिविशिष्टद्वयप्रदर्शनार्थमाह-**तैजसकार्मणे** इति । पूर्वस्मात् पूर्वतः वीप्सया व्याप्तिमादर्शयति—**प्रदेशार्थतयेति** । अनन्ताणुस्कन्धार्थ-

त्वेनानन्तगुणे भवतः। एतदेव स्फुटीकरोति—**आहारकात् तैजसं प्रदेशतोऽनन्तगुणम्,** आहारकशरीरयोग्यस्कन्धोऽनन्ताणुकोऽन्यैरनन्तपरमाणुप्रचितस्कन्धैरनन्तैर्गुणितस्तैजसशरीरग्रहणयोग्यो भवति। **प्रदेश** इति प्रदेशैरनन्ताणुकैरनन्तैः **अनन्तगुणमिति** च फलमेव निर्दिष्टमाचार्येण, अनन्तो गुणबहुत्वं यस्य तदनन्तगुणम्, अस्माच्च फलनिर्देशात् ज्ञायतेऽनन्तैः स्कन्धैर्गुणितं सदनन्तगुणं भवति, अन्यथा प्रदेशैरनन्तैरिति दुर्लभं स्यात्। एवमसङ्ख्येयगुणमपि वाच्यम्, तथा **तैजसात् कार्मणमनन्तगुणमिति** तैजसशरीरयोग्यः स्कन्धोऽन्यैरनन्ताणुकैः स्कन्धैर्गुणितः कार्मणशरीरयोग्यो भवति॥ ननु चार्थे तैजसं कार्मणं चान्तरा भाषाप्राणापानमनोयोग्यवर्गणा निर्दिष्टास्ततः क्रमवृद्धः स्कन्धराशिर्मनोग्रहयोग्यकार्मणस्य निर्दिष्टः, इह तु तैजसादनन्तरमेवेत्येतत् कथम्? उच्यते–न कश्चिद् विशेषः तैजसादारभ्य यावन्मनस्तावत् क्रमवृद्ध्यान्तरालेऽनन्ता एव स्कन्धा भवन्ति, पुनस्तत्राप्येकाणुकादिप्रक्षेपादनन्ताः कार्मणयोग्यास्तदेवानन्तगुणत्वम्, इह तु पुनर्न स क्रम आश्रितः, किन्त्वनन्तस्कन्धगुणः स राशिः कार्मणयोग्य आख्यात इति, अतः स एवायं मषीप्रक्षितकुर्कुटाभोऽर्थार्पणविशेषो मा विप्रतिपत्थास्त्वमिति॥ ४०॥

अयं चान्यो विशेषोऽन्यशरीरेभ्यस्तयोर्यदुत—

## सूत्रम्—अप्रतिघाते॥ २–४१॥

**भा०—एते द्वे शरीरे–तैजसकार्मणे अन्यत्र लोकान्तात् सर्वत्राप्रतिघाते भवतः॥ ४१॥**

**टी०—एते द्वे शरीरे** इत्यादि भाष्यम्। **एते** अनन्तरसूत्रप्रस्तुते प्रत्यक्षासन्ने, द्विशब्दोपादानमत्र प्रथमाबहुवचनाशङ्काव्यावृत्त्यर्थम्। विशरणधर्मत्वाच्छरीरे द्वित्वं विशेषप्रतिपत्त्यर्थम्। **तैजसकार्मणे** जीवाजीवाधारक्षेत्रं-लोकस्तस्यान्तोऽवसायस्तस्माल्लोकान्ताद**न्यत्र** लोकान्ते हि प्रतिहन्येते, ते गतिस्थितिहेतुधर्माधर्मद्रव्याभावात् तदुपग्रहाद् हि जीवानां पुद्गलानां च गतिरुपजायते जलचराणामिव जलद्रव्यापेक्षे[1], अन्यत्र तु सर्वस्मिन् लोके न तयोः प्रतिघातः क्वचन विद्यते मूर्तत्वेऽपि हि तयोरतिसूक्ष्मत्वात् सर्ववर्त्मसु गतेः प्रतिघातासम्भवः सदाचारमुनिवत्, ते अपि न किञ्चित् प्रतिहतस्नेहगिरिजलधिवलयद्वीपपातालनरकविमानप्रस्तरानपि भिन्दती जातेऽक्षतस्वरूपे वज्रवन्न जातुचित् कुण्ठतामश्नुवाते। न खलु लोहपिण्डमाविशन्तस्तेजोऽवयवाः परिस्फुरन्मूर्तयोऽपि कयाचिदुपपत्त्या निवारयितुं पार्यन्ते तद्विध्मापनायाम्भोवयवाश्च समाहृताः, सूक्ष्मत्वादेवमेव च शरीरके राजवल्लभपुरुषवत् सर्वत्राव्याहतप्रवेशनिर्गमे प्रतिपत्तव्ये इति॥ ४१॥

तैजसकार्मणयोरप्रतिघातिता

---

१ 'पेक्षेत्यन्यत्र' इति क–ख–पाठः।

न च ताभ्यां कदाचित् संसारी विरहित इत्यावेदयन्नाह—

## सूत्रम्—अनादिसम्बन्धे च ॥ २–४२ ॥

तैजसकार्मणयोरनादिः सम्बन्धः

भा०—ताभ्यां तैजसकार्मणाभ्यामनादिः सम्बन्ध इति ॥ ४२ ॥

टी०—अनादिसम्बन्धे च। आदिः—प्राथम्यम्, अविद्यमान आदिर्यस्यासावनादिः, सम्बन्धनं—सम्बन्धः, संयोग इत्यर्थः, अनादिः सम्बन्धो ययोः परस्परेण संसारिभिश्च सह ते अनादिसम्बन्धे शरीरके भवतः सुवर्णधातुपाषाणसंयोगवदाकाशपृथिव्यादिसंयोगवद् वा। चशब्दः सम्बन्धविकल्पार्थः, नैकान्तत एवानादिः सम्बन्धः, किन्तु द्रव्यास्तिकनयावष्टम्भेन तयोरतिदीर्घकालप्रवाहादविच्छेदवर्ती सकलभविष्यदवस्थान्तरबीजभूतो विचित्रपरिणामशक्तिप्रचितपुद्गलद्रव्यैराधीयमानप्रचयापचयोऽनादिकपुरुषप्रयत्ननिर्वर्त्यनानारूपकर्मविकाराविच्छेदः सन्तानविशेषस्तदङ्गीकरणेनायमनादिः सम्बन्धः प्रतीयते। आदिमांश्च पर्यायनयवक्तव्यताभ्यन्तरीकृतत्वात्। क्रियत इति कर्म मिथ्यादर्शनाविरतिप्रमादकषाययोगबन्धहेतुसद्भावात् तीव्रमन्दाद्युपपत्तेश्च। प्रतिक्षणमयमुपचीयते पुरुषः कषाययोगाद्यास्रवद्वारवर्ती दृढतरैः कर्मणा यैस्तत् कथमनादिः सम्बन्धो निरूपयितुं शक्येतातिसाहसिकैरपि, ज्ञानावरणादिकर्मणां च स्थितिकालनियमादवश्यमपूर्वकर्मोपादेयम्, तच्चादिमत्सम्बन्धमेवावधूतशङ्कं प्रतिपद्यध्वम्, अतश्चशब्दो द्रव्यपर्यायास्तिकनयद्वयान्तर्वर्तितामापादयति सम्बन्धस्य ॥

अधुना भाष्यानुसृतौ यत्न आस्थीयते—ताभ्यामित्यादि भाष्यम्। ताभ्यामुक्तलक्षणाभ्यां तैजसकार्मणशरीरकाभ्यामनादिरकृतकः सन्तत्याऽङ्गीकरणेन संयोगोऽनादेरकृतकस्य जीवस्येति, नहि जीवः केनचिदुत्पादितश्चैतन्यात्मनेति श्रुतिपथमागमद् वचो यो वा मन्येत कृतकमात्मानमुपयोगलक्षणमनादिपारिणामिकभाववर्तिनमपत्रपस्तस्यापि वचनमयुक्तिकमसङ्गतपूर्वापरमिति विद्वद्भिरपकर्ण्यम्[2], अतोऽनादिस्तदनादित्वात् तैजसकार्मणे अप्यनादिसम्बन्धे विद्वांसः प्रमातुमर्हन्ति, अन्यथा परित्यक्तसकलशरीरकलङ्कस्य मुक्तस्येव केन हेतुना संसारिता स्यादिति ? ॥ ४२ ॥

अथैते अनादिसम्बन्धे अपि सति किमशेषसंसारिण एव स्त आहोस्वित् कस्यचिदेवेति ? । अत आह—

## सूत्रम्—सर्वस्य ॥ २–४३ ॥

भा०—सर्वस्य चैते तैजसकार्मणे शरीरे संसारिणो जीवस्य भवतः।

सर्वसंसारिणां तैजसकार्मणवत्ता

एके त्वाचार्या नयवादापेक्षं व्याचक्षते। कार्मणमेवैकमनादिसम्बन्धम्। तेनैवैकेन जीवस्यानादिः सम्बन्धो भवतीति। तैजसं तु लब्ध्यपेक्षं भवति। सा च तैजसलब्धिर्न सर्वस्य, कस्य-

१ '०नादिसम्बन्धो जीवस्येत्यनादिसम्ब' इति घ-पाठः। २ 'रुपकर्ण्यं' इति ख-पाठः।

**चिदेव भवति । कोपप्रसादनिमित्तौ शापानुग्रहौ प्रति तेजोनिसर्गशीतरश्मिनिसर्गकरम्, तथा भ्राजिष्णुप्रभासमुदयच्छायानिर्वर्तकं सशरीरेषु मणिज्वलनज्योतिष्कविमानवदिति ॥ ४३ ॥**

टी०—**सर्वस्य चैते** इत्यादि भाष्यम् । अशेषसर्वकर्माधाय चेतसि, अवोचत् सूरिः **सर्वस्येति**, चशब्देनावृत्तौ तैजसकार्मणे समाकर्षत्यनादिसम्बन्धापेक्षे, एवंरूपे एते शरीरके **संसारिणो जीवस्य** सकर्मकस्य जन्तोर्भवतः । सर्वस्यामवस्थायां न कश्चित् तादृशः प्राणी विद्यते यस्यैते दुःखपञ्जरप्रभवभववर्तिनो न स्त इति । एवं स्वाभिप्रायमुपवर्ण्याधुना मतान्तरमुपदर्शयन्नाह—**एके त्वाचार्या** इत्यादि । अन्ये पुनराचार्याः प्ररूपयन्ति—प्रतिविशिष्टनयवादालम्बनाः सन्तः **कार्मणमेवैकमनादिसम्बन्धम**विच्छिन्नः प्रवाहो यस्मात् कर्मणस्तस्मात् **तेनैवैकेन जीवस्यानादिः सम्बन्धो भवति** न पुनस्तैजसेनापि, तत्प्रवाहादर्शनात् । किं पुनर्नयवादमुररीकृत्य ते सूरयस्तैजसमपह्नुवते किमत्र वक्तव्यम् ॥ ननु सुज्ञानमेवेदम्, यो ह्यतीतानागतकालावधिकवस्तुविशेषव्युदासमातिष्ठते वर्तमानक्षणवर्त्येव वस्तु वस्तुतामावसतीत्येवमनुसन्धाय प्रवर्तते स खलु प्रकाशनामातिक्रान्तागामिचक्रपरिहारित्वाद् वर्तमानक्षणर्जुसूत्रणादृजुसूत्र इति प्रतीतस्तमपेक्षमाणाः प्रथयन्ति—**तैजसं तु लब्ध्यपेक्षं भवतीत्यादि** । तुशब्दोऽवधारकः तैजसं लब्ध्यपेक्षमेव **भवति**—सत्तामासादयति, सा **च तैजसलब्धिर्विशिष्टतपोनुष्ठानादिभिः** साधनैः कस्यचिदेव भवति **न सर्वस्य** जन्तोस्तत्साधनकलापविमुखस्य, स च तद्योग्यसाधनसमासादिततेजोलब्धिस्तेजोनिसर्गमातनोति, क्रोधावेशादरुणलोचनश्चलत्कपोलाधरपुटः कृशानुपुञ्ज इव दुष्प्रेक्ष्यः क्षमावनितया दुर्भग इवातिदूरमपास्तः शापप्रदानं प्रति कृताध्यवसायः स्फुलिङ्गमालाकुलमत्युष्णतेजः प्रयत्नविशेषात् तथा मुञ्चति **गोशालादिवद्** येन परस्तदेव भस्मसाद् भवति, तथा मनःप्रसादावेशादनुकम्पया वाऽनुग्राह्यपक्षं प्रति प्रल्हादकारिणममृतकल्पं तेजोविशेषमनुष्णदीधितिवद् विधूतसकलपरितापतिमिरराशिमनुग्रहप्रवणमानसं क्षिपति येनाशु सुखास्वादविनिमीलितलोचनोऽपूर्व इव जायते, यथा च भगवतैवोष्णलेश्यापरीताङ्गयष्टिगोशालकलिरनुगृहीतः शीततेजोनिसर्गेण, क्रोधप्रसादौ निमित्तं ययोः शापानुग्रहयोस्तौ **क्रोधप्रसादनिमित्तौ शापानुग्रहावभिमुखीकृत्य तेजोनिसर्गं** करोति । हतस्त्वं दग्धस्त्वमित्येवमादि क्रोधाविष्टवचनं शापः । कदाचिद् वा बाह्यनिमित्तापेक्षमन्तःकर्मापि परिणमते येनायं काणः कुण्ठः कुब्जो वा भवतीति सोऽपि शाप एवावगन्तव्यः । अतः क्रोधनिमित्तशापप्रदानाभिमुख उष्णतेजोनिसर्गं करोति । प्रसादनिमित्तानुग्रहाभिमुखः **शीतरश्मिनिसर्गकरो** भवति । शीता रश्मयो यस्य निसृज्यमानतेजोविशेषस्य स शीतरश्मिः, शीतरश्मिश्चासौ निसर्गश्च शीतरश्मिनिसर्गस्तत्करणशीलं

तैजसस्यानादितायां मतभेदः

---

१ 'तैजसं शरीरेषु' इति घ-पाठः ।

**शीतरश्मिनिसर्गकरं** तैजसम् । **तथा भ्राजिष्णुप्रभेत्यादि** । भ्राजनशीलो–भ्राजिष्णुः प्रभाणां समुदयस्तस्य छाया–आभा भ्राजिष्णुप्रभासमुदयच्छाया ॥ ननु च भ्राजिष्णुरेव भवति, किं हि तस्य विशेष्यते ? मलीमसत्वेनापि दर्शनात्, मलीमसप्रभो मणिरिति संव्यवहरन्ति लौकिकाः, तस्याः छाया(या) निर्वर्तकं उत्पादकं–तैजसं, शरीरेष्वौदारिकादिकेषु केषुचित् **मणिज्वलनज्योतिष्कविमानवदिति** । यथा हि मणयः स्फटिकाङ्कवैडूर्यादयो भ्राजिष्णुच्छाया विमलपुद्गलारब्धत्वात्, ज्वलनो वा निरस्तप्रत्यासन्नतिमिरव्रातः प्रद्योतते स्वतेजसा, ज्योतिष्कदेवानां वा चन्द्रादित्यादीनां विमानान्यतिभास्वराणि निर्मलद्रव्यारब्धत्वात्, तथा तैजसशरीरापेक्षमौदारिकादिषु शरीरेषु केषुचिदेव स्फुरन्मृजाजालमुपलभ्यते, न सर्वेषु, अन्यथा तदभावात् । कया युक्त्या तत् तथा भवेत्? एतच्च तेष्वेव शरीरेषु द्रष्टव्यं यानि लब्धेराधारतां प्रतिपद्यन्ते, अन्यथा ग्रन्थो न सङ्गच्छेत, तथा भ्राजिष्णुप्रभेत्यादि च, किं कारणं ? ये हि लब्धिप्रत्ययमेवेच्छन्ति तैजसं तेषां तावदन्यत्र लब्धेरभावान्न घटते, आचार्याभिप्रायोऽपि नायं, पराभिप्रायप्रस्तावात् । अपरे वर्णयन्ति—आचार्यमतमेवेदम्, अन्ये तु नित्यसम्बन्धमेव तत्कार्यमपि च भ्राजिष्णुप्रभेत्यादि, तदेतदयुक्तमव्याप्तेरिति ॥ अथ यानि शरीराणि लब्धिरहितानामपि मयूखजालमुद्वमन्ति दृश्यन्ते, तेषु कथम् ? । तत्र हि कार्मणौदारिकशक्तिरेव सा तादृगिति न तैजसस्य, यथा वैक्रियेष्वितिप्रत्याख्यानवादिन एवं वर्णयन्ति, तस्माद् यदधुनैव लब्ध्या समुद्भाव्यते तत् कथमनादिसम्बन्धं सर्वस्य वा जन्तोः स्यादाहारकवदप्राप्तलब्धेर्न तेन दाहादि किंचित् कार्यमनुष्ठातुं शक्यमनुपजातकुम्भेनेव जलाद्याहरणादि, प्रतिनिवृत्ततथाविधलब्धिरपि पुमान् तथा किंचित् कर्तुं समर्थो न भवति ध्वस्तघट इव तैलधारणादि, तस्मान्नास्ति तैजसं सर्वस्य जन्तोः, न चानादिसम्बन्धम्, इह च सूत्रे प्रेक्षापूर्वकारितयाऽऽचार्येणाक्षेपोऽकारि सूत्रद्वयमप्याक्षेप्स्यामीति, अन्यथा पूर्वसूत्र एवाक्षेपो युज्यते, एवमेकीयमतेन प्रत्याख्यातमेव तैजसमनादिसम्बन्धतया सर्वस्येति । या पुनरभ्यवहृताहारं प्रति पाचकशक्तिर्विनाऽपि लब्ध्या सा तु कार्मणस्यैव भविष्यति, कर्मोष्णत्वात्, कार्मणं हीदं शरीरमनेकशक्तिगर्भत्वादनुकरोति विश्वकर्मणः, तदेव हि तथा समासादितपरिणति व्यपदिश्यते यदि तैजसशरीरतया ततो न कश्चिद् दोष इति ॥ ४३ ॥

अथ किं यथैते सर्वस्यानादिसम्बन्धे युगपच्च किमेवमन्यान्यपि युगपदेकस्य भवन्त्युताहो न ? । अत्रोच्यते—सन्ति, न तु सर्वाणि । कियन्ति तर्हीति ? । अत आह—

**सूत्रम्—तदादीनि भाज्यानि युगपदेकस्या चतुर्भ्यः ॥ २–४४ ॥**

**भा०—ते आदिनी[1] एषामिति तदादीनि । तैजसकार्मणे यावत् संसारभाविनी[2] आदिनी कृत्वा शेषाणि युगपदेकस्य जीवस्य भाज्यान्या चतुर्भ्यः ॥**

---

१ ' आदिनौ ' इति घ–पाठः । २ ' ०विनौ आदिम् ' इति घ–पाठः ।

टी०—**ते आदिनी**त्यादि । प्रस्तुते तैजसकार्मणे तच्छब्देनाभिसम्बध्येते । ते आदिनी एषामौदारिकादीनां मेढीभूते व्यवस्थिते तानि **तदादीनि** समुदायसमासार्थः । एतदेव स्पष्टतरं करोति—**तैजसकार्मणे यावत् संसारभाविनी आदिनी कृत्वा** यावत् संसारं भवितुं शीलमनयोस्ते यावत्संसारभाविनी तैजसकार्मणे आदिनी **कृत्वा** मेढीभूततया व्यवस्थाप्य **शेषाणि** औदारिकादीनि **एकस्मिन् काले एकस्य जीवस्य भाज्यानि**—विकल्प्यानि, **आ चतुर्भ्य** इति यावच्चत्वारि युगपदेकजीवस्य भवन्त्यप्रत्याख्यानपक्षे । अथैकीयमतेन तैजसं प्रत्याख्यातं तदा त्रीणि युगपदेकस्य स्युः, आचार्यस्याभिप्रायः—कार्मणवत् तैजसं प्रायः सर्वदा सर्वस्यास्ति, यतस्ते आदिनी एषामिति विग्रहं कृतवान् । ये तु प्रत्याचक्षते तेषां विग्रहः—तत् आदि कार्मणमेषां तानि तदादीनि । उभयथा च भाष्यं भविष्यति, आचार्यस्य तु विग्रहगतौ कर्मकृत एव योगो भवति, न तु तैजसमित्यत्रैव लब्ध्यपेक्षत्वात् तत् किल नास्ति, तस्यामवस्थायामन्यत्र त्वाचार्यस्य तैजसं सर्वत्रास्ति । तामिदानीमात्माभिप्रायानुसारिणीं भजनां दर्शयन्नाह—

भा०—**तद्यथा-तैजसकार्मणे वा स्याताम् । १ । तैजसकार्मणौदारिकाणि वा स्युः । २ । तैजसकार्मणवैक्रियाणि वा स्युः । ३ । तैजसकार्मणौदारिकवैक्रियाणि वा स्युः । ४ । तैजसकार्मणौदारिकाहारकाणि वा स्युः । ५ ॥ कार्मणमेव वा स्यात् । ६ । [ कार्मणतैजसे वा स्याताम् । ७ । ] कार्मणौदारिके वा स्याताम् । ७ । कार्मणवैक्रिये वा स्याताम् । ८ । कार्मणौदारिकवैक्रियाणि वा स्युः । ९ । कार्मणौदारिकाहारकाणि वा स्युः । १० । कार्मणतैजसौदारिकवैक्रियाणि वा स्युः । ११ । कार्मणतैजसौदारिकाणि[1] वा स्युः । १२ । न तु कदाचिद् युगपत् पञ्च भवन्ति । नापि वैक्रियाहारके युगपद् भवतः । स्वामिविशेषादिति वक्ष्यते ॥ ४४ ॥**

टी०—**तद्यथे**त्यादिना । अन्तर्गतौ **तैजसकार्मणे** केवले स्तः, इह तु तैजसमाश्रितमाचार्येण, विग्रहगतावित्यत्र पराभिप्रायेण नाश्रितम्, भवस्थतायामेते च औदारिकं चेति त्रीणि युगपत् । अथवा एते च वैक्रियं चेति त्रीणि, तिर्यङ्मनुष्याणां तैजसकार्मणौदारिकैः सह लब्धिप्रत्ययवैक्रियशरीरसद्भावे युगपदविच्छिन्नप्रदेशत्वाच्चत्वारि, चतुर्दशपूर्वधरमनुष्यस्याहारकलब्धौ सत्यां तैजसकार्मणौदारिकैः सह युगपदेवं चत्वारि, पद्मनालतन्तुवदेवाविच्छेदेनैकजीवप्रदेशैश्चतुष्टयमपि प्रतिबद्धमवसेयम् । एवमेतान् पञ्च विकल्पान् स्वमते प्रदर्श्याधुना एकीयमतमादर्शयितुमाह—**कार्मणमेव वा स्यात्**, न ह्यन्तर्गतौ लब्धिप्रत्ययं तैजसमस्ति, लब्धेर्मृतावेव प्रच्यवनात्, अतः कार्मणमेवैकमिति प्रथमो विकल्पः, **कार्मणतैजसे वा स्याता**मित्ययमत्रानुपपन्नो विकल्पो हेया तु

एकजीवे युगपत् शरीरसंख्या

1 'काहारकाणि' इति घ-पाठः ।

भाष्येष्वधीतः, कथं ? यैः प्रत्याख्यातं सहजं तैजसं तेषां कुतोऽन्तर्गतौ तत्सम्भवः ? न चान्याऽवस्था भवस्थतायामस्ति यत्रोभयमेव स्यात्, अनुत्पन्नतैजसवैक्रियलब्धेः **कार्मणौदारिके** द्वे भवतः, अथवा कार्मणवैक्रिये देवनारकाणां, तिर्यङ्मनुष्याणामनुत्पन्नतैजसलब्धीनां **कार्मणौदारिकवैक्रियाणि** युगपत्, अनुत्पन्नतैजसवैक्रियलब्धेश्चतुर्दशपूर्वधरमनुष्यस्य **कार्मणौदारिकाहारकाणि वा,** उत्पन्नलब्धीनां नृतिरश्चां **कार्मणतैजसौदारिकवैक्रियाणि** युगपच्चत्वारि भवन्ति, चतुर्दशपूर्वधरमनुष्यस्यानुत्पन्नवैक्रियलब्धेः कार्मणतैजसौदारिकाहारकाणि युगपत्, एवमेतेऽन्याचार्यदर्शनेन सप्त विकल्पा भवन्ति ॥

युगपत् पञ्चशरीर्या अभावः

इदानीमा चतुर्भ्य इत्यस्य व्यवच्छेदस्य फलं दर्शयति—**न तु कदाचित् पञ्च युगपद् भवन्तीति**। नैव जातुचिदेकस्मिन् काले पञ्चानां सम्भवः आहारकवैक्रिययोर्युगपदभावात्। एतदनेन भाष्यवचनेन दर्शयति—**नापि वैक्रियाहारके युगपद् भवतः**। पूर्वमुपन्यस्तं(?) पञ्च युगपन्न जातुचित् सम्भवन्तीति तद्भावनार्थमिदम्, अपिशब्दोऽवधारकः। नैव वैक्रियाहारके युगपद् भवतः, लब्धिद्वयाभावात्। एते उभे लब्धी युगपदेकत्र न सम्भवतो व्यक्तिरूपेण, यस्मिन् काले वैक्रियं तस्मिन्नेव काले आहारकमिति, पर्यायेण तु सम्भवतः, कृत्वा वैक्रियमुपरततद्व्यापारः करोत्येवाहारकं, तदभावाच्च नैककाले पञ्च शरीराणि सम्भवन्त्येकस्य। किं पुनः कारणमेकस्यैकदा ते लब्धी न भवत इति ? आह—**स्वामिविशेषादिति** वक्ष्यति—'लब्धिप्रत्ययं च' (अ० २, सू० ४८) 'शुभं विशुद्धमव्याघाति चाऽऽहारकं चतुर्दशपूर्वधरस्यैव' (अ० २, सू० ४९) इत्यत्र सूत्रद्वये, स्वामिविशेषो वक्ष्यते। नृतिरश्चां लब्धिप्रत्ययं वैक्रियं भवति, तद्यथा—संयतः करोति वैक्रियं नियमत एव प्रमत्तस्तदा भवति, उत्तरकालं च तां लब्धिमुपजीवन् आहारकस्यापि प्रमत्तो निष्पादकः, निष्पत्त्युत्तरकालं तु नियमत एवाप्रमत्तो भवतीत्यस्मात् स्वामिविशेषाद् वक्ष्यमाणान्न लब्धिद्वयमेकस्यैकदेति, आहारकलब्धिमुपजीवन्नपि शुभाध्यवसायत्वादप्रमत्त इति ॥ ४४ ॥

उक्तानि शरीराणि, किं पुनरेषां प्रयोजनम् ? उपभोगः, उपभोगवन्ति शरीराणि, तेषां तु—

## सूत्रम्—निरुपभोगमन्त्यम् ॥ २–४५ ॥

**टी०**—अथवा इहौदारिकादिशरीरभावे तावत् सुखदुःखोपभोगो दृष्टस्तत् किं यदा कार्मणं विग्रहगतौ तदाऽनेन सुखदुःखोपभोग आत्मना क्रियते नेति ?। उच्यते—**निरुपभोगमन्त्यम्**। अथवा शरीराणामिन्द्रियत्वं सुखदुःखोपलब्ध्यधिष्ठानत्वं व्यापारश्चास्ति, कार्मणमपि च शरीरन्यायवचनात् व्यापारवच्च विग्रहगतौ कर्मयोगवचनाच्च, परकारणत्वाच्च ॥ नन्विन्द्रियवदङ्गोपाङ्गनिर्वृत्तेरभावात् तत् किमस्मिन्नर्थोपलब्धिसुखदुःखोपभोगविशेषो नास्ति लब्धीन्द्रियसद्भावे सतीति?।

कार्मणस्य बाह्योपभोगाभावः

उच्यते—तान्येव सोपभोगानि समस्तोपभोगकारणत्वात् कालान्तरावस्थानाच्च, इदं तु निरुपभोगमन्त्यम् ॥

भा०—**अन्त्यमिति सूत्रक्रमप्रामाण्यात् कार्मणमाह। तत् निरुपभोगम्। न सुखदुःखे तेनोपभुज्येते, न तेन कर्म बध्यते, न वेद्यते, नापि निर्जीर्यत इत्यर्थः। शेषाणि तु सोपभोगानि। यस्मात् सुखदुःखे तैरुपभुज्येते कर्म बध्यते वेद्यते निर्जीर्यते च, तस्मात् सोपभोगानीति ॥ ४५ ॥**

टी०—**अन्त्यमिति सूत्रक्रमप्रामाण्यादिति।** अन्ते भवमन्त्यम्, कस्यान्त्यमिति चेद् अत आह–सूत्रक्रमप्रामाण्यादौदारिकादिशरीराणां चतुर्णां पर्यन्तवर्ति **कार्मणमाह**, सूत्रकारादविभक्तोऽपि हि भाष्यकारो विभागमादर्शयति, [2]व्युच्छित्तिनयसमाश्रयणात्। औदारिकादिशरीरचतुष्टयपर्यन्तवर्ति **तत् निरुपभोगं** निरस्तोपभोगं निरुपभोगम्, उपभोगो वक्ष्यमाणः प्रतिविशिष्ट एव, तदभावान्निरुपभोगमुच्यते। कः पुनरसावुपभोगो यमधिकृत्योच्यते निरुपभोगम्? अत आह–**न सुखदुःखे तेनोपभुज्येते** इति। मनोज्ञामनोज्ञशब्दादिविषयसम्पर्कजं च सुखं दुःखं न तेनोपभुज्येते, निर्वृत्त्युपकरणेन्द्रियाभावाल्लब्धीन्द्रियसन्निधौ सत्यपि, उभयेऽपि हि शब्दादयो विषया निर्वृत्त्युपकरणेन्द्रियविरहविह्वलेन कार्मणेन नोपभोक्तुं शक्यन्त इति निरुपभोगम्, असङ्ख्यातसमयनिर्वृत्तश्च छद्मस्थस्य सुखदुःखोपभोगः, विग्रहगतेश्च चतुःसमयपरत्वात् सोऽयुक्तः, तथा **न तेन कर्म बध्यते, न वेद्यते, नापि निर्जीर्यते इत्यर्थः।** उपभोगविशेषनिषेधप्रदर्शनार्थमिदमातन्यते, तेन कार्मणेन वपुषा न खलु कर्म बद्धुं पार्यते, अभिव्यक्तकारणाभावात्, कारणैर्हि कर्ता व्यापारमातनोति पाणिपादश्रोत्रादिभिः तद्यथा—औदारिकशरीरी मनोऽभिसन्धानपूर्वकमाकृष्याकर्णान्तं शिलीमुखं मृगवधाय क्षिपति, असत्प्रलापादि बहु भाषते, अदत्तद्रविणमादत्ते, पाण्यादिना योषितमभिगच्छति, सकलकायव्यापारेण परिगृह्णाति मनोवाक्कायव्यापारैः, एवमेष कर्मबन्धकरणकलापस्तदा न समस्त्यभिव्यक्तस्वरूपः कार्मणे, तद्धि पाणिपादमुखलोचनाद्यवयवविनिर्मुक्तं मनोवाग्व्यापाररहितं च, अतो न हिंसाद्यास्रवकृतं तेन कर्म बध्यते। तथा तेन न वेद्यते, न निर्जीर्यते वा, एवंविधास्रवजनितकर्म तेन शरीरकेण नानुभूयते, तस्य ह्युपभोगो नारकादिगतिषु नान्तर्गतौ अत्यल्पकालत्वात् औदारिकवैक्रियाभावाच्च, अनुभूयमानमेवेह निर्जीर्यते नीरसतामापाद्यमानं परिशटदात्मप्रदेशेभ्यः [3]प्रत्यस्तस्नेहलेशमामुक्तरसकुसुम्भकवन्निर्जीर्णमुच्यते, न चैतत् तस्यामवस्थायां मनोव्यापाराभावात् प्रतिपत्तुमुत्सहन्तेऽतिकोविदाः, तथा कार्मणं हि कर्मसङ्घातः स चोपभोग्यो भवति, नोपभोजकः। औदारिकाद्यप्येवमेवेति चेत्, न, बाह्येन्द्रियपक्षतामङ्गीकृत्योपभोक्तृत्वमौपचारिकमत्यन्तप्रसिद्धम्, अतोऽभिव्यक्तसुखदुःखकर्मानुबन्धानुभवनिर्जरालक्षणमुपभोगमाधाय

---

१ 'णत्वात्राऽन्तराव' इति क–ख–पाठः। २ 'पर्यायनयसमाश्रयणात्' इति ख–टी–पाठः। ३ 'प्रत्यस्तनेहलेशमामुक्तरस' इति क–ख–पाठः, 'पादलेशानामुक्तं' इति ग–पाठः।

चेतसि कार्मणमनुपभोगमध्यगायि सूरिणा इत्येवमुपात्तप्रतिविशिष्टोपभोगव्यतिरिक्तेनोपभोगेन यदि तदभिसम्बध्यते गमनादानादिक्रियारूपेण कषाययागप्रत्ययेन बन्धेन न कश्चिद् दोषः । एवंविधः सर्वथोपभोगस्तस्य प्रतिषिध्यते नोपभोगसामान्यमिति । अथ कार्मणव्यतिरिक्तानि शरीराणि कथं प्रतिपत्तव्यानीति ? अत आह—**शेषाणि तु सोपभोगानी**त्यादि । उक्तं कार्मणम्, तद्व्यतिरिक्तान्यौदारिकवैक्रियाहारकतैजसानि शेषशब्देनाभिधित्सितानि, तानि च सोपभोगानि प्रतिपत्तव्यानि । कथम् ? औदारिके तावन्निर्वृत्त्युपकरणेन्द्रियसद्भावादिष्टानिष्टविषयसम्पृक्तौ सत्यां सुखदुःखोपभोगः परिस्फुटपरिनिष्पन्नपाणिपादावयवकलापत्वाच्च, वधानृताद्यास्रवद्वारवर्तित्वात् कर्मबन्धानुभवनिर्जराः सिद्धाः, वैक्रियेऽप्येवमेव भावना कार्या, आहारके तु शरीरेन्द्रियाभिव्यक्तौ सत्यां सुखदुःखोपभोगः सम्भवति ॥ नन्वप्रमत्त इत्युक्तं प्राक् को दोषः ? सत्यामपि शब्दाद्युपलब्धौ न प्रमाद्यत्यस्याम्, अनवस्थितशुभाशुभगुणाः खल्वमी शब्दादयो विषया न मनस्विनः परितोषमाधातुं क्षमा इत्यनित्यतावगमपूर्विकां वैराग्यवासनामेवाधिवसति, न तूत्कर्षमायाति, निन्दां वा समादत्ते, किन्तु यथावस्थिततया स्वसङ्कल्पशिल्पविरचनां विधूय तान् विषयान् स विद्वान् परिणमयति, कर्मबन्धानुभवनिर्जरणानि त्वस्य तथाविधास्रवजनितानि न सम्भाव्यन्तेऽप्रमत्तत्वादेव, न चावश्यं कार्मणेऽसम्भवता, सकलेनोपभोगेन तत्र भवितव्यम्, सुखदुःखोपभोगेनापि हि भोगवदेवेष्यते न निरुपभोगं यथासम्भवमर्थप्रतिपत्तेः सामान्यतो वा सम्भवः, अनुभवनिर्जरणे तु प्राक् कृतकर्मणोऽपि स्तः, कर्मबन्धस्त्वप्रमादत्वादतिदुर्घटः, तथाविधो योगप्रत्ययः पुनः केवलिनोऽपि न निवर्तत एवेति प्रतिपत्तव्यम् । तैजसशरीरेण तेजसि निसृष्टे दग्धे वैरिणि मनसः परितोषसुखमापाद्य जायते परमानन्दः, तथाऽनुग्राह्यपक्षे शिशिरतेजोनिसर्गेण परित्राते प्राणिनि प्रीतेरनुत्तमायाः प्रादुर्भावः । दुःखमपि वेद्यते तपःप्रभावादिभिर्बलवता परिरक्षितस्य द्विषोऽन्यस्य वा स्वनिसृष्टे तेजस्यप्रभवति मनागप्यपकर्तुमुपकर्तुं वा तैजसशरीरभाजः स्फुटमेव । एष चैवंविधसुखदुःखोपभोगस्तैजसनिमित्त इति तेन द्वारेणोपजायते, अतस्तेन सुखदुःखे उपभुज्येते, शापानुग्रहप्रवणत्वात्, तद्द्वारेणैव पुण्यस्यापुण्यस्य वा बन्धः तत्पूर्विकैवानुभवनिर्जरे न प्रतिषेद्धुं पार्येते, अतस्तदपि सोपभोगम्, समुद्घातनिसर्गात्मत्वात् । लब्धिप्रत्ययमेतदेवं भवतु, यत् पुनः सर्वदा समस्ति सर्वप्राणिषु तत् कथं सोपभोगम् ? तदपि हि परिगृहीताहारपाककारित्वात् सम्यक्परिणामापादनात् सुखमाधत्ते, तद्विपरीततया तु व्याप्रियमाणं तदेव दुःखाय सम्पद्यते, कर्मबन्धानुभवनिर्जरास्तु प्रत्येकं तस्य न सम्भाव्यन्ते, औदारिकादिसहवर्तित्वात्, अतः पूर्वकेणाप्युपभोगेन सोपभोगं भवत्येवेति मा न परितुषः । **शेषाणि तु सोपभोगानि** इत्यस्यैव वचनस्य विवरणद्वारेण भाष्यप्रणयनं, **यस्मादि**त्यादि । अन्येनोपभोगेन सोपभोगानि मा ग्रहीत् कश्चिदतः सुहृद् भूत्वा सूरिराचष्टे, औदारिकादिभिः सुखदुःखोपभोगः कर्मबन्धानुभवनिर्जराश्च व्याख्यात-

औदारिकादीनां प्रयोजनानि

न्यायेन क्रियन्ते तस्मात् सोपभोगानि इति निगमनम्, कार्मणमपहायैकं शेषाण्येवंविधेनोपभोगेन सोपभोगानीति ॥ ४५ ॥

**भा०—अत्राह–एषां पञ्चानामपि शरीराणां सम्मूर्च्छनादिषु त्रिषु जन्मसु किं क्व जायत इति ? । अत्रोच्यते—**

टी०—अत्राहेत्यादिः सम्बन्धग्रन्थः । अजानानः प्रश्नयति—एषामौदारिकादीनां वपुषां पञ्चानामपि त्रिषु जन्मसु सम्मूर्च्छनादिषु किं शरीरं क्व जन्मनि जायते सम्भवत्युत्पद्यते वा ? । अत्रोच्यते—

## सूत्रम्—गर्भसम्मूर्च्छनजमाद्यम् ॥ २-४६ ॥

**भा०—आद्यमिति सूत्रक्रमप्रामाण्यादौदारिकमाह । तद् गर्भे सम्मूर्च्छने वा जायते ॥ ४६ ॥**

टी०—आदौ भवमाद्यं शरीरप्रकरणप्रथमसूत्रक्रमप्रामाण्यादौदारिकमाह, तद् **गर्भे** जन्मनि **सम्मूर्च्छने वा जायते**-सम्भवतीति, जनिः जन्मनि प्रत्येकमभिसम्बध्यते । गर्भे जातं गर्भाद् वा गर्भजमेवं सम्मूर्च्छनजमपि, उक्तलक्षणे च गर्भसम्मूर्च्छने जन्मनामतो गर्भजन्मनां सम्मूर्च्छनजन्मनां च प्राणिनामौदारिकं तावद् भवति, न त्ववधारणमौदारिकमेव, तैजसकार्मणयोरपि तत्र सम्भवात्, लब्धिप्रत्ययवैक्रियाहारकयोर्वा गर्भजन्मन्युत्तरकालभावित्वात् ॥ ननु च भूते डविधानं तत् कथं भाष्यकारो विवृणोति जायत इति वर्तमानकालाभिधायिना शब्देनेति ? । उच्यते–न दोषोऽयं यस्माज्जातमुत्पन्नमुत्तरकालमपि पुनः पुनः पर्यायापेक्षया सम्भवतीत्युपपन्न एव निर्देश इति । एतच्च शरीरं जघन्येनाङ्गुलासङ्ख्येयभागप्रमाणमुत्कर्षतो योजनसहस्रप्रमाणमपि ॥ ४६ ॥

(margin: औदारिकशरीरस्य स्वामिनः; औदारिकप्रमाणम्)

## सूत्रम्—वैक्रियमौपपातिकम् ॥ २-४७ ॥

(margin: वैक्रियस्वामिनः)

**भा०—वैक्रियं शरीरमौपपातिकं भवति । नारकाणां देवानां चेति ॥ ४७ ॥**

टी०—उपपातजन्मोपपातशब्देनोच्यते तस्मिन् भवमौपपातिकं वैक्रियं शरीरं, तन्निमित्तत्वादवधिवत् सहजम्, तच्च सामर्थ्यान्नारकदेवानामेव न शेषाणाम् । द्विविधं च तद्–भवधारकमुत्तरवैक्रियं च, तत्राद्यस्य जघन्येनाङ्गुलासङ्ख्येयभागः प्रमाणम्, उत्कृष्टं पञ्च धनुःशतानि, उत्तरवैक्रियं जघन्येनाङ्गुलसङ्ख्येयभागप्रमितमुत्कर्षेण योजनलक्षणप्रमाणमिति ॥ ४७ ॥

(margin: वैक्रियप्रमाणम्)

सूत्रम्--लब्धिप्रत्ययं च ॥ २-४८ ॥

लब्ध्या वैक्रिय-सद्भावः

**भा०**—लब्धिप्रत्ययं च वैक्रियं शरीरं भवति। **तिर्यग्योनीनां मनुष्याणां चेति** ॥ ४८ ॥

**टी०**—लब्धिप्रत्ययं च **वैक्रियं** चेत्यादि। चशब्दादुत्कृष्टं वैक्रियमुदचीचरद् भाष्यकारः। तपोविशेषजनिता लब्धिस्तत्प्रत्ययं-तत्कारणमेतच्छरीरं भवत्यजन्मजमिदमित्यर्थः। अथवा गर्भजन्मनामेवेदमुत्तरकालं भवतीति न कश्चिद् दोषः। लब्धिप्रत्ययवैक्रियशरीरप्रतिविशिष्टस्वामिनिर्दिदिक्षया आह-**तिर्यग्योनीनां मनुष्याणां चेति**। सामान्याभिधानेऽपि लब्धिप्रत्ययवचनाद्, भूयसां गर्भव्युत्क्रान्तितिर्यङ्मनुष्याणामिदं द्रष्टव्यम्, तपोविशेषानुष्ठानाद्, वायोश्च वैक्रियं लब्धिप्रत्ययमेव, शेषतिर्यग्योनिजानां मध्ये, नान्यस्येति ॥ ४८ ॥

अत्राह-अथाहारकं किंलक्षणमिति ?। अत्रोच्यते—

सूत्रम्—शुभं विशुद्धमव्याघाति चाहारकं चतुर्दशपूर्वधर एव ॥२-४९॥

आहारकस्य स्वरूपम्

**भा०**—**शुभमिति** शुभद्रव्योपचितं शुभपरिणामं चेत्यर्थः। **विशुद्धमिति** विशुद्धद्रव्योपचितं असावद्यं चेत्यर्थः। **अव्याघातीति** आहारकशरीरं न अव्याहन्ति न व्याहन्यते चेत्यर्थः ॥

**टी०**—इदमपि लब्ध्यपेक्षमेव, किन्तु वैक्रियादयं विशेषः शुभादिकृतः, अजन्मजत्वं च सामान्यम्। **शुभमिति** शुभद्रव्योपचितमित्यादि। शुभानि द्रव्याणीष्टवर्णगन्धरसस्पर्शभाञ्जि तैः प्रचितं-निर्वर्तितम्, शुभः परिणामश्चतुरस्रं संस्थानमाकारो यस्य तच्छुभपरिणामं चाहारकं भवति। चशब्दः समुच्चये। विशुद्धद्रव्योपचितं शुभपरिणामं चेति। **विशुद्धमिति विशुद्धद्रव्योपचितमसावद्यं चेत्यर्थः**। स्वच्छस्फटिकशकलमिव सकलवस्तुप्रतिबिम्बाधारभूतं विशुद्धद्रव्योपचितमुच्यते। अपरे वर्णयन्ति-विशुद्धं शुक्लमत्र विवक्षितम्, **असावद्यमिति** अवद्यं-गर्हितं-पापं सहावद्येन सावद्यम्, न सावद्यमसावद्यम्, सावद्यं हिंसादिप्रवृत्तिर्यस्मात्, इदं न हिंसादौ प्रवर्तते, न च हिंसादिप्रवृत्तितः उत्पद्यते, तस्माद् विशुद्धमसावद्यमाहारकमित्युच्यते। **अव्याघातीति** व्याहन्तुं शीलमस्य व्याघाति, न व्याघाति अव्याघाति, आहारकशरीरं न किञ्चिद् व्याहन्ति-विनाशयति, न **व्याहन्यते** इति, न च तदन्येन पदार्थेन व्याहन्तुं शक्यते। कथं पुनरिदमेकेन यत्नेनोभयं लभ्यते कर्ता कर्म चेति ? कृल्ल्युटो बहुलाभिधानात्। निर्वृत्तिकार्यहेतुसमुच्चयार्थश्चशब्दः ॥

---

1 सूत्रे 'तैजसमपि' इत्यधिकं क-ख-पुस्तकयोः।

**भा०—तच्चतुर्दशपूर्वधर एव। कस्मिंश्चिदर्थे कृच्छ्रेऽत्यन्तसूक्ष्मे सन्देहमापन्नो निश्चयाधिगमार्थं क्षेत्रान्तरितस्य भगवतोऽर्हतः पादमूलमौदारिकेण शरीरेणाशक्यगमनं मत्वा लब्धिप्रत्ययमेवोत्पादयति। पृष्ट्वा[1]ऽथ भगवन्तं छिन्नसंशयः पुनरागत्य व्युत्सृजत्यन्तर्मुहूर्तस्य ॥**

आहारकस्य स्वामी

टी०—तदेवंविधमाहारकं **चतुर्दशपूर्वधर एव**—**लब्धिप्रत्ययमेवोत्पादयतीति** क्रियोपरिष्टादभिधास्यते। चतुर्दशेति सङ्ख्या, पूर्वं प्रणयनात् पूर्वाण्युच्यन्ते, तानि धारणाज्ञानेनालम्बत इति चतुर्दशपूर्वधरः, स च द्विविधः–भिन्नाक्षरोऽभिन्नाक्षरश्च, ते च यस्यैकैकमक्षरं श्रुतज्ञानगम्यपर्यायैः सत् कारिकाभेदेन भिन्नं वितिमिरतामितं स भिन्नाक्षरः, तस्य च श्रुतज्ञानसंशयापगमात् प्रश्नाभावस्ततश्चाहारकलब्धि[2]तामपि नैवोपजीवति विनालम्बनेन, स एव श्रुतकेवली भण्यते, शेषः करोत्यकृत्स्नश्रुतज्ञानलाभादवीतरागत्वाच्च, अत एव केचिदपरितुष्यन्तः सूत्रमाचार्यकृतन्यासादधिकमधीयते "अकृत्स्नश्रुतस्यर्द्धिमतः" इत्यनेन विशेषणकलापेनेति, एवंविधश्चतुर्दशपूर्वधर एव सञ्जातलब्धिस्तन्निर्वर्तयति, नान्यः श्रुतविदन्यो वा अवधारणफलम्। किमर्थं पुनरसौ तां लब्धिमुपजीवतीत्याह–**कस्मिंश्चिदर्थे** इत्यादि। श्रुतज्ञानगम्ये कस्मिंश्चिदेवार्थेऽत्यन्तगहने सन्दिहानस्तदर्थनिश्चितये विदेहादिक्षेत्रवर्तिनोऽर्हतश्चरणकमलाभ्याशमौदारिकेण वपुषा न खलु पार्यते गन्तुमित्यवबुध्य सञ्जातर्द्धिविशेषो लब्धिप्रत्ययमेव नान्यप्रत्ययमुपजनयति आहारकशरीरं, गत्वा च तत्राशु भगवन्तमालोकितसमस्तलोकालोकमालोक्याभिवन्द्य पृष्ट्वा च विच्छिन्नसंशयः परिभूतपाप्मा पुनरागत्य तमेव देशं यत्र प्राग् गच्छतौदारिकमनाबाधबुद्ध्या न्यासकवन्निक्षिप्तं स्वप्रदेशजालावबद्धं तदवस्थमास्ते, ततो विहायाहारकमुपसंहारमानीयात्मप्रदेशजालं प्रागौदारिकमेवानुप्रविशति, एष चारम्भात् प्रभृत्या अपवर्गात् सर्वोऽन्तर्मुहूर्तपरिमाणः कालो भवतीति, प्रमाणं चास्यावरतो न्यूनः पाणिरुत्कर्षेण सम्पूर्ण इति ॥ अथ तैजसकार्मणे कस्मिन् जन्मनि समुद्भवत इति नानयोर्नियमः, सर्वत्राप्रतिहतशक्तित्वात्, सर्वजन्मसु सहतैजसं कार्मणं वा स्यान्न तु लब्धितैजसम्, अतो लब्धिप्रस्तावमुपजीवन् भाष्यकारः तैजसमपीत्याह—

चतुर्दशपूर्वधरस्य विचारः

तैजसे हेतुः

**भा०—तैजसमपि शरीरं लब्धिप्रत्ययं भवति ॥**

टी०—तेजोविकारस्तैजसं सर्वस्योपलक्षणं रसाद्याहारपाकजननम्, तच्चावश्यं सर्वप्राणिविषयमभ्युपगन्तव्यम्, अन्यथा शरीरपदे तैजसशरीराणि बद्धान्यनन्तानि अनन्तोत्सर्पिण्यवसर्पिणीसमयराशिसमसङ्ख्यानि कालतः, क्षेत्रतोऽनन्तानन्ता लोकाः, द्रव्यतः सिद्धेभ्योऽनन्तगुणानि सर्वजीवानन्तभागोनानि, किं पुनः कारणमनन्तानि ? तत्स्वामिनामा-

---

१ 'दृष्ट्वा च' इति ख–पाठः, 'दृष्ट्वा' इति तु घ–पाठः। २ 'लब्धिसतीमपि' इति प्रतिभाति।

नन्त्यादित्येष ग्रन्थः सर्वो विघटेत, लब्धिप्रत्यय एवाङ्गीक्रियमाणे तैजसवपुषि, अतो विद्यमानमपि सर्वासुमत्सु सहजमनादृत्य तैजसं लब्ध्यधिकारे लब्धिप्रत्ययमेवाचष्टे नेतरदिति। तैजसं शरीरं तैजसशरीरलब्धिकारणसमुद्भूतशक्ति भवति तपोविशेषानुष्ठानात् कस्यचिदेव जातुचित्, न सर्वस्येति। इदानीं सकलशरीरबीजभूतं कार्मणं नियमेन दर्शयन्नाह—

कार्मणस्य स्वरूपम्

**भा०—कार्मणमेषां निबन्धनमाश्रयो भवति। तत्कर्मत एव भवतीति बन्धे पुरस्ताद्[1] वक्ष्यति। कर्म हि कार्मणस्य कारणमन्येषां च शरीराणामादित्यप्रकाशवत्। यथाऽऽदित्यः स्वमात्मानं प्रकाशयति अन्यानि च द्रव्याणि, न[2] चास्यान्यः प्रकाशकः, एवं कार्मणमात्मनश्च कारणमन्येषां च शरीराणामिति॥**

**टी०—कार्मणमेषां निबन्धनमाश्रयो भवतीत्यादि।** कर्मणो विकारः कार्मणं, तदेषामौदारिकादीनां शरीराणां निबन्धनं बीजमाश्रयः सकलशक्त्याधारत्वात् कुड्यमिव चित्रकर्मणो भवति। आमूलमुच्छिन्ने तु भवप्रपञ्चप्ररोहबीजे कार्मणे वपुषि न पुनर्विमुक्ति[3]भाजः शरीरकाणा(?)मधियन्त्यपि प्रक्षालितसकलकल्मषाः, तच्चैवंविधं कार्मणं कर्मभ्य एव ज्ञानावरणादिभ्यो जायते न पुनरन्यत् तस्य कारणमस्ति, ज्ञानावरणादिकं चाष्टमेऽध्याये बन्धाधिकारे **पुरस्तात्** अग्रे वक्ष्यति समूलोत्तरम्[4], एतदेव चार्थजातं स्पष्टयन्नाह—**कर्म हीत्यादि।** यस्मात् ज्ञानावरणादिकर्म **कार्मणस्य कारणं** तदात्मकत्वात् **अन्येषां** चौदारिकादिशरीराणाम्, न च स्वात्मनि क्रियाविरोधः, **आदित्यप्रकाशवत्।** प्रकाशं दृष्टान्ततयोपन्यस्य विवरणकाले **यथाऽऽदित्य** इत्याह तदेतत् कथम्? न खलु सर्वथाऽऽदित्यात् प्रकाशो व्यतिरिक्त इत्यभ्युपेतुं शक्यम्, तेन प्रकाशस्वभावः प्रकाशमयः आदित्य इत्यनेन न कश्चिद् विशेषः, आदित्यप्रकाशवदादित्यवद् वाऽभिहितः, स यथा तिग्मांशुः स्वमण्डलं प्रकाशयत्यन्यानि च स्तम्भकुम्भादिद्रव्याणि, न चान्यपदार्थः प्रकाशकः सवितृमण्डलस्यानवस्थाप्रसक्तेरभ्युपेतुं शक्यः॥ ननु च घटाद्यप्रकाशात्मकत्वात् प्रकाशयतु भास्वान्, मूर्तिस्तु प्रकाशात्मिकैव तस्याः किं प्रकाश्यते तत्स्वभावत्वादिति?। उच्यते—यद्यपि प्रकाशस्वभावा मूर्तिस्तथापि सा प्रकाश्यैव भवति, प्रमाणवत्, प्रमाणं हि स्वपररूपप्रकाशकारीष्यते, अन्यथा चानेकदोषापत्तिः स्यात्। **एवं कार्मणमित्यादि।** एवमेतेनादित्यप्रकाशनिदर्शनेन कार्मणं शरीरमात्मनश्च स्वरूपस्य कारणमन्येषां चौदारिकादिवपुषाम्, न पुनर्ज्ञानावरणादिकर्मव्यतिरिक्तमस्य कारणमन्वेषितव्यम्, कर्ममात्रत्वात् कर्मस्वभावत्वात् कार्मणस्येति। एतयोश्च तैजसकार्मणयोरवरतः प्रमाणमङ्गुलासंख्येयभागः उत्कृष्टतश्चौदारिकशरीर-

कार्मणतैजस-प्रमाणम्

१ 'परस्ताद्' इति घ-पाठः। २ 'न चास्यान्यैः प्रकाशः' इति ख-पाठः। ३ 'विभक्तिभाजः' इति ख-पाठः। ४ 'मूलोत्तरभेदम्' इति ख-पाठः।

प्रमाणे केवलिनः समुद्घाते लोकप्रमाणे वा भवतः मरणान्तिकसमुद्घाते वा आयामतो लोकान्ताल्लोकान्तायते स्यातामिति ॥

भा०—अत्राह—औदारिकमित्येतदादीनां शरीरसंज्ञानां कः पदार्थ इति ? । अत्रोच्यते–उद्गतारमुदारम्, उत्कटारमुदारम्, उद्गम एव वोदारम्, उपादानात् प्रभृति अनुसमयमुद्गच्छति वर्धते जीर्यते शीर्यते परिणमतीत्युदारम्, उदारमेवौदारिकम्, नैवमन्यानि। यथोद्गमं वा निरतिशेषं, ग्राह्यं छेद्यं भेद्यं दाह्यं हार्यमित्युदाहरणादौदारिकम्, नैवमन्यानि, उदारमिति च स्थूलनाम। स्थूलमुद्गतं पुष्टं बृहन्महदिति, उदारमेवौदारिकम्। नैवं शेषाणि। तेषां हि परं परं सूक्ष्ममित्युक्तम् (अ० २, सू० ३८)॥

औदारिकस्य विस्तरेणार्थः

टी०—संशयानः पृच्छति, औदारिकमिति पदमादौ येषां वैक्रियादिपदानां तेषाम् एतदादीनां कोऽर्थोऽत्र विवक्षितः ? एतदुक्तं भवति–किमेता औदारिकादिसंज्ञा अर्थवत्तामनुगता विधीयन्ते आहोस्विद् यदृच्छयेति ? । अन्वर्थसंज्ञा एता न यादृच्छिक्य इति भाष्यकृदादर्शयति–उद्गतारमुदारमित्यादिना भाष्येण । अन्वर्थत्वाच्च संज्ञयैव लक्षणभेदं प्रथयति, पृथग्लक्षणव्यवस्थानं वा, अत एवान्वर्थसंज्ञाविवरणान्नैवमन्यानीति प्रत्येकमन्यलक्षणव्यवच्छेदेनान्यलक्षणाभिधानात्, एभ्य एव विशेषेभ्यः शरीराणां नानात्वं सेत्स्यति ॥ ननु च शरीरप्रकरणप्रथमसूत्रे एतद् भाष्यं युक्तं स्यात्, इह तु प्रकरणान्ताभिधाने न किञ्चित् प्रयोजनं वैशेषिकमस्तीति । उच्यते–तदेवमयं मन्यते, तदेवेदमादिसूत्रमाप्रकरणपरिसमाप्तेः प्रपञ्च्यते, अथवा प्रकरणान्ताभिधाने सत्यमेव न किञ्चित् फलमस्त्यसूत्रार्थत्वादतः क्षम्यतामिदमेकमाचार्यस्येति, तत्र उद्गतारमुदारम् इति। उद्गता–उत्कृष्टा आरा–छाया यस्य तदुद्गतारमुदारं प्रधानमित्यर्थः । तीर्थङ्करगणधरशरीराङ्गीकरणादेवमुच्यते, नहि तीर्थकरादिशरीरेभ्योऽन्यत् प्रधानतरमस्ति त्रिलोक्यां शरीरमिति। अथवा उत्कटारमुदारम्। उत्कृष्टा आरा–मर्यादा–प्रमाणं यस्य तदुत्कटारमुदारम्, अवस्थितसातिरेकयोजनसहस्रप्रमाणत्वात्, अन्यच्चैवंविधं नास्ति॥ ननु वैक्रियमधिका योजनलक्षेति सत्यमेवमेतद्, अवस्थितं तन्न भवति, पञ्चधनुःशतप्रमाणमेवावस्थितं वैक्रियम्, औदारिकं पुनरवस्थितमेवमुच्यते । उद्गम एव वा उदारः, उद्गमनं–उद्गमः–प्रादुर्भावः स एव चोदारशब्देनोच्यते । यत उपादानात् प्रभृतीत्यादि । उपादानं हि शुक्रशोणिताद्यौदारिकस्य तद्ग्रहणप्रभृत्येव चानुसमयमुद्गच्छति अविभज्यमानस्वरूपः कालविशेषः समयोऽभिधीयते, अतः प्रतिसमयमेव तदुत्तरामुत्तरां व्यवस्थां स्वीयपर्याप्त्यपेक्षामुद्गच्छति–प्राप्नोति, न तदस्ति कालविवरं यत्रावस्थान्तरं न समासादयतीति, एवं च भाष्यकारो दर्शयति–तत् वर्धते वयःपरिणामेनोपचीयमानमूर्तिं प्रतिवेलमाभाव्यते, जीर्यत इति जरामधिगच्छति–वयोहानिमाप्नोति, शीर्यत इति शिथिलसन्धि-

१ '०दारणा०' इति घ–पाठः । २ 'प्रविवलयमा०' इति क–पाठः ।

बन्धनमालम्बमानचर्ममण्डलमुपलक्ष्यते तदेव जातुचिदतः शीर्यत इत्युच्यते, **परिणमतीति** समन्ताज्जराभारविधुरमानमति परिपेलवग्रहणशक्तीन्द्रियग्रामं वलीवलयलेखाविचित्रमन्यदिवोपजायते, अतो मुहुर्मुहुरुद्गमनाद् **उदारमेवौदारिकं** स्वार्थे प्रत्ययविधानात्। **नैवमन्यानीति**, यथेदमौदारिकमेवंविधानेकविशेषणविशिष्टं न तथा वैक्रियाहारकतैजसकार्मणानि, नहि वैक्रियस्य जरसा विवृद्ध्या वा प्रतिक्षणं योगोऽस्त्यवस्थितत्वात् तथाऽऽहारकस्य, तैजसकार्मणयोस्तु सुतरां न समस्त्यङ्गोपाङ्गाद्यनिर्वृत्तेः। अथवाऽन्यथा व्युत्पत्तिः—**यथोद्गमं वा निरतिशेषमित्यादि** भाष्यम्। यो य उद्गमो यथोद्गमं निरतिशेषं निःशेषं निरतिशयं वा मांसास्थिस्नाय्वाद्यवबद्धत्वात् सर्वमेव तुल्यम्, ग्राह्यादिधर्मयोगाद् गृह्यते पाण्याद्यवयवैरिन्द्रियैर्वा, छिद्यते परश्वादिना, भिद्यते नाराचादिना, दह्यतेऽग्निभास्करादिना, ह्रियते महावायुवेगेनेत्येवमादिभिर्विदारणादुदारमुच्यते, पृषोदरादित्वाच्च संस्कारयत्युदारणादौदारिकम्। **नैवमन्यानीति** सुज्ञानम्। नहि वैक्रियादिषु मांसास्थिग्राह्यादयो विशेषाः सन्ति। अथवाऽन्यथा **उदारमिति चेत्यादि**। चशब्दोऽथवेत्यस्यार्थे। स्थूलस्याभिधानमुदारमिति स्वल्पप्रदेशोपचितत्वात् बृहत्त्वाच्च भेण्डवदुदारं स्थूलमिति। अस्यैव पर्यायान् सुखावबोधार्थमाख्याति—**स्थूलमुद्गतं पुष्टं बृहन्महदित्युदारमेवौदारिकम्**। स्थूलत्वाद् भेण्डवत् ऊर्ध्वं गतमुच्छ्रायमुद्गतमतिप्रमाणत्वात्, पुष्टं शुक्रशोणितादिप्रचितत्वात्, बृहत् प्रतिक्षणं वृद्धियोगात्, योजनसहस्रप्रमाणावस्थितारोहपरिणाहत्वान्महत्, उदारमेवौदारिकमित्यनेन न तन्नियमः किन्तु प्रदर्शनमेतत् क्वचित् स्वार्थे क्वचिन्निवृत्ताद्यर्थेष्विति। **नैवं शेषाणि** वैक्रियादीनि। किं कारणमत आह—**तेषां हि परं परं सूक्ष्ममित्युक्तं** (२, ३८) यस्मात् तेषां वैक्रियादीनां परं परं प्राक् सूक्ष्ममभिहितं तस्मान्नैवं शेषाणीति ॥

वैक्रियस्य विस्तरेण व्याख्या

**भा०—वैक्रियमिति। विक्रिया विकारो विकृतिर्विकरणमित्यनर्थान्तरम्। विविधं क्रियते। एकं भूत्वा अनेकं भवति। अनेकं भूत्वा एकं भवति। अणु भूत्वा महद् भवति। महच्च भूत्वाऽणु भवति। एकाकृति भूत्वा अनेकाकृति भवति। अनेकाकृति भूत्वा एकाकृति भवति। दृश्यं भूत्वा अदृश्यं भवति। अदृश्यं भूत्वा दृश्यं भवति। भूमिचरं भूत्वा खेचरं भवति। खेचरं भूत्वा भूमिचरं भवति। प्रतिघाति भूत्वा अप्रतिघाति भवति। अप्रतिघाति भूत्वा प्रतिघाति भवति। युगपच्चैतान् भावाननुभवति। नैवं शेषाणीति। विक्रियायां भवति, विक्रियायां जायते, विक्रियायां निर्वर्त्यते, विक्रियैव वा वैक्रियम् ॥**

टी०—**वैक्रियमित्यादि** भाष्यम्। प्राक् तावत् सुखावबोधार्थं पर्यायानाचष्टे—**विक्रिया विकारो विकृतिर्विकरणमित्यनर्थान्तरम्**। विविधा विशिष्टा वा क्रिया विक्रिया, तस्यां भवं वैक्रियम्, प्रकृतेरन्यत्वं विकारः, विचित्रा कृतिर्विकृतिः, विविधं क्रियत इति विकरणम्,

एतेऽनर्थान्तरमभिदधति ध्वनयः । एतदधुना स्पष्टयन्नाह—**विविधं क्रियत** इत्यादिना । विविधमनेकप्रकारं तद् वैक्रियं क्रियते, कथं पुनस्तदित्युच्यते–**एकं भूत्वा अनेकं भवति** विकर्तुः समासादितवैक्रियलब्धेरिच्छानुविधानात् । एकं भवतीत्यादि भाष्यं सुज्ञानं यावत् **प्रतिघाति भूत्वेत्यादि** । प्रतिहननशीलं भूत्वा स्थूलत्वात् सूक्ष्मावस्थानमनुप्राप्तं सदप्रतिघाति भवति, एककालमेव च सर्वानभिहितलक्षणान् **भावान्** विकारान् वेदयते, नैवमौदारिकाहारकादीन्यतो विशिष्टलक्षणमेवेदं विज्ञेयम् ॥ तथा चोक्तं **भगवत्यां** तृतीयशते पञ्चमोद्देशके—"[1]अणगारे णं भंते ! भावियप्पा बाहिरए पोग्गले परियाइत्ता पभू एगं महं इत्थीरूवं जाव संदमाणियारूवं वा विउव्वित्तए ? । हंता पभू । अणगारे णं भंते ! भावियप्पा केवइयाइं पभू इत्थीरूवाइं विउव्वित्तए ? । गोयमा ! से जहा नामए जुवतिं जुवाणे हत्थेणं हत्थंसि गिण्हिज्जा चक्कस्स वा नाभी अरगाउत्ता सिया, एवमेव गोयमा ! अणगारे णं भावियप्पा वेउव्वियसमुग्घाएणं समोहणित्ता संखिज्जाइं जोयणाइं दंडं निसिरति जाव दोच्चंपि वेउव्वियसमुग्घाएणं समोहणित्ता पभू केवलकप्पं जंबुद्दीवं दीवं बहूहिं इत्थीरूवेहिं आइण्णं वितिकिण्णं जाव करित्तए, अदुत्तरं च णं गोयमा ! पभू तिरियमसंखेज्जदीवसमुद्दे भरिए विउव्वित्तए जाव नो चेव णं संपत्तीए विउव्वति वा विउव्वस्संति वा" (सू० १६१) ॥ तथा चतुर्दशशते अष्टमोद्देशके–"[2]अत्थ णं भंते ! अव्वाबाधा (हा) देवा ? हंता अत्थि । से केणट्ठेणं भंते ! एवं वुच्चति–अव्वाबाधा देवा अव्वाबाधा देवा ? गोयमा ! पभू णं एगमेगे अव्वाबाधे देवे एगमेगस्स पुरिसस्स एगमेगंसि अच्छिपत्तंसि दिव्वं देविड्ढिं दिव्वं देवजुइं दिव्वं देवाणुभावं दिव्वं बत्तीसइविहं नट्टविहिं उवदंसेत्तए, नो चेव णं तस्स पुरिसस्स किंचि आबाधं वा वाबाहं वा उप्पाएइ छविच्छेदं वा करेइ, सुहुमं च णं उवदंसेज्जा, से तेणट्ठेणं जाव अव्वाबाधा देवा" (सू० ५३१) ॥ तथाऽष्टादशशते सप्तमोद्देशके–"[3]देवे णं भंते महड्ढिए जाव महेसक्खे रूवसहस्सं विउव्वित्ता पभू णं अण्णमण्णेणं सद्धिं संगामं संगामित्तए ? हंता पभू, ताओणं भंते ! बोंदीओ किं एगजीवफुडाओ अणेगजीवफुडाओ ? गोयमा ! एकजीवफुडाओ नो अणेगजीवफुडाओ । ते णं भंते ! तेसिं

---

१ अनगारो भगवन् ! भावितात्मा बाह्यान् पुद्गलान् अपर्यादाय प्रभुः एकं महत् स्त्रीरूपं वा, यावत् स्यन्दमानिकारूपं वा विकुर्वितुम् ? । हन्त प्रभुः । अनगारो भगवन् ! भावितात्मा कियन्ति प्रभुः स्त्रीरूपाणि विकुर्वितुम् ? गौतम ! स यथा नाम युवतिं युवा हस्तेन हस्ते गृह्णीयात्, चक्रस्य वा नाभिः अरकायुक्ता स्यात्, एवमेव गौतम ! अनगारोऽपि भावितात्मा वैक्रियसमुद्घातेन समवहन्ति, यावत्–प्रभुः गौतम ! अनगारो भावितात्मा केवलकल्पं जंबूद्वीपं द्वीपं बहुभिः स्त्रीरूपैः आकीर्णम्, व्यतिकीर्णम्, यावत्–कर्तुम् । अथोत्तरं च गौतम ! प्रभुः तिर्यग्–असंख्यद्वीपसमुद्रान् भर्तुं विकुर्व्य यावत् नो चैव सम्पत्त्या विकुर्वति विकुर्विष्यति वा ।

२ सन्ति भदन्त ! अव्याबाधा देवाः ? हन्त सन्ति । तत् केनार्थेन भदन्त ! एवमुच्यते—अव्याबाधा देवा अव्याबाधा देवाः ? गौतम ! प्रभुः एकैकोऽव्याबाधदेवः एकैकस्य पुरुषस्य एकैकस्मिन् अक्षिपत्रे दिव्यां देवर्धिं दिव्यां देवद्युतिं दिव्यं देवानुभावं दिव्यं द्वात्रिंशद्विधं नाट्यविधिं उपदर्शयितुम्, नैव तस्य पुरुषस्य कांचिदाबाधां वा व्याबाधां वोत्पादयति छविच्छेदं वा करोति, सूक्ष्मतयोपदर्शयेत्, तदेतेनार्थेन यावदव्याबाधा देवाः ।

३ देवो भदन्त ! महर्धिकः यावत् महेशाख्यः रूपसहस्रं विकुर्व्य प्रभुरन्योऽन्येन सार्धं सङ्ग्रामं सङ्ग्रामयितुम् ? हन्त प्रभुः, तानि भदन्त ! शरीराणि किमेकजीवस्पृष्टानि अनेकजीवस्पृष्टानि ? गौतम ! एकजीवस्पृष्टानि नानेकजीव-

बोंदीणं अंतरा किं एगजीवफुडा अणेगजीवफुडा? गोयमा! एकजीवफुडा नो अणेगजीवफुडा। पुरिसे णं भंते! अंतरे हत्थेण वा पाएण वा असिणा वा पभू विच्छिंदित्तए। नो इणमट्ठे समट्ठे, नो खलु तत्थ सत्थं कमति" (सू० ६३५)॥ एतानि च सूत्राणि वैक्रियाद्यर्थेषूपयुज्य नियोज्यानि, न स्वार्थ एव प्रत्ययविधिः। अनियमं दर्शयति—**विक्रियायां भवमि**त्यादिना भाष्येण, एतच्च सुज्ञानमेवातः कदाचिद् वैक्रियं वैक्रयिकं चेति॥

आहारकस्य शब्दार्थविस्तारः

भा०—**आहारकमाह्रियत इत्याहार्यम्। आहारकमन्तर्मुहूर्तस्थिति। नैवं शेषाणि।**

टी०—**आहारमाह्रियत** इत्यादि भाष्यम्। गृह्यते प्रतिविशिष्टप्रयोजनप्रसाधनाय कार्यपरिसमाप्तेश्च पुनर्मुच्यते याचितोपकरणवत् संशयव्यवच्छेदार्थावग्रहणार्थिदर्शनादि च कार्यम्, आह्रियते **आहार्यमि**त्यनेन शब्दद्वयेन विशिष्टकारकसाध्यमाहारकशब्दं दर्शयति कृल्ल्युटो बहुलवचनात्, तच्चाहारकमन्तर्मुहूर्तस्थिति, एतावता च कालेनाभिलषितप्रयोजनपरिसमाप्तिस्तस्याहर्तुरुपजायते, परिनिष्ठितप्रयोजनश्च पुनर्विमुञ्चति नोत्तरकालमपि तां लब्धिमुपजीवति अतोऽन्तर्मुहूर्तस्थितिः, आत्मलाभो यस्य तदन्तर्मुहूर्तस्थिति। **नैवं शेषाणीति**, व्यतिरेकमन्यतः प्रतिपादयति—शेषाण्यौदारिकादीनि तत्प्रसाध्यप्रयोजननिवर्तनाय नालं नापि नियमत एव तावत्या स्थित्या योगः प्रमाणेन वेति॥

तैजसस्य विचारः

भा०—**तेजसो विकारस्तैजसं तेजोमयं तेजःस्वतत्त्वं शापानुग्रहप्रयोजनम्। नैवं शेषाणि॥**

टी०—**तेजसो विकारस्तैजसमि**त्यादि। उष्णभावलक्षणं तेजः संसिद्धं सर्वप्राणिषु पाचकमन्धसः। तस्यैवंविधस्य तेजसो विकारस्तैजसमवस्थान्तरापत्तिरिति। एतदेव पर्यायान्तरेणाख्याति—**तेजोमयं स एव विकारार्थस्तेजःस्वतत्त्वम्**, तेजसः स्वतत्त्वं-स्वरूपं-आत्मा-स्वभावस्तत् तेजःस्वतत्त्वम् **शापानुग्रहप्रयोजनमि**ति। लब्धिनिर्वृत्तिमपेक्ष्योच्यते शापानुग्रहौ प्रयोजनं यस्य निग्राह्यानुग्राह्यपक्षयोस्तत् तु शापानुग्रहप्रयोजनमिति। **नैवं शेषाणी**ति। औदारिकादिभ्यो व्यतिरिच्यते एतत् स्वगुणैरिति प्रथयति—

कार्मणविचारः

भा०—**कर्मणो विकारः कर्मात्मकं कर्ममयमिति कार्मणम्। नैवं शेषाणि॥**

टी०—**कर्मणो विकार इत्यादि**। ज्ञानावरणादिकर्मणो विकृतिः कार्मणमेकलोलीभाव इति कर्माणि तान्येवात्मा यस्य स्वरूपं **कर्ममयमि**ति विकारार्थ एव पर्यायतः। **नैवं शेषाणि** इत्यौदारिकादिलक्षणव्युदासः। एवमन्वर्थसंज्ञकानि प्रतिपाद्य औदारिकादीन्येकप्रयत्नप्रसाध्यं लक्षणभेदाच्छरीरनानात्वमप्यतिदिशति—

---

स्पृष्टानि, पुरुषो भदन्त! अन्तरा हस्तेन वा पादेन वा असिना वा प्रभुर्विच्छेत्तुम्? नैषोऽर्थः समर्थः नैव तत्र शस्त्रं क्राम्यति।

भा०—**एभ्य एव चार्थविशेषेभ्यः शरीराणां नानात्वं सिद्धम्। किं चान्यत्।**

शरीराणां नानात्वे हेतवः

**कारणतो विषयतः स्वामितः प्रयोजनतः प्रमाणतः प्रदेशसङ्ख्यातोऽवगाहनतः स्थितितोऽल्पबहुत्वत इत्येतेभ्यश्च नवभ्यो विशेषेभ्यः शरीराणां नानात्वं सिद्धमिति ॥ ४९ ॥**

टी०—**एभ्य एव चार्थविशेषेभ्यः शरीराणां नानात्वं सिद्धम्**। उदाराद्यर्थविशेषेभ्यो विहितलक्षणेभ्यः विविक्तस्वरूपेभ्यः शरीराणां नानात्वं सिद्धं, घटपटादीनामिव लक्षणभेदात् सिद्धमिति। **किं चान्यदित्यादि**। न केवलमन्वर्थसंज्ञाख्यानद्वारेणैव विशेषः शरीराणाम्, अन्येभ्योऽपि हेतुभ्यः सम्भवत्येव कारणादिभ्यः। तत्र **कारणतस्तावत्** स्थूलपुद्गलोपचितमूर्त्यौदारिकम्। न तथा वैक्रियादीनि। 'परं परं सूक्ष्मम्' (अ० २, सू० ३८) इति वचनात्॥ **तथा विषयकृतो भेदः**। विद्याधरौदारिकशरीराणि प्रत्यानन्दीश्वरादौदारिकस्य विषयः जङ्घाचारणं प्रत्यारुचकपर्यन्तात्[1] तिर्यक्, ऊर्ध्वमा पाण्डुकवनात्। वैक्रियमसङ्ख्येयद्वीपसमुद्रविषयम्। आहारकस्य यावन्महाविदेहक्षेत्राणि। तैजसकार्मणयोरासर्वलोकात्। **तथा स्वामिकृतो विशेषः**। औदारिकस्य मनुष्यतिर्यञ्चः। वैक्रियस्य देवनारकास्तिर्यङ्मनुष्याश्च केचित्। आहारकस्य चतुर्दशपूर्वधरमनुष्यसंयुतः। तैजसकार्मणयोः सर्वसंसारिणः। **तथा प्रयोजनकृतो भेदः**। औदारिकस्य धर्माधर्मसुखदुःखकेवलज्ञानावाप्त्यादि प्रयोजनम्। वैक्रियस्य स्थूलसूक्ष्मैकत्वव्योमचरक्षितिगतिविषयाद्यनेकलक्षणा विभूतिः। आहारकस्य तु सूक्ष्मव्यवहितदुरवगाहार्थव्यवस्थितिः। तैजसस्याहारपाकः शापानुग्रहदानसामर्थ्यं च। कार्मणस्य भवान्तरगतिपरिणामः। **तथा प्रमाणकृतो भेदः**। सातिरेकं योजनसहस्रमौदारिकम्। योजनलक्षप्रमाणं वैक्रियम्। रत्निप्रमाणमाहारकम्। लोकायामप्रमाणे तैजसकार्मणे। **तथा प्रदेशसङ्ख्यातो भेदः**। 'प्रदेशतोऽसङ्ख्येयगुणं प्राक् तैजसात् अनन्तगुणे परे' (अ० २, सू० ३९-४०) इत्युक्तः प्रदेशभेदः प्राक्। **तथाऽवगाहनाकृतो विशेषः**। सातिरेकयोजनसहस्रप्रमाणमौदारिकमसङ्ख्येयगुणप्रदेशेषु यावत्स्ववगाढं भवति तेभ्यो बहुतरकासङ्ख्येयप्रदेशावगाढं योजनलक्षप्रमाणं वैक्रियं भवति, आहारकमाभ्यामल्पप्रदेशावगाढं भवति हस्तमात्रत्वात्, तैजसकार्मणे लोकान्तायताकाशश्रेण्यावगाढे भवतः। **तथा स्थितिकृतो भेदः**। औदारिकं जघन्येनान्तर्मुहूर्तस्थिति, उत्कर्षेण त्रिपल्योपमस्थिति। वैक्रियं जघन्येनान्तर्मुहूर्तस्थिति, उत्कर्षेण त्रयस्त्रिंशत्सागरोपमस्थिति। आहारकमन्तर्मुहूर्तस्थित्येव। तैजसकार्मणयोः सन्तानानुरोधादनादित्वमपर्यवसानता चाभव्यसम्बन्धितया, अनादित्वं सपर्यवसानता च भव्यसम्बन्धित्वेनेति। **तथाऽल्पबहुत्वकृतो विशेषः**। सर्वस्तोकमाहारकं यदि सम्भवति कदाचिन्न सम्भवत्यपि। किं कारणम्? येन तस्यान्तरमुक्तं[2] जघन्येनैकसमयः, उत्कृष्टतः षण्मासाः, तद्यदि भवति ततो जघन्येनैकमादि कृत्वा यावदुत्कर्षेण नवसहस्राणि युगपद् भवन्त्याहारकशरीराणाम्। आहारकाद् वैक्रियशरीराण्यसङ्ख्येयगुणानि नारकदेवानामसङ्ख्येयत्वात् असङ्-

१ 'पर्वतात्' इति क-पार्श्वस्थपाठः। २ 'तस्यान्तर्मुहूर्तं' इति क-पाठः।

ख्येयोत्सर्पिण्यवसर्पिणीसमयराशिसमसङ्ख्यानि भवन्ति । वैक्रियशरीरेभ्य औदारिकशरीराण्यसङ्ख्येयगुणानि, तिर्यक्शरीरमनुष्याणामसङ्ख्येयत्वात्, असङ्ख्येयोत्सर्पिण्यवसर्पिणीसमयराशिसमसङ्ख्यानि ॥ ननु च तिर्यञ्चोऽनन्ताः तत् कथमानन्त्ये च सति असङ्ख्येयानि शरीराणि स्युः? । उच्यते—प्रत्येकशरीराणामसङ्ख्येयानि साधारणास्त्वनन्तास्तेषामनन्तानामेकं शरीरं भवतीत्यतोऽसङ्ख्यातानि, न पुनरनन्तानामपि प्रत्येकं शरीरमस्ति, तस्मात् सुष्ठूक्तमसङ्ख्येयानीति, औदारिकशरीरेभ्यस्तैजसकार्मणान्यनन्तगुणानि । तानि हि प्रत्येकं सर्वजीवानां संसारिणां भवन्त्यतोऽनन्तानि, न पुनरेकं तैजसं कार्मणं वा बहूनामिति ॥ एवमेतेभ्यः कारणादिभ्यो नवभ्यो विशेषेभ्यः शरीराणां नानात्वं सिद्धं—प्रतिष्ठितमवसातव्यमिति ॥ ४९ ॥

**भा०—अत्राह—आसु चतसृषु संसारगतिषु को लिङ्गनियमः? । अत्रोच्यते—जीवस्यौदयिकेषु भावेषु व्याख्यायमानेषूक्तम्—'त्रिविधमेव लिङ्ग—स्त्रीलिङ्गं पुल्लिङ्गं नपुंसकलिङ्गमिति' (अ० २, सू० ६)। तथा चारित्रमोहे नोकषायवेदनीये त्रिविध एव वेदो वक्ष्यते (अ० ८, सू० १०) स्त्रीवेदः पुंवेदो नपुंसकवेद इति । तस्मात् त्रिविधमेव लिङ्गमिति ॥ तत्र ।**

लिङ्गसूत्रे प्रस्तावना

टी०—**अत्राह—आसु चतसृषु संसारगतिषु को लिङ्गनियम इति** सम्बन्धग्रन्थः । अत्रावसरे शिष्यः प्रश्नयति—आसु नरकतिर्यङ्मनुष्यामराख्यासु चतुःसङ्ख्यानियतासु संसारगतिषु को लिङ्गनियम इति, कियन्ति लिङ्गान्यासु गतिषु सम्भवन्तीति पृच्छयते, लिङ्गसङ्ख्यामेव तावन्निर्धारयितुमिच्छति, न पुनः किं लिङ्गं कस्यां गताविति पृच्छयते । **अत्रोच्यते**—प्राक् तावल्लिङ्गेयत्ता निर्धार्यते ततश्च निर्वृत्तानि लिङ्गानि सङ्ख्यया गतिषु विभक्ष्यन्त इति । अतस्तमेव नियमं दर्शयति—**त्रिविधमेव लिङ्गं** न न्यूनमधिकं वा, तच्च प्राक् प्रदर्शितं प्राय इत्येवमावेदयति **जीवस्यौदयिकेष्वि**त्यादिना भाष्येण गतिकषायलिङ्गसूत्रे (अ० २, सू० ६) औदयिकमेकविंशतिभेदमाचक्षाणेन स्त्रीपुंनपुंसकलिङ्गानि त्रीण्येवाभिहितानि किमिति न स्मर्यन्ते? **तथा चारित्रमोह** इत्यादि द्विविधो मोहोऽष्टमे वक्ष्यते (अ० ८, सू० १०) दर्शनचारित्रभेदात्, तत्र चारित्रमोहे चारित्रमोहोऽपि द्विविधः—कषायचारित्रमोहो नोकषायचारित्रमोहश्च । तत्र नोकषायवेदनीये हास्यरत्यरतिभयशोकजुगुप्सास्त्रीपुंनपुंसकवेदभेदे त्रिविध एव वेदो वक्ष्यते । यस्य कर्मण उदयात् पुरुषाभिलाषस्तत् कर्म स्त्रीवेदशब्दाभिधेयम्, यस्य पुनरुदयात् स्त्र्यभिलाषस्तत् कर्म पुरुषवेदः, स्त्रीपुरुषद्वयाभिलाषो यदुदयात् तत् कर्म नपुंसकवेद इति, तस्मात् त्रिविधमेव लिङ्गमन्यस्यासम्भवात्, तदेव चैषां स्वस्थानं वेदानां तथैव च स्वरूपतो विस्तरेण व्याख्यास्यन्ते, तत्र चेयत्तया व्यवच्छिन्नाः सन्त इह संसारगतिषु नियम्यन्ते को वेदः कस्यां गतावित्यत आह—

## सूत्रम्—नारकसम्मूर्च्छिनो नपुंसकानि ॥ २—५० ॥

टी०—केनचित् पुनरधीयते-नपुंसकवेदवन्तो जीवाः नारकसम्मूर्च्छिनो नपुंसकाः, नपुंसकं येषां विद्यते, अर्शआदिपाठादतं विधाय ॥

**भा०—नारकाश्च सर्वे सम्मूर्च्छिनश्च नपुंसकान्येव भवन्ति, न स्त्रियो न पुमांसः। तेषां हि चारित्रमोहनीयनोकषायवेदनीयाश्रयेषु त्रिषु वेदेषु नपुंसकवेदनीयमेवैकमशुभगतिनामापेक्षं पूर्वबद्धनिकाचितमुदयप्राप्तं भवति, नेतरे इति ॥ ५० ॥**

नपुंसकवेदवन्तो जीवाः

टी०—**नारकाश्चे**त्यादि भाष्यम्। नरकेषु भवा नारकाः **सर्वे** सप्तसु पृथिवीषु वर्तमानाः **सम्मूर्च्छिनश्च** सम्मूर्च्छनं सम्मूर्च्छः सम्मूर्च्छा वा सम्मूर्च्छनजन्मेत्यर्थः तद् येषां विद्यते ते सम्मूर्च्छिनः, सम्मूर्च्छनजन्मभाजश्च पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुरिन्द्रियाश्च केचित् तिर्यङ्मनुष्याः, सर्वे एते **नपुंसकान्येव** नपुंसकवेदभाज एवेत्यवधारयति। सामर्थ्याल्लब्धमवधारणाफलं दर्शयति—**न स्त्रियो न पुमांसः** न स्त्रीवेदभाजो न पुरुषवेदवेदिनः, किं पुनः कारणं नपुंसकवेद एव तेष्वित्यत आह—**तेषां ही**त्यादि। यस्मात् तेषां नारकाणां सम्मूर्च्छनजन्मनां च **चारित्रमोहनीयनोकषायवेदनीयाश्रयेषु त्रिषु वेदेषु**, चारित्रमोहनीयं च तन्नोकषायवेदनीयं चेति चारित्रमोहनीयनोकषायवेदनीयम्—नवधा हास्यादि तद् आश्रयः—स्थानं येषां ते तदाश्रयास्तेषु तदाश्रयेषु त्रिषु वेदेषु निर्धार्यते। **नपुंसकवेदनीयमि**त्यादि। नपुंसकत्वानुभवो नपुंसकवेदनीयं **तदेवैकमशुभगतिनामापेक्षम्**, प्रदर्शनवाक्यमिदमशुभगतिनामापेक्षमिति, अशुभगत्यादिनामगोत्रवेद्यायुष्कोदयापेक्षो मोहोदयः परो येनाशुभं महानगरदाहोपमं मैथुनाभिलाषमनुभवन्ति नारकाकाङ्क्षारूपमिति, सम्मूर्च्छनजन्मानोऽपि हि तिर्यञ्चो मनुष्याश्चाशुभगत्यादिनामगोत्रवेद्यायुष्कोदयापेक्षमोहोदयाकाङ्क्षावन्तो नपुंसकत्वमनुभवन्ति, **पूर्वबद्धनिकाचितमुदयप्राप्तं** पूर्वस्मिन् जन्मन्यनन्तरे बद्धं नपुंसकत्वयोग्यास्रवैः परिगृहीतमित्यर्थः। निकाचितं तदेव ग्रहणानन्तरमात्मसात्कृतं क्षीरोदकवदन्योन्यानुगतिलक्षणेन सम्बन्धेनात्मप्रदेशैः सहाविभागितयाऽध्यवसायविशेषाद् व्यवस्थापितम्, **उदयप्राप्तमिति** समासादितपरिपाकावस्थम्, तदेवंविधं नपुंसकवेदनीयमेव नारकसम्मूर्च्छिमानां जन्तूनां दुःखबहुलत्वाद् **भवति, नेतरे** स्त्रीपुंवेदनीये कदाचिदिति ॥ ५० ॥

उक्तं नारकसम्मूर्च्छिनां लिङ्गम्, अथ देवानां किं लिङ्गमित्यत आह—

## सूत्रम्—न देवाः ॥ २—५१ ॥

**भा०—देवाश्चतुर्निकाया अपि नपुंसकानि न भवन्ति, स्त्रियः पुमांसश्च भवन्ति। तेषां हि शुभगतिनामापेक्षे स्त्रीपुंवेदनीये पूर्वबद्धनिकाचिते उदयप्राप्ते द्वे एव भवतो नेतरत्। पारि-**

देवानां वेदौ

**शेष्याच्च गम्यते जरायवण्डपोतजास्त्रिविधा भवन्ति—स्त्रियः पुमांसो नपुंसकानीति ॥ १ ॥**

टी०—प्रकृतस्य प्रतिषेधं दर्शयति, नपुंसकवेदः प्रकृतः, स एव प्रतिषिध्यते, दीव्यन्ति इति देवाः क्रीडाद्युतिगतिष्वतिशयवतीषु वाच्याः, चत्वारो निकायाः-सङ्घाताः-समूहाः येषां भवनवनचरज्योतिषिकवैमानिकाख्यास्ते **चतुर्निकायास्ते** चतुर्विधा **अपि न नपुंसकानि भवन्ति,** नपुंसकवेदप्रतिषेधोत्तरकालं चाप्रतिषिद्धत्वात् सामर्थ्यात् स्त्रीपुरुषवेदद्वययोगिता गम्यतेऽतस्तां दर्शयति—**स्त्रियः पुमांसश्च भवन्ति** । स्त्रीवेदभाजः पुरुषवेदवेदिनश्चेत्यर्थः। भवनपतिव्यन्तरज्योतिषिकसौधर्मेशानेषु वेदद्वयमप्युपपाततः, तदुपरि पुरुषवेद एव, नेतरः। किं पुनः कारणं देवानां नपुंसकवेदो नास्तीत्यत आह—**तेषां हीत्यादि** । यस्मात् तेषां शुभगत्यादिनामगोत्रवेद्यायुष्कापेक्षमोहोदयादभिलषितप्रीतिसाधकं मायार्जवोपचितं करीषतृणपूलाग्निसदृशं स्त्रीवेदनीयमेकं पुंवेदनीयमेवाधिकं **पूर्वबद्धनिकाचितमुदयप्राप्तं** भवति **नेतरन्नपुंसकवेदनीयमबद्धत्वात्**। अत्र च स्त्रीवेदो नपुंसकवेदापेक्षया शुभ उच्यते, न पुनः शुभ एव । इदानीं सामर्थ्याल्लब्धं दर्शयति—**पारिशेष्याच्च गम्यत** इत्यादिना । परिशेषसिद्ध्या विज्ञायते **जरायवण्डपोतजास्त्रिविधा भवन्ति—स्त्रियः पुमांसो नपुंसकानि** चेति ॥ ५१ ॥

आयुषोऽपवर्तनादि

**भा०—अत्राह—चतुर्गतावपि संसारे किं व्यवस्थिता स्थितिरायुषः उताकालमृत्युरप्यस्तीति ? । अत्रोच्यते—द्विविधान्यायूंषि—अपवर्तनीयानि अनपवर्तनीयानि च। अनपवर्तनीयानि पुनर्द्विविधानि—सोपक्रमाणि निरुपक्रमाणि च । अपवर्तनीयानि तु नियतं सोपक्रमाणीति ॥ तत्र—**

टी०—**अत्राहेत्यादिः** सम्बन्धग्रन्थः। अत्र प्रस्तावे संशयानः प्रश्नयति—नारकतिर्यङ्मनुष्यामरभेदभाजि **संसारे**ऽतीतानन्तरजन्मपरिगृहीतस्यायुषः **किं व्यवस्थिता** तावत्येव **स्थितिः**-अनुभवकालः पूर्वबद्धा हि यावती, अथापरिपूरितायामपि तस्यां स्थितावपहाय प्राणान् परलोकप्रयाणाभिमुखः प्राणी प्रवर्तते ?। अकाले मृत्युः **अकालमृत्युः** प्रागुपात्तजीवनकालावधेरर्वाकाले स्वोपात्तमनुष्याद्यायुर्द्रव्याणामनुभवतः कृत्स्नपरिक्षयो मृत्युः स पुनः **किमकालेऽपि** पूर्वप्रतिबद्धायुःसंस्कारविच्छेदावधावपरिसमाप्तेऽपि भवति आहोस्विन्नियमत एव तावन्तं कालं प्राणिति प्राणीति, कुतः पुनरयं संशयः? सकललोकप्रवादात्, एवं लौकिकाः प्रभाषन्ते—अयमकाले मृतो जन्तुर्व्यापादितो वा, अयं पुनः स्थविरः स्वकालपरिमाणमायुरनुभूय मृत्युगोचरमायात इत्यतः सन्देहः किमकालेऽपि मरणयोग इति ? तथैव सङ्ग्रामे समर्थतरुणबहुजनव्यापत्तिमनुप्रेक्ष्य युगपत् संशयप्रसवः, न तत्र प्रतिपत्तिराधातुं शक्याऽऽत्मनि अयुक्तिकत्वात्, सर्व एते समायुषः सममेकसंख्यानिबन्धनमेभिर्भवान्तरमासाद्यायुरुपचितमिति न शक्यमवगन्तुम्, अतः संशेते

मनः किमकालमृत्युरप्यस्तीति, तत एव आयोधनादक्षतवपुषः परिणति( त )शतजर्जरसकलसन्धयः स्थविरास्तीव्रहेतिहस्तास्तीरयित्वा समरमपगच्छन्तोऽवलोक्यन्ते, अतोऽवगम्यते—न खलु कश्चिदकाल एव विषमाण्यवगाहमानोऽपि शरशतापादितक्षतिरपि प्रकृष्टदुःखवेदनार्तो मरणमभिलषन्नपि प्राणैर्वियुज्यते, एवमनेकस्मिन् संशयबीजप्रसवे सति प्रश्नप्रवृत्तौ प्रतिवचनमुच्यते-द्विविधान्यायूंषि—अपवर्तनीयान्यनपवर्तनीयानि चेति । अकाले मृत्योरस्ति सम्भव इत्येवंविधार्थप्रदर्शनपरायणमिदमास्तीर्यते भाष्यम् । द्विविधान्यायूंषि-जीवितानि भवन्ति, प्रयोगविशेषाच्च द्वैविध्यं, न स्वभावात्, तत्रायुषो बन्धकास्तावत् सम्यग्मिथ्यादृष्टिविरहिता मिथ्यादृष्टेरारभ्य यावदप्रमत्तसंयत इति षट्सु स्थानेषु जन्तवः अजघन्योत्कृष्टाध्यवसायविशेषभाजः पृथुकषायाः साध्यध्रुवायुर्विकल्पयुजः, तत्र नारकदेवासङ्ख्येयवर्षायुषः प्राणिनः षण्मास्यामवशेषायां नियमादायुषो बन्धकाः । शेषास्त्वायुषस्त्रिभागेऽवशेषे पुरोवर्तिजन्मानुभवयोग्यमायुर्बध्नन्ति, त्रिभागत्रिभागे वाऽवशेष इति । अथवा त्रिभागत्रिभागत्रिभागे वाऽवशेष इति । एतदुक्तं भवति—त्रिभागावशेषायुषो नवभागशेषायुषः सप्तविंशतिभागावशेषायुषो वा परभवायुर्बध्नन्ति, ततः परं न बध्नन्तीत्यर्थः । तत्रावनिजलज्वलनमारुततरुद्वित्रिचतुरिन्द्रियाणां निरुपक्रमायुषां च पञ्चेन्द्रियाणां नियमित एव त्रिभागावशेषे बन्धो भवत्यायुषः, सोपक्रमायुषां पुनः पञ्चेन्द्रियाणामनियमेन बन्धो यावत् सप्तविंशतिभागावशेषकल्पनेति, ते च प्राणिनस्तदैव तदायुर्बध्नन्तोऽध्यवसायविशेषात् केचिदपवर्तनार्हं कुर्वन्ति केचिदनपवर्तनीयमिति, मन्दपरिणामप्रयोगोपचितमपवर्त्यं तीव्रपरिणामप्रयोगोपचितमनपवर्त्यम्, तत्रापवर्तना नाम प्राक्तनजन्मविरचितस्थितेरल्पतापादनमध्यवसानादिविशेषात्, अनपवर्तनीयं पुनस्तावत्कालस्थित्येव न ह्रासमायाति स्वकालावधेरारात्, तैलवर्तिक्षयतो निर्विघातप्रदीपोपशान्तिवत् घनसंहतत्वाद् वा पवनश्लेषवत्, तच्च किलाखिन्नवीर्यारब्धत्वात् असङ्ख्येयसमयोपार्जितमायुरनपवर्त्यम्, तथा गाढबन्धनत्वान्निकाचितबन्धात्मनियमादनपवर्त्यायुर्भवति । अथवैकनाडिकापरिगृहीतमायुः संहतिमत्त्वात् संहतपुरुषराशिवदभेद्यं वा एकनाडिकाविवरप्रक्षिप्तबीजनिष्पादितसस्यसंहतिवद् वा, बिवराद् बहिः पतितबीजप्रसूतं हि सस्यमसंहतत्वात् प्रविरलतायां सत्यां सर्वस्यैव गवादेर्गम्यम्, एवं किलायमात्माऽऽयुर्बध्ननेकात्मलब्धिपरिणामस्वाभाव्याच्छरीरव्याप्यपि सन्नाडिकामार्गपरिणामो भवति, ततस्तामवस्थामासाद्य यानायुष्कपुद्गलान् बन्धाति ते नाडिकाप्रविष्टत्वात् संहतिमत्त्वे सति अभेद्या विषशस्त्राग्न्यादीनामिति, मन्दतीव्रपरिणामसन्निधानाच्च स तत् तथा जन्मान्तर एव रचयति इहत्यजन्मव्याधिवत् । अल्पाद्धातुवैषम्यनिदानापथ्यसेवनाद् यो व्याधिः समुपजातः स कालान्तरेणोपेक्ष्यमाणःसमासादितोदग्रवृद्धिः समूलघातं निहन्ति शरीरकं, न पुनराश्वेव, निपुणभिषग्वरोपदिष्टतत्प्रत्यनीकक्रियाकलापानुष्ठानाच्च द्राग् विच्छेदमापाद्यते, तथैव यन्म-

आयुषो द्वैविध्यम्

---

१ 'समरमपयान्तः' इति क-पाठः।

न्दपरिणामप्रयोगकारणाभ्यासादासादितमनेनायुर्जन्तुनाऽतीतजन्मनि तदपवर्तनार्हमाचक्षते क्षतक्लेशाः । यः पुनरतिमहान्तं धातुक्षोभमाश्रित्यापथ्यनिदानासेवनादिना समजनि व्याधिरतिदीर्घकालकलापापादितजरठिमासमुपगूढनिरवशेषाङ्गोपाङ्गसङ्घातः कुष्ठक्षयादिः, स खलु भेषजप्रकारमनेकमुपचीयमानमनुदिनमप्यवगणय्य सञ्जातबलः क्षिप्रमाक्षिपति तं रोगिणमकाण्ड एव, न खलु प्रयत्नपरमेण धन्वन्तरिणाऽपि शक्यः समुच्छेत्तुम् । एवं हि तीव्रपरिणामप्रयोगबीजजनितशक्ति तदायुरात्तमतीतजन्मनि न शक्यमन्तराल एवावच्छेत्तुमित्यनपवर्तनीयमुच्यते । तथा हि—कालाकालसमाप्त्योरायुषःसम्भवत्यनेकं निदर्शनं, तद्बलाच्च प्रतीतिरुपजायते श्रोतुः, अतस्तदभिधानमाम्रफलपाकवत् भस्मकव्याधिपरिगतपुरुषभोजनवत् वेष्टितार्द्रपटविततशोषवत्, वेष्टितपलालवृतरज्जुप्रगुणीकृतदाहवत्, एकार्थेषु बुद्धिमन्दग्राहककालभेदवत्, एकमार्गेऽश्वपङ्गुगमनभेदवत्, यथैता भिन्नकालानुवर्तिन्योऽप्यवस्थास्तुल्यनिदर्शनगतास्तथा तुल्येऽपि कर्मणि स्वपरिणामादिक्रियाविशेषाद् भिन्नोऽनुभवकालः परममध्यमजघन्याख्यः, तस्माद् द्विविधमायुरपवर्तनीयमनपवर्त्यं चेति व्यवस्थितम् ॥ अधुनाऽनपवर्तनीयायूंषि द्विविधान्यभिधित्सुराह—**अनपवर्तनीयानि पुनर्द्विविधानि—सोपक्रमाणि निरुपक्रमाणि च ।** तत्रोपक्रमणमुपक्रमः प्रत्यासन्नीकरणकारणमुपक्रमशब्दाभिधेयम्, अतिदीर्घकालस्थित्यप्यायुर्येन कारणविशेषेणाध्यवसानादिनाऽल्पकालस्थितिकमापाद्यते स कारणकलाप उपक्रमः, तेन तादृशोपक्रमेण सोपक्रमाण्यनपवर्तनीयान्यायूंषि भवन्ति । निर्गतोपक्रमाणि निरुपक्रमाण्यध्यवसानादिकारणकलापाभावात्, यथैव[2] तज्जिहास्यते अतिदीर्घकालस्थितिस्वपरिणतिविशेषात् तथा अल्पमपि वृद्धिमापादयिष्यते रसायनाद्युपयोगतश्चेत् तन्न, अबद्धत्वात्, जन्मान्तरे हि बद्धमायुस्तावता वा कालेनानुभूयेत ह्रस्वीयसा वाऽध्यवसानादियोगात् आभिचारिककर्मणाऽवाप्य कालफलपाकवत् स्याद्, अबद्धं पुनर्न शक्यते संवर्धयितुममृतोपयोगेनापि । यथा हि दीर्घपटः प्रागुक्तो वेष्टनयाऽल्पः शक्यः कर्तुं न पुनर्द्राघिमानमापादयितुमनुपात्ततावद्दलिकत्वात् । स्यादेतद् रसायनाद्युपयोगाद् यावत्स्थितिकमात्तं प्रागायुस्तावतीं स्थितिमखण्डयत् तदासीत न पुनर्वृद्धिमश्रद्धेयामाधातुमलं तदिति । अत्र च किलौपपातिका असङ्ख्येयवर्षायुषश्च निरुपक्रमा एव, चरमदेहाः उत्तमपुरुषाश्च सोपक्रमा निरुपक्रमाश्च ॥ नन्विदं विप्रतिषेध्यमनपवर्त्यायुषः सोपक्रमाश्चेति । उच्यते—अध्यवसानाद्युपक्रमकारणानि किल सन्त्यमीषां चरमदेहोत्तमपुरुषाणां न पुनरायुरपवर्त्यते, सत्स्वपि तेष्वनपवर्त्यायुष्ट्वात्, न खलूपक्रमसन्निधानं तत्र प्रतिषिध्यते, किन्तु सत्यप्युपक्रमकारणसान्निध्येऽतिगाढबन्धत्वान्न तदायुरपवर्त्यते ॥ ननु चौपपातिकासङ्ख्येयवर्षायुषामपि तुल्यमेतत् सन्निधानमिति । उच्यते—सत्यम्, नारकादीनामुपक्रमकलापः सन्निहितस्तथापि ते सोपक्रमायुषो न भण्यन्ते

अपवर्तनेऽपि क्षयाभावः

---

१ 'मार्गेऽश्वपङ्गु' इति ख-पाठः । २ 'तथैव' इति ख-पाठः ।

कदाचिदप्युपक्रान्तेरदर्शनात् । अपरे वर्णयन्ति—तीर्थकरौपपातिकानां नोपक्रमतो मृत्युः, शेषाणां चरमदेहोत्तमपुरुषासङ्ख्येयवर्षायुषामुभयथा, एवंविधाभ्युपगमे भाष्यमुपरिष्टादगमितं स्यात्, औपपातिकाश्चासङ्ख्येयवर्षायुषश्च निरुपक्रमाः, चरमदेहाः सोपक्रमा निरुपक्रमाश्चेति भाष्यमिदमत्यन्तमसङ्गतं स्यात् । कर्मप्रकृतिग्रन्थानुसारिणस्तु वर्णयन्ति—

"अद्धा जोगुक्कस्सा, बंधित्ता भोगभूमिए सुलहं ।
सव्वप्पजीवितं वज्जइत्तु उवट्टि(य)त्ता दोण्हम् ॥"

युगलिनोऽप्यायुषोऽपवर्तनम्

उत्कृष्टप्रदेशोदयविचारे सङ्ग्रहिण्यामियं गाथा, अर्थस्त्वस्याः—उत्कृष्टबन्धाद्धायामायुषो योगेनोत्कृष्टेन तिर्यगायुर्मनुष्यायुर्वा बद्ध्वा मृतः सन् भोगभूमिजेषु तिर्यक्षु मनुष्येषु च त्रिपल्योपमस्थितिषूत्पन्नः पश्चादाशु सर्वाल्पजीवितमन्तर्मुहूर्तं विहाय शेषमायुस्त्रिपल्योपमस्थितिकमपवर्तयन्त्यन्तर्मुहूर्तोनमिति । यदा च तदपवर्तितं भवति तदा किलोत्कृष्टः प्रदेशोदयो भवतीति, न च शक्यमनेनाभिप्रायेण भाष्यं गमयितुमतिविरोधात्, तस्मादवस्थितमिदमनपवर्तनीयानि द्विविधानि-सोपक्रमाणि निरुपक्रमाणि चेति, **अपवर्तनीयानि तु नियतं सोपक्रमाणि** । तुशब्दोऽवधारकः । सोपक्रमाण्येवापवर्तनीयान्यायूंषि भवन्ति सर्वदा, यतो न ह्यपवर्तनाध्यवसानादिकं निमित्तमन्तरेणात्मलाभं प्रतिपद्यते । तत्र केऽनपवर्त्यायुषः के वाऽपवर्त्यायुष इत्यन्यतराख्यानेऽन्यतरपरिज्ञानं भवति लघुत्वाच्चानपवर्त्यायुषः सूत्रेण दर्शयति—

## सूत्रम्—औपपातिकचरमदेहोत्तमपुरुषासङ्ख्येयवर्षायुषोऽनपवर्त्यायुषः ॥ २–५२ ॥

टी०—अनपवर्त्यायुषो निर्धार्यन्तेऽमुना योगेन, तच्चावधारणं तत्र शब्देनाख्याति भाष्यकारः ।

अनपवर्त्यायुषः स्वामिनः

**भा०—औपपातिकाश्चरमदेहा उत्तमपुरुषाः असङ्ख्येयवर्षायुष इत्येतऽनपवर्त्यायुषो भवन्ति । तत्र औपपातिका नारकदेवाश्चेत्युक्तम् (अ० २, सू० ३५)। चरमदेहा मनुष्या एव भवन्ति, नान्ये । चरमदेहा अन्त्यदेहा इत्यर्थः । ये तेनैव शरीरेण सिद्ध्यन्ति । उत्तमपुरुषास्तीर्थकरचक्रवर्त्यर्धचक्रवर्तिनः । असङ्ख्येयवर्षायुषो मनुष्यास्तिर्यग्योनिजाश्च भवन्ति ।**

टी०—औपपातिका इत्यादि भाष्यम् । उपपातजन्मानो नारकदेवाः, चरमः-अन्त्यो देहो येषां ते चरमदेहाः-पुनर्देहग्रहणं ये न करिष्यन्ति, उत्तमपुरुषास्तीर्थकरचक्रवर्तिबलदेववासुदेवाः । केचिदभिदधते – नास्ति सूत्रकारस्योत्तमपुरुषग्रहणमिति तत् कथं तीर्थकरादि-

सङ्ग्रह इति चेत्, एवं च मन्यन्ते चरमदेहग्रहाद् ग्रहीष्यन्ते, कथम्? ये किल चरमदेहास्ते नियमत एवोत्तमा भवन्ति, उत्तमास्तु चरमदेहत्वेन भाज्या वासुदेवादय इति, तस्मादनार्षमुत्तमपुरुषग्रहणमिति, उभयथा च भाष्यमुपलक्ष्यते अविगानात्, आदावुत्तमपुरुषास्तीर्थकरादय इति विवृतमुत्तरकालं पुनर्नोपात्तमुत्तमपुरुषग्रहणं निरुपक्रमसोपक्रमनिरूपणायाम्, अतो भाष्यादेव सन्देहः, किमस्ति नास्तीति संशयात्तमेवेदमस्माकम्। असङ्ख्येयवर्षाणि गणितविषयातीतान्यायूंषि येषां तेऽसङ्ख्येयवर्षायुषोऽकर्मभूम्यन्तरद्वीपका मनुष्याः, भरतैरावतविदेहेषु च तत्तुल्यकालाः पञ्चेन्द्रियतिर्यग्योनयश्च तदन्यक्षेत्रद्वीपसमुद्रेषु, एवमेतेऽनपवर्त्यायुषो द्रष्टव्याः। एतदेव स्पष्टयति भाष्यकारः—**औपपातिका नारका देवाश्चेत्युक्त**मिति स्मारयति प्रागभिहितं (अ०२,सू०३५), नाधुना व्याख्येयमिति। चरमशरीरास्तु **मनुष्या एव भवन्ति**, नान्ये। नारकतिर्यग्देवव्युदासः सिद्ध्ययोग्यत्वात्। चरमदेहान् प्रसिद्धतरपर्यायशब्देन कथयति—**चरमदेहा अन्त्यदेहा इत्यर्थः। ये तेनैव शरीरेण** सकलकर्मजालमपहाय सिद्धिमशेषकर्मापगमलक्षणामाप्नुवन्ति इति। **उत्तमपुरुषास्तीर्थकरचक्रवर्त्यर्धचक्रवर्तिनः** तीर्थकरनामकर्मोदयवर्तिनस्तीर्थकराः, चक्रवर्तिनोऽपि नवनिधिपतयश्चतुर्दशानां रत्नानां नेतारः स्वपौरुषोपात्तमहाभोगभुजः सकलभरताधिपा भवन्ति, अर्धचक्रवर्तिनस्तु बलदेववासुदेवाः[1] एवमादयश्चान्येऽपि किल प्रदर्शनाद् गणधरादयो गृह्यन्ते। **असङ्ख्येयवर्षायुषो मनुष्यास्तिर्यग्योनिजा भवन्ती**त्यादि भाष्यम्। एतेष्वेवासङ्ख्येयवर्षजीवित्वं लभ्यते, न नारकदेवेषु सम्भवन्त्यपि, तत्रासङ्ख्येयानि वर्षाण्यौपपातिकग्रहणान्निवार्यन्त इति, मनुष्याणां तिरश्चां च मध्ये सम्भवन्त्यसङ्ख्येयवर्षायुषस्तेऽनपवर्त्यायुषः। ते च—

**भा०—सदेवकुरूत्तरकुरुषु सान्तरद्वीपकास्वकर्मभूमिषु कर्मभूमिषु च सुषमसुषमायां सुषमायां सुषमदुष्षमायामित्यसङ्ख्येयवर्षायुषो मनुष्या भवन्ति। अत्रैव बाह्येषु द्वीपेषु समुद्रेषु तिर्यग्योनिजा असङ्ख्येयवर्षायुषो भवन्ति। औपपातिकाश्चासङ्ख्येयवर्षायुषश्च निरुपक्रमाः। चरमदेहाः सोपक्रमा निरुपक्रमाश्चेति। एभ्य औपपातिकचरमदेहासङ्ख्येयवर्षायुर्भ्यः[2] शेषा मनुष्यास्तिर्यग्योनिजाः सोपक्रमा निरुपक्रमाश्चापवर्त्यायुषोऽनपवर्त्यायुषश्च भवन्ति। तत्र येऽपवर्त्यायुषस्तेषां विषशस्त्रकण्टकाग्न्युदकाह्यशिताजीर्णाशनिप्रपातोद्बन्धनश्वापदवज्रनिर्घातादिभिः क्षुत्पिपासाशीतोष्णादिभिश्च द्वन्द्वोपक्रमैरायुरपवर्त्यते। अपवर्तनं शीघ्रमन्तर्मुहूर्तात् कर्मफलोपभोगः, उपक्रमोऽपवर्तननिमित्तम्॥**

अपवर्तनीयायुषि हेतुः

---

१ 'बलदेवप्रतिवासुदेवाः' इति क-ख-पाठः। २ अयं तु घ-पाठः, '०पातिकं चरम०' इति तु ग-पाठः।

**टी०**—मन्दरनीलयोरुत्तरदक्षिणा गन्धमादनमाल्यवतोर्मध्य उत्तराः कुरवः एकादशयोजनसहस्रद्विचत्वारिंशाष्टशतसद्विकलविस्तृताः । मन्दरनिषधयोर्दक्षिणोत्तराः सौमनसविद्युत्प्रभयोर्मध्ये देवकुरवस्तावत्प्रमाणाः, सह देवकुरुभिरुत्तरकुरवः सदेवकुरूत्तरकुरवस्तत्र **देवकुरूत्तरकुरुषु** जम्बूद्वीपधातकीखण्डपुष्करद्वीपार्धवृत्तिषु, तथा हिमवतः प्राक् पश्चाद् विदिक्षु त्र्यादिषु नवान्तेषु योजनशतेषूदधाववगाह्य तावद्विस्तरायामाः सप्तान्तरद्वीपाश्चतुश्चतुःप्रागुत्तरक्रमादेकोरुकादयस्तानन्तरद्वीपान् कायन्तीत्यन्तरद्वीपका मनुष्याः सहान्तरद्वीपकैः **सान्तरद्वीपकाः**, कर्मणो भूमयः यत्र जाताः प्राणिनः सकलं कर्म क्षपयित्वा सिद्ध्यन्ति तीर्थकराद्युपदेशात् ताः कर्मभूमयो भरतैरावतविदेहक्षेत्राणि पञ्चदश प्रत्येकं पञ्चभेदत्वात् । न कर्मभूमयोऽकर्मभूमयः तासु **अकर्मभूमिषु**–हैमवतहरिवर्षरम्यकहैरण्यवताख्यासु जम्बूद्वीपधातकीखण्डपुष्करवरद्वीपार्धवर्तिनीषु तथोक्तलक्षणासु **कर्मभूमिषु च** ये मनुष्याः प्रथमद्वितीयतृतीयसमासु यदा भवन्त्य**सङ्ख्येयवर्षायुष**स्तदा तेऽनपवर्त्यायुषो मन्तव्याः दृढबद्धत्वादग्न्यादिभिः कांकटुकापरान्तानुक्रमवत्[1] । **अत्रैव बाह्येष्वित्यादि** । सदेवकुरूत्तरकुरुष्वित्यादि समस्तमुपलक्षयत्यत्रैवेति । तथा बाह्येषु मनुष्यक्षेत्राद् बहिर्ये वर्तन्ते द्वीपाः समुद्राश्च तेषु **तिर्यग्योनिजा असङ्ख्येयवर्षायुषो भवन्ति**,मनुष्यक्षेत्रे च बहिश्चेत्यसङ्ख्येयवर्षायुषां तिरश्चां सम्भवः । तत्र प्रागुक्तमनपवर्तनीयानि द्विविधानि भवन्तीति तद् दर्शयत्यधुना भाष्येण–**औपपातिकाश्चासङ्ख्येयवर्षायुषश्च निरुपक्रमाः** । न ह्येषां प्राणापानाहारनिरोधाध्यवसाननिमित्तवेदनापराघातस्पर्शाख्याः सप्त वेदनाविशेषाः सन्त्यायुषो भेदकाः उपक्रमा इति, अतो निरुपक्रमा एव । **चरमदेहाः पुनः सोपक्रमा निरुपक्रमाश्चेति** । अत्रोत्तमपुरुषा नोक्ताः, एतानि प्राणापाननिरोधादीनि किल चरमदेहेषु सम्भवन्त्येव नोच्छिन्दन्तीति सोपक्रमा भण्यन्ते, केचित् तत्र निरुपक्रमा येष्वेतानि न सम्भवन्तीत्यपीति । इदानीं सामर्थ्यलब्धमर्थं दर्शयति—**एभ्य इत्यादि** । उक्तलक्षणेभ्यः औपपातिकादिभ्यो व्यतिरिच्यमानाः **शेषाः** । ते च नियमतो **मनुष्याः** तिर्यञ्चो वा आयुरुभयथा भजन्ते, प्राणापाननिरोधादिकारणकलापोपक्रम्यत्वात् सोपक्रमायुषः केचित्, केचित् तु न तैरुपक्रम्यन्त इति निरुपक्रमायुषः । यदुक्तं–'प्रागपवर्तनीयानि तु नियतं सोपक्रमाणी'ति तद्विशेषदिदर्शयिषया आह—**अपवर्त्यायुषोऽनपवर्त्यायुषश्च शेषाः** । तत्र येऽपवर्त्यायुषस्ते नियतं सोपक्रमाः । ये पुनरनपवर्त्यायुषस्ते शेषाश्चेति–निरुपक्रमायुष एव । एतदेव भाष्यकारः स्पष्टयन् विभजते—**तत्र येऽपवर्त्यायुषस्तेषामित्यादिना** । तेषु मनुष्येषु तिर्यक्षु च येषामपवर्तनीयमायुस्तेषामपवर्त्यते । अमी विषादयो हेतवः सुज्ञानत्वाच्च न विवृताः । आदिशब्दाच्च पूर्वोक्ताः प्राणापाननिरोधादयः कांश्चिदपहाय ग्राह्याः । एभिर्हेतुभिरायुरपवर्तते स्वल्पीभवतीतियावत्, द्रन्द्व उपघात आयुषस्तस्योपक्रमैः, तत्प्रत्यासन्नीकरणैरित्यर्थः । किं

---

१ 'कंकटुकापरान्तानुपक्रमवत्' इति ग–टी-पाठः ।

पुनरपवर्तनमुच्यत इत्याह—**अपवर्तनं शीघ्रमन्तर्मुहूर्तात् कर्मफलोपभोगः**, न खलु कर्मनाशोऽपवर्तनं, किन्तु शीघ्रं यः सकलायुष्कर्मफलोपभोगस्तदपवर्तनम्, अनेनैतत् कथयति तावदपवर्तते तदायुर्यावदन्तर्मुहूर्तस्थितिजातं, ततः परं निवर्ततेतादृग्विधाध्यवसानाद्यभावात्। अत्र चापवर्तनफले कर्मफलोपभोगेऽपवर्तनशब्दः प्रयुक्तो भाष्यकारेण—**उपक्रमोऽपवर्तननिमित्तमिति** पर्यायाख्यानमात्रमेतत्। अल्पतापत्तिकारणानामुपक्रमः, अपवर्तनमपि दीर्घकालस्थितितः कर्मणो ह्रस्वस्थितिकरणं निमित्तं विषशस्त्राद्यल्पताहेतुः, एवमिदमपवर्तनमिहायुरङ्गीकृत्याभिहितमन्यासामपि तु प्रकृतीनामनिकाचितावस्थानां प्रायोऽवसेयम्। तपोऽनुष्ठानात् पुनर्निकाचिता अप्यपवर्त्यन्त इति पारमर्षी श्रुतिः॥

अथेदानीं कर्मविनाशलक्षणमपवर्तनशब्दार्थमङ्गीकृत्य चोदयति—अत्राहेत्यादिना भाष्येण।

**भा०—अत्राह—यद्यपवर्तते कर्म तस्मात् कृतनाशः प्रसज्यते यस्मान्न वेद्यते। अथास्त्यायुष्कं कर्म म्रियते च, तस्मादकृताभ्यागमः प्रसज्यते येन सत्यायुष्के म्रियते, ततश्चायुष्कस्य कर्मणः आफल्यं प्रसज्यते। अनिष्टं चैतत्। एकभवस्थिति वाऽऽयुष्कं कर्म न जात्यन्तरानुबन्धि। तस्मान्नापवर्तनमायुषोऽस्तीति। अत्रोच्यते—**

टी०—अत्रावसरे पर आह—**यद्यपवर्तते**[1]ऽपैति-विनश्यति फलमदत्त्वाऽऽयुष्ककर्म **तस्मात्** यस्य कर्मणः **कृतस्य** सतो निष्फलत्वान्**नाशः प्रसज्यते यस्मात् तन्न वेद्यते**—नानुभूयत इत्यर्थः। अनिष्टं चैतद्—अवश्यं हि कर्मोपात्तमनुरूपं फलमुपाधाय स्वामिनि परिशटत्युत्तरकालं न पुनरदत्त्वैव फलं विलीयत इति। अथाननुभूते सत्येवायुष्के **म्रियते तस्मादकृतस्यैवाभ्यागमो** मरणस्यान्तराल एव **प्रसज्यते, येन सत्यायुष्के म्रियते** ततश्चायुषो विफलताप्रसङ्गः, **अनिष्टं चैतत्**, न खलु जैनसिद्धान्तोऽयं यत् कृतं सत्कर्म प्रणश्यति, अदत्तफलमकृतमेव चानुभूयत इति। अन्यच्च अननुभूते तस्मिन् कर्मण्ययमपरो दोषः—**एकभवस्थिति वाऽऽयुष्कं कर्म न जात्यन्तरानुबन्धि**॥ ननु चान्यस्मिन् भवे बद्धमन्यत्र वेद्यते कथमेकभवस्थिति स्यात्?। उच्यते—न बन्धं प्रति ब्रूमः, उपभोगं प्रत्येकभवस्थितिकमायुराचक्ष्महे, एकस्मिन्नेकभवे भवत्यायुष उपभोगो न द्वितीयेऽपीति, यथा च त्वयाऽभ्युपेयते सत्येवायुषि म्रियते तथा तेनायुषा जात्यन्तरानुबन्धिना भाव्यम्, असिद्धान्तप्रस्थानं चैतत्, तस्माद् दोषचतुष्टयसम्भवान्नापवर्तनमायुषां विद्यते इति। अत्रोच्यते समाधानम्—

आयुषो ह्रासेऽपि कृतनाशादिदोषाभावः

**भा०—कृतनाशाकृताभ्यागमाफल्यानि कर्मणो न विद्यन्ते। नाप्यायुष्कस्य जात्यन्तरानुबन्धः, किन्तु यथोक्तैरुपक्रमैरभिहतस्य सर्वसन्दोहेनोदयप्राप्तमायुष्कं कर्म शीघ्रं पच्यते तदपवर्त-**

---

१ 'तदपवर्तते' इति क-पाठः। २ 'चायु०' इति घ-पाठः।

**नमित्युच्यते । संहतशुष्कतृणराशिदहनवत् । यथा हि संहतस्य शुष्कस्यापि तृणराशेरवयवशः क्रमेण दह्यमानस्य चिरेण दाहो भवति तस्यैव शिथिलप्रकीर्णोपचितस्य सर्वतो युगपदादीपितस्य पवनोपक्रमाभिहतस्याशु दाहो भवति तद्वत् ॥**

टी०—न खल्वेते दोषाः प्रतिभान्ति जिनशासनावलम्बिनाम्, सिद्धान्तापरिज्ञानाच्चैवं चोद्यते, नायमार्हतः कृतान्तः फलमदत्त्वा कर्म प्रणश्यतीति, किन्तु **यथोक्तै**रुपक्र**मै**रध्यवसानविषशस्त्रादिभिर**भिहतस्याभिप्लुतस्य सर्वसन्दोहेन**—सर्वात्मना साकल्येनासादितोदयमायुष्कं **कर्म** प्राप्तविपाकमाशु भवति, यस्तु तस्य क्रमभावी विपाकः सोऽपवर्त्यते, अनुभवः पुनः सर्वस्य युगपन्न निषिध्यते इत्येषोऽपवर्तनशब्दार्थः । बहिर्वर्तमानवस्तुविशेषप्रसिद्ध्याऽन्तःप्रसिद्धिः[1] साध्यत इत्याह—**संहतेति** । संहतत्वात् परिशेषवानपि तृणपुञ्जश्चिराय दह्यते, यदा तु विरलितो भवत्यवयवशस्तदाऽऽशु भस्मसाद् भवति, तद्वदायुषोऽप्यनुभवः, यदाऽऽयुर्दृढसंहतमतिघनतया बन्धकाल एव परिणामापादितं भवति पवनश्लेषवत् तत् क्रमेण वेद्यमानं चिराय वेद्यते, यत् पुनर्बन्धकाल एव शिथिलमाबद्धं तद् विकीर्णतृणराशिदाहवदपवर्त्याशु वेद्यत इति । एवंविधार्थप्रक्रमे दृष्टान्तसुलभतामादर्शयन्नाह—

अपवर्तनेऽप्यक्षयत्वे दृष्टान्तः

**भा०—यथा वा सङ्ख्यानाचार्यः करणलाघवार्थं गुणकारभागहाराभ्यां राशिं छेदादेवापवर्तयति, न च सङ्ख्येयस्यार्थस्याभावो भवति, तद्वदुपक्रमाभिहतो मरणसमुद्घातदुःखार्तः कर्मप्रत्ययमनाभोगयोगपूर्वकं करणविशेषमुत्पाद्य फलोपभोगलाघवार्थं कर्मापवर्तयति, न चास्य फलाभाव इति ॥ किञ्चान्यत् ।**

टी०—**यथा वा सङ्ख्यानाचार्य** इत्यादि । सङ्ख्यानं—गणितशास्त्रं तत्प्रधान आचार्यः सङ्ख्यानाचार्यो गणितप्रक्रियायामाहितनैपुणः, करणलाघवाय करणानि—गुणकारभागहारापवर्तनोद्वर्तनादीनि गणितशास्त्रप्रसिद्धानि, तत्र यो लघुः करणोपायः स्वल्पकालस्तेन तत्फलमानयति गणिताभिज्ञत्वात्, तुल्येऽपि हि फलानयने गुणकारभागहारौ चिराय तत्फलमभिनिवर्तयतः, स पुनर्गणितनिपुणो **गुणकारभागहाराभ्यां** चिरकालकारिभ्यां सकाशात् करणलाघवार्थमपवर्तनार्हं **राशिं छेदाद**र्धार्धादिकाद**पवर्तयति**, षण्णवत्यादिकम्, अनपवर्तनार्हं पुनर्लघुकरणाभिज्ञोऽपि न शक्नोत्येवापवर्तयितुम्, एकपञ्चाशदुत्तरसहस्रादिकम्, गुणकारभागहारक्रममेवात्र प्रयोजयति, **न च सङ्ख्येयस्यार्थस्याभावो भवति**, फलभूतस्य करणविशेषे सत्यपि प्रेप्सितफलाभेदमादर्शयति । करणव्यापारकालो बहुरल्पभेदः फलमविशिष्टमेवोभययोर्यथैत**द्वदुपक्रमाभिहतो मरणसमुद्घातदुःखार्तः कर्मप्रत्ययमनाभोग-**

---

१ 'प्रसिद्ध्यतः प्रसिद्धिः' इति क-पाठः ।

**योगपूर्वकं करणविशेषमुत्पाद्य फलोपभोगलाघवार्थं कर्मापवर्तयति, न चास्य फलाभाव इति,** उपक्रमो–विषाग्निशस्त्रादिस्तेनाभिहतो मरणं–आयुःक्षयस्तत्र समुद्घातः, मरणसमुद्घातो नाम स्वशरीरकादात्मप्रदेशापकर्षो मूर्च्छानुगतश्चेतनाविमुक्त इवाव्यक्तप्रबोधलक्षणोऽस्तमितसकलबहिर्वर्तिचेष्टाक्रियाविशेषः स एव चातिचिररूढमूलप्रदेशोत्खननरूपत्वाद् दुःखं तेनार्तो–विषण्णः किंकर्तव्यताविमुखः कर्मप्रत्ययं–कर्मकारणं करणविशेषमुत्पाद्यापवर्तनाख्यम्, कर्मकारणता तु करणविशेषस्य पूर्वभवबन्धकाल एव प्रयत्नशैथिल्यात् सोपक्रमबन्धः अत्यन्तापरिज्ञानमनाभोगः अनाभोगकृतो योगः योगः-चेष्टाविशेषः अनाभोगयोगस्तत्पूर्वकं तत्कारणम्। एतदुक्तं भवति–अजानान एव हि तदपवर्तनाकरणेनापवर्तनार्हं कर्मापवर्तयति आहाररसादिविपरिणामवत्, किमर्थं पुनरपवर्तयति ? फलोपभोगार्थमायुष्कर्मफलोपभोगायानाभोगनिर्वर्तितेन वीर्यविशेषेणेति, न चास्यायुष्कर्मणः फलाभावो भवति। इयांस्तु विशेषः—क्रमपरिभोगे बहुकालः, संवर्तितपरिभोगे स्वल्प इति, न पुनरभुक्तं तत्र किञ्चित् कर्म परिशटतीति। किञ्चान्यदित्यनेनापरमपि प्रकृतार्थोपयोगिनमादर्शयति दृष्टान्तम्—

प्रकृतस्य समर्थनम्

**भा०—यथा वा धौतपटो जलार्द्र एव संहतश्चिरेण शोषमुपयाति, स एव च वितानितः सूर्यरश्मिवायुभिर्हतः[1] क्षिप्रं शोषमुपयाति, न च संहते तस्मिन्नभूतस्नेहागमो नापि वितानिते सति अकृत्स्नशोषः, तद्वद्यथोक्तनिमित्तापवर्तनैः कर्मणः क्षिप्रं फलोपभोगो भवति, न च कृतप्रणाशाकृताभ्यागमाफल्यानीति ॥ ५२ ॥**

**टी०—यथा वा धौतपट** इत्यादि। एवं चैष प्रकृतोऽर्थः प्रतिपत्तव्यः। यथा वा क्षालितपटो जललेशोपचितमूर्तिरेवावेष्टितश्चिरायोद्वायति, स एव प्रयत्नविशेषतो विस्तारितः सन् सहस्ररश्मिमयूखमालाभिः परिपीताशेषजललवः प्रबलपवनवेगविघट्टितनिरवशेषप्रदेशः शीघ्रमपास्ताश्रितजलसङ्घातःसमासादिताधिकतरधवलिमाऽपि परिशुष्यति। **न च संहते तस्मिन्नभूतस्नेहागम** इति, न चाभूतजलस्नेहागमो भवति तस्मिन् संवेष्टितपटे, किन्तु संहतत्वात् तावन्त एव जलावयवाः कालेन बहुना परिशटन्ति, न पुनरभूतानामेव स्नेहावयवानामागमः, **नापि वितानिते अकृत्स्नशोषः**, न च प्रसारिते तस्मिन् पटे कृत्स्नजलावयवपरिशोषो न भवति, विततेऽपि हि सर्व एव ते जलावयवाः परिशुष्यन्ति, तेषां हि जलावयवानां यावती मात्रा वेष्टितपटे तावत्येव प्रसारितेऽपि, परिशोषकालस्तु भिद्यते। परे व्याख्यानयन्ति–न च संहते तस्मिन् न भूतः स्नेहापगमः, भूत एव सञ्जात एवेत्यर्थः, किन्तु बहोः कालात्, वितानिते तु द्रागेव च कृत्स्नवारिनिवहापगमः। तद्वदित्यनेन दार्ष्टान्तिकमर्थस्य दर्शयति—तुल्यतया **यथोक्तनिमित्तापवर्तनैः क्षिप्रं फलोपभोगो भवतीति**। यथाऽभिहितं विषाग्निशस्त्रादि येषामपवर्तनानां तान्यवपर्तनानि यथोक्तानि निमित्तानि तैर्यथोक्तनिमित्ता-

[1] '०वाय्वभिहतः' इति घ-पाठः।

पवर्तनैः कर्मण आयुषः शीघ्रं फलविपाको भुज्यत इत्यर्थः । अतः क्रमानुभवे वेष्टितार्द्रपटपरिशोषकालवद् बहुत्वं कालस्य, प्रसारितार्द्रपटपरिशोषकालचाल्पकालता परिवर्तितायुष्कपरिभोगकालस्य । एवं च सति न कृतप्रणाशाकृताभ्यागमाफल्यानीति निगमयति—समस्तायुर्द्रव्योपभोगात् कृतविप्रणाशो नास्ति, न चायुष्यपरिनिष्ठिते म्रियत इत्यकृताभ्यागमाभावः, परिभुक्तत्वादेव च सकलस्यायुषो न वैफल्यप्रसङ्गः, अत एव जात्यन्तरानुबन्धत्वाभावोऽपीति । न चेह भाष्यकारेणोक्तः, प्रागुपन्यस्तस्यापि पूर्वकत्रयस्याभावे तदभावात्, तस्मादवस्थितमिदम्—केचिदकाले प्राणिनो म्रियन्ते पूर्वजन्मोपात्तायुष्ककालापेक्षया, केचिदनन्तरातीतजन्मोपात्तायुष्ककालमखण्डमवसायं प्रापय्य विहायास्ते(?) न शेषात् स्वकृतकर्मादिष्टं जन्मान्तरमनुबध्नन्तीति ॥ ५२ ॥

ग्रन्थाग्रमङ्कतः ३४२०

इति श्रीतत्त्वार्थसूत्रेऽर्हत्प्रवचनाधिगमे भाष्यानुसारिण्यां तत्त्वार्थटीकायां द्वितीयोऽध्यायः ॥ २ ॥

## ॥ इति द्वितीयोऽध्यायः ॥



॥ श्रीगौडीपार्श्वनाथाय नमः ॥

# तृतीयोऽध्यायः ३

**भा०—अत्राह—उक्तं भवता नारका इति गतिं प्रतीत्य जीवस्यौदयिको भावः।** तथा जन्मसु 'नारकदेवानामुपपातः'(अ० २, सू०३५)। वक्ष्यति च स्थितौ 'नारकाणां च द्वितीयादिषु' (अ० ४, सू० ४३), आस्रवेषु 'बह्वारम्भपरिग्रहत्वं च नारकस्यायुषः' ( अ० ६, सू०१६ ) इति। तत्र के[1] नारका नाम क[2] वेति ? । अत्रोच्यते—नरकेषु भवा नारकाः। तत्र नरकप्रसिद्ध्यर्थमिदमुच्यते—

टी०—**अत्राह—उक्तं भवते**त्यादिः सम्बन्धग्रन्थः, स चाध्यायप्रकरणसूत्रकृतः, तत्राध्यायकृतस्तावद् द्वितीये जीवा लक्षणविधानाभ्यामभिहिताः, तत्र लक्षणमेकरूपत्वान्न पुनरभिधीयते, विधानं तु बहुरूपत्वात् पुनः पुनरभिधापयति, अतोऽत्रापि तृतीयेऽध्याये प्रतिविशिष्टस्थाननिरूपणाद्वारेण जीव[3]विधानमेव विवक्षितमिति। प्रकरणसूत्रकृतौ तु सम्बन्धौ भाष्यकारेणोपात्तौस्वयमेव, तयोः प्राकाश्यमापाद्यते।

नारकाधिकार-प्रस्तावना

अत्र—अध्यायपरिसमाप्तिप्रस्तावे शिष्य आह—**अभिहितं भवता** द्वितीयेऽध्याये भावप्रकरणे **नारका इति गतिं प्रतीत्य जीवस्यौदयिको भाव** इति। गतिकषायलिङ्गसूत्रं ( अ० २, सू० ६ ) अनेन भाष्येण सूचयति। तथा तस्मिन्नेव द्वितीये जन्मप्रकरणप्रस्तावे **नारकदेवानामुपपातः** (अ० २, सू० ३५) इत्युक्तम्, तथा चतुर्थेऽध्याये स्थितावायुषः प्रस्तुतायां **वक्ष्यति** भवान्—**नारकाणां च द्वितीयादिषु, दश वर्षसहस्राणि प्रथमायाम्** ( अ० ४, सू० ४३, ४४) इति, तथा षष्ठेऽध्याये कर्मास्रवविचारणायां **बह्वारम्भपरिग्रहत्वं च नारकस्यायुषः** (अ० ६, सू० १६) इति प्रतिपादयिष्यते। **तत्रै**वमनेकस्मिन् स्थाने नारकशब्दश्रवणादाहितसंशयः पृच्छति—**के नारका नामे**ति जीवत्वसामान्यमवधृतं विशेषो निवासादिरनवधृत इत्यतः प्रश्नयति—के पुनस्ते नारका इति। **अत्रोच्यते-नरकेषु भवा नारकाः**, वक्ष्यन्ते उपरिष्टादुष्ट्रिकापिष्टपचनीलोहीकरकाद्याकृतयः सीमन्तादयो नरकाः विशिष्टाकृतयोऽपुण्यसंभारजनितगौरवाणां सत्त्वानामुत्पत्तिस्थानविशेषाः,ते च किलाशुभकर्मभाजो नरान् कायन्ति-आह्वयन्तीति नरकाः,"रूढिषु हि क्रिया[4] व्युत्पत्तिकर्मार्था नार्थक्रिया[5]र्था" इतिवचनात् न ते कि[6]ञ्चिदाह्वयन्ति नापि नरानिति, तिरश्चामपि तत्र गमनाद् अतो व्युत्पत्तिमात्रमेव केवलम्, ते[7]षु नरकेषूष्ट्रिकाद्याकृतिषु भवा नारकाः,

नारकाधिकारस्थानानि

---

१ 'तत्र के नाम' इति ग-टी-पाठः। २ 'चेति' इति घ-पाठः। ३ 'जीवविशिष्टमेव' इति ख-पाठः। ४ 'क्रियाव्युत्पत्ति' इति ग-पाठः। ५ 'नर्थक्रिया' इति ग-टी-पाठः ६ 'किञ्चित्' इति क-ख-पाठः। ७ 'केषु' इति ग-टी-पाठः।

सत्त्वविशेषा इत्यर्थः । **तत्र नरकप्रसिद्ध्यर्थमिदमुच्यते,** तत्र-तेषु नरकेषु विवक्षितेषु तन्मूलत्वात् तत्प्रतिष्ठत्वान्नारकप्रतिपत्त्यर्थमेव तावदिदमभिधीयते नान्तरीयकत्वादिति ॥

**सूत्रम्—रत्नशर्करावालुकापङ्कधूमतमोमहातमःप्रभा भूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्ताधोऽधः पृथुतराः ॥ ३-१ ॥**

टी०—सूत्रकृतोऽप्येष एव सम्बन्धोऽतः पृथग् नोक्तः, अथवा वक्ष्यते नवमे-**आज्ञापायविपाकसंस्थानविचयाय धर्म्यमप्रमत्तसंयतस्य** (अ० ९, सू० ३७) इति, तत्र संस्थानविचयः—

"लोकस्याधस्तिर्यग्, विचिन्तयेदूर्ध्वमपि च बाहल्यम् ।
सर्वत्र जन्ममरणे, रूपिद्रव्योपयोगांश्च ॥"-प्रशम० श्लो० १६०

इति, तत्र प्राक् तावदधोलोकस्वरूपमेव पृथिवीभेदेनोच्यते । **रत्नशर्करेत्यादि सूत्रम् ।** ततस्तिर्यग्लोकस्वरूपं जम्बूद्वीपलवणादिप्रक्रमेण, पश्चाच्चतुर्थे ऊर्ध्वलोकस्वरूपमिति, एवमयं त्रिविभागः पञ्चास्तिकायसमुदयवृत्तिर्जीवाजीवाधारक्षेत्रलक्षणो वैशाखस्थानस्थितकटिस्थकरयुग्मपुरुषाकृतिर्लोकः, तस्याधस्तनभागस्वरूपावगमनायेदमुच्यते । अथवा सम्यग्दर्शनभागिभिर्जीवैर्लोकस्यासङ्ख्येयभागः स्पृष्ट इत्युक्तं प्रथमाध्याये (सू० ८) **सम्यग्दृष्टिना तु सर्वलोकः,** तदुच्यतां निर्देशतः को लोक इत्यतोऽधोविभागादिः स आख्यायते ॥ **रत्नशर्करेत्यादि सूत्रम्,** रत्नानि-वज्रादीनि तत्प्रधाना **रत्नप्रभा, शर्करादयोऽपि** प्रतीतास्तत्प्रधानाः सर्वा वक्तव्याः, प्रभाशब्दो रूपस्वभाववाची, रत्नप्रभा रत्नस्वभावा रत्नमयी रत्नबहुलेति, एवं शर्कराप्रभादयोऽपि वाच्याः, एष च प्रभाशब्दः प्रत्येकमभिसम्बध्यत इति दर्शयति—

नरकपृथ्वीनामाधाराः

**भा०—रत्नप्रभा शर्कराप्रभा वालुकाप्रभा पङ्कप्रभा धूमप्रभा तमःप्रभा महातमःप्रभा[2] इत्येता भूमयो घनाम्बुवाताकाशप्रतिष्ठा भवन्त्येकैकशः सप्ताधोऽधः ॥**

टी०—**रत्नप्रभेत्यादिना** भाष्येण । **इत्येता भूमयो घनाम्बुवाताकाशप्रतिष्ठा भवन्त्येकैकशः सप्ताधोऽधः,** एवमेता रत्नप्रभाद्याः पृथिव्यो घनाम्बुनि वायौ वियति च प्रतिष्ठिताः, नेश्वराद्याधारा इत्याचष्टे । घनाम्बु च वाताश्चाकाशं च घनाम्बुवाताकाशानि तेषु प्रतिष्ठा-स्थितिर्वर्तनं यासां ता **घनाम्बुवाताकाशप्रतिष्ठा भवन्ति, एकैका एकैकशः** घनाम्बुवाताकाशक्रमेण प्रतिष्ठिताः, न पुनः सप्तानामप्यध एव घनाम्बुवाताकाशानि प्रत्येकमन्तरालेषु न सम्भवन्तीति, सङ्ख्ययाऽवधार्यन्ते सप्तैवान्यूनाधिका इति । अधोऽध[3] इति प्रतिविशिष्टक्रमाख्यानं तिर्यगूर्ध्वदिशो व्युदासः, एतदेव स्पष्टयति—

---

१ 'सम्बन्धो न पृथगुक्तः' इति क-ख-पाठः । २ 'महातमःप्रभा भूमयो' इति ग-टी-पाठः । ३ अधः' इति क-ख-पाठः ।

**भा०—रत्नप्रभाया अधः शर्कराप्रभा, शर्कराप्रभाया अधो वालुकाप्रभा इत्येवं शेषाः। अम्बुवाताकाशप्रतिष्ठा इति सिद्धे घनग्रहणं क्रियते तेनायमर्थः प्रतीयेत**[1] **घनमेवाम्बु अधः पृथिव्याः**[2]**, वातास्तु घनास्तनवश्चेति ॥**

**टी०—रत्नप्रभाया** अधोऽसङ्ख्येया योजनकोटीनां कोटीरवगाह्य **शर्कराप्रभा** भवति, **शर्कराप्रभायास्त्वधो**ऽसङ्ख्येया एव योजनकोटीनां[3] कोटीरतिक्रम्य **वालुकाप्रभा** भवति, **एवं शेषाः** पङ्कप्रभाद्या असङ्ख्येययोजनकोटीकोट्यवकाशान्तरा वक्तव्या अधोऽध इति ॥ अथ घनग्रहणं किमर्थं क्रियते **अम्बुवाताकाशप्रतिष्ठा** इत्येतावतैवाभिलषितार्थप्रसिद्धेरिति ? सूरिराह—सत्यमेवं सिद्धयति, सिद्धे सति यत् तथापि **घनग्रहणं क्रियते तेनायमर्थो** ज्ञाप्यते **घनमेवाम्बु अधः पृथिव्याः** प्रत्येकं यथा स्यात्, मा भूद् द्रवमिति। **वातास्तू**भयथा **घनास्तनवश्चेति**। यथैव पृथिवीनामधोऽधो व्यवस्थानमशेषाणामेवमेकस्यां पृथिव्यां स्वभेदानामधोऽधो व्यवस्थानं दर्शयितुमाह—

घनशब्दफलम्

**भा०—तदेवं खरपृथिवी पङ्कप्रतिष्ठा, पङ्को घनोदधिवलयप्रतिष्ठः, घनोदधिवलयं घनवातवलयप्रतिष्ठम्, घनवातवलयं तनुवातवलयप्रतिष्ठम्, ततो महातमोभूतमाकाशम्। सर्वं चैतत् पृथिव्यादि तनुवातवलयान्तमाकाशप्रतिष्ठम्, आकाशं चात्मप्रतिष्ठम्**[4]**। उक्तमवगाहनमाकाशस्येति ॥**

खरपंकादिप्रतिष्ठात्वम्

**टी०—तदेवं खरपृथिवी पङ्कप्रतिष्ठा**। आदावत्र रत्नप्रभायाः खरपृथिवीकाण्डं रत्नबहुलं योजनसहस्रषोडशकबाहल्यम्, तत् पङ्कपृथिवीकाण्डे पङ्कबहुले चतुरशीतियोजनसहस्रबहुले प्रतिष्ठितम्, तदपि पङ्कपृथिवीकाण्डमप्पृथिवीकाण्डे जलबहुलेऽशीतियोजनसहस्रघने प्रतिष्ठितम्। अत्र चाचार्येणाब्बहुलं काण्डं नोपात्तं पृथग्, घनोदधिवलयग्रहणेनैव लब्धत्वाद्, घनोदधिश्च घनोदधिवलयं चेत्येकदेशनिर्देशात्, तत् पुनर्जलबहुलं काण्डं विंशतियोजनसहस्रबहुले घनाम्बुवलये प्रतिष्ठितम्, **घनोदधिवलयम**प्यसङ्ख्येययोजनसहस्रघने **घनवातवलये** प्रतिष्ठितम्, **घनवातवलयमपि** ह्यसङ्ख्येययोजनसहस्रबाहल्ये **तनुवातवलये** प्रतिष्ठितम्, **ततस्तनुवातवलयात्** परं **महातमोभूतमाकाशम**सङ्ख्येययोजनकोटीकोटीप्रमाणम्, तदन्तरालवर्ति वियत् तनुवातवलयद्वितीयपृथिव्योः सूचिभेद्येन सन्तमसेन समन्ततो विजृम्भमाणेनातिघनतां गतेन व्याप्तम्, अतो महातम इव तत् प्रतिभातीति महातमोभूतमुच्यते, तच्चास्याः खरकाण्डादिभेदायास्तनुवातवलयपर्यन्ताया रत्नप्रभापृथिव्याः प्रपन्नमाधारतामधिगन्तव्यमित्यादर्शयति—**सर्वं चैतत् पृथिव्यादी**त्यादिना। न चैतत् अश्रद्धेयं प्रत्यक्षप्रमाणसमधिगम्यानि

१ 'येन प्रतीयते' इति घ-पाठः। २ 'पृथिव्यां' इति ग-घ-टी पाठः। ३ 'योजनकोटीरतिक्रम्य' इति ग-टी-पाठः। ४ 'त्वात्म०' इति घ-पाठः।

चन्द्रादित्यादिविमानानि निरालम्बे विहायसि परिप्लवन्ते, न चाधः पतन्ति लोकानुभावादेव-मेवैताः पृथिव्योऽपीति, आकाशं पुनरात्मन्येव प्रतिष्ठितम्, नाधारान्तरसमासादितप्रतिष्ठ-मिति, यस्मादुक्तम्-अवगाहनमाकाशस्येति, पञ्चमेऽध्याये सूत्रतः उक्तम्–'आकाशस्या-वगाहः' ( अ० ५, सू० १८ ) उपकारः, अवगाहदानेन व्याप्रियत आकाशं सर्वद्रव्याणामव-गाहवतां निरवगाहदानव्यापारपरं सदवगाहिष्यते तदन्यत्र तदनुरूपाधाराभावादतः स्वप्रतिष्ठं प्रतिपत्तव्यम् ॥

**भा०–तदनेन क्रमेण लोकानुभावसन्निविष्टा असङ्ख्येययोजनकोटीकोट्यो वि-स्तृताः सप्त भूमयो रत्नप्रभाद्याः । सप्तग्रहणं नियमार्थम् । रत्नप्रभाद्या मा भूवन्नेकशः अनियतसङ्ख्या इति। किञ्चान्यत्। अधः सप्तैवेत्यवधार्यते, ऊर्ध्वं त्वेकैवेति वक्ष्यते॥**

**टी०—तदनेन क्रमेणे**त्यादि भाष्यम्, तस्मादनेन क्रमेण घनाम्बुघनवाततनुवातवल-याकाशप्रतिष्ठानाः सप्तापि भूमयो **लोकानुभावादेव सन्निविष्टाः**, लोकानुभावो हि लोकस्थितिरनाद्या न केनचिदीश्वरादिना कृता व्योमव-दकृत्रिमा, **असङ्ख्येययोजनकोटीकोट्यो विस्तृता** इति तिर्यक्प्रमा-णमाचष्टे, नाधः प्राच्यात् रत्नप्रभापृथिवीपर्यन्तात् प्रतीच्यं तत्पर्यन्त एतावदन्तरालमतीत्य भव-तीत्येवं शेषाणामपि बहुतरा बहुतमाश्च कोट्यो भवन्ति, वृत्तत्वाच्च सर्वासां तुल्यं[2] विष्कम्भायाम-ताऽध्यवसेया ॥ प्रवचनं चेदम्—"[3] कतिविहा णं भंते ! लोकट्ठिती पण्णत्ता ? गोयमा! अट्ठविहा लोगट्ठिई पण्णत्ता, तंजहा–आगासपतिट्ठिए वाए १ वातपतिट्ठिए उदही २ उदधिपइट्ठिया पुढवी ३ पुढवीपतिट्ठिता तसथावरा पाणा ४ अजीवा जीवपतिट्ठिया ५ जीवा कम्मपइट्ठिया ६ अ-जीवा जीवसंगहिता ७ जीवा कम्मसंगहिता ८ ॥ से केणट्ठेणं भंते ! एवं वुच्चति अट्ठविहा लोग-ट्ठिती ? गोयमा ! से जहा नामए केति पुरिसे वत्थिमाडोवेति, वत्थिमाडोवेत्ता उप्पिंसि तं बंधति, बंधित्ता मज्झे गंठिं देति, मज्झे गंठिं दलइत्ता उवरिल्लं गंठिं मुइत्ता उवरिल्लं देसं वामेति, वामेत्ता आउकायस्स पूरेति, पूरित्ता उप्पिंसि तं बंधति, बंधित्ता मज्झिल्लं गंठिं मुयति, तेणं गोयमा ! से आउकाए तस्स वाउकायस्स उवरितले चिट्ठति, से तेणं अट्ठेणं गोयमा ! एवं वुच्चति–अट्ठविहा लोकट्ठिती पण्णत्ता। से जहा वा केइ पुरिसे वत्थिमाडोवेति, आडोवेत्ता कडीए

प्रतिष्ठाने लोकस्थितिर्हेतुः

---

१ 'ह्यनियत०' इति घ-पाठः । २ 'तुल्यविष्कम्भायामेत्यध्यवसेया' इति ख–पाठः ।
३ कतिविधा भदन्त ! लोकस्थितिः प्रज्ञप्ता ? गौतम! अष्टविधा लोकस्थितिः प्रज्ञप्ता, तद्यथा—आकाशप्रतिष्ठितो वातः, वातप्रतिष्ठित उदधिः, उदधिप्रतिष्ठिता पृथ्वी, पृथ्वीप्रतिष्ठिता त्रसस्थावराः प्राणाः, अजीवा जीवप्रतिष्ठिताः, जीवाः कर्मप्रतिष्ठिताः, अजीवा जीवसंगृहीताः, जीवाः कर्मसंगृहीताः । अथ केनार्थेन भदन्त! एवमुच्यते—अष्टविधा लोकस्थितिः ? गौतम! तत् यथानामकः कश्चित् पुरुषः बस्तिमापूरयति, बस्तिमापूर्य उपरिष्टात् तां बध्नाति बद्ध्वा मध्ये ग्रन्थिं ददाति, मध्ये ग्रन्थिं दत्त्वा उपरितनं ग्रन्थिं मुक्त्वा उपरितनं देशं वमयति ( रिक्तीकरोति ) वमयित्वा अप्कायं पूरयति, पूरयित्वा उपरिष्टात् तां बध्नाति, बद्ध्वा मध्यमं ग्रन्थिं मुञ्चति, तेन गौतम ! सः अप्कायः तस्य वायुकायस्य उपरितले तिष्ठति, तदेतेनार्थेन गौतम! एवमुच्यते–अष्टविधा लोकस्थितिः प्रज्ञप्ता । अथ यथा वा कश्चिद् पुरुषः

बंधति, बंधित्ता अत्थाहमतारमपोरिसियंसि उदगंसि ओगाहेज्जा, णूणं गोयमा ! से पुरिसे तस्स आउक्कायस्स उप्पिं उवरितले चिट्ठति ? हंता चिट्ठति, एवमेव अट्ठविहा लोकट्ठिती पण्णत्ता" (भग०श०१,उ०६,सू०,५४)। रत्नप्रभायाश्च प्रथमं काण्डं रत्न-वज्र-वैडूर्य-लोहिताख्य-मसारगल्ल-हंसगर्भ-पुलक-सौगन्धिक-ज्योतीरसाञ्जनाञ्जन-पुलक-रजत-जातरूपाङ्क-स्फटिकारिष्ठभेदात् षोडशधा, इतरे त्वेकाकारे पङ्कजलबहुले काण्डे, शेषाश्च भूमयः शर्कराद्याः एकाकारा एवावसातव्याः। सप्तग्रहणं नियमार्थमित्यादि, विशिष्टसङ्ख्याशब्दोपादानान्नियमः क्रियते सप्तैवाधः पृथिव्यः, का पुनराशङ्का नियमाभिप्रायानुवर्तिनः सूरेरिति? उच्यते–रत्नप्रभाद्या मा भूवन्नेकशो ह्यनियतसङ्ख्या इति। रत्नप्रभायाः प्रथमं काण्डं षोडशधा, तथा पङ्कबहुलं काण्डं जलबहुलं काण्डमिति एकैकस्य भेदस्य पृथिवीत्वाद् बहुत्वं पृथिवीनामधः स्यात्, अत एवमेकैका ह्यनियतसङ्ख्या मा भूदिति सप्तग्रहणमुपात्तम्, इतरा अपि च प्रतरादिभेदेन भिद्यमाना बहुत्वमनुयान्ति स्वस्थान एवेति तस्मान्नियमापादनम्। किञ्चान्यत्–अन्यदपि

अधःपृथ्वीनां सप्तत्वनियमः

हि सप्तग्रहणस्य प्रयोजनमस्त्येव किञ्चित्, अधः सप्तैवेत्यवधार्यते विशिष्टसङ्ख्यानियमोऽधः प्रदर्श्यते, न पुनः पृथिव्य एतावत्य एव त्रैलोक्य इत्यवधार्यते, यत ऊर्ध्वं त्वेकैवेति वक्ष्यति, उपरिष्टात् पुनः सर्वकल्पविमानान्यतीत्यार्धतृतीयद्वीपविष्कम्भायामोत्तानकच्छत्राकृतिरीषत्प्राग्भारा नाम पृथिवी दशमेऽध्याये (१९ तम)कारिकाभाष्येण व्याख्यास्यते 'तन्वी मनोज्ञा सुरभिः, पुण्या परमभासुरा' इत्यादिनेति। तथाऽन्यदपि सप्तग्रहणस्य प्रयोजनमाख्यायते—

असङ्ख्यप्रस्तारे निरासः

**भा०—अपिच–तन्त्रान्तरीया असङ्ख्येयेषु लोकधातुषु असङ्ख्येयाः पृथिवीप्रस्तारा इत्यध्यवसिताः, तत्प्रतिषेधार्थं च सप्तग्रहणमिति॥**

**टी०—तन्त्रान्तरीया** इत्यादि भाष्यम्। अन्तरे भवाः अन्तरीयास्तन्त्रप्रधाना अन्तरीयास्तन्त्रान्तरीयाः–जिनप्रवचनबाह्यास्ते च प्रायः प्रस्तावान्मायासूनवीया एव गृह्यन्ते, सर्वतः किलासङ्ख्येया एव लोकधातवस्तेषु चासङ्ख्येया एव पृथिवीप्रस्तारा इत्यध्यवसिता दुर्मेधसः॥ तदागमश्चायम् "यथा हि वर्षति देवे प्रततधारं नास्ति वीचिका वा अन्तरिका वा एवमेव पूर्वायां दिशि लोकधातवो नैरन्तर्येण व्यवस्थितास्तथाऽन्यास्वपि दिक्ष्विति" तत्प्रतिषेधार्थं च सप्तग्रहणं क्रियते, सप्तैवैताः सर्वतः परिमाणपरिच्छिन्ना लोकान्तर्वर्तिन्यः, लोकश्च परिमाणवान् सर्वतो जीवाजीवात्मकत्वाच्छरीरादिवदिति, मूर्तिमद्द्रव्यात्मकत्वाद् वा घटादिवत्।

---

बस्तिमापूरयति आपूर्य कट्यां बध्नाति, बद्ध्वा अस्ताघमतार्यमपौरुषेयं उदकमवगाहेत, नूनं गौतम! स पुरुषः तस्य अप्कायस्य उपरि उपरितले तिष्ठति ? हन्त तिष्ठति, एवमेव अष्टविधा लोकस्थितिः प्रज्ञप्ता।

१ 'माभूवन्ननेकशः' इति ग-टी-पाठः। २ 'नियमादापादनम्' इति ग-टी-पाठः।

पृथ्वीनामाकारो नामानि बाहल्यं च

**भा०—सर्वाश्चैता अधोऽधः पृथुतराश्छत्रातिच्छत्रसंस्थिताः। घर्मा वंशा शैला अञ्जना रिष्ठा माघव्या माघवीति च आसां नामधेयानि यथासङ्ख्यमेवं भवन्ति। रत्नप्रभा घनभावेनाशीतं योजनशतसहस्रम्, शेषा द्वात्रिंशदष्टाविंशतिर्विंशत्यष्टादशषोडशाष्टाधिकमिति।**

टी०—**सर्वाश्चैता** इत्यादि भाष्यम्। रत्नप्रभाद्या महातमःप्रभापर्यवसाना अधोऽधः **पृथुतराः**–एकरज्जुप्रमाणा विष्कम्भायामाभ्यां रत्नप्रभा, शर्कराप्रभाऽर्धतृतीयरज्जुप्रमाणा, वालुकाप्रभा चतूरज्जुप्रमाणा, पङ्कप्रभा पञ्चरज्जुप्रमाणा, धूमप्रभा रज्जुषट्कप्रमाणा, तमःप्रभाऽर्धसप्तरज्जुप्रमाणा, महातमःप्रभा सप्तरज्जुप्रमाणेति। अत एव **छत्रातिच्छत्रसंस्थिता** भवन्त्येताः, छत्रातिच्छत्रे ह्युपरितनं छत्रमायामविष्कम्भाभ्यां लघु भवति, तदधोवर्ति विस्तीर्णतरम्, तस्याप्यधो विशालतममित्यतः छत्रातिच्छत्रवत् स्थिताः, सर्वत्र घनभावेन समा झल्लर्याकृतयः। तासां चोत्कीर्तनमुभयथा नामतो गोत्रतश्च, तत्र प्रथमा **घर्मा** नाम्ना रत्नप्रभा गोत्रेण, द्वितीया **वंशा** नाम्ना शर्कराप्रभा गोत्रेण, तृतीया **शैला** नाम्ना वालुकाप्रभा गोत्रेण, चतुर्थ्यञ्जना नाम्ना पङ्कप्रभा गोत्रेण, पञ्चमी **रिष्ठा** नाम्ना धूमप्रभा गोत्रेण, षष्ठी **माघव्या** नाम्ना तमःप्रभा गोत्रेण, सप्तमी **माघवी** नाम्ना महातमःप्रभा गोत्रेणेति, एवमेतानि **नामधेयानि**–नामान्येवासां यथाक्रममुभयथाऽवगन्तव्यानीति॥ तत्र रत्नप्रभा पूर्वापरादिविभागव्यवच्छिन्ना सर्वत्र घनभावेन बहलतया अशीतिसहस्रोत्तरयोजनलक्षप्रमाणेति, द्वितीया द्वात्रिंशत्सहस्रोत्तरलक्षप्रमाणा, तृतीयाऽष्टाविंशतिसहस्रोत्तरलक्षप्रमाणा, चतुर्थी त्रिंशतिसहस्रोत्तरलक्षप्रमाणा, पञ्चम्यष्टादशसहस्रोत्तरलक्षप्रमाणा, षष्ठी षोडशसहस्रोत्तरलक्षप्रमाणा, सप्तमी सहस्राष्टकोत्तरलक्षप्रमाणेति॥

अधुना सर्ववसुधावर्तिनो घनोदधीन् मध्यप्रदेशे बहलतया निर्दिशति—

घनोदध्यादिमानम्

**भा०—सर्वे घनोदधयो विंशतियोजनसहस्राणि, घनवाततनुवातास्त्वसङ्ख्येयानि, अधोऽधस्तु घनतरा विशेषेणेति॥ १॥**

टी०–**सर्वे घनोदधयो विंशतियोजनसहस्राणि**। घनाः सर्वपृथिवीनामधोभागवर्तिनां मध्यप्रदेशेषु, प्रदेशहान्या तु हीयमानाः पार्थिवाः पृथिवीपर्यन्तप्रदेशेषु वलयाकृतिव्यवस्थानास्तनुतरा भवन्ति, तद्यथा–प्रथमायां घनोदधिवलयबहलता सर्वत्र षड् योजनानि, द्वितीयस्यां घनोदधिवलयं सत्रिभागषड्योजनबहलम्, तृतीयस्यां त्रिभागोनसप्तयोजनबहलम्, चतुर्थ्याः सप्तयोजनबहलम्, पञ्चम्याः सत्रिभागसप्तयोजनबहलम्, षष्ठयास्त्रिभागोनयोजनाष्टकबहलम्, सप्तम्यां योजनाष्टकबहलमिति। तथा **सर्वे घनवाता असङ्ख्येयानि योजनसहस्राणि** मध्येषु, पर्यन्तेषु तनुकाः, रत्नप्रभायास्तावदर्धपञ्चमयोजनबहलं घनवातवलयम्, द्वितीयस्याः

१ 'घनवातास्त्व०' इति क-पाठः। २ 'स्थानात् तनुतरा' इति प्रतिभाति। ३ 'अध्यर्धपञ्चम' इति ग-टी-पाठः।

क्रोशोनपञ्चयोजनबहलम्, तृतीयस्याः पञ्चयोजनबहलम्, चतुर्थ्याः सक्रोशपञ्चयोजनबहलम्, पञ्चम्यास्त्वर्धषष्ठयोजनबहलम्, षष्ठ्याः क्रोशोनयोजनषट्कबहलम्, सप्तम्याः षड्योजनबहलमिति। तनुवातवलयमपि मध्ये सर्वासामसङ्ख्येयानि योजनसहस्राणि घनम्, पर्यन्तेषु प्रदेशहान्या तनुकम्, रत्नप्रभायास्तावत् तनुवातवलयं षट्क्रोशघनम्, द्वितीयस्याः सत्रिभागषट्क्रोशघनम्, तृतीयस्यास्त्रिभागोनसप्तक्रोशघनम्, चतुर्थ्याः सप्तक्रोशघनम्, पञ्चम्याः सत्रिभागसप्तक्रोशघनम्, षष्ठ्यास्त्रिभागोनाष्टक्रोशघनम्, सप्तम्याः क्रोशाष्टकघनमिति। एते च घनवाततनुवाताः घना घनतरा घनतमाश्चाधोऽधो विशेषणानादिपरिणामवशादेव द्रष्टव्याः ॥ एतासां च पृथिवीनां सप्तानामपि परतस्तिर्यग् न समनन्तरमेवालोको भवति, नापि सप्तम्याः समनन्तरोऽधः, किन्तु रत्नप्रभायास्तावद् द्वादश योजनानि गत्वा परतश्चतसृष्वपि दिक्षु विदिक्षु सर्वासु पश्चादलोको भवति, द्वितीयस्यास्त्रिभागोनानि त्रयोदश योजनानि गत्वा भवत्यलोकः, तृतीयस्याः सत्रिभागानि त्रयोदश योजनानि यात्वाऽलोकः, चतुर्थ्याश्चतुर्दश योजनान्यवगाह्यालोकः, पञ्चम्यास्त्रिभागोनानि पञ्चदश योजनानि प्रविश्यालोकः, षष्ठ्याः सत्रिभागानि पञ्चदश योजनान्यतीत्यालोकः, सप्तम्याः षोडश योजनानि तिर्यगधश्च गत्वा भवत्यलोक इति ॥ सर्वाश्चैता अनादिपारिणामिकभावव्यवस्थानाः, नामान्यपि रत्नाद्याकारसम्बन्धात् गोत्रकृतानि रत्नप्रभादीनि तत्स्वभावत्वादनाद्यानि, घर्मादीन्यपि यादृच्छिकान्यनादिकालप्रसिद्धानीति, एवमयमधोलोकश्चतुर्थपृथिव्यवकाशान्तरसमधिकार्धव्यतीतमध्योऽधोमुखशरावाकृतिर्नव योजनशतान्यवगाह्य समतलाद् भूभागादधोरत्नप्रभाव्यवस्थितोपरितनाऽधस्तनक्षुल्लकप्रतरारब्धः, सप्तमपृथिवीपरतो यावत् षोडश योजनानीति ॥ १ ॥

अधुना नारकजीवविवक्षायामन्तरतमतदाधारमिदमेव प्रक्रियते भूमिषु—

## सूत्रम्—तासु नरकाः ॥ ३-२ ॥

**भा०—तासु रत्नप्रभाद्यासु भूमिषु[1] ऊर्ध्वमधश्चैकैकशो योजनसहस्रमेकैकं वर्जयित्वा मध्ये नरका भवन्ति।**

टी०—उक्ता भूमयो नामतो गोत्रतः संस्थानतः सङ्ख्यातश्च, प्रस्तुतत्वात् ताः सर्वनाम्ना परामृश्यन्ते, तासूक्तलक्षणासु रत्नप्रभाद्यासु भूमिषूर्ध्वमेकैकस्याः पृथिव्याः स्वावगाहाद् योजनसहस्रमपहायोपर्यधश्चैकं परित्यज्य[3] शेषे स्वावगाहे नरका[4] भवन्ति आ[5]षष्ठ्याः, रत्नप्रभायास्तावदष्टसप्ततिसहस्राधिकलक्षायाम्, द्वितीयस्यास्त्रिंशत्सहस्राधिकलक्षायाम्, तृतीयस्याः षड्विंशतिसहस्राधिकलक्षायाम्, चतुर्थ्यास्त्वष्टादशसहस्राधिकलक्षायाम्, पञ्चम्याः षोडशसहस्राधिकलक्षायाम्, षष्ठ्या-

नारकाणां स्थानम्

---

१ 'मधोऽधो' इति ग-पाठः। २ 'भूमिषूर्ध्व०' इति घ-पाठः। ३ 'त्यज्याशेषे' इति क-पाठः। ४ 'नारका' इति क-ख-पाठः। ५ 'आद्याः' इति क-ख-पाठः।

श्चतुर्दशसहस्राधिकलक्षायाम्, सप्तम्यास्त्ववगाह्याधः पञ्चाशत्सहस्राणि पञ्चविंशतिशताधिकानि अधश्च तावन्त्येव विहाय मध्ये त्रिषु सहस्रेषु नरका भवन्ति, एष च सप्तमपृथिवीगतविशेषो नोपात्तः साक्षाद् भाष्यकारेण, तत्रायमभिप्रायः—यत् किल बाहुल्याद् वर्तते तदुपात्तमितरदेकपृथिवीवर्तियुतकमेवाऽतो नाख्यातमिति ॥

तानिदानीं प्रसिद्धैरिहत्यनिदर्शनैर्भयानकसंस्थानैर्नरकान् प्रतिपादयितुमाह—

**भा०—तद्यथा-उष्ट्रिकापिष्टपचनीलोहीकरकेन्द्रजानुकाजन्तोकायस्कुम्भायःकोष्ठादिसंस्थाना वज्रतलाः सीमन्तकोपक्रान्ताः, रौरवोऽच्युतो रौद्रो हाहारवो घातनस्तापनः शोचनः क्रन्दनो विलपनश्छेदनो भेदनः खटापटः कलपिञ्जर इत्येवमाद्याः अशुभनामानः, कालमहाकालरौरवमहारौरवाऽप्रतिष्ठानपर्यन्ताः ॥**

नारकावासानां संस्थान नामानि च

**टी०—तद्यथा-उष्ट्रिकेत्यादि** । उष्ट्रिकादयो भाण्डकविशेषा लोकप्रसिद्धत्वात् सुज्ञाना एव, एवंविधाकृतयो हि नरका अविद्यमानसुखाः क्षुरप्राकृतिवज्रतलाः प्रबहलध्वान्तपटलपूरिताश्च सर्पमार्जारादिमृतकगन्धयः करपत्र-शक्ति-कुन्त-तोमराग्रसदृशस्पर्शाः आवलिकातो बहिर्वर्तमाना नानासंस्थाना उष्ट्रिकाद्याकृतयः प्रकीर्णनरका भवन्ति, आवलिकान्तःपातिनस्तु त्रिविधसंस्थाना वृत्तत्र्यस्रचतुरस्राकृतयः, ते च **सीमन्तकोपक्रान्ताः**, सर्वेऽपि हि ते रत्नप्रभापृथिवीप्रथमप्रतरमध्यवर्तिसीमन्तकाभिधाननरकेन्द्रकमवधिमवस्थाप्योपक्रम्यन्ते, तत्रावलिकाप्रविष्टा दिक्षु रत्नप्रभायां त्रयोदशसु प्रस्तरेषु विदिक्षु च प्रथमप्रतरदिगावलिका प्रमाणेनैकोनपञ्चाशन्नरकाः, अष्टचत्वारिंशच्च नरका विदिक्ष्वावलिका, इदमावलिकाद्वयमप्येकैकेन नरकावासेन हीयमानं हीयमानमशेषप्रतरवर्ति तावन्नेतव्यं यावत् सप्तमवसुन्धरायामेकैकः शेषो दिक्षु नरकः सञ्जातो विदिक्षु नास्त्येव मध्ये चैक इन्द्रकः शेष इति ॥ अत्र कांश्चिन्नामग्राहमाख्याति- **रौरवोऽच्युत** इत्यादिना। एषां मध्ये केचिदिन्द्रकाः केचिदावलिकाप्रविष्टाः केचित् प्रकीर्णकाः सूरिणोपात्ताः सत्त्वानां संवेगप्राप्त्यर्थम्, एषां हि नामान्यप्यादधति भयमतुलमाकर्ण्यमानानि, किमुत तत्र जन्मभोग इति भीताः सन्तो न सहसा पापस्थानेषु वर्तिष्यन्त इत्यभिप्रायः ॥ **एवमाद्या**-एवंप्रकाराः, **अशुभनामानो** यावन्तः किल लोके व्याधयः शपथाश्चानिष्टनामानि च तन्नामानो नरकाः सर्वे भवन्ति ॥ अधुना सप्तमपृथिवीवर्तिनः पञ्च नरकान्नामादेशं कथयति— **कालेत्यादि** । अप्रतिष्ठाननरकेन्द्रकात् पूर्वतः कालः, अपरतो **महाकालः**, **रौरवो**

---

१ 'तदुपपातं' इति क-पाठः । २ 'पृथिवीवर्तियुतकमेवावर्तियुतकमेव' इति ग-पाठः । ३ 'जानुकजन्त्राकाय इति घ-पाठः । ४ 'हारवः' इति ग-टी-पाठः । ५ 'शोचनस्तापनः क्रन्दनो' इति घ-पाठः । ६ 'संवेगमाप्त्यर्थं' इति, 'संवेगसमाप्त्यर्थं' इति च ग-टी-पाठः ।

दक्षिणतः, उत्तरतो **महारौरवः**, मध्ये चाप्रतिष्ठाननरकेन्द्रकः, स च [सकलनरकेन्द्रकपर्यन्तवर्ती, न ततः परमन्यो नरकसत्त्वावासः समस्ति । तत्र–

**भा०—रत्नप्रभायां नरकाणां प्रस्तरास्त्रयोदश । द्विद्व्यूनाः शेषासु ॥**

नरकेषु प्रस्तराणां नरकावासानां च संख्या

**रत्नप्रभायां नरकावासानां त्रिंशच्छतसहस्राणि । शेषासु पञ्चविंशतिः पञ्चदश दश त्रीणि एकं पञ्चोनं नरकशतसहस्रमित्याषष्ठ्याः, सप्तम्यां तु पञ्चैव[1] महानरका इति ॥ २ ॥**

**टी०—रत्नप्रभापृथिव्यां नरकप्रस्तरास्त्रयोदश** वेश्मभूमिकाकल्पाः । **द्विद्व्यूनाः शेषासु**—शर्कराप्रभादिषु महातमःप्रभापर्यवसानासु, त्रयोदश द्व्यूनाः द्वितीयस्यामेकादश प्रस्तराः, एकादश द्व्यूनाः तृतीयस्यां नवप्रस्तराः, नव द्व्यूनास्तुर्यवसुधायां सप्त, सप्त द्व्यूनाः पञ्चम्यां पञ्च, पञ्च द्व्यूनाः षष्ठ्यां त्रयः, त्रयो द्व्यूनाः सप्तम्यामेक इति ॥ कियन्तः पुनरेकैकस्यां भूमौ नरका इति तत्प्रसिद्ध्यर्थमाह—**रत्नप्रभायामित्यादि** । रत्नप्रभायामावलिकाप्रविष्टनरकाणां चत्वारि सहस्राणि त्रयस्त्रिंशदुत्तरचतुःशताधिकानि, प्रकीर्णकानामेकोनात्रिंशल्लक्षाः पञ्चनवतिसहस्राणि पञ्च शतानि सप्तषष्ट्यधिकानि, उभयेऽप्येकीकृतास्त्रिंशल्लक्षा भवन्ति प्रथमायाम्, **शेषासु पञ्चविंशतिरित्यादि** । शर्कराप्रभादिषु सप्तम्यन्तासु यथाक्रममेतत्परिमाणमावेदयति नरकाणाम्, द्वितीयस्यामावलिकाप्रविष्टानां षड्विंशतिशतानि पञ्चनवत्यधिकानि, प्रकीर्णकानां चतुर्विंशतिर्लक्षाः सप्तनवतिसहस्राणि शतत्रयं पञ्चोत्तरम्, एकत्र पञ्चविंशतिर्लक्षाः । तृतीयस्यामावलिकाप्रविष्टानां चतुर्दश शतानि पञ्चाशीत्यधिकानि, प्रकीर्णकानां चतुर्दश लक्षाः सहस्राण्यष्टानवतिः पञ्च शतानि पञ्चदशोत्तराणि, एकत्र पञ्चदश लक्षाः । चतुर्थ्यामावलिकाप्रविष्टानां सप्त शतानि सप्तोत्तराणि, प्रकीर्णकानां नव लक्षाः सहस्राणि नवनवतिः द्वे शते त्रिनवत्यधिके, एकत्र दश लक्षाः । पञ्चम्यामावलिकाप्रविष्टानां द्वे शते पञ्चषष्ट्यधिके, प्रकीर्णकानां द्वे लक्षे नवनवतिसहस्राणि सप्त च शतानि पञ्चत्रिंशदधिकानि, एकत्र तिस्रो लक्षाः । षष्ठ्यामावलिकाप्रविष्टानां त्रिषष्टिः, प्रकीर्णकानां नवनवतिसहस्राणि नव शतानि द्वात्रिंशदधिकानि, एकत्र नरकपञ्चकोनैकलक्षाः । **सप्तम्यां तु पञ्चैव नरकाः**, प्रकीर्णका न सन्त्येवेति । अत्र रत्नप्रभात आरभ्य आषष्ठ्याः केचिन्नरकाः सङ्ख्येयानि योजनसहस्राणि आयामविष्कम्भपरिधिभिः, केचिदसङ्ख्येयानीति, सप्तम्यामप्रतिष्ठाननरकेन्द्रको विष्कम्भायामपरिधिभिर्जम्बूद्वीपतुल्यः, कालादयस्तु चत्वारोऽसंख्येयानि योजनसहस्राणि विष्कम्भायामपरिधिभिः, सर्वे चैते नरका बुध्नप्रदेशे योजनसहस्रबहलाः, मध्येऽपि योजनसहस्रप्रमाणशुषिरभाजः, उपर्यपि सङ्कुचिता योजनसहस्रमेवमेते नरकास्तासु रत्नप्रभादिभूमिषु महातमःप्रभापर्यवसानासु व्यवस्थिताः पृथिव्यादिवदना-

---

१ 'नरकाः' इति घ-टी-पाठः ।

दिकालसन्निवेशिनः पृथुपापविपाकभाजां सत्त्वानामाश्रयाः वज्रकुड्यमयाः[1] नित्यान्धतमसाश्च वेदितव्याः । विशेषार्थिना चावलिकाप्रविष्टवृत्तत्र्यस्रचतुरस्रेयत्तापरिज्ञानाय देवेन्द्रनरकेन्द्रकप्रकरणमपेक्षणीयमिति ॥ २ ॥ किञ्चान्यत् ।

## सूत्रम्–तेषु[2] नारका नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥ ३–३ ॥

टी०—तेषु व्यावर्णितलक्षणेषु, नरकेषु भवा नारकाः । नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः, अथवोभयमाक्षिप्यतेऽनेन नरकाः नारकाश्च, तेषु नित्याशुभेत्यादि सूत्रम्, इह सूत्रे नरका नारकाश्च उभये परिगृह्यन्ते, प्रस्तावान्नरका[3] लेश्यादेहवेदनाविक्रियासम्भवान्नारकाः, नित्यशब्दोऽभीक्ष्णवचनो नित्यप्रहसितादिवत्, नित्याशुभतरलेश्यादयो येषु येषां वा ते नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥

भा०—ते नरका भूमिक्रमेणाधोऽधो निर्माणतोऽशुभतराः । अशुभा रत्नप्रभायाम्, ततोऽशुभतराः शर्कराप्रभायाम्, ततोऽप्यशुभतरा वालुकाप्रभायाम्, इत्येवमासप्तम्याः[4] ॥

नरकनारकाणां स्वरूपम्

टी०—ते नरका इत्यादि भाष्यम् । प्राक्तनसूत्रनिरूपिताः सर्वनामशब्देनात्र गृह्यन्ते नरकाः सीमन्तकादयोऽप्रतिष्ठानपर्यन्ताः, रत्नप्रभादिभूक्रमेणाधोनिर्माणतः संस्थाननिर्वृत्तेः, अशुभतरा भयानकाः, अशुभा रत्नप्रभायामधस्तनीष्वशुभतरा अशुभतमाश्चेत्यासप्तम्याः । एतद् भाष्यकारेण सामान्यतो युक्तमेव व्याख्यातम्, न पुनरशुभग्रहणमस्ति सूत्रे, यच्चाशुभतरग्रहणं तल्लेश्यादिभिः सम्बद्धम्, अतः सामान्यव्याख्यानमिदं प्रतिपत्तव्यम्, एकशेषनिर्देशाद्[5] वा सिद्धम् ॥

सम्प्रति नित्यार्थमाचष्टे—

भा०—नित्यग्रहणं गतिजातिशरीराङ्गोपाङ्गकर्मनियमादेते लेश्यादयो भावा नरकगतौ नरकजातौ[6] च नैरन्तर्येणाभवक्षयादुद्वर्तनाद् भवन्ति, न च कदाचिदक्षिनिमेषमात्रमपि, न[7] शुभा वा भवन्तीत्यतो नित्या उच्यन्ते[8] ।

टी०—नित्यग्रहणं गतिजाति०नियमादेते लेश्यादय इत्यादि । नित्यशब्दोपादानमत्र नरकगतिनरकपञ्चेन्द्रियजात्योर्नियमादशुभतरलेश्यादिभिः सम्बन्धप्रतिपादनार्थम्,

---

१ 'वज्रकुम्भमयाः' इति क-पाठः । २ 'तेषु नारका' इति घ-पुस्तके नास्ति । ३ 'न्नारका' इति क-पाठः । ४ 'सप्तम्याम्' इति ग-टी–पाठः । ५ 'एकदेशानिर्देशाद्', 'एकदेशनिर्देशाद्' इति क-ख-पाठः । ६ नरकपञ्चेन्द्रियजातौ' इति घ-पाठः । ७ 'न भवन्ति शुभा' इति घ-पाठः । ८ इत्युच्यन्ते इति घ-पाठः ।

एतदेव विवृणोति—एते सूत्रोपात्ता लेश्यादयो भावा नैरन्तर्येणाविच्छेदेन पौनःपुन्येनाभवक्षयादुद्वर्तनकालावधिका भवन्ति, भवक्षये हि सति ते उद्वर्तन्ते, अन्तराले नास्ति जीवितक्षय इत्यावेदयति। नैरन्तर्यार्थं पुनः स्पष्टयति—लोचननिमेषप्रमितमपि कालमशुभेन नास्ति तेषां वियोगः, किमु बहुतरकमिति दर्शयति। अथवैतावन्तमेव कालमशुभास्ते लेश्यादयः स्युरिदमपि नास्तीत्यतो नित्यास्त उच्यन्ते। नन्वेवंविधे नित्यशब्दार्थेऽनुपपन्नमाभीक्ष्ण्यं स्यात्, तिरोधानपूर्वकः प्रादुर्भावः पुनः पुनराभीक्ष्ण्यशब्दार्थः, इह तु नैरन्तर्येण व्याख्यातमाभवक्षयादिति, उच्यते—तावेव हि तिरोधानाविर्भावौ विशेष्येते नैरन्तर्येण, तौ हि निर्व्यवधानौ भवतः सर्वकालमेव तेषाम्, अथ 'तद्भावाव्ययं' ( अ० ५, सू० ३० ), नित्यलक्षणमपि सम्बन्द्धुं शक्यते, न कश्चिदपराध इति।

नारकाणां लेश्या

भा०—अतो[1]ऽशुभतरलेश्याः। कापोतलेश्या रत्नप्रभायाम्। ततस्तीव्रतरसङ्क्लेशाध्यवसाना कापोता शर्कराप्रभायाम्। ततस्तीव्रतरसङ्क्लेशाध्यवसाना कापोतनीला वालुकाप्रभायाम्। ततस्तीव्रतरसङ्क्लेशाध्यवसाना नीला पङ्कप्रभायाम्। ततस्तीव्रतरसङ्क्लेशाध्यवसाना नीलकृष्णा धूमप्रभायाम्। ततस्तीव्रतरसङ्क्लेशाध्यवसाना कृष्णा तमःप्रभायाम्। ततस्तीव्रतरसङ्क्लेशाध्यवसाना कृष्णैव महातमःप्रभायामिति॥

टी०—अतोऽशुभतरलेश्या इत्यादि। आद्यास्तिस्रोऽशुभलेश्यास्ताः सप्तस्वपि पृथिवीषु प्रकृष्टतया विभज्यन्ते क्रमवैपरीत्येन, तेषां हि मानसपरिणामो लेश्या, स तीव्रस्तीव्रतरस्तीव्रतम इत्यशुभाभिभूतत्वाद् भवति, तत्र प्रथमायां कापोता तीव्रा, शर्कराप्रभायां सैव तीव्रतरा, तीव्रतमा च कापोता तीव्रा च नीला वालुकाप्रभायाम्, पङ्कप्रभायां नीला तीव्रतरा, धूमप्रभायां नीला तीव्रतमा कृष्णा च तीव्रा, तमःप्रभायां कृष्णा तीव्रतरा, महातमःप्रभायां कृष्णैव तीव्रतमा। अपरे मन्यन्ते—नारकाणां षडपि लेश्याः सम्भवन्ति, सम्यक्त्वप्रतिपत्तेरिति॥

नारकाणां पुद्गलपरिणामः

भा०—अशुभतरपरिणामः। बन्धन-गति-संस्थान-भेद-वर्ण-गन्ध-रस-स्पर्शागुरुलघुशब्दाख्यः, दशविधोऽशुभः पुद्गलपरिणामः, नरकेषु अशुभतरश्च। तिर्यगूर्ध्वमधश्च[2] सर्वतोऽनन्तेन भयानकेन नित्योत्तमकेन तमसा नित्यान्धकाराः श्लेष्म-मूत्र-पुरीष-स्रोतो-मल-रुधिर-वसा-मेद-पूयानुलेपनतलाः। श्मशानमिव पूति-मांस-केशास्थि-चर्म-दन्त-नखास्तीर्णभूमयः। श्व-शृगाल-मार्जार-नकुल-सर्प-मूषिक-हस्त्यश्व-गो-मानुष-शवकोष्ठाशुभतरगन्धाः। हा मातः! धिगहो कष्टं बत मुञ्च[3] धावत प्रसीद भर्तः! मा वधीः कृपणकमित्यनुबन्धरुदितैस्तीव्रकरुणैः दीनविक्लवैर्विलापैरार्तस्वनैर्निनादै-

१ 'अतः' इति घ-पुस्तके नास्ति। २ 'अधोऽधः' इत्यधिको घ-पाठः। ३ 'मुञ्च तावत् धावत' इति घ-पाठः।

**दीनकृपणकरुणैर्याचितैर्बाष्पसन्निरुद्धैर्निस्तनितैर्गाढवेदनैः कूजितैः सन्तापोच्छ्वा-सनिश्वासैरनुपरतभयस्वनाः ।**

टी०—**अशुभतरपरिणाम** इत्यादि । स्पर्श-रस-गन्ध-वर्ण-शब्द-संस्थान-भेद-गति-बन्धागुरुलघुपरिणामो दशधा । **स्पर्शस्तावद्** वृश्चिकदंश-कपिकच्छू-मुर्मुराङ्गारसदृशः, **रसो**ऽपि तत्रत्यपुद्गलानां पिचु-मन्द-कोशातकीनिर्याससमः, **गन्धो**ऽपि श्व-मार्जार-शृगाल-हस्त्यश्व-कुथितमृतकगन्धातिरिक्ततराशुभपरिणामः, **वर्णो**ऽपि गम्भीरलोमहर्षणः त्रासकारी परमकृष्णः, **शब्दो**ऽपि खरपरुषनिष्ठुरपरिणामः, **संस्थानं** नरकाकृतिः नारकाकृतिश्च, उभयमप्यालोक्यमानमेवोद्वेगमुपजनयति महाश्वभ्रवत् पिशाचाकृतिवद् वा, **भेदपरिणामो**ऽपि पुद्गलानामशुभः शरीरनरककुडयादिभ्यो विभिद्यमानाः पुद्गलाः वर्णस्पर्शादिभिरशुभपरिणामा जायन्ते, ततश्च दुःखहेतवो भवन्ति, **गतिर्नारकाणामप्रशस्तविहायोगतिनामकर्मोदयादशुभा** भवन्त्युष्ट्रपतङ्गादिवद्, **बन्धो**ऽपि पुद्गलानां शरीरादिषु संश्लिष्यतामत्यन्ताशुभतरपरिणामो भवति, वर्णादिभिः **अगुरुलघुपरिणामो**ऽप्यशुभः, सर्वेषां हि जीवानां शरीराण्यात्मनो न गुरूणि नापि लघूनीत्यगुरुलघुपरिणामः, स चानिष्टोऽनेकविधदुःखाश्रयत्वात् । अत्र च भाष्यकारेण स्पर्शादिदशविधपरिणामे किञ्चिद् दर्शितं किञ्चिन्न । **तिर्यगूर्ध्वमधश्चे**त्यादिना वर्णपरिणामः प्रतिपादितः, **श्व-शृगाल-मार्जारा**दिना गन्धः, **हा मातः! धिगहो कष्ट**मित्यादिना शब्दपरिणामः । शेषास्तु ग्रन्थगौरवभीत्या न प्रतिपदमुक्ताः, एतत्सम्बन्धित्वात् तु वक्तव्या इति ॥

भा०—**अशुभतरदेहाः । देहाः शरीराणि । अशुभनामप्रत्ययादशुभान्य-ङ्गोपाङ्गनिर्माणसंस्थानस्पर्शरसगन्धवर्णस्वराणि हुण्डानि निर्लूनाण्डजशरीराकृतीनि । क्रूर-करुण-बीभत्स-प्रतिभयदर्शनानि दुःखभाञ्ज्यशुचीनि च तेषु शरीराणि भवन्ति । अतोऽशुभतराणि चाधोऽधः । सप्त धनूंषि त्रयो हस्ताः षडङ्गुलमिति शरीरोच्छ्रायो नारकाणां रत्नप्रभायाम् । द्विर्द्विः शेषासु । स्थितिवच्चोत्कृष्टजघन्यतो वेदितव्यः ॥**

नारकाणां शरीरस्वरूपं मानं च

टी०—**अशुभतरदेहा** इत्यादि । अशुभनामकर्मोदयप्रत्ययात् सर्वाण्यङ्गोपाङ्गादीनि तद्देहेष्वशुभानि द्रष्टव्यानि, सर्वाङ्गावयवानांस्वप्रमाणेष्वव्यवस्थानात्, तेषां हि नियतमेव हुण्डानि शरीराणि, उत्खातशेषपिच्छपक्षिशरीरवद् बीभत्सानि । तानि च तेषां द्विविधानि शरीराणि भवन्ति—भवधारकाण्युत्तरवैक्रियाणि च, तत्र भवधारकं जघन्येनाङ्गुलासङ्ख्येयभागप्रमाणं प्रथमायाम्, अन्यासु च पृथिवीषु, उत्कर्षेण सप्त धनूंषि त्रयो हस्ताः षट् चाङ्गुलानीति उत्सेधाङ्गुलमङ्गीकृत्योच्यते । परमाण्वादिक्रमेणाष्टौ यवमध्यान्यङ्गुलमेकम्, चतुर्विंशत्यङ्गुलो हस्तः,

---

१ '०पोष्णैश्च निश्वा०' इति घ-पाठः । २ '०ता वेदितव्या' इति घ-पाठः ।

चतुर्हस्तं धनुरिति । अथ शेषासु कथं[1] भूमिष्वित्यत आह— द्विर्द्विः शेषासु । रत्नप्रभानारक-[2]शरीरप्रमाणं द्विगुणं द्वितीयस्यां नारकशरीरप्रमाणम् । तदपि द्विगुणं तृतीयस्याम् । एवं यावत् सप्तम्यां पञ्च धनुःशतानि पूर्णानि[3] । उत्तरवैक्रियं तु प्रथमायां जघन्येनाङ्गुलसङ्ख्येय-भागप्रमितम्, अन्यासु च, उत्कर्षेण पञ्चदश धनूंषि अर्धतृतीयाश्च रत्नयः प्रथमायाम्, एतदेव द्विगुणं द्वितीयस्याम्, एवं तावत् ज्ञेयं यावत् सप्तम्यां धनुःसहस्रमिति । एतच्चाधःप्रमाणं रत्नप्रभादिषु पर्यन्तवर्तिप्रतरनारकाणामुत्कृष्टं द्रष्टव्यम्, जघन्यमुत्कृष्टं वा प्रथमप्रतरादिभेदेन सर्वत्र वक्तव्यम्,स्थितिवत् । यथाऽऽयुषः स्थितिः प्रथमप्रतरादिभेदेन भिद्यमाना दशनवति-सहस्रादिना रत्नप्रभायां पर्यन्तप्रतरे सागरोपमप्रमाणा[4] भवत्येवमेव शरीरप्रमाणमपि प्रथमप्रतरा-दिभेदेन जघन्योत्कृष्टाभ्यां भेत्तव्यमित्यावेदयति । उक्तमिदमतिदेशतो भाष्यकारेणास्ति चैतत्, न तु मया क्वचिदागमे[5] दृष्टं प्रतरादिभेदेन नारकाणां शरीरावगाहनमिति ॥

भा०—अशुभतराश्च[6] वेदना भवन्ति नरकेष्वधोऽधः। तद्यथा[7]—प्रथमायां उष्णवेदनाः, द्वितीयायामुष्णवेदनाश्च, तीव्रतरास्तीव्रतमाश्चातृतीयायाम्, उष्णशीते चतुर्थ्याम्, शीतोष्णे पञ्चम्याम्, परयोः शीततराः[8] शीततमाश्चेति, तद्यथा–प्रथमशरत्काले चरमनिदाघे वा पित्तप्रकोपाभिभूतशरीरस्य सर्वतो दीप्ताग्निराशिपरिवृतस्य व्यभ्रे नभसि मध्याह्ने निवातेऽतिरस्कृतातपस्य यादृगुष्णजं दुःखं भवति ततोऽनन्तगुणं प्रकृष्टं[9] कष्टमुष्णवेदनेषु नरकेषु भवति । पौषमाघयोश्च मासयोस्तुषार[10]लिप्तगात्रस्य रात्रौ हृदयकरचरणाधरोष्ठदशनायासिनि प्रतिसमयप्रवृद्धे शीतमारुते निरग्न्याश्रयप्रावरणस्य यादृक् शीतसमुद्भवं दुःखमशुभं भवति ततोऽनन्तगुणं प्रकृष्टं कष्टं शीतवेदनेषु नरकेषु भवति । यदि किलोष्णवेदनान्नरकादुत्क्षिप्य नारकः सुमहत्यङ्गारराशावुद्दीप्ते प्रक्षिप्येत स किल सुशीतां मृदुमारुतां शीतलच्छायामिव प्राप्तः सुखमनुपमं विन्द्यात्, निद्रां चोपलभेत, एवं कष्टतरं नारकमुष्णमाचक्षते। तथा किल यदि शीतवेदनान्नरकादुत्क्षिप्य नारकः कश्चिदाकाशे माघमासे निशि प्रवाते महति तुषारराशौ प्रक्षिप्येत सं[11]दन्तशब्दोत्तमप्रकम्पायासकरेऽपि तत्सुखं विन्द्यादनुपमां निद्रां चोपलभेत, एवं कष्टतरं नारकशीतदुःखमाचक्षते इति ॥

नारकाणां वेदना

---

१ कथंशब्दः क-ख-पाठे नास्ति । २ 'शरीराणां द्विगुणं' इति क-ख-पाठः । ३ 'पूर्णानीति' इति ग-पाठः । ४ 'प्रमाणं' इति क-पाठः । ५ आगमशब्देनात्र मूलागमः, तेन वृत्त्यादिषु एतत्सत्त्वेऽपि न क्षतिः, उत्तरं तु पृथ्वीवद् द्विगुणमिति स्पष्टमेव । ६ 'अशुभतरवेदनाः' इत्यधिको ग घ-पाठः । ७ 'तद्यथा–उष्णवेदनास्तीव्रास्तीव्रतरास्तीव्रतमाश्च तृतीयायाः' इति ग–घ-पाठः। ८ 'शीताः शीततराश्चेति' इति घ-पाठः । ९ 'प्रकृष्टमुष्ण' इति क-ख-पाठः । १० 'तुषारभिन्न ' इति क-पाठः । ११ 'सदन्त ' इति घ-पाठः ।

**अशुभतरविक्रियाः । अशुभतराश्च विक्रिया नरकेषु नारकाणां भवन्ति, शुभं करिष्याम इत्यशुभतरमेव विकुर्वते । दुःखाभिहतमनसश्च दुःखप्रतीकारं चिकीर्षवः गरीयस एव ते दुःखहेतून् विकुर्वते इति ॥ ३ ॥**

टी०—अशुभतराश्च वेदना[1] इत्यादि भाष्यम् । **प्रथमायां** तीव्रोष्णवेदना, द्वितीयस्यां सैव तीव्रतरा, तृतीयस्यां तीव्रतमा, चतुर्थ्यामुष्णवेदनाका बहवो नारकाः, शीतवेदनाकास्त्वल्पे, तेनोभय्यपि वेदना तस्याम्, पञ्चम्यां शीतवेदनाका बहवः स्तोकास्तूष्णवेदनाकाः, तत्राप्युभय्येव वेदना, षष्ठ्यामतिशीता, सप्तम्यां शीततमेति ॥ अधुना-वेदनाद्वयस्यापि किञ्चित् साधर्म्यमङ्गीकृत्य दृष्टान्तद्वयमुपन्यस्यति असद्भावप्रज्ञापनया, न पुनर्नारकः केनचिदुत्क्षेप्तुमानेतुं चेह शक्यते, प्रकृष्टाशुभकर्मानुभावादेवेति, न च तत्राग्निरस्ति पृथिवीपरिणाम एवासौ क्षेत्रस्वभावादनादिपरिणामलक्षणः प्रकृष्टोष्णतानुगतः सन्तमसरूपः[2] सत्त्वानां दुःखहेतुरिति ॥

**तद्यथा प्रथमशरत्काल** इत्यादि भाष्यमेव सुज्ञानम् ॥

**अशुभतरविक्रिया** इत्यादि भाष्यम्, उत्तरवैक्रियं हि ते शरीरमाकलितप्रयत्ना अपि रचयन्तो रूपवत्तेच्छया क्षेत्रकर्मानुभावाद् विरूपतरमाविष्कुर्वते विदूषकवदिति ॥३॥

ते च नारकास्तासु भूमिषु नरकेषु वा ।

## सूत्रम्—परस्परोदीरितदुःखाः ॥ ३–४ ॥

**भा०—परस्परोदीरितानि च दुःखानि नरकेषु नारकाणां भवन्ति । क्षेत्र-स्वभावजनिताच्चाशुभात् पुद्गलपरिणामादित्यर्थः ॥**

टी०—मिथ्यादृष्टयो भवप्रत्ययविभङ्गानुगतत्वादालोक्य परस्परमेवाभिघातादिभिर्दुःखानि उत्पादयन्ति, सम्यग्दृष्टयस्तु संज्ञित्वादेवात्मानमनुशोचन्तोऽतीतजन्मानाचारकारिणं क्षेत्रस्वभावजनितानि दुःखानि सहमानाः परैरुदीरितवेदनाः स्वायुषः क्षयमुदीक्षन्तेऽतिदुःखिताः न पुनरन्यनारकाणां ते समुदीरयन्ति वेदनाः, तेषां चावधिज्ञानं न विभङ्ग इति । न केवलं परस्परोदीरणनिर्वृत्तानि तेषां दुःखानि किन्तु सहजान्यपि सन्तीत्यत आह—**क्षेत्रस्वभावेत्यादि** । नरकक्षेत्रस्यायमेव स्वभावो यद् दुःखात्मकता । नहि तत्र काचित् सुखमात्रा समस्ति । यदपि ह्युपपातादिहेतुकं सुखमाचक्षते तदपि बहुतरदुःखपरिलीढत्वादल्पकालस्थायित्वाच्च दुःखमेव, अत एवंविधक्षेत्रानुभावनिर्वर्तितपुद्गलपरिणामाच्च ते दुःखमनुभवन्तीत्यर्थः । एतदेव वचनं व्याख्यानयति सूत्रमपहाय—

---

१ ‘अशुभतरवेदना’ इति ग-पाठः । २ ‘स्वरूपः’ इति क-पाठः ।

भा०—तत्र क्षेत्रस्वभावजनितः[1] पुद्गलपरिणामः शीतोष्णक्षुत्पिपासादिः।

क्षेत्रजा वेदना

शीतोष्णे व्याख्याते। क्षुत्पिपासे वक्ष्यामः। अनुपरतशुष्केन्धनोपादानेनेवाग्निना तीक्ष्णेन[2] प्रततक्षुदग्निना दन्दह्यमानशरीरा अनुसमयमाहारयन्ति ते[3] सर्वपुद्गलानप्यश्नुस्तीव्रया च नित्यानुषक्तया पिपासया शुष्ककण्ठौष्ठतालुजिह्वाः सर्वोदधीनपि पिबेयुः, न च तृप्तिं समाप्नुयुस्ते वर्द्धेयाताम[4]एव चैषां क्षुत्तृष्णे इत्येवमादीनि क्षेत्रप्रत्ययानि॥

टी०—तत्र क्षेत्रस्वभावजनितेत्यादि सुगमम्। पुनः सूत्रं परामृश्य सूत्रार्थाख्यानं करोति॥

भा०—परस्परोदीरितानि च। अपि चोक्तम्—'भवप्रत्ययोऽवधिर्नारकदेवानाम्'(अ०१,सू०२२)इति। तन्नारकेष्ववधिज्ञानम् अशुभभवहेतुकं मिथ्यादर्शनयोगाच्च विभङ्गज्ञानं भवति। भावदोषोपघातात् तु तेषां दुःखकारणमेव भवति। तेन हि ते सर्वतः तिर्यगूर्ध्वमधश्च दूरत एवाजस्रं दुःखहेतून् पश्यन्ति। यथा च काकोलूकमहिनकुलं चोत्पत्त्यैव बद्धवैरं तथा परस्परं प्रति नारकाः। यथा वा अपूर्वान् शुनो दृष्ट्वा श्वानो निर्दयं क्रुध्यन्त्यन्योऽन्यं प्रहरन्ति च, तथा तेषां नारकाणामवधिविषयेण दूरत एवान्योऽन्यमालोक्य क्रोधस्तीव्रानुशयो जायते,

परस्परोदीरितं दुःखम्

दुरन्तो भवहेतुकः। ततः प्रागेव दुःखसमुद्घातार्ताः क्रोधाग्न्यादीपितमनसः अतर्किता इव श्वानः समुद्धता वैक्रियं भयानकं रूपमास्थाय तत्रैव पृथिवीपरिणामजानि क्षेत्रानुभावजनितानि चायःशूल-शिला-मुशल-मुद्गर-कुन्त-तोमरासि-पट्टिश-शक्ति-योधन[5]-खड्ग-यष्टि-परशु-भिण्डिमालादीन्यायुधान्यादाय कर-चरण-दशनैश्चान्योऽन्यमभिघ्नन्ति। ततः परस्पराभिहता विकृताङ्गा निस्तनन्तो गाढवेदनाः सूनाघातनप्रविष्टा इव महिषशूकरोरभ्राः स्फुरन्तो रुधिरकर्दमेऽपि चेष्टन्ते। इत्येवमादीनि परस्परोदीरितानि नरकेषु नारकाणां दुःखानि भवन्तीति॥ ४॥

टी०—परस्परोदीरितानि चेत्यादि। परस्परोदीरणायां कारणं दर्शयति—अपि चोक्तं—भवप्रत्ययोऽवधिर्नारकदेवानामिति मिथ्यादृशां विभङ्गज्ञानमितरेषामवधिज्ञानमेव, शेषं सुज्ञानमत्र भाष्यमिति॥ ४॥

एवं ते परस्परेणोदीरयन्ति दुःखम्, विशेषेण तु—

## सूत्रम्—सङ्क्लिष्टासुरोदीरितदुःखाश्च प्राक् चतुर्थ्याः॥ ३–५॥

भा०—सङ्क्लिष्टासुरोदीरितदुःखाश्च नारका भवन्तीति। तिसृषु भूमिषु प्राक् चतुर्थ्याः।

१ '०नितपुद्गल०' इति ख-घ-पाठः। २ 'तीक्ष्णोदराग्निना' इति ग-पाठः' 'तीक्ष्णेन प्रततेन क्षुद०' इति तु घ-पाठः। ३ 'येन ते' इति ग-पाठः। ४ 'प्नुयुर्वर्धेयातां' इति ग-पाठः। ५ 'शक्त्ययोघन' इति क-पाठः।

टी०—चशब्दः परस्परोदीरणं क्षेत्रस्वभावं चाभिमुखीकरोति । प्राक् चतुर्थ्यां इति मर्यादा नाभिविधिरिति । सङ्क्लिष्टचित्तास्त्वशुभानुबन्धिबालतपोकामनिर्जरोपार्जितदेवजन्मानः स्वल्पविभवलाभाध्माता जन्मान्तरानालोकिनः एतावत्त्रैलोक्ये सुखमित्यध्यवसिताः । ते च भवनवासिनां प्रथम एवासुरनाम्नि निकाये भवन्ति, नान्येषु, तेषु नामोत्कीर्तनेनापि रौद्रतया भयमादधति किमुत दर्शनेनेत्यावेदयति—

भा०—तद्यथा—अम्बाम्बरीष-श्याम-शबल-रुद्रोपरुद्रकाल-महाकालास्यसिपत्रवन-कुम्भी-वालुका-वैतरणी-खर-स्वर-महाघोषाः पञ्चदश परमाधार्मिका मिथ्यादृष्टयः पूर्वजन्मसु सङ्क्लिष्टकर्माणः पापाभिरतयः आसुरीं गतिमनुप्राप्ताः कर्मक्लेशजा एते ताच्छील्यान्नारकाणां वेदनाः समुदीरयन्ति विचित्राभिरुपपत्तिभिः । तद्यथा—तप्तायोरसपायननिष्टप्तायःस्तम्भालिङ्गनकूटशाल्मल्यग्रारोपणावतारणायोधनाभिघातवासीक्षुरतक्षणक्षारतप्ततैलाभिषेचनायस्कुम्भपाकाम्बरीष[1]भर्जनयन्त्रपीडनायःशूलशलाकाभेदनक्रकचपाटनाङ्गारदहनवाहनसूचीशाड्वलापकर्षणैस्तथा सिंह-व्याघ्र-द्वीपि-श्व-शृगाल-वृक-कोक-मार्जार-नकुल-सर्प-वायस-गृध्र-काकोलूक-श्येनादिखादनैस्तथा तप्तवालुकावतर[3]णासिपत्रवनप्रवेशनवैतरण्यवतारणपरस्परयोधनादिभिरिति ॥

परमाधार्मिककृता वेदनाः

स्यादेतत् किमर्थमेवं ते कुर्वन्तीति ? । अत्रोच्यते—पापकर्माभिरतय इत्युक्तम् । तद्यथा—गो-वृषभ-महिष-वराह-मेष-कुक्कुट-वार्तकलावकान्मुष्टिमल्लांश्च युध्यमानान् परस्परं चाभिघ्नतः पश्यतां रागद्वेषाभिभूतानां अकुशलानुबन्धिपुण्यानां नराणां परा प्रीतिरुत्पद्यते तथा तेषामसुराणां नारकांस्तथा तानि कारयतामन्योन्यं घ्नतश्च पश्यतां परा प्रीतिरुत्पद्यते । ते हि दुष्टकन्दर्पास्तथाभूतान् दृष्ट्वाऽट्टहासं मुञ्चन्ति, चेलोत्क्षेपाक्ष्वेडितास्फोटितावल्गिततलताल[4]निपातांश्च कुर्वन्ति, महतश्च सिंहनादान् नदन्ति । तच्च तेषां सत्यपि देवत्वे सत्सु च कामिकेष्वन्येषु प्रीतिकारणेषु मायानिदानमिथ्यादर्शनशल्यतीव्रकषायोपहतस्यानालोचितभावदोषस्याप्रत्यवकर्षस्याकुशलानुबन्धिपुण्यकर्मणो बालतपसश्च भावदोषानुकर्षिणः फलं, यत्सत्स्वप्यन्येषु प्रीतिहेतुष्वशुभभावा एव प्रीतिहेतवः समुत्पद्यन्ते । इत्येवम[5]प्रीतिकरं निरन्तरं सुतीव्रं दुःखमनुभवतां मरणमपि काङ्क्षतां तेषां न विपत्तिरकाले विद्यते, कर्मनिर्धारितायुषाम् । उक्तं हि—'औपपातिकचरमदेहोत्तमपुरुषासंख्येयवर्षायुषोऽनपवर्त्यायुषः' (अ० २, सू० ५२) इति । नैव तत्र शरणं विद्यते, नाप्यपक्रमणम् । ततः कर्मवशादेव दग्धपाटितभिन्नच्छिन्नक्षतानि च तेषां सद्य एव संरोहन्ति शरी-

१ 'पायिनोनिष्ट' इति क-पाठः । २ 'तर्जन' इति घ-पाठः । ३ 'वतरासिपत्र' इति क-पाठः । ४ 'निप्रातनाश्च' इति ग-पाठः, 'निपातनांश्च' इति तु घ-पाठः । ५ 'मप्रतीकारम्' इति ग-टी-पाठः ।

**राणि दण्डराजिरिवाम्भसि ॥ एवमेतानि त्रिविधानि दुःखानि नरकेषु नारकाणां भवन्तीति ॥ ५ ॥**

टी०—**अम्बाम्बरीषे**त्यादि भाष्यम् । अम्बाः, अम्बरीषाः, श्यामाः, शबलाः, रुद्राः, उपरुद्राः, कालाः, महाकालाः, असयः, असिपत्रवनाभिधानाः, कुम्भीनामानः, वालुकाभिधानाः, वैतरणीसंज्ञाः, खरस्वराः, महाघोषाश्चेति एते **पञ्चदशासुरनि**काया[1]न्तःपातिनो देवविशेषा एव **परमाधार्मिका** उच्यन्ते । अधर्मचारिणः अधार्मिकाः । प्रकर्षपर्यन्तवर्तिनः अधार्मिकाः परमाधार्मिका इति । एते च भिन्नहेतुकदुःखोत्पादनादेवावाप्ततादृग्विधसंज्ञाः समवगन्तव्याः, शेषं भाष्यं सुज्ञानमेव प्रायः, **एवमेतानि त्रिविधानि दुःखानि नरकेषु नारकाणां भवन्ति,** परस्परोदीरणजनितानि क्षेत्रस्वभावोत्पन्नानि सङ्क्लिष्टासुरोदीरितानि वाऽऽचतुर्थ्याः, चतुर्थ्यादिषु परस्परोदीरितानि क्षेत्रानुभावजनितानि चेति द्विविधान्येवेति॥५॥

नारकाश्चानपवर्त्यायुष्ट्वादनुबद्धातिविषमदुःखानुमूलालीढमूर्तयो नाकाले मर्तुमिच्छन्तोऽपि हि म्रियन्ते, पूर्णे स्वायुषि पश्चादुद्वर्तिष्यन्ते, तत् पुनः स्वायुस्तेषां किमित्यत आह—

## सूत्रम्—तेष्वेक-त्रि-सप्त-दश-सप्तदश-द्वाविंशति-त्रयस्त्रिंशत्-सागरोपमाः सत्त्वानां परा स्थितिः ॥ ३–६ ॥

टी०—**'तासु नरका'** इत्येतान् नरकान् सूत्रत्रयान्तरितान् भाष्यकृदभिसम्बन्धयति॥

**भा०—तेषु नरकेषु नारकाणां पराः स्थितयो भवन्ति । तद्यथा—रत्नप्रभायामेकं सागरोपमम् । एवं त्रिसागरोपमा[2], सप्तसागरोपमा, दशसागरोपमा, सप्तदशसागरोपमा, द्वाविंशतिसागरोपमा, त्रयस्त्रिंशत्सागरोपमा इति ।** जघन्या तु पुरस्ताद् वक्ष्यते । **'नारकाणां च द्वितीयादिषु'** , **'दश वर्षसहस्राणि प्रथमायाम्'** (अ० ४, सू० ४३-४४) **इति ॥**

नारकाणां परा स्थितिः

टी०—तेषु-उक्तलक्षणेषु **नरकेषु** ये सत्त्वाः । सत्त्वशब्दः प्रेक्षापूर्वकारितयोपात्तः अनुकम्पाप्रदर्शनार्थम् । सत्त्वा वराका इति, क्लेशभुजो जनाः सत्त्वा इति लोकेऽनुकम्पाशब्देनोच्यन्ते । एताश्चोत्कृष्टाः **स्थितयो भवन्ति, रत्नप्रभायामेकं सागरोपमं** प्रकृष्टा स्थितिः सत्त्वानाम्, **एवं त्रिसागरोपमा** स्थितिर्द्वितीयस्यामित्यादि सुज्ञानम् । उपमानमुपमा-सादृश्यं सागरेणोपमाः सागरोपमाः, बहुत्वप्रतिपादनार्थं सागरग्रहणम्, एका(कं) सागरोपमा(मं) प्रमाणं यस्याः स्थितेःसैकसागरोपमा स्थितिरित्येवमन्यत्रापि योज्यम् । जघन्या स्थितिः पुरो वक्ष्यते लाघवमुपजीवताऽऽचार्येण चतुर्थेऽध्याये–**' नारकाणां च द्वितीयादिषु' 'दश वर्षसहस्राणि प्रथमायाम्** (सू० ४३-४४)**इति,** । रत्नप्रभायामवरतो दश वर्षसहस्राण्यायुषः स्थितिः, द्वितीयादिषु

१ 'निकायानामुपपातिनः' इति क–पाठः । २ ' ०पमाः ' इति क-ख-ग-पाठः ।

षट्स्वेक-त्रि-सप्त-दश-सप्तदश-द्वाविंशतिसागरोपमा जघन्या स्थितिर्भवति । इयं च स्थितिर्जघन्या उत्कृष्टा वा सामान्येनैकस्यां पृथिव्यामुक्ता न प्रथमप्रतरादिभेदेन, प्रतिप्रतरं स्थितिपरिज्ञानाय विशेषार्थिना नरकेन्द्रकाः समालोकनीया इति । अथैतासु सप्तसु पृथिवीषु किमविशेषेण सर्वे प्राणिनो नरकास्त्रववर्तिनः सर्वासूत्पद्यन्ते उत केचित् कस्याञ्चिदिति, तथा के वा कुतो भूमेरुद्वृत्ताः सन्तो भवन्ति, किं वा लभन्ते सम्यग्दर्शनादीनाम्? इत्यत आह—

नारकाणामागतिर्गतिश्च

भा०—तत्रास्त्रवेषु यथोक्तैर्नारकसंवर्तनीयैः कर्मभिरसंज्ञिनः प्रथमायामुत्पद्यन्ते । सरीसृपा द्वयोरादितः प्रथमद्वितीययोः । एवं पक्षिणस्तिसृषु । सिंहाः चतसृषु । उरगाः पञ्चसु । स्त्रियः षट्सु । मत्स्यमनुष्याः सप्तस्विति । न तु देवा नारका वा नरकेषूपपत्तिमाप्नुवन्ति । नहि तेषां बह्वारम्भपरिग्रहादयो नरकगतिनिर्वर्तका हेतवः सन्ति(अ०६,सू० १६)। नाप्युद्वर्त्य नारका देवेषूत्पद्यन्ते । न ह्येषां सरागसंयमादयो देवगतिनिर्वर्तका हेतवः सन्ति (अ०६,सू० २०)। उद्वृत्तास्तु तिर्यग्योनौ मनुष्येषु वा उत्पद्यन्ते । मनुष्यत्वं च प्राप्य केचित् तीर्थकरत्वमपि प्राप्नुयुरादितस्तिसृभ्यः, निर्वाणं चतसृभ्यः, संयमं पञ्चभ्यः, संयमासंयमं षड्भ्यः, सम्यग्दर्शनं सप्तभ्योऽपीति ।

टी०—तत्रास्त्रवेषु यथोक्तैर्नारकसंवर्तनीयैरित्यादि भाष्यं सुज्ञानम् ॥ अधस्तनीषु षट्स्वपि भूमिषु रत्नप्रभादिवत् किं द्वीपादिविनिवेशाः सन्ति? न सन्तीत्यत आह—

नारकेष्वसंभविनः पदार्थाः

भा०—द्वीप-समुद्र-पर्वत-नदी-ह्रद-तडाग-सरांसि वा ग्राम-नगर-पत्तनादयो विनिवेशा बादरो वनस्पतिकायो वृक्ष-तृण-गुल्मादिः द्वीन्द्रियादयस्तिर्यग्योनिजा मनुष्या देवाश्चतुर्निकाया अपि न सन्ति । अन्यत्र समुद्घातोपपातविक्रियासाङ्गतिकनरकपालेभ्यः । उपपाततस्तु देवा रत्नप्रभायामेव सन्ति । नान्यासु । गतिस्तृतीयां यावत् ।

टी०--द्वीपसमुद्रेत्यादि भाष्यं सुज्ञानं प्रायः । नैते द्वीपादयः सन्ति सन्निवेशा रत्नप्रभामपहायान्यत्रेति, एतस्य विधेरपवादः अन्यत्र समुद्घात इत्यादि । समुद्घातगताः केवलिनः, औपपातिका नारका एव, तथा वैक्रियलब्धिसम्पन्नाः, साङ्गतिकाः पूर्वजन्ममित्रादयः, नरकपालाः परमाधार्मिकाः, एते सर्वेऽपि द्वितीयादिषु भूमिषु कदाचित् केचित् कचित् संभवेयुरपीति, उपपातमङ्गीकृत्य रत्नप्रभायामेव देवाः सन्ति न शेषासु, गमनमङ्गीकृत्य यावत् तृतीयां ततः परं न गच्छन्त्येव, शक्तौ सत्यामपि लोकानुभावादेवेति । तथा अन्यमपि लोकानुभावमादर्शयति प्रसङ्गात्—

---

१ 'तत्रास्त्रवैः' इति घ-पाठः । २ 'उद्वर्तितास्तु' इति घ-पाठः ।

भा०—यच्च वायव आपो धारयन्ति न च विष्वग् गच्छन्ति आपश्च पृथिवीं धारयन्ति न च प्रस्पन्दन्ते। पृथिव्यश्चाप्सु विलयं न गच्छन्ति। तत् तस्यानादिपारिणामिकस्य नित्यसन्ततेर्लोकविनिवेशस्य लोकस्थितिरेव हेतुर्भवति।

लोकानुभावजाः पदार्थाः

टी०—यच्च वायव इत्यादि। तनुवातवलयमाकाशप्रतिष्ठमनालम्बनं घनवातवलयं बिभर्ति, घनमारुतवलयमप्यापो धत्ते, न च ता आपो विष्वग् गच्छन्ति, विशीर्यन्ते स्रवन्तीत्यर्थः आपश्च कठिनीभूताः सत्यः पृथिवीर्धारयन्ति न स्पन्दन्ते, ताश्च पृथिव्यो न तास्वप्सु विलीयन्ते, स एष सर्वोऽप्यनादिपारिणामिकः क्रमसन्निवेशो नित्यसन्ततिर्द्रव्यास्तिकनयावलम्बनात्। तथा चागमः—"इमा[1] णं भंते! रयणप्पभा पुढवी किं सासता असासता? गोयमा! सिय सासया सिय असासया, से केणट्ठेणं भंते! एवं वुच्चइ? गोयमा! दव्वट्ठयाए सासया, वणपज्जवेहिं गन्धपज्जवेहिं रसपज्जवेहिं फासपज्जवेहिं असासया, से एतेणं अट्ठेणं गोयमा! एवं वुच्चइ"। अस्यावस्थानस्य लोकानुभाव एव हेतुः-कारणं भवतीति।

भा०—अत्राह-उक्तं भवता-'लोकाकाशेऽवगाहः' (अ० ५, सू० १२), 'तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात्' (अ० १०, सू० ५) इति। तत्र लोकः कः कतिविधो वा किंसंस्थितो वेति?। अत्रोच्यते—पञ्चास्तिकायसमुदायो लोकः।

टी०—अत्राह-उक्तं भवतेत्यादिः सूत्रपातनिकाग्रन्थः। सूत्राण्यधिकृत्योच्यते, उक्तं भवता-'लोकाकाशेऽवगाहः' पञ्चमेऽध्याये (सू० १२), तथा दशमे ( सू० ५ ) 'तदनन्तरमूर्ध्वं गच्छत्यालोकान्तादिति," एवमनेकस्मिन् सूत्रे लोकशब्द उच्चरितः, तत्र को लोकः कतिविधो वा किंसंस्थितो वेति? उच्यते-पञ्चास्तिकायसमुदायो लोकः। धर्माधर्माकाशजीवपुद्गलाः पञ्चास्तिकायास्तत्समुदायो लोकः, आकाशमाधारो भवति, धर्मादयस्त्वाधेयाः, आधाराधेयभावेन यदवस्थानमनाद्यमेषां स लोकः, तथा चागमः— "किमिदं[2] भंते! लोगेत्ति पवुच्चति? गोयमा! जीवा चेव अजीवा चेव"।

भा०—ते चास्तिकायाः स्वतत्त्वतो विधानतो लक्षणतश्चोक्ता वक्ष्यन्ते च। स च लोकः क्षेत्रविभागेन त्रिविधः-अधस्तिर्यगूर्ध्वं[3] चेति। धर्माधर्मास्तिकायौ लोक[4]व्यवस्थाहेतू। तयोरवगाहनविशेषाल्लोकानुभावनियमात् सुप्रतिष्ठकवज्राकृतिर्लोकः। अधोलोको गोकन्धराधा[5]र्धाकृतिः॥

लोकस्य त्रैविध्यं

---

१ इयं भदन्त! रत्नप्रभा पृथ्वी किं शाश्वती अशाश्वती? गौतम! स्यात् शाश्वती स्यात् अशाश्वती। तत् केनार्थेन भदन्त! एवमुच्यते? गौतम! द्रव्यार्थतया शाश्वती, वर्णपर्यवैर्गन्धपर्यवै रसपर्यवैः स्पर्शपर्यवैरशाश्वती, तदेतार्थेन गौतम! एवमुच्यते।

२ किमयं भदन्त! लोक इति प्रोच्यते? गौतम! जीवाश्चैव अजीवाश्चैव।

३ '०गूर्ध्वश्चेति' इति घ-टी-पाठः। ४ 'लोकहेतू' इति क-ग-पाठः। ५ कन्धराकृतिः इति क-ख-पाठः। 'कन्धराधरार्धाकृतिः' इति तु ग-पाठः।

टी०--ते **चास्तिकाया** इत्यादि । अस्ति च ते कायाश्चास्तिकायाः, प्रवाहनित्यतामस्तिशब्दः प्रतिपादयति, न कूटस्थनित्यताम्, कायग्रहणं प्रदेशावयवबहुत्वार्थमिति पञ्चमे वक्ष्यते, **स्वतत्त्वतः**-स्वरूपतः-औपशमिकादिभावतः स्वतत्त्वो जीवः । **विधानतः**-संसारिमुक्तादिभेदतः, **लक्षणतः**-उपयोगो लक्षणमित्येवं जीवास्तिकायोऽभिहितः, शेषाश्च क्वचित् प्रसङ्गेनेत्यत उक्ताः, पञ्चमे पुनः प्रतिपदमेव वक्ष्यन्ते धर्मास्तिकायादयः स्वतत्त्वविधानलक्षणैरिति ॥ **स चैवंविधलक्षणः लोकः क्षेत्रविभागेन त्रिविधः अधस्तिर्यगूर्ध्वं चेति** । क्षेत्रविभागो विशिष्टमर्यादाव्यवच्छिन्नः, तद्यथा-समतलाद् भूभागादधोऽवगाह्य नव योजनशतानि रत्नप्रभाव्यवस्थितोपरितनाधस्तनक्षुल्लकप्रतरारब्धः सप्तमधरायाः परतो यावत् षोडश योजनानि तावदधोलोकः, तिर्यग्लोकस्तु तेभ्य एव क्षुल्लकप्रतरेभ्य आरब्धोऽष्टादशयोजनशतान्यूर्ध्वमारुह्य यावज्ज्योतिर्लोकोपरितनतलस्तावद् भवति, ज्योतिर्लोकोपरितनतलारब्धो यावदूर्ध्वं सिद्धक्षेत्रा[1]दुपरि योजनमेकं तावदूर्ध्वलोक इति ॥ अधुना लोकसंस्थानव्याख्यानायाह-**धर्माधर्मास्तिकायावि**त्यादि । धर्माधर्मद्रव्ये हि वक्ष्यमाणे समन्ततो लोकसन्निवेशमर्यादाव्यवस्थायाः कारणभूते, यावत्याकाशेऽवगाढे यथावस्थिते त[2]था तदवगाहनवशाल्लोकसन्निवेशः । न[3]नु क्वचित् पृथुनी क्वचित् तनुके क्वचित् प्रदेशवृद्धिपरिहाणियायिनी के[4]न सन्निवेशं ग्राहिते इत्याह-**लोकानुभावनियमात्** । लोकानुभावो हि महानुभावश्चित्रानेकशक्तिगर्भोऽनादिपारिणामिकस्वभावविशेषस्तत्कृतादेव नियमात् तथासंस्थाने ते द्रव्ये नेश्वरादीच्छाविरचिते, इत्येवं धर्माधर्मद्वयव्यवस्थानकृतो लोकसन्निवेशः । स च सुप्रतिष्ठकवज्राकृतिः सुप्रतिष्ठकवज्रयोरिव संस्थानं-आकृतिर्यस्यासौ **सुप्रतिष्ठकवज्राकृतिर्लोकः**, सुप्रतिष्ठकः-शरयन्त्रकं यत्र व्यवस्थाप्य वासांसि धूप्यन्ते, तत् किल बहनुहरति लोकसन्निवेशस्य, वज्रमपि शक्रायुधं तदपि बहुसदृशमाचक्षते प्रवचनविदः, लोकसंस्थानस्य स्फुटतरः सन्निवेशोऽमुनैव सूरिणा प्रकरणान्तरे (**प्रशम**० गा० २१०-२११ ) अभिहितस्तद्यथा—

" जीवाजीवौ द्रव्यमिति षड्विधं भवति लोकपुरुषोऽयम् ।
वैशाखस्थानस्थः पुरुष इव कटिस्थकरयुग्मः ॥-आर्या
तत्राधोमुखमल्लकसंस्थानं वर्णयन्त्यधोलोकम् ।
स्थालमिव तिर्यग्लोकमूर्ध्वमथ मल्लकसमुद्गम् ॥ " ॥

एवं समुदायसन्निवेशमाख्यायाधुना प्रत्येकमधोविभागादिसन्निवेशाभिधित्सया आह-
**अधोलोको गोकन्धरार्धाकृतिः** । **गोग्रीवायास्त्वधरमर्धमुपरिष्टात् सङ्क्षिप्तमधस्तात् क्रमवृद्ध्या विशालं विशालतरं च भवति तद्वद्धोलोकसन्निवेशः** , उपरि तनुकोऽधस्तु **विशालो विशालतरश्चेति** । **एतदर्थसमर्थनायाह**-

---

१ ' सिद्धिक्षेत्रात् ' इति **क-ख**-पाठः । २ ' तदा ' इति **ग**-पाठः । ३ ' ते तु ' इति **ग**-पाठः । ४ ' केन तथा ' इति **ग**-पाठः ।

भा०—उक्तं ह्येतद् । भूमयः सप्ताधोऽधः पृथुतराश्छत्रातिच्छत्रसंस्थिताः' (अ० ३, सू० १) इति ता यथोक्ताः । तिर्यग्लोको झल्लर्याकृतिः । ऊर्ध्वलोको मृदङ्गाकृतिरिति । तत्र तिर्यग्लोकप्रसिद्ध्यर्थमिदमाकृतिमात्रमुच्यते ॥ ६ ॥

तिर्यग्लोक-प्रस्तावना

टी०—उक्तं ह्येतदित्यादिना । यथोक्तं यथासन्निवेशं यथाप्रमाणं चाधोलोक इति । झल्लर्याकृतिस्तिर्यग्लोकः । झल्लरी सर्वत्र समतला तुल्यविष्कम्भायामा वादित्रविशेषस्तद्वत् तिर्यग्लोकसन्निवेशः, स च विष्कम्भायामाभ्यां रज्जुप्रमाणो जम्बूद्वीपमेरुरुचकमध्य इति । मृदङ्गाकृतिरूर्ध्वलोक इति ॥ मृदङ्गो—वादित्रविशेष उपरिष्टादधश्च संक्षिप्तो मध्ये पृथुस्तद्वदूर्ध्वलोकः, ऊर्ध्वाधः किञ्चिदूनसप्तरज्जुको ब्रह्मलोकाऽधोव्यवस्थितकृष्णराजिमध्यगलोकान्तिकदेवनिवासरिष्ठविमानप्रस्तारमध्यस्तिर्यक्पञ्चरज्जुप्रमाणो ब्रह्मलोकप्रदेशेऽन्यत्र [1]प्रदेशहान्या अनियतप्रमाण इति । तत्र च त्रितयेऽधोलोकः प्रागाख्यातः,अधुना तिर्यग्लोकप्रसिद्ध्यर्थमिदमाकृतिमात्रमुच्यते, एवंविधस्तिर्यग्लोक इत्यस्यार्थस्य प्रतीतये सर्वमिदं आ अध्यायपरिसमाप्तेः प्रतायते, संस्थानमात्रं , मात्रशब्दः संक्षेपाभिधानार्थः केनचिल्लेशोद्देशेन न पुनर्विस्तरेणेति, विस्तरतस्तु द्वीपसागरप्रज्ञप्त्यादिभ्योऽधिगन्तव्य इत्यावेदयति ॥ ६ ॥

सूत्रम्—जम्बूद्वीपलवणादयः शुभनामानो द्वीपसमुद्राः ॥ ३–७ ॥

द्वीपसमुद्र-व्यवस्था

भा०—जम्बूद्वीपादयो द्वीपा लवणादयश्च समुद्राः । शुभनामान इति । यावन्ति लोके शुभानि नामानि तन्नामान इत्यर्थः । शुभान्येव वा नामान्येषामिति ते शुभनामानः । द्वीपादनन्तरः समुद्रः । समुद्रादनन्तरो द्वीपः ॥

टी०—जम्बूद्वीपादयो द्वीपा इत्यादि भाष्यम् । जम्बूद्वीप इति संज्ञासंज्ञिसम्बन्धोऽत्रानादिः, पुरुषप्रवाहानादित्वात्, जम्बूतरोश्च सर्वदा सत्त्वात् लोकसन्निवेशस्य च न कदाचिदनीदृशत्वात्, स च शब्दार्थसम्बन्धः पुरुषान्तरव्यवस्थाप्योऽनादिप्रवाहरूपोऽपि व्यवहारक्षमतया सन्नियुज्यत इति । जम्बूद्वीपादयो द्वीपाः लवणादयः समुद्रा इत्यादिशब्दस्य प्रत्येकमभिसम्बन्धमापादयति । शुभनामान इत्यनेन विशिष्टामेव संज्ञां द्वीपसमुद्राणां प्रतिपादयति, शुभानि च तानि नामानि चेति शुभनामानि प्रशस्ताभिधानानीत्यर्थः । शुभनामानि येषां ते शुभनामानः, एतदेव स्पष्टयति—यावन्ति लोके शुभानि नामानि तन्नामान इत्यर्थः । कियन्ति पुनस्तानि ? असङ्ख्येयानि लोके शुभनामानीति । तच्चासङ्ख्येयकं विशिष्टमेव परिगृह्यते, तद्यथा—असङ्ख्येयखण्डवालाग्रभूतासङ्ख्येयवर्षकोट्युद्धारकालसूक्ष्मपल्योपमप्रपञ्चनिष्पन्नार्धतृतीयसागरोपमोद्धारसमयराशिप्रमाणतुल्या द्वीपसमुद्राः । शुभान्येव वा नामान्येषामिति एतावदविगानेनावधार्यते, शुभानि हि सर्वेषां द्वीपसमुद्राणां

१ 'ब्रह्महान्या' इति ख-पाठः ।

नामानि, नाशुभान्यपीति, अस्मिन् पक्षे सङ्ख्योन्नेया। द्वीपादनन्तरः समुद्रः समुद्राद्-नन्तरो द्वीपः इत्यनेनैतत् कथयति–नासङ्ख्येयसकलद्वीपपरिसमाप्तौ जातायां पश्चाल्लव-णादयः समुद्राः, किन्तु प्राक् तावद् द्वीपः पश्चात् समुद्रोऽनन्तरः पुनर्द्वीपः पुनः समुद्र इत्येवमा-स्वयम्भूरमणसमुद्रादिति ॥ एतदेव विवृणोति यथासङ्ख्यमित्यादिना भाष्येण—

द्वीपसमुद्र-नामानि

**भा०—यथासङ्ख्यम्। तद्यथा—जम्बूद्वीपो द्वीपः। लवणोदः समुद्रः। धातकीखण्डो द्वीपः। कालोदः समुद्रः। पुष्करवरो द्वीपः। पुष्करोदः समुद्रः। वरुणवरो द्वीपः। वरुणोदः समुद्रः। क्षीरवरो द्वीपः। क्षीरोद[1]ः समुद्रः। घृतवरो द्वीपः। घृतोदः समुद्रः। इक्षुवरो द्वीपः। इक्षुवरोदः समुद्रः। नन्दीश्वरो द्वीपः। नन्दीश्वरोद[2]ः समुद्रः। अरुणवरो द्वीपः। अरुणवरोदः समुद्रः। इत्येवमसङ्ख्येया द्वीपसमुद्राः स्वयम्भूरमणपर्यन्ता वेदितव्या इति ॥ ७ ॥**

टी०—लवणोद इति, "संज्ञायामुत्तरपदस्य" (परिभाषे) इति वचनादुदभावः, शेषं सुज्ञानम्। पर्यन्ते उपसंहरति, न खलु शक्यन्ते नामग्राहमाख्यातुमसङ्ख्येयत्वादत एवंप्रकारा द्वीपाः समुद्राश्चासंख्येयाः **स्वयम्भूरमणसमुद्रपर्यन्ता वेदितव्याः**। सर्वं चैतज्जम्बूद्वीपादिसमुद्रद्वीपवलयजालमस्यामेव रत्नप्रभापृथिव्यामवस्थितमवसेयम्, एतावांश्च तिर्यग्लोकः न ततः परम्, अधोलोकादिविभागतश्चेह लोकोऽपदिश्यते साकल्येन सर्वज्ञ-ज्ञानविषयत्वात्। सर्वं हि ज्ञेयं ज्ञातव्यं सर्वज्ञेनोपदेष्टव्यं च चरित्रोपयोगि श्रद्धानलक्षणसम्य-ग्दर्शनविषयतया च निरवशेषं मुक्तिमार्गाङ्गतया, तथातिशयज्ञानविभूतिलाञ्छितत्वाच्च स-र्वातीन्द्रियाणां पदार्थानां सुप्रत्ययितपुरुषप्रत्यक्षेक्षितजनपदव्यवहारप्रतिपत्तिवत् सर्वं सुश्रद्धान-मित्यवेत्य मुक्तसंशयं प्रतिपत्तव्यम्, ज्योतिषनिमित्तगणितशास्त्राणां सर्वज्ञलाञ्छनत्वात् ध्यान-प्रक्रियायां च लोकसन्निवेशविशेषजीवोत्पादादिचिन्तनमुपदिष्टमतो यदभिदधते बालिशाः कुतर्कपटप्रसारणपटवो बटवः, क्लेशादिप्रहाणोपायोपदेशबहिर्भूतो द्वीपसमुद्रादिसन्निवेशोपदेशो मुमुक्षोरनुपदेशा(श्यः अ)युज्यमानत्वात्, तदपास्तमवसातव्यमिति ॥ ७ ॥

एते चानन्तरसूत्रनिर्दिष्टा द्वीपाः समुद्राश्च सर्वेऽपि—

## सूत्रम्—द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥ ३–८ ॥

द्वीपसमुद्रसंस्थानम्

**भा०—सर्वे चैते द्वीपसमुद्रा यथाक्रममादितो द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः प्रत्येतव्याः। तद्यथा—**

टी०—**सर्वे चैत** इत्यादि भाष्यम्। जम्बूद्वीपादयो द्वीपाः स्वयम्भूरमणसमुद्रप-र्यन्ता येन क्रमेण व्यवस्थिता निर्दिष्टा वा तेन क्रमेण, आदितः प्रभृति लवणसमुद्रप्रभृति, द्विगुणविष्कम्भा भवन्ति। विष्कम्भो-व्यासो-विस्तारः तत्क्रमानुसारितयैव पूर्वपूर्वपरिक्षे-

१ 'क्षीरवरोदः' इति घ-टी-पाठः। २ 'नन्दीश्वरवरोदः' इति घ-पाठः।

पिणो वलयाकृतयश्च प्रत्येतव्याः ॥ ननु चानिर्ज्ञातमेवेदं द्विर्द्विर्विष्कम्भा इति, सति मौलविष्कम्भे निर्ज्ञातस्वरूपे युज्यत एतच्छेषाणां, द्विगुण इत्यत्र तु स एव न निरूपित इत्यत्राशङ्कमान आह—

भा०—योजनशतसहस्रं विष्कम्भो जम्बूद्वीपस्य वक्ष्यते (सू०९)।तद्द्विगुणो लवणजलसमुद्रस्य, लवणजलसमुद्रविष्कम्भाद् द्विगुणो धातकीखण्डद्वीपस्य,इत्येवमास्वयम्भूरमणसमुद्रादिति ॥ पूर्वपूर्वपरिक्षेपिणः। सर्वे पूर्वपूर्वपरिक्षेपिणः प्रत्येतव्याः। जम्बूद्वीपो लवणसमुद्रेण परिक्षिप्तः। लवणजलसमुद्रो धातकीखण्डद्वीपेन परिक्षिप्तः। धातकीखण्डद्वीपः कालोदसमुद्रेण परिक्षिप्तः। कालोदसमुद्रः पुष्करवरद्वीपार्धेन परिक्षिप्तः। पुष्करवरद्वीपार्धं मानुषोत्तरेण पर्वतेन परिक्षिप्तम्। पुष्करवरद्वीपः पुष्करवरोदेन समुद्रेण परिक्षिप्तः। एवमास्वयम्भूरमणात् समुद्रादिति ॥ वलयाकृतयः। सर्वे च ते वलयाकृतयः सह मानुषोत्तरेणेति ॥ ८ ॥

टी०—योजनशतसहस्रं जम्बूद्वीपविष्कम्भो वक्ष्यते अनन्तरागामिनि सूत्रे। शेषेषु लवणजलादिषु द्विगुणद्विगुण इति पूर्वं पूर्वं उत्तरेणोत्तरेण परिक्षिप्तो—वेष्टितस्तच्छीलेनेति, एतच्चानिष्टविनिवेशव्यावृत्त्यर्थं वचनम्, तिर्यगेवं व्यवस्थिता इत्यर्थः। वलयस्येवाकृतिः-संस्थानं येषां लवणजलादीनां ते वलयाकृतयः, चतुरस्रादिनिवृत्त्यर्थं चेदमवगतव्यम्, शेषं सुज्ञानमेव भाष्यमित्यतो न विव्रियत इति ॥ ८ ॥

वलयाकृतयो द्वीपा इत्यनन्तरसूत्रेऽभिहितम्, अतो जम्बूद्वीपस्यापि द्वीपत्वाद् वलयाकृतिप्रसक्तिस्तदपवादायेदमुच्यते—

## सूत्रम्—तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कम्भो जम्बूद्वीपः ॥ ३–९ ॥

टी०—जम्बूतरुप्रधानत्वाज्जम्बूद्वीपः।

भा०—तेषां द्वीपसमुद्राणां मध्ये तन्मध्ये। मेरुनाभिः, मेरुरस्य नाभ्यामिति मेरुर्वाऽस्य नाभिरिति मेरुनाभिः। मेरुरस्य मध्ये इत्यर्थः। सर्वद्वीपसमुद्राभ्यन्तरो वृत्तः कुलालचक्राकृतिर्योजनशतसहस्रविष्कम्भो जम्बूद्वीपः, वृत्तग्रहणं नियमार्थम्।

जम्बूद्वीपस्वरूपम्

टी०—तेषामित्यादि भाष्यम्। अनेन विशिष्टसमासप्रतिपत्तिं दर्शयति। तेषामसङ्ख्येयानामुक्तलक्षणानां द्वीपसमुद्राणां मध्ये तन्मध्ये इति, मध्यमत्र नैश्चयिकं, न व्यावहारिकमिति। अन्येऽपि जम्बूद्वीपाः सन्त्यतो विशेषणमाह–मेरुनाभिरिति। नाभिरिव नाभिः,

---

१ योजन = ४००० क्रोशाः। २ 'पुष्करद्वीपार्धं' इति घ-पाठः।

यथा शरीरमध्ये नाभिरवयवोऽङ्गिनां भवत्येवमसौ मेरुर्जम्बूद्वीपस्य मध्ये व्यवस्थित इति मेरु-नाभिरुच्यते। कण्ठेकालवद् गमकत्वात् समासः । व्यधिकरणबहुव्रीहिभीत्या वाक्यान्तरेणाह-मेरुर्वाऽस्य नाभिरिति मेरुनाभिः, नाभिशब्दो मध्यवचन इति दर्शयति, मेरुरस्य मध्ये इत्यर्थः । वृत्त इत्यनेन प्रतरवृत्ताख्यानं करोति, तत्प्रदर्शनार्थं च कुलालचक्राकृतिरित्याह ।

भा०—लवणादयो वलयवृत्ताः, जम्बूद्वीपस्तु प्रतरवृत्त इति यथा गम्येत, वलयाकृतिभिश्चतुरस्रत्र्यस्रयोरपि परिक्षेपो विद्यते तथा च मा भूदिति ॥ मेरुरपि काञ्चनस्थालनाभिरिव वृत्तो योजन-सहस्रमधो धरणितलमवगाढः नवनवत्युच्छ्रितः दशाधो विस्तृतः सहस्रमुप-रीति । त्रिकाण्डस्त्रिलोकप्रविभक्तमूर्तिश्चतुर्भिर्वनैर्भद्रशाल नन्दन सौमनस-पाण्डुकैः परिवृतः । तत्र शुद्धपृथिव्युपलवज्रशर्कराबहुलं योजनसहस्रमेकं प्रथमं काण्डम् । द्वितीयं त्रिषष्टिसहस्राणि रजतजातरूपाङ्कस्फटिकबहुलम् । तृतीयं षट्त्रिंशत् सहस्राणि जाम्बूनदबहुलम् । वैडूर्यबहुलाऽस्य चूलिका चत्वारिंशद् योजनान्युच्छ्रायेण मूले द्वादश विष्कम्भेण मध्येऽष्टावुपरि चत्वारीति । मूले वल-यपरिक्षेपि भद्रशालवनम् । भद्रशालवनात् पञ्च योजनशतान्यारुह्य तावत्प्रति-क्रान्तिविस्तृतं नन्दनम् । ततोऽर्धत्रिषष्टिसहस्राण्यारुह्य पञ्चयोजनशतप्रतिक्रा-न्तिविस्तृतमेव सौमनसम् । ततोऽपि षट्त्रिंशत् सहस्राण्यारुह्य चतुर्नवतिचतुः-शतप्रतिक्रान्तिविस्तृतं पाण्डुकवनमिति । नन्दनसौमनसाभ्यामेकादशैकादश सहस्राण्यारुह्य प्रदेशपरिहाणिर्विष्कम्भस्येति ॥ ९ ॥

मेरुस्वरूपम्

टी०—लवणादयो वलयवृत्ताः । अयं पुनः कुलालचक्रवत् प्रतरवृत्त इति नियम आपा-द्यते, योजनेयत्ताभिधानं तच्छेषविष्कम्भप्रसिद्ध्यर्थम्, न वलयाकृतिना लवणजलधिना परिक्षिप्त इति वृत्तताऽवगम्यते यस्माद् वलयाकृतिभिश्चतुरस्रत्र्यस्रयोरपि परिक्षेपो विद्यत इति प्रेक्षापूर्वकारितया च मेरुर्विशेषणतयोपात्तस्तत्स्वरूपमप्याख्यास्यामीत्यत आह-मेरुरपि काञ्चनस्थालनाभिरिव वृत्तः, काञ्चनस्थालं-काञ्चनपात्री तन्मध्ये नाभिस्तद्वद् वृत्तः, अधस्ताद् योजनसहस्रं प्रविष्टः नवनवतिसहस्राणि दृश्योच्छ्रायः, यददृश्यं सहस्रं भूमौ तत् सर्वत्र विष्कम्भायामाभ्यां दश सहस्राणि, उपरि सहस्रं यत्र चूलिकोद्गमः । काण्डं विशि-ष्टप्रमाणानुगतो विच्छेदः । त्रिकाण्डः त्रिलोकस्पृक् चतुर्भिर्वनैर्भद्रशालाभिर्वेष्टितः । तत्र च यद् भूमाववगाढं पृथिव्यादिविशेषणं योजनसहस्रप्रमाणं तदेकं काण्डम्, भूपरितलारब्धं द्वितीयं त्रिषष्टियोजनसहस्राणि रजतादिविशेषणं, तृतीयं तदुपरि षट्त्रिंशत् सहस्राणि जम्बूनदबहुलं, ततस्तदुपरि वैडूर्यबहुला चूलिकाऽस्य चत्वारिंशद्यो-जनोच्चा, उद्गमप्रदेशे विष्कम्भायामाभ्यां द्वादश योजनानि, मध्येऽष्टौ उपरि चत्वारि । भूमौ व्यवस्थितं भद्रशालवनं वलयाकृति, भद्रशालवनभूमेः पञ्च योजनशतान्यारुह्योपरि

प्रथममेखलायां तावत्प्रतिक्रान्तिविस्तृतं तावती चासौ प्रतिक्रान्तिश्च तावत्प्रतिक्रान्तिः, विस्तारः पञ्चयोजनशतप्रमाण एव, तावत्प्रतिक्रान्त्या विस्तृतमेवंप्रकारेण विस्तीर्णमित्यर्थः। तच्च द्वितीयं वनं नन्दनं नाम । **ततोऽर्धत्रिषष्टीत्यादि** । त्रिषष्टिसहस्रसङ्ख्यापूरणस्य योजनसहस्रार्धेन युक्ता सङ्ख्यार्धत्रिषष्टिरुच्यते। अत्र पञ्च योजनशतानि द्वितीयकाण्डप्रमाणादाक्षिप्तानि नन्दनवनेनेत्यतोऽर्धत्रिषष्टिसहस्राण्यारुह्योपरि पञ्चयोजनशतविस्तीर्णमेव द्वितीयमेखलायां **सौमनसं वनं** तृतीयं भवति । **ततोऽप्युपरि षट्त्रिंशत् सहस्राण्यारुह्य** चतुर्नवत्युत्तरैश्चतुर्भिर्योजनशतैर्विस्तीर्णं **पाण्डुकं** नाम वनं मेरोः शिरसि तुर्यमवसेयम्। अयं च मेरुगिरिर्न सर्वत्र समप्रमाणप्रवृद्धः, किन्तु प्रदेशपरिहाण्या परिहीयमानः प्रवृद्ध इति। तद् दर्शयति—**नन्दनसौमनसाभ्यामित्यादि** । नन्दनादूर्ध्वं सौमनसाच्चाधः किल मध्य **एकादशैकादश योजनसहस्राण्यारुह्य** योजनसहस्रं परिहीयते **विष्कम्भस्येति**, ऊर्ध्वं सौमनसान्नन्दनवनाच्चाधो[1] न सूरिणा परिहाणिरुक्ता। प्रदेशपरिहाणिग्रहणमङ्गुलादिप्र(सिद्ध्यर्थमङ्गुलादि)ष्वप्ययमेव परिहाणिविधिरिति। एषा च परिहाणिराचार्योक्ता न मनागपि गणितप्रक्रियया[2] सङ्गच्छते, यतः सौमनसवनेऽन्तर्विष्कम्भः सहस्रत्रयं[3] शतद्वयं द्विसप्तत्यधिकमष्टौ चैकादशभागाः, बहिर्विष्कम्भः पुनः सहस्रचतुष्टयं[4] शतद्वयं च द्विसप्तत्यधिकमष्टौ चैकादशभागा योजनस्य। तत्राचार्योक्तपरिहाण्या नैकोऽपि विष्कम्भ आगच्छति, न चैतावत्या चा ( सत्यावा ) गमेऽधीतत्वाच्छृङ्गग्राहिकयेति । गणितशास्त्रविदो हि परिहाणिमन्यथा वर्णयन्त्यार्षानुसारिणः । मेरोर्योजनान्यूर्ध्वमेका लक्षा, तत्राधो भूमावदृश्यं योजनसहस्रमपचयरहितं, सर्वत्र च वृत्तविष्कम्भो योजनसहस्राणि दश, यद् दृश्यं तत्र परिहाणिः, भद्रशालवनादूर्ध्वं पञ्च योजनशतान्यारुह्य सर्वतश्च पञ्चयोजनशतान्यन्तः प्रविश्य नन्दनवनं भवति। तत्र वने मेरोरन्तर्बहिर्वा कीदृग् विष्कम्भ इति, तत्रेदं कर्म त्रैराशिकभङ्ग्या—यदि योजनमेकमारुह्योपरि वृत्तक्षेत्रेऽपचयः सर्वत्रैकादशभागो योजनस्य ततः पञ्च योजनशतान्यारुह्य कोऽपचयः स्यात्? लब्धं[5] पञ्चचत्वारिंशद् योजनानि पञ्च चैकादशभागा योजनस्य, एतदधस्तनवृत्तदशसहस्रविष्कम्भादपास्य शेषमुपरि विष्कम्भो नन्दनवने बहिर्लभ्यत इति, स चायम्—नव[6] सहस्राणि नव शतानि चतुःपञ्चाशदधिकानि षट् चैकादशभागाः योजनस्य । अस्माच्च बहिर्विष्कम्भात् सर्वतो नन्दनवनचक्रवालविष्कम्भं पञ्चशतिकं द्विगुणमपास्यान्तर्विष्कम्भोऽयं नन्दनवन एव भवति—अष्टौ[7] सहस्राणि नव शतानि चतुःपञ्चाशदधिकानि षट् चैकादशभागाः। इदानीं नन्दनवनादुपरि योजनसहस्राण्यर्धत्रिषष्टिरा(मा)रुह्य को मेरुविष्कम्भो बहिर्भवति? अत्रापि तदेव कर्म, यदि योजनमारुह्य वृत्तविष्कम्भे सर्वतोऽपचयो योजनस्यैकादशभागस्तत आरुह्यार्धत्रिषष्टिः(ष्टिं)योजनसहस्राणि कोऽपचयो भवेदिति? लब्धं[8] पञ्च सहस्राणि षट् शतान्येकाशीत्यधि-

१ 'च्चाधोधो न' इति क-पाठः। २ 'प्रत्ययया' इति क-पाठः। ३ ३२७२ $\frac{८}{११}$। ४ ४२७२ $\frac{८}{११}$। ५ ४५ $\frac{५}{११}$। ६ ९९५४ $\frac{६}{११}$। ७ ८९५४ $\frac{६}{११}$। ८ ५६८१ $\frac{१}{११}$।

कानि नव चैकादशभागा योजनस्य । एतन्नन्दनवनान्तर्विष्कम्भादपास्य शेषमुपरि सौमनसेऽन्तर्विष्कम्भो लभ्यते । स चायम्–त्रीणि सहस्राणि शतद्वयं च द्विसप्तत्यधिकमष्टौ चैकादशभागा योजनस्येति। अस्मिन्नेव सौमनसान्तर्विष्कम्भे सौमनसवनचक्रवालविष्कम्भं पञ्च-[विं]शतिकं द्विगुणं निधाय बहिर्विष्कम्भो लभ्यते, स चायम्–चत्वारि सहस्राणि द्वे शते द्व्युत्तरसप्तत्यधिके अष्टौ चैकादशभागा इति । इदानीं सौमनसवनादारुह्योपरि षट्त्रिंशद्योजनसहस्राणि पाण्डकवनं भवति। तस्य च विष्कम्भो योजनसहस्रम्, सौमनसवनाद् योजनमारुह्य कोऽपचयो भवतीति नाभिहितः । स चायमपचयो गणितधर्मेण भवति–यदि योजनमेकमारुह्य योजनस्य षण्णवतित्रिशतभागाः पञ्चविंशतिक्षयः (?)सर्वतस्ततः षट्त्रिंशद् योजनसहस्राण्यारुह्य कोऽपचयो भवेदिति? लब्धं सहस्रत्रयं शतद्वयं च द्व्युत्तरसप्तत्यधिकं योजनैकादशभागाश्चाष्टौ । एतत् सौमनसवनाभ्यन्तरविष्कम्भादपास्यं स्यात्, शेषमुपरि पाण्डुकवनस्य वृत्तविष्कम्भो योजनसहस्रमिति ॥ ९ ॥

स एवंविधो जम्बूद्वीपः सप्तक्षेत्रात्मको बोद्धव्यः । तानि चामूनि—

## सूत्रम्—तत्र भरत-हैमवत-हरि-विदेह-रम्यक-हैरण्यवतैरावतवर्षाः क्षेत्राणि ॥ ३–१० ॥

भरतादिक्षेत्रस्वरूपम्

भा०—तत्र जम्बूद्वीपे भरतहैमवतहरयो विदेहाः रम्यकहैरण्यवतमैरावतमिति वंशाः क्षेत्राणि भवन्ति। भरतस्योत्तरतः हैमवतम् । हैमवतस्योत्तरतः हरयः । इत्येवं शेषाः। वंशा वर्षा वास्या इति चैषां गुणतः पर्यायनामानि भवन्ति ।

टी०—तत्र जम्बूद्वीप इत्यादि भाष्यम् । तत्रोक्तलक्षणे, जम्बूद्वीप इत्यनेनैतद् दर्शयति न द्वीपान्तराण्येतानि भरतादीनि, किन्तु जम्बूद्वीपस्यैवैकस्य विशिष्टावधिका विभागा इति, जगतः स्थितेरनादित्वात् संज्ञामात्रम् भरतदेवनिवाससम्बन्धाद् वा भरतं भारतं वा, हिमवतोऽदूरभवत्वाद् हैमवतम्, हरयो विदेहाश्च पञ्चालतुल्याः, रम्यकमिति संज्ञायां कन्, हैरण्यवत हैरण्यवतदेवनिवाससम्बन्धात्, तथैरावतमपीति। एवमेते सप्त वंशा वर्षाः क्षेत्राणीत्यनर्थान्तरत्वं दर्शयति ॥ अधुना विशिष्टक्रमसन्निवेशप्रदर्शनाभिधित्सया आह—भरतस्योत्तरतो हैमवतमित्यादि गतार्थं प्रायः । वंशादीनि गुणतः पर्यायनामानि भवन्तीति । वंशाः किल पर्ववन्तो भवन्ति तद्वत् पर्वभागविभजनाद् वंशा एवामी भरतादयः, वर्षसन्निधानाच्च वर्षाः, मनुजादिनिवासाच्च वास्याः ।

---

१ ३२७२$\frac{८}{११}$। २ ४२७२$\frac{८}{११}$। ३ ३२७२$\frac{८}{११}$। ४ 'भरतं हैमवतं हरयो' इति घ-पाठः ।

**भा०—सर्वेषां चैषां व्यवहारनयापेक्षादादित्यकृताद् दिग्नियमादुत्तरतो मेरुर्भवति ।**

**टी०—सर्वेषामित्यादि** भाष्यम् । सर्वक्षेत्राणां चैषां भरतादीनामैरावतपर्यन्तानां व्यवहारनयापेक्षादादित्यकृताद् दिग्नियमादुत्तरतो मेरुर्भवति । व्यवहारो हि सङ्गृहीतानां पदार्थानां विधिपूर्वकमवहरणं, लोकप्रसिद्धव्यवहारतत्परत्वात्, न खलु निश्चयमवलम्बते, सर्वव्यवहारोच्छेदप्रसङ्गात् । तथा चाह—"असत्योपाधि यत् सत्यं, तद्वच्छब्दनिबन्धनम्" इति, शुक्ला बलाका कृष्णो भ्रमर इत्येवमादिप्रसिद्धिवशव्यवस्थितमेव वस्तु प्रतिजानीतेऽस्तीति ॥ तमेवंविधव्यवहारनयमपेक्षते यो दिग्नियमः सवितृगतिजनितस्तस्माद् दिग्नियमात् सर्वेषामुत्तरतो मेरुर्दक्षिणतश्च लवणजलनिधिरिति । न पुनर्नैश्चयिकदिग्व्यवस्थासमासादनेनेदमुच्यते, किन्तु यस्मिन् क्षेत्रे यत्रादित्य उदेति सा दिक् प्राची, यस्यामस्तमेति साऽऽशा प्रतीची, कर्कटकादिराशीन् धनुर्धरान्तान् यत्र व्यवस्थितश्चरति क्रमेण सा दक्षिणा, तथा मकरादीन् मिथुनान्तान् यत्र स्थितश्चरति सोत्तरा दिगिति, तथाऽन्तरालदिशि(शः) एतत्संयोगाद् वाच्याः । तथोर्ध्वमधश्च । सवित्रपेक्षैव दिग् व्यवह्रियत इति व्यावहारिकी सर्वेषां दिग् भवति । कथं पुनर्व्यवहारमात्रमेवेदं निरपेक्षमिति ? । उच्यते यतोऽस्माकं यत्रादित्य उदेति सा प्राची, सैव च पूर्वविदेहकानां प्रतीची, तत्रादित्यस्यास्तमितत्वाद्, विप्रतिषिद्धं चेदम्, एवमन्यास्वपि योज्यम्, तस्माद् व्यवहारमात्रमिदं, न निश्चय इति । अथ नैश्चयिकी दिक् कथं प्रतिपत्तव्येत्यत आह—

नैश्चयिकदिगपेक्षया व्यवस्था

**भा०—लोकमध्यावस्थितं त्वष्टप्रदेशं रुचकं दिग्नियमहेतुं प्रतीत्य यथासम्भवं भवतीति ॥ १० ॥**

**टी०—लोकमध्यावस्थितमित्यादि** । तिर्यग्लोकमध्यावस्थितः समतलभूभागमेरुव्यवस्थितो वियत्प्रदेशाष्टकनिर्माणो रुचकश्चतुरस्राकृतिः । स किल दिशामैन्द्र्यादीनां विदिशां चाग्नेयादीनां प्रभवः, तत्र दिशो द्विप्रदेशादिकाः प्रदेशद्वयोत्तरवृद्ध्या वर्धमाना महाशकटोद्धिसंस्थानाः सादिका विगतपर्यवसाना नभोदेशैरनन्तैर्विशिष्टाकृतिलब्धव्यवस्थानैर्जनितस्वरूपाश्चतस्रः, विदिशस्तु मुक्तावलीसन्निभा एकैकाकाशदेशरचनाहितस्वरूपाः सादिकाश्चापर्यवसिताश्चानन्तप्रदेशाश्चतस्र एव, उपरिष्टात्तानेव चतुरः प्रदेशानवधीकृत्योपरिस्थितचतुःप्रदेशादिकाऽनुत्तरा विमला नाम दिग् भवति, तथाऽधस्तात् तमोऽभिधानाऽधस्तनाकाशप्रदेशचतुष्टयप्रवहेति। एताश्चानादिकालसन्निवेशिन्यस्तथाऽनादिकालप्रसिद्धनामानो निश्चयनयावलम्बनात् प्रतिपत्तव्याः । न तदङ्गीकरणेनोत्तरतो मेरुरुच्यत इति । अतस्तमेवंविधं **रुचकं दिग्नियमहेतुं प्रतीत्य यथासम्भवं**-येन प्रकारेण यस्याः सम्भवो द्विप्रदेशादिकेन द्व्युत्तरादिना एकप्रदेशादिना चानुत्तरेण तथा चतुःप्रदेशादिनाऽनुत्तरेणैव यथासम्भवं **भवतीत्युच्यत इति** ॥१०॥

---

१ 'सा प्रतीचा' इति क-पाठः । २ 'चाष्ट०' इति घ-पाठः । ३ 'स्थितांश्च०' इति ग पाठः ।

अथैषां भरतादिक्षेत्राणां किंकृतो विभाग इत्याह—

सूत्रम्—तद्विभाजिनः पूर्वापरायता हिमवन्-महाहिमवन्-निषध-नील-रुक्मिशिखरिणो वंशधर[1]पर्वताः ॥ ३-११ ॥

टी०—तानि विभक्तुं शीलमेषामिति तद्विभाजिनोऽकृत्रिमसन्निवेशित्वात् तच्छीलाः, पूर्वापरायता इत्युभयतो लवणजलधिमवगाढाः हिमवदादिसंज्ञानिर्देशः, वंशा वर्षा वा क्षेत्राणि तेषां धारकाः—विशिष्टव्यवच्छेदकारिणो गिरयोऽनादिकालव्यवस्थानाः ।

भा०—तेषां वर्षाणां विभक्तारः हिमवान् महाहिमवान् निषधो नीलो रुक्मी शिखरीत्येते षड् वर्षधराः पर्वताः ॥ भरतस्य हैमवतस्य च विभक्ता हिमवान् । हैमवतस्य हरिवर्षस्य च विभक्ता महाहिमवान्, इत्येवं शेषाः ॥ तत्र पञ्च योजनशतानि षड्विंशानि षट् चैकोनविंशतिभागा (५२६ $\frac{६}{१९}$) भरतविष्कम्भः । स द्विर्द्विर्हिमवद्धैमवतादीनामाविदेहेभ्यः । परतो विदेहेभ्योऽर्धार्धहीनाः ॥

हिमवदादिवर्षधरस्वरूपम्

टी०—तेषां वर्षाणामित्यादि भाष्यं प्रायो गतार्थम्, कथं पुनरमी वंशधरपर्वता इत्यादर्शयति—भरतस्य हैमवतस्य च विभक्ता हिमवान् । तन्मध्यव्यवस्थितत्वाद् भारतहैमवतयोर्विभागमापादयति हिमवान् । तथा हैमवतहरिवंशयोर्व्यवस्थाकारी महाहिमवान् । इत्येवं शेषगिरयोऽपि नामग्राहं वक्तव्या इत्यतिदिशति, हरिवंशविदेहयोर्विभक्ता निषधः, विदेहरम्यकयोर्विभक्ता नीलः, रम्यकहैरण्यवतयोर्विभक्ता रुक्मी, हैरण्यवतैरावतयोर्विभक्ता शिखरीति॥अधुनैषां क्षेत्राणां विभागे सति प्रमाणमाख्याति—तत्र भरतक्षेत्रमारोपितचापाकारम्, अतः प्रागिषोरेव प्रमाणमुच्यते-पञ्च योजनशतानि षड्विंशत्यधिकानि षट् चैकोनविंशतिभागा योजनस्य भरतक्षेत्रविष्कम्भः । अपरे त्विदमेव भाष्यवाक्यं सूत्रीकृत्याधीयते । विष्कम्भत इति मध्यप्रदेशे भवति, एवमैरावतक्षेत्रविष्कम्भोऽपि । हिमवदादिपर्वतानां शेषक्षेत्राणां चैवमतिदिशन्नाह—स[2] द्विर्द्विर्हिमवद्धैमवतादीनामाविदेहेभ्य इति, तद्यथा—हिमवच्छिखरिणोर्योजनसहस्रं द्व्युत्तरपञ्चाशताधिकं द्वादश चैकोनविंशतिभागा योजनस्य, हैमवतहैरण्यवतयोः सहस्रद्वयं शतं च पञ्चोत्तरं पञ्च चैकोनविंशतिभागा योजनस्य, महाहिमवद्रुक्मिणोश्चत्वारि सहस्राणि शतद्वयं दशोत्तरं दश चैकोनविंशतिभागा योजनस्य, हरिरम्यकयोरष्टौ सहस्राणि चत्वारि शतान्येकविंशत्यधिकानि एकश्चैकोनविंशतिभागो योजनस्य, निषधनीलयोः षोडश सहस्राण्यष्टौ शतानि द्व्युत्तरचत्वारिंशताधिकानि द्वौ चैकोनविंशतिभागौ योजनस्य, विदेहानां त्रयस्त्रिंशत्सहस्राणि षट् च शतानि चतुरशीत्यधिकानि चत्वारश्चैकोनविंशतिभागा योजनस्येति । परतो विदेहेभ्योऽर्धार्धहीना इति । नीलादीनां प्रमाणमाचष्टे लाघविक आचार्यः—

---

१ 'वर्षधर०' इति घ-पाठः । २ 'स भरतेषुर्द्विगुणो द्विगुणः पर्वतानां क्षेत्राणां विष्कम्भो भवत्याविदेहेभ्य इति ग-टी-पाठः ।

विदेहक्षेत्रेषुरर्धहीनो नीलेषुर्भवति, सोऽर्धहीनो रम्यकेषुरित्येवं यावदैरावतक्षेत्रमिति ॥

अधुनैषां हिमवदादिकुलपर्वतानां अवगाहोच्छ्रयान् प्रतिपादयति—

हिमवदादीनां मानम्

**भा०—पञ्चविंशतियोजनान्यवगाढो योजनशतोच्छ्रयो हिमिवान् । तद्द्विर्महाहिमवान् । तद्द्विर्निषध इति ॥**

टी०—**पञ्चविंशतीत्यादि** उच्छ्रायचतुर्भागोऽवगाहः सर्वेषाम्, उच्छ्रायो योजनशतं अवगाहः पञ्चविंशतिर्योजनानि हिमवतः । एतदेव द्विगुणमुच्छ्रयावगाहप्रमाणं महाहिमवतः, योजनशतद्वयमुच्छ्रयः पञ्चाशदवगाहः । एतद्द्विगुणं निषधस्य, चत्वारि शतान्युच्छ्रायः शतमवगाह इति । नीलादीनां निषधादिवदुच्छ्रयावगाहाविति ॥ इदानीं जीवाधनुःकाष्ठे कथयति—

भरतस्य ज्यामानादि

**भा०—भरतवंशस्य[1] योजनानां चतुर्दश सहस्राणि चत्वारि शतान्येकसप्ततीनि च षड्भागा विशेषोना[2] ( १४४७१ $\frac{६}{१९}$ ) ज्या । इषुर्यथोक्तो (५२६ $\frac{६}{१९}$) विष्कम्भः, धनुःकाष्ठं चतुर्दश सहस्राणि शतानि पञ्चाष्टाविंशानि एकादश च भागाः साधिकाः( १४५२८ $\frac{११}{१९}$ ) ।**

टी०—**भरतवंशस्येत्यादि** भाष्यम् । हिमवत आराद्भागवर्तिनी जीवेयं प्रतिपत्तव्या, धनुःकाष्ठं च, इषुर्यथोक्तो विष्कम्भ इति प्रागभिहितोऽपि पुनरिहोपन्यस्तः इषुरिति, तत्रैवं नोक्तस्तस्मात् पुनरुपन्यास इति ।

वैताढ्यो देवकुरवश्च

**भा०—भरतक्षेत्रमध्ये पूर्वापरायत उभयतः समुद्रमवगाढो वैताढ्यपर्वतः षड् योजनानि सक्रोशानि[3] धरणिमवगाढः पञ्चाशद् विस्तरतः पञ्चविंशत्युच्छ्रितः ॥ विदेहेषु निषधस्योत्तरतो मन्दरस्य दक्षिणतः काञ्चनपर्वतशतेन चित्रकूटेन विचित्रकूटेन चोपशोभिता देवकुरवः ।**

टी०—**भरतक्षेत्रमध्य इत्यादि** । वैताढ्यपर्वतो दक्षिणोत्तरार्धविभागकारी विद्याधराधिवासः पञ्चाशत्षष्टिनगरयुक्तदक्षिणोत्तरश्रेणिद्वयालंकृतो गुहाद्वयोपशोभितश्च प्रतिपत्तव्यः । **विदेहेष्वित्यादि** । मेरुगिरेर्दक्षिणतो निषधस्योत्तरतो देवकुरवो भवन्ति, ते च काञ्चनपर्वतकशतेनोपशोभिताः ह्रदपञ्चकोभयपर्यन्तव्यवस्थितैर्दशभिर्दशभिः काञ्चनपर्वतैर्विभूषिताः, शीतोदानदीपूर्वापरगौ निषधाच्चतुस्त्रिंशाष्टशतसचतुःसप्तभागान्तरौ चित्रविचित्रकूटौ योजनसहस्रोच्चौ तावदधोविस्तृतौ तदर्धमुपरि ताभ्यां चोपशोभिता देवकुरवः । ते च—

---

१ '०तवर्षे' इति घ-पाठः । २ 'विशेषतो' इति घ-पाठः । ३ ४ क्रोशाः = १ योजनम् ।

भा०—विष्कम्भेणैकादश योजनसहस्राण्यष्टौ च शतानि द्विचत्वारिंशानि द्वौ च भागौ । एवमेवोत्तरेणोत्तराः कुरवः चित्रकूटविचित्रकूटहीना द्वाभ्यां च काञ्चनाभ्यामेव यमकपर्वताभ्यां विराजिताः ॥ विदेहा मन्दरदेवकुरूत्तरकुरुभिर्विभक्ताः क्षेत्रान्तरवद् भवन्ति- पूर्वे चापरे च । पूर्वेषु षोडश चक्रवर्तिविजया नदीपर्वतविभक्ताः परस्परस्यागमाः[1], अपरेऽप्येवंलक्षणाः षोडशैव । तुल्यायामविष्कम्भावगाहोच्छ्रायौ दक्षिणोत्तरौ वैताढ्यौ, तथा हिमवच्छिखरिणौ महाहिमवद्रुक्मिणौ निषधनीलौ चेति ॥

उत्तरकुरुविदेहादयः

टी०—विष्कम्भेणेत्यादि सुज्ञानम् । इदानीमुत्तरकुरूनतिदिशति—एवमेवोत्तरेणोत्तराः कुरवः काञ्चनकनगशतेनोपशोभिताः, किन्तु चित्रविचित्रकूटाभ्यां हीनास्तत्स्थाने च काञ्चनाभ्यां तत्प्रमाणाभ्यामेव यमकपर्वताभ्यां शीतानदीकूलगाभ्यां विराजिता इति ॥ विदेहा इत्यादि । मन्दरगिरिणा देवकुरूत्तरकुरुभिश्च विभक्ता व्यवच्छिन्नमर्यादाः स्थापिताः,एकक्षेत्रान्तःपातिनोऽपि क्षेत्रान्तरवद् भवन्ति। तत्रत्यमनुष्यादीनां परस्परेण गमनागमनाभावात् । अतः पूर्वे चापरे च उभये विदेहा भवन्ति, मेरोः पूर्वतः पूर्वे, अपरतोऽपरे, तत्र पूर्वेषु विदेहेषु षोडश चक्रवर्तिविजया नदीपर्वतविभक्ताः परस्परस्यागमाः चक्रवर्तिनां विजेतव्या भोक्तव्याश्च, नदीभिर्गिरिभिश्च विभक्ताः परस्परेणागम्याः क्षेत्रविशेषा इत्यर्थः । अधुनाऽपरानप्यतिदिशति–अपरेऽप्येवंलक्षणाः षोडशैव चक्रवर्तिविजयाः सरिद्गिरिविभक्ताः परस्परासम्भाव्यमानगमना इति । अधुनोत्तरभागवर्तिपर्वतान् प्रमाणतो निर्दिशति—तुल्यायामेत्यादि भाष्यमेव सुज्ञानम् ।

भा०—क्षुद्रमन्दरास्तु चत्वारोऽपि धातकीषण्डपुष्करार्धकाः महामन्दरात पञ्चदशभिर्योजनसहस्रैर्हीनोच्छ्रायाः । षड्भिर्योजनशतैर्धरणितले हीनविष्कम्भाः । तेषां प्रथमं काण्डं महामन्दरतुल्यम् । द्वितीयं सप्तभिर्हीनम् । तृतीयमष्टाभिः । भद्रशालनन्दनवने महामन्दरवत् । अर्धषट्पञ्चाशद् योजनसहस्राणि सौमनसं पञ्चशतविस्तृतमेव[2] । ततोऽष्टाविंशतिसहस्राणि पाण्डुकं चतुर्नवतिचतुःशतविस्तृतमेव भवति । उपरि चाधश्च विष्कम्भोऽवगाहश्च तुल्यो महामन्दरेण । चूलिका चेति ॥

क्षुद्रमन्दरस्वरूपम्

टी०—क्षुद्रमन्दरास्त्वित्यादि ॥ धातकीषण्डे द्वौ पुष्करद्वीपार्धे द्वौ इत्येवं चत्वारोऽपि क्षुल्लकमन्दरा भवन्ति जम्बूद्वीपमध्यवर्तिमेरोर्हीनप्रमाणत्वात् । तच्चादर्शयति- महामन्दरात् पञ्चदशभिर्योजनसहस्रैर्हीनोच्छ्रायाः—चतुरशीतियोजनसहस्रोच्छ्रिताः । तथा षड्भिर्योजनशतैर्धरणितले हीनविष्कम्भाः चतुःशताधिकनवसहस्र-

---

१ ' स्परागमाः ' इति घ-पाठः । २ 'शतं विस्तृतम् ' इति घ-पाठः ।

विष्कम्भा] इत्यर्थः । तेषां चतुर्णामपि प्रथमं काण्डं महामन्दरतुल्यं धरणिमवगाढं सहस्रप्रमाणमित्यर्थः । द्वितीयं काण्डं सप्तभिः सहस्रैर्हीनं मन्दरात् षट्पञ्चाशत्सहस्रप्रमाणमित्यर्थः । तृतीयं काण्डमष्टाभिः सहस्रैर्हीनं, मेरोः सकाशात् अष्टाविंशतिसहस्रप्रमाणमित्यर्थः । भद्रशालनन्दनवने महामन्दरे इव द्रष्टव्ये, धरण्यां भद्रशालवनम्, तदुपरि पञ्चशत्यां नन्दनमिति, तत उपरि अर्धषट्पञ्चाशत्सहस्राण्यारुह्य सौमनसम्, पञ्च शतानि नन्दनवनेनाक्षिप्तानि द्वितीयकाण्डस्यातोऽर्धषट्पञ्चाशत्सहस्राणि गत्वा तत् पञ्चशतविस्तीर्णमेव भवति । ततोऽष्टाविंशतिसहस्राण्यारुह्य पाण्डुकवनं चतुर्नवतिचतुःशतविस्तीर्णमेवावसेयम्, तथोपरि चाधश्च विष्कम्भोऽवगाहश्च तुल्यो महामन्दरेण यथासङ्ख्यमत्राभिसम्बन्धः, उपरि मस्तके यो विष्कम्भः स महामन्दरेणैषां तुल्यः, सहस्रप्रमाण इत्यर्थः, अधश्च योऽवगाहः सोऽपि महामन्दरेण तुल्यः, योजनसहस्रमानः, एषां भवति । चूलिका चैषां महामन्दरचूडासदृशी प्रमाणतोऽवसातव्येति । अधुना लाघवार्थं द्वीपादीनां परिधिगणितपदजीवाद्यानयनाय करणोपाया भण्यन्ते । तत्रेप्सितवृत्तक्षेत्रपरिधेरानयनायेदं करणसूत्रम्—

परिध्यानयनादिकरणम्

**भा०—विष्कम्भकृतेर्दशगुणाया मूलं वृत्तपरिक्षेपः, स विष्कम्भपादाभ्यस्तो गणितम् । इच्छावगाहोनावगाहाभ्यस्तस्य विष्कम्भस्य चतुर्गुणस्य मूलं ज्या । ज्याविष्कम्भयोर्वर्गविशेषमूलं विष्कम्भाच्छोध्यं शेषार्धमिषुः । इषुवर्गस्य षड्गुणस्य ज्यावर्गयुतस्य[1] मूलं धनुःकाष्ठम् । ज्यावर्गचतुर्भागयुक्तमिषुवर्गमिषुविभक्तं तत्प्रतिकृतिवृत्तविष्कम्भः । उदग्धनुःकाष्ठाद् दक्षिणं शोध्यं शेषार्धं बाहुरिति । अनेन करणाभ्युपायेन क्षेत्राणां[2] वैताढ्यादिपर्वतानामायामविष्कम्भज्येषुधनुःकाष्ठपरिमाणानि ज्ञातव्यानि ॥ ११ ॥**

**टी०—विष्कम्भकृतेर्दशगुणाया मूलं वृत्तपरिक्षेपः**, विष्कम्भो योजनशतसहस्रं तल्लक्षगुणं, कृतिः वर्गो भवति, पुनर्दशगुणा क्रियते, पश्चान्मूलमानीयते, तद् वृत्तक्षेत्रपरिक्षेपः, तत्र योजनराशौ लब्धव्ये त्र्येकषट्द्विद्विकसप्तकैः क्रमेण मूलमानेतव्यम्, ततोऽयं राशिरधस्तात् जातः ६३२४५४ । एषोऽर्धेन छिन्नो योजनत्रिलक्षषोडशसहस्रसप्तविंशद्विशतसङ्ख्यो भवति, शेषमुपरीदं ४८४४७१[3] चतुर्भिर्गुण्यते, चतुर्गव्यूतं योजनं यतः, ततो[4] गव्यूतराशिर्भवति । षडादिराशिना भागो हार्यः, लब्धमिदं गव्यूतत्रयं शेषमुपरीदं ४०५२२ । धनुःसहस्रद्वयेन गुण्यते जातः[5] ततो धनुराशिः । षडादिराशिना भागलब्धमिदं

1 'कृतस्य' इत्यधिको घ-पाठः । 2 'सर्वक्षेत्राणां सर्वपर्वता०' इति घ-पाठः । 3 (१९३७८८४) । 4 'यतस्ततो' इति पाठः । 5 (८१०४४०००) ।

१२८, शेषमुपरीदं ८९८८८। षण्णवत्यङ्गुलं धनुर्भवतीति षण्णवत्या गुण्यते, जातोऽङ्गुलराशिः। भागलब्धमिदं १३, शेषमुपरीदं ४०७३४६। द्वाभ्यां गुण्यते यतोऽर्धाङ्गुलद्वयेनैकमङ्गुलं भवति, जातोऽर्धाङ्गुलराशिः, षडादिराशिना भागलब्धमिदं १। शेषाश्चार्धाङ्गुलभागा एतावन्त उद्धरिताः १८२२३८। अधस्तात् षडादिराशिः एष जम्बूद्वीपपरिधिः। वृत्तग्रहणं चतुरस्रादिक्षेत्रव्यावृत्त्यर्थम्, परिक्षेपग्रहणं विष्कम्भेषु जीवादिव्यावृत्त्यर्थमिति। अधुना गणितपदमानीयते जम्बूद्वीपस्य, तत्रेदं करणसूत्रम्॥ **स विष्कम्भपादाभ्यस्तो गणितं** प्रक्रान्तविष्कम्भो लक्षैकपादः पञ्चविंशतिसहस्राणि विष्कम्भपादेनाभ्यस्तो--गुणितो विष्कम्भपादाभ्यस्तः, स इति परिधिः जम्बूद्वीपस्याभिसम्बध्यते, प्रक्रान्तार्थपरामर्शित्वात् सर्वनामशब्दानाम्। गणितमिति गणितपदमित्यर्थः। जम्बूद्वीपे योजनप्रमाणानि चतुरस्रखण्डान्येतावन्ति भवन्तीत्यर्थः। तत्र परिधियोजनराशिः पञ्चविंशतिसहस्रगुणितोऽयं ७९०५६७५०००। गव्यूतत्रितयं पञ्चविंशतिसहस्रगुणं जातमिदं ७५०००। गव्यूतराशिश्चायं योजनीक्रियते। चतुर्भिर्भागलब्धमिदं १८७५०। योजनराशिरयम्। धनुरपि पञ्चविंशतिसहस्रगुणः, जातमिदं ३२०००००। अयमपि धनुराशिर्योजनीक्रियते। अष्टौ धनुःसहस्राणि योजनं भवतीति वचनात् अष्टाभिः सहस्रैर्भागलब्धमिदं ४००। अयमपि योजनराशिरनन्तरराशौ प्रक्षिप्तः, जातमिदं १९१५०। अयमपि च सप्तकोटिशतादिराशौ, जातमिदं ७९०५६९४१५०। अङ्गुलराशिः पञ्चविंशतिसहस्रगुणो जातमिदं ३२५०००। अर्धाङ्गुलं पञ्चविंशतिसहस्रगुणं जातमिदं २५०००। अस्यार्धाङ्गुलराशेरर्धं गृह्यते ततोऽङ्गुलानि लभ्यन्तेऽमूनि १२५००। एतान्यङ्गुलराशौ क्षिप्यन्ते, जातमिदं ३३७५००। ततः षण्णवत्या भागो यस्मात् षण्णवत्यङ्गुलं धनुर्भवति। भागलब्धमिदं ३५१५। अयं धनूराशिः, शेषमङ्गुलानां षष्टिः। अस्य धनूराशेर्भागः सहस्रद्वयेन, लब्धमेकं गव्यूतं शेषमिदं १५१५॥

अधुना जीवानयनमुच्यते--**इच्छावगाहोनावगाहाभ्यस्तविष्कम्भस्य चतुर्गुणस्य मूलं ज्या**॥ ईप्सितोऽवगाहो यावान् स इच्छावगाहस्तेनोनो विष्कम्भः इच्छावगाहोनः पुनरवगाहेनाभ्यस्यते-गुण्यते, इच्छावगाहोनश्चासाववगाहाभ्यस्तश्च इच्छावगाहोनावगाहाभ्यस्तः, तस्य पुनश्चतुर्भिर्गुणितस्य यन्मूलं सा मण्डलक्षेत्रस्य जीवा भवति। अत्र विष्कम्भो योजनलक्षः, एष ईप्सितावगाहोनः क्रियते, ईप्सितश्चायं ५२६ षट् च कला ६। एष उपरितनो राशिः संवर्ण्यते कलीक्रियत इत्यर्थः। एकोनविंशत्या गुण्यते, जातमिदं ९९९४। अत्र षट् कलाः क्षिप्यन्ते, जातमिदं १००००। विष्कम्भराशिरपि संवर्ण्यते एकोनविंशत्या, जातमिदं १९०००००। एषोऽवगाहराशिरमुतः पात्यते, जातमिदं १८९००००। पुनरवगाहराशिना गुण्यते, जातमिदं १८९०००००००। ततश्चतुर्भिर्गुण्यते जातमिदं ७५६००००००००। अस्य मूलं जीवा भवति, तच्च ग्राह्यं द्विसप्तचतुष्कनवपञ्चचतुष्ककैः,

१ (८६२९२४८)। २ (८१४६९२)।

क्रमेण जातमिदं { २९७८८४ / ५४९९०८ } अधस्त्योऽर्धेन च्छिन्नो जातमिदं २७४९५४ । अस्य राशेरेकोनविंशत्या भागलब्धमिदं १४४७१ । कलाश्च पञ्च । शेषं यदुद्धरितं तत्रैका न्यूना कला लभ्यत इत्येषा जीवा ॥

अधुना करणसूत्रमिषोरानयनाय—**ज्याविष्कम्भयोर्वर्गविशेषमूलं विष्कम्भाच्छोध्यं शेषार्धमिषुः** । जीवावर्गस्य विष्कम्भवर्गस्य च (यो) विशेषस्तस्य मूलं विष्कम्भाच्छोध्यते, शेषस्य यदर्धं स इषुर्भवति, तत्र जीवावर्गोऽयं ७५६००००००० विष्कम्भवर्गश्चायमेकषष्टयुत्तरत्रिशतगुणः ३६१००००००००० । अस्माज्जीवावर्गे विशुद्धे शेषमिदं भवति ३५३४४००००००००० । अस्य मूलमादीयते, शून्याष्टकस्यार्धेन चत्वारि शून्यानि शेषस्य मूलमेव काष्ठकाष्ठकैर्लब्धमिदं १८८०००० । एतद् विष्कम्भादेकोनविंशतिगुणाच्छोध्यम्, शेषं जातमिदं २०००० । अस्यार्धेनेदं १०००० । अस्यैकोनविंशत्या भागलब्धमिदं ५२६ षट् च कला इषुरिति ॥

अधुना धनुःकाष्ठानयनाय करणसूत्रम्—**इषुवर्गस्य षड्गुणस्य ज्यावर्गयुक्तस्य [ कृतस्य ] मूलं धनुःकाष्ठम्** ॥ इषोः कलीकृतस्यायं वर्गः १०००००००० । एष षड्भिर्गुण्यते, जातमिदं ६०००००००० । एष ज्यावर्गे क्षिप्यते, ज्यावर्गश्चायं ७५६००००००० । जातमिदं ७६२००००००० । अस्य मूलमात्रं धनुःकाष्ठं भवति, तच्च द्विकसप्तषट्शून्यचतुष्कत्रिकैः क्रमेणादीयते, ततोऽयं राशिर्भवति अधस्त्यस्या- { २६२१५१ / ५५२०८६ } र्धेन छिन्नस्यैकोनविंशत्या भागलब्धमिदं १४५२८ । एकादश चैकोनविंशतिभागा इति ॥

सम्प्रति विष्कम्भानयनाय करणसूत्रमिदम्—**ज्यावर्गचतुर्भागयुक्तमिषुवर्गमिषुविभक्तं तत्प्रकृतिवृत्तविष्कम्भः** ॥ जीवावर्गचतुर्भागेन युक्त इषुवर्गः इषुणा विभक्तः स्वभाववृत्तविष्कम्भो भवति, ज्यावर्गः ७५६००००००० । अस्य चतुर्भागोऽयं १८९००००००० । एष इषुवर्गे क्षिप्यते, इषुवर्गश्चायं १०००००००० । एकीकृतमिदं जातं १९०००००००० । भागपरावृत्त्या एकषष्टयधिकशतत्रयेणेषुर्गुण्यते, एकोनविंशतिभागेनैकः स गुणकार उपरितनस्य, इतरस्य चैकोनविंशतिभागेनैकोनविंशतिरेव, शून्यचतुष्कापगमे तया भागलब्धमिदं १००००० ॥

अधुना बाहुरानीयते, तत्रेदं करणसूत्रम्—**उदग्धनुःकाष्ठाद् दक्षिणं शोध्यं शेषार्धं बाहुरिति** । अनेन करणाभ्युपायेन क्षेत्राणां वैताढ्यादिपर्वतानामायामविष्कम्भज्येषुधनुःकाष्ठपरिमाणानि ज्ञातव्यानि ॥ उदग्धनुःकाष्ठमिदं २५२३० कला ४ चत्वारश्चैकोनविंशतिभागाः, अमुष्माद् दक्षिणं धनुःकाष्ठं पात्यते, तच्चेदं १४५२८ ।

एकादश चैकोनविंशतिभागाः, पातिते उपरितनराशिरयं १०७०२ । अधस्तादेकादश कला न पतन्ति चतसृभ्यः कलाभ्य इतिकृत्वा उपरितनराशिर्न ददात्यर्धमतो रूपमेकमवतार्यते, एकोनविंशतिमध्यादेकादश शुद्धा अष्टौ शेषकलाचतुष्टयक्षेपाद् द्वादश, जाताः अर्धेन षट्, उपरितनराशिर्न ददात्यर्धमतो रूपमेकमवतार्यते एकोनविंशतिरपि नार्धं ददातीत्येकोनविंशतिरूपमपनीयते, तस्यार्धेनार्धकलाः,अष्टादशानामर्धेन नवषट्कपञ्चदशकलाः सार्धा जाताः उपरितनराशेरर्धेनेदं ५३५०। एतावती बाहा क्षुल्लहिमवत इत्यनेन च परिक्षेपज्यानयनकरणाभ्युपायेन सर्वक्षेत्राणां सर्वपर्वतानां चायामविष्कम्भेषुधनुःकाष्ठप्रमाणान्यवगन्तव्यानीति। अपरे पुनर्विद्वांसोऽतिबहूनि स्वयं विरचय्यास्मिन् प्रस्तावे सूत्राण्यधीयते विस्तरदर्शनाभिप्रायेण, तन्न युक्तमयं सङ्ग्रहः सूरिणा संक्षेपः कृत इत्यतोऽत्र विस्तराभिधानमपाचीनमाचक्षते प्रवचननिपुणाः। अथ विस्तरतो विवक्षितस्ततो ग्रन्थलक्षपरिभाषिताया जम्बूद्वीपदेशनायाः पटुप्रज्ञैस्तैर्विस्तृणद्भिरपि कियदत्र विस्तृतं स्याद् ? विस्तरार्थिनो वा बहुगुणः सिद्धान्त एव तत्कृतसूत्रेभ्य इत्यत उपेक्षणीयस्तदभिप्राय इति ॥ ११ ॥

एवमिमां जम्बूद्वीपवक्तव्यतां परिसमाप्य समासतः सम्प्रति द्वीपान्तरवक्तव्यताभिधित्सयोवाच—

## सूत्रम्—द्विर्धातकीखण्डे ॥ ३-१२ ॥

**टी०**—अस्य भाष्यम् ।

**भा०—ये एते मन्दर[2]वर्षवंशधरा जम्बूद्वीपेऽभिहिताः एते द्विगुणा धातकीखण्डे द्वाभ्यामिष्वाकारपर्वताभ्यां दक्षिणोत्तरायताभ्यां विभक्ताः । एभिरेव नामभिर्जम्बूद्वीपकसमसङ्ख्या पूर्वार्धेऽपरार्धे च चक्रारसंस्थिता निषधसमोच्छ्रायाः कालोदलवणजलस्पर्शिनो वंशधराः सेष्वाकारा अरविवरसंस्थिता वंशा इति ॥ १२ ॥**

धातकीखण्डे क्षेत्राद्यतिदेशः इषुकारौ च

**टी०**—**ये एते मन्दरवर्षवंश**त्यादि भाष्यम्। लवणजलनिधेर्बहिर्धातकीखण्डो द्वीपो धातकीवृक्षसम्बन्धाद् वलयाकृतिः लक्षचतुष्टयविष्कम्भः, तस्मिन् धातकीखण्डे मन्दरादयो जम्बूद्वीपकमन्दरादिभ्यः सङ्ख्यया द्विगुणमाना वेदितव्याः, जम्बूद्वीपे मेरुरेकस्तत्र द्वौ पूर्वापरदिग्मध्यव्यवस्थितौ मेरू, वंशा भरतादिक्षेत्राण्यैरावतपर्यवसानानि, तानि तत्र द्विसङ्ख्यायुक्तानि प्रत्येकं २। वंशधरा हिमवदादयः पर्वता वैताढ्यादयश्च तेऽपि तत्र द्विर्द्विः स्थिताः, एते च सर्वेऽपि मन्दरादयो द्वाभ्यामिष्वाकारपर्वताभ्यामृजुभ्यामित्यर्थः । दक्षिणोत्तरदिङ्मध्यव्यवस्थिताभ्यां दक्षिणोत्तरायताभ्यां च विभक्ताः—विच्छिन्नाः पूर्वार्धे चापरार्धे च व्यवस्थिताः, [3]एभिरेव नामभिर्जम्बूद्वीपकैः समा सङ्ख्या येषां भरतादिप्रतिक्षेत्रं जम्बू-

---

१ 'पात्यन्ते' इति ग-टी-पाठः । २ '०रवंशवर्षधरा' इति घ-पाठः । ३ 'एतैरेव' इति क-पाठः ।

द्वीपकसमसङ्ख्याः, चक्रनाभिप्रतिबद्धारकवत् संस्थिताः, तत्र वर्षधरपर्वता निषधगिरिसदृशोच्छ्रायाश्चतुर्योजनशतोच्छ्राया इत्यर्थः । **कालोदलवणजलस्पर्शिनो वंशधराः सेष्वाकाराः** कालोदसमुद्रो धातकीखण्डपरिक्षेपी लवणोदधिर्जम्बूद्वीपपरिक्षेपी, एतयोर्जलं कालोदलवणजलं तत्स्प्रष्टुं शीलमेषामिति कालोदलवणजलस्पर्शिनो हिमवदादयः, सहेष्वाकारपर्वताभ्यां पञ्चयोजनशतोच्छ्रायाभ्यामिति । धातकीखण्डवर्तिनश्च हिमवदादयो जम्बूद्वीपकहिमवदादिविच्छेदप्रतिनिधिना व्यवस्थिता वैताढ्यादयः क्षेत्राणि चेति । **अरविवरसंस्थिता वंशा इति** । अराणां विवराण्यन्तरालानि तद्वद् व्यवस्थिताः **वंशाः**–क्षेत्राणि तत्रेति । सङ्क्षेपात् तु प्रतिपत्तव्यमिदं यन्नाम किञ्चिन्नदीदेवकुरूत्तरकुरुप्रभृति जम्बूद्वीपेऽभिहितं तत् सर्वं धातकीखण्डे द्विर्द्विरवसातव्यमिति ॥ १२ ॥

यथैव धातकीखण्डे जम्बूद्वीपविधिर्द्विरुक्तस्तथैव—

## सूत्रम्–पुष्करार्धे ॥ ३–१३ ॥

**भा०—यश्च धातकीखण्डे मन्दरादीनां सेष्वाकारपर्वतानां सङ्ख्याविषये नियमः स एव पुष्करार्धे वेदितव्यः ॥**

टी०—पुष्करद्वीपः कालोदसमुद्रपरिक्षेपी षोडशलक्षविष्कम्भस्तस्यार्धमारात्तममष्टौ योजनलक्षास्तस्मिन् पुष्करार्धे च जम्बूद्वीपविधिर्द्विर्द्विर्द्रष्टव्यः । **यश्च धातकीखण्डे** विधिरुक्त इष्वाकारौ दक्षिणोत्तरदिङ्मध्यावस्थितौ दक्षिणोत्तरायतौ पञ्चशतोच्चौ, तथा मन्दरौ चतुरशीतिसहस्रोच्छ्रयादिकौ वंशधराश्चतुःशतोच्चा इत्येवमादिकः सङ्ख्याविशेषनियमः स पुष्करार्धेऽप्यशेषो वेदितव्य इति ।

**भा०—ततः परं मानुषोत्तरो नाम पर्वतो मानुष्यलोकपरिक्षेपी सुनगरप्राकार(वत्)वृत्तः पुष्करद्वीपार्धे निर्दिष्टः काञ्चनमयः । सप्तदशैकविंशानि योजनशतानि उच्छ्रितः । चत्वारि त्रिंशानि क्रोशं चाधो धरणितलमवगाढः । योजनसहस्रद्वाविंशमधस्ताद् विस्तृतः । सप्तशतानि त्रयोविंशानि मध्ये । चत्वारि चतुर्विंशान्युपरीति ।**

मानुषोत्तरः पर्वतः

टी०—ततः परमित्यादि भाष्यम् । आरात्तमपुष्करार्धात् परतः समनन्तरो धान्यपल्यकार्धाकृतिः वलयवृत्तो मानुषोत्तराभिधानो गिरिर्मानुष्यलोकपरिक्षेपी महानगरप्राकारप्रतीकाशः कनकमयः पुष्करद्वीपार्धविभागकारीति । शेषं समुच्छ्रायादि सुज्ञानम् ।

**भा०—न कदाचिदस्मात् परतो जन्मतः संहरणतो वा चारणविद्याधरर्द्धिप्राप्ता अपि मनुष्या भूतपूर्वा भवन्ति भविष्यन्ति च ।**

टी०–न कदाचिदस्मादित्यादि । अस्मान्मानुषोत्तराद् गिरेः परतो न कस्मिंश्चिदपि काले जायन्ते जनिष्यन्तेऽजनिषत चेति मनुष्या इत्यत एवायं मानुषोत्तरोऽभिधीयते । तथा

संहरणतोऽपि न सन्ति मनुष्याः, तत्र संहरणं नाम वैराद्यनुबन्धात् केनचिद् देवविद्याधरादिना इहत्यमनुष्यस्तत्रोत्क्षिप्य नीयेतायमत्रोर्ध्वशोषं शुष्यतु म्रियतां वाप्यकृतप्रतीकारः क्षिप्रमेवं वैरादिनिर्यातनार्थं, संहरणममून् विहाय क्रियते—

"समणीं अवगतवेदं, परिहारपुलागमप्पमत्तं च ।
चोद्दसपुव्विं आहा-रयं च णवि कोइ संहरइ ॥" आर्या

तस्मादपि संहरणतो न मनुष्यास्तत्परत इति, अवश्यं हि मनुष्येण मर्तव्यमन्तर्मानुषोत्तरनगस्येति । तथा **चारणविद्याधरर्द्धिप्राप्ता अपि** मनुष्यास्तमुल्लङ्घ्य गताः सन्तः परतो न म्रियन्ते इति नियम्यते, न पुनर्गमनमेषां मानुषोत्तराद् बहिर्निषिध्यते, तपोविशेषानुष्ठानाज्जङ्घाचारिणो विद्याचारिणश्च संयता नन्दीश्वरादिद्वीपान् गच्छन्ति चैत्यवन्दनार्थं, प्रसिद्धश्चायमावश्यकादिष्वपि प्रायो विधिः, तथा विद्याधरा महाविद्यासम्पन्नाः ऋद्धिप्राप्ताश्च वैक्रियादिशरीरभाजः सर्वे गच्छन्ति परतः, न तु प्राणान् परित्यजन्ति तत्रैवेति । एवंविधातिशयप्राप्ता अपि तत्र नो म्रियन्ते, किमुत निरतिशयमनुष्या इति दर्शयति—

मानुषोत्तराभिधाने कारणम् **भा०—अन्यत्र समुद्घातोपपाताभ्यामत एव च मानुषोत्तर इत्युच्यते ।**

**टी०—अन्यत्र समुद्घातोपपाताभ्यामि**त्यपोद्यते[2] मारणान्तिकसमुद्घातेन समुपहतः कश्चिदर्धतृतीयद्वीपान्तर्वर्ती बहिर्वर्तिद्वीपसमुद्रेषूत्पत्स्यते तेन चोत्पत्तिप्रदेशे प्रक्षिप्तमात्मप्रदेशजालमिलिकागतिना पश्चान्म्रियते तत्र व्यवस्थित इति । तथोपपातमङ्गीकृत्य जन्माभिसम्बध्यते बहिर्द्वीपसमुद्रवर्तिनाऽसुमता येन मनुष्यायुर्निबद्धमर्धतृतीयद्वीपाभ्यामन्तरे चोत्पत्स्यते वक्रगत्या, तस्य तन्मनुष्यायुर्वक्रकाले विपच्यते, तदैव चासौ मनुष्यो जातस्तदुदयवर्तित्वात् । तथा चागमः—"[3]मणुस्से णं भंते ! मणुस्सेसु उववज्जइ अमणुस्से मणुस्सेसु उववज्जइ ? गोयमा ! मणुस्से २ सु उववज्जइ, नो अमणुस्से मणुस्सेसु उववज्जइ ॥" एवं समुद्घातोपपातौ विरहय्य नान्येन प्रकारेण बहिर्मानुषोत्तरधरणीधरात् मरणं मनुष्याणां जन्म वा सम्भाव्यते इति । ये त्वेतद् भाष्यं गमनप्रतिषेधद्वारेण चारणविद्याधरर्द्धिप्राप्तानामाचक्षते तेषामागमविरोधः, सर्वेषां हि चारणादीनां आगमे गमनाभ्यनुज्ञानाद्, बहिर्जन्ममरणे न सम्भाव्येते इत्यवधीकृत्येदमुच्यते—**अत एव मानुषोत्तर इति ।**

---

१ श्रमणीमपगतवेदं परिहारं पुलाकमप्रमत्तं च ।
चतुर्दशपूर्विणमाहारकं च नैव कोऽपि संहरति ॥—भग० श० २५, उ० ६ वृत्तौ

२ 'मित्यापाद्यते' इति क-पाठः ।

३ मनुष्यो भदन्त ! मनुष्येषु उत्पद्यते, अमनुष्यो मनुष्येषु उत्पद्यते ? गौतम ! मनुष्यो मनुष्येषु उत्पद्यते, न अमनुष्यो मनुष्येषु उत्पद्यते ।

नरलोके द्वीपसमुद्रादिसंख्या

**भा०—तदेवमर्वाग्मानुषोत्तरस्यार्धतृतीया द्वीपाः, समुद्रद्वयं, पञ्च मन्दराः, पञ्चत्रिंशत् क्षेत्राणि, त्रिंशद् वर्षधरपर्वताः, पञ्च देवकुरवः, पञ्चोत्तराः कुरवः, शतं षष्ट्यधिकं चक्रवर्तिविजयानाम् । द्वे शते पञ्चपञ्चाशज्जनपदानाम्, अन्तरद्वीपाः षट्पञ्चाशदिति ॥ १३ ॥**

**टी०—तदेवमर्वाग् मानुषोत्तरस्येत्यादि** भाष्यम् । व्यावर्णितलक्षणस्य मानुषोत्तरगिरेरर्वाग् जम्बूद्वीपधातकीखण्डपुष्करार्धान्यर्धतृतीया **द्वीपाः**; लवणकालोदौ **समुद्रद्वयम्**; जम्बूद्वीप एको धातकीखण्डे द्वौ, पुष्करार्धे च द्वावेव पञ्च **मन्दराः**; जम्बूद्वीपे भरतादीनि सप्त धातकीषण्डे चतुर्दश, पुष्करार्धे चतुर्दशैवं **पञ्चत्रिंशत क्षेत्राणि**; जम्बूद्वीपे षट्, धातकीखण्डे द्वादश, पुष्करार्धे द्वादशैवं **त्रिंशद् वर्षधरपर्वताः**; जम्बूद्वीपे एकः, धातकीखण्डे द्वौ, पुष्करार्धे द्वावेवं **पञ्च देवकुरवः**, एवमेव **पञ्चोत्तराः कुरवः**; जम्बूद्वीपे द्वात्रिंशत्, धातकीखण्डे चतुःषष्टिः, पुष्करार्धे चतुःषष्टिश्चैवं **षष्ट्यधिकं शतं चक्रवर्तिविजयानाम्**; पञ्चसु भरतेषु पञ्चसु चैरावतेषु प्रत्येकं पञ्चविंशतिर्जनपदा अर्धं चार्याः एते दशगुणा **द्वे शते पञ्चपञ्चाशदधिके जनपदानामार्याणाम्**; जम्बूद्वीप एव हिमवतः प्राक् पश्चाद् विदिक्षु सप्त सप्तान्तरद्वीपा एकत्राष्टाविंशतिस्तथा शिखरिणोऽप्यष्टाविंशतिरेवमेते **षट्पञ्चाशद् भवन्ति**। उत्सेधाङ्गुलं सहस्रगुणितं प्रमाणाङ्गुलं भवति, तदनुमानेन चैषां द्वीप-क्षेत्र-गिरि-कूट-सरित्-सागर-काण्ड-पाताल-भवनकल्पविमानादीनां विष्कम्भायामपरिधयो ग्राह्याः । क्षेत्रादीनि च यथावत्परिमाणतो ज्ञात्वा तत्प्रत्ययार्थं सङ्ख्यानमुक्तम्, तच्च गणितग्रन्थेभ्यः साक्षात् सम्बन्धिफलत्वादव्यभिचारि प्रत्येतव्यम्, यैश्च क्षेत्रादिपरिमाणं सङ्ख्यातं तैरवश्यं सङ्ख्यानशास्त्रं प्रमाणेयम्, प्रमेयपदार्थप्रणयने प्रमाणप्रणयनवत्, यद्यपि चेयत्ता आगममात्रप्रतिपाद्या तथाऽनु तदन्यैरपि सङ्ख्यातं तत्सङ्ख्यानलक्षणं तु नोक्तम्, यदप्युक्तम् तदपि क्षेत्रपरिक्षेपादि व्यभिचरति, सर्वभुवनकोशादिप्रक्रियान्तःपाति प्रदर्श्यं, प्रायश्च सावर्णिसांशपायनबुद्धादयः सातिशयज्योतिषक्षेत्रगणितशास्त्रानभिज्ञास्तेषामविषय एवायम् । यदि नाम मूढतया कश्चिदभिनिविशेत्, स तु प्रतिवृत्तफलकसूत्रदीपच्छायादिभिः प्रत्ययैः प्रत्याय्यः, यस्येयान् विष्कम्भस्तस्य परिक्षेपः कियान् भवतीति सङ्ख्याननियमात्, पूर्वापराविरोधि प्रत्यक्षफलं च सङ्ख्यानम्, अतः सर्वज्ञज्ञानविषयाभ्यन्तरत्वात् ज्ञानातिशयत्वाच्च महातडागोदरसंस्थितजलद्रव्यपलपरिमाणपरिज्ञानोपायोपदेशवत् तीर्थकरैः सर्वमिदमनवद्यमादर्शितं सर्वज्ञतालाञ्छनमिति ॥ १३ ॥

**भा०—अत्राह—उक्तं भवता—मानुषस्य स्वभावमार्दवार्जवत्वं च** ( अ० ६, सू० १८ ) **इति । तत्र के मनुष्याः क्व वेति ? । अत्रोच्यते—**

**टी०—अत्राह—उक्तं भवतेत्यादि** पातनिकाग्रन्थः । सूत्रेषूक्तमाश्रवप्रस्तावे षष्ठेऽध्याये( सू०१८) **स्वभावमार्दवार्जवं च मानुषस्येति, तत्र के मनुष्या** आर्यादिभेदेन **केन व्यवस्थिताः क्व वा द्वीपक्षेत्रे समुद्रे वा ? । अत्रोच्यते—**

## सूत्रम्-प्राङ् मानुषोत्तरान्मनुष्याः ॥ ३-१४ ॥

भा०—प्राङ् मानुषोत्तरात् पर्वतात् पञ्चत्रिंशत्सु क्षेत्रेषु सान्तरद्वीपेषु जन्मतो मनुष्या भवन्ति । संहरणविद्यर्द्धियोगात् तु सर्वेष्वर्धतृतीयेषु द्वीपेषु समुद्रद्वये च समन्दरशिखरेष्विति । भारतका हैमवतका इत्येवमादयः क्षेत्रविभागेन । जम्बूद्वीपका लवणका इत्येवमादयो द्वीपसमुद्रविभागेनेति ॥ १४ ॥

मनुष्याणां स्थानम्

टी०—मानुषोत्तरगिरिमर्यादाव्यवच्छिन्नाः, पञ्चत्रिंशत्सु भरतक्षेत्रादिषु, सान्तरद्वीपेषु, जन्मासादयन्ति मनुष्याः, एतेन भाष्येण न व्याप्तिरर्धतृतीयद्वीपानां समुद्रस्य दर्शिता । अधुना व्याप्तिमादर्शयति—संहरणविद्यर्द्धियोगात् त्वित्यादि । सर्वत्र संहरणादिभिः कारणैः सन्निधानं स्यान्मनुष्याणामिति । एवमेषां स्थानानि निरूप्य मनुष्याणां क्षेत्रादिविभागेन भेदमाख्याति—भारतका इत्यादि सुज्ञानम् ॥ १४ ॥

अधुनैषां क्षेत्रादिकृत एव विभागो विशेष्यते कर्मनिर्वृत्तिसंश्रयेण, अतस्तदाख्यानायाह—

## सूत्रम्-आर्या म्लेच्छाश्च ॥ ३-१५ ॥

टी०—चशब्दोऽनेन भेदत्वमुभयोरापादयति ।

भा०—द्विविधा मनुष्या भवन्ति—आर्या म्लेच्छाश्च । तत्रार्याः षड्विधाः—क्षेत्रार्याः, जात्यार्याः, कुलार्याः, कर्मार्याः, शिल्पार्याः, भाषार्या इति । तत्र क्षेत्रार्याः पञ्चदशसु कर्मभूमिषु जातास्तथा भरतेष्वर्धषड्विंशतिषु जनपदेषु जाताः शेषेषु च चक्रवर्तिविजयेषु । जात्यार्या इक्ष्वाकवो विदेहा हरयोऽम्बष्ठा ज्ञाताः कुरवः बुंवनाला[1] उग्रा भोगा[2] राजन्या इत्येवमादयः । कुलार्याः कुलकराः चक्रवर्तिनो बलदेवा वासुदेवा ये चान्ये आ तृतीयादा पञ्चमादा सप्तमाद् वा कुलकरेभ्यो वा विशुद्धान्वयप्रकृतयः । कर्मार्या यजनयाजनाध्ययनाध्यापनप्रयोगकृषिलिपिवाणिज्ययोनिपोषणवृत्तयः । शिल्पार्यास्तन्तुवाय-कुलाल-नापित-तुन्नवाय-देवटादयोऽल्पसावद्याः अगर्हिताजीवाः । भाषार्या नाम ये शिष्टभाषानियतवर्णं लोकरूढस्पष्टशब्दं पञ्चविधानामप्यार्याणां संव्यवहारं भाषन्ते ॥

मनुष्यभेदाः क्षेत्रार्यादिकाश्च

टी०—द्विविधा इत्यादि भाष्यम् । तत्रार्धषड्विंशतिजनपदजाताः भूयसा आर्याः, अन्यत्र जाता म्लेच्छाः, तत्र क्षेत्र-जाति-कुल-कर्म-शिल्प-भाषा-ज्ञानदर्शनचारित्रेषु शिष्टलोकन्यायधर्मानपेताचरणशीला आर्याः, एतद्विपरीतास्तु म्लेच्छा भवन्त्यव्यक्तानियतभाषाचेष्टत्वात् । तत्रा-

---

१ 'बुचनाला' इति क-पाठः, 'बुंवुनाला' इति तु घ-पाठः । २ 'भोजा' इति क-पाठः ।

र्याः षड्विधा इत्यादि। क्षेत्र-जाति-कुल-कर्म-शिल्प-भाषाभेदेन, तत्र क्षेत्रार्या इत्यादि सुज्ञानम्। जात्यार्या इक्ष्वाकव इत्यादि। सर्वे एते जातिभेदाः केनचिन्निमित्तान्तरेणाध्यवसेयाः। कुलार्या इत्यादि। अत्रापि निमित्तभेदेन भिद्यन्ते। अपरे परिभाषन्ते—पित्रन्वयो जातिः, मात्रन्वयः कुलम्। कर्मार्या इत्यादि। अनाचार्यकं किल कर्म तत्रार्याः कर्मार्याः शिल्पार्या इत्यादि। आचार्योपदेशात् शिक्षितं शिल्पं तन्तुवायादि तत्रार्याः शिल्पार्याः। भाषार्या नामेत्यादि। शिष्टाः सर्वातिशयसम्पन्ना गणधरादयः तेषां भाषा संस्कृताऽर्धमागधिकादिका च, तत्र शिष्टभाषानियता अकारादयो वर्णा विशिष्टेन पौर्वापर्येण सन्निवेशिता यस्य शब्दप्रधानसंव्यवहारस्यासौ शिष्टभाषानियतवर्णस्तं लोकरूढस्पष्टशब्दं लोकरूढः-अत्यन्तप्रसिद्धः संव्यवहारेषु स्पष्टः-स्फुटो नाव्यक्तो बालभाषावत् लोकरूढः स्पष्टः शब्दो यस्मिन् संव्यवहारे तमेवंविधम्, पञ्चविधानामप्यार्याणां क्षेत्रादिभेदभाजामनन्तरोक्तानां संव्यवहारमागच्छ याहीदं कुरु मैवं कार्षीरित्येवमादिकं भाषन्ते ये ते भाषार्याः॥

भा०—अतो विपरीता म्लिशः॥

टी०—उक्तक्षेत्र-जाति-कुल-कर्म-शिल्प-भाषाव्यतिरिक्तक्षेत्रादिषट्कभाजः सर्वे म्लिशो भवन्ति, शक-यवन-किरात-काम्बोज-बाह्लीकादयोऽनेकभेदाः, तथाऽन्तरद्वीपकाः किल म्लेच्छा एव, क्षेत्रादिषट्कविपर्यासात्।

अन्तरद्वीपकाः

भा०—तद्यथा—हिमवतः प्राक् पश्चाच्च चतसृषु विदिक्षु त्रीणि योजनशतानि लवणसमुद्रमवगाह्य चतसृणां मनुष्यविजातीनां चत्वारोऽन्तरद्वीपा भवन्ति, त्रियोजनशतविष्कम्भायामाः। तद्यथा—एकोरुकाणां आभासिकानां लाङ्गूलिनां विषाणिनामिति १। चत्वारि योजनशतान्यवगाह्य चतुर्योजनशतायामविष्कम्भाः।[1] एवमेव हयकर्णानां गजकर्णानां गोकर्णानां शष्कुलीकर्णानामिति २। पञ्च योजनशतान्यवगाह्य पञ्चयोजनशतायामविष्कम्भा एवान्तरद्वीपाः। तद्यथा-[2]आदर्श-मेष-हय-गजमुखनामानः ३। षड् योजनशतान्यवगाह्य तावदायामविष्कम्भा एवान्तरद्वीपाः। तद्यथा-[3]अश्व-हस्ति-सिंह-व्याघ्रमुखनामानः ४। सप्त[4] योजनशतान्यवगाह्य सप्तयोजनशतायामविष्कम्भा एवान्तरद्वीपाः। तद्यथा-अश्वकर्ण-सिंहकर्ण-हस्तिकर्ण-कर्णप्रावरणनामानः ५। अष्टौ योजनशतान्यवगाह्याष्टयोजनशतायामविष्कम्भा एवान्तरद्वीपाः। तद्यथा—उल्कामुख-विद्युज्जिह्व-मेषमुख-विद्युद्दन्तनामानः ६। नव योजनशतान्यवगाह्य नवयोजनशतायामविष्कम्भा एवान्तरद्वीपा भवन्ति। तद्यथा—[5]घनदन्त-गूढदन्त-[6]श्रेष्ठदन्त-शुद्धदन्तनामानः ७।

---

१ 'एवान्तरद्वीपाः, तद्यथा' इति घ-पाठः। २ गजमुखानां व्याघ्रमुखानामादर्शमुखानां गोमुखानामिति' इति घ-पाठः। ३ 'अश्वमुखानां हस्तिमुखानां सिंहमुखानां व्याघ्रमुखानामिति' इति घ-पाठः। ४ 'सप्त शतान्यवगाह्य' इति क-पाठः। ५ 'घनदन्त-श्रेष्ठदन्त' इति क-पाठः। ६ 'विशिष्टदन्त' इति घ-पाठः।

एकोरुकाणामेकोरुकद्वीपः । एवं शेषाणामपि स्वनामभिस्तुल्यनामानो वेदितव्याः । शिखरिणोऽप्येवमेवेत्येवं षट्पञ्चाशदिति ॥ १५ ॥

टी०—तद्यथा-हिमवतः प्राक् पश्चाच्च विदिक्षु इत्यादि भाष्यम् । हिमवतः प्राग्भागे पश्चाद्भागे च विदिक्षु पूर्वोत्तरादिकासु चतसृषु, त्रीणि योजनशतानि लवणजलधिमवगाह्य द्वीपकाः प्रथमतः सन्निविष्टास्तासां मनुष्यजातीनामेकोरुकादिकानाम्, तत्र पूर्वोत्तरस्यां दिशि त्रीणि योजनशतान्यवगाह्य लवणसागरजलं त्रिशतायामविष्कम्भः प्रथम एकोरुकाभिधानो द्वीप एकोरुकपुरुषाणामधिवासः द्वीपनामतः पुरुषनामानि, ते तु सर्वाङ्गोपाङ्गसुन्दरा दर्शनमनोरमणाः नैकोरुका एवेत्येवं शेषा अपि वाच्याः, तथा दक्षिणपूर्वस्यां दिशि लवणजलमवगाह्य त्रीणि शतानि त्रिशतायामविष्कम्भः प्रथमो द्वीप आभासिकाभिधान आभासिकमनुष्यावासः, तथा दक्षिणापरस्यां दिशि हिमवतस्त्रीणि शतानि लवणजलमवगाह्य त्रिशतायामविष्कम्भो लाङ्गूलिकाभिधानः प्रथमद्वीपो लाङ्गूलिकमनुष्यावासः, तथोत्तरापरस्यां त्रीणि शतान्यवगाह्य लवणजलं त्रिशतायामविष्कम्भः प्रथमद्वीपो वैषाणिकाभिधानः वैषाणिकमनुष्यावासः। एवं हयकर्ण-गजकर्ण-गोकर्ण-शष्कुलीकर्णाश्चत्वारि योजनशतान्यवगाह्य हिमवतो लवणोदधिं पूर्वोत्तरादिकासु विदिक्षु चतुर्योजनशतायामविष्कम्भाश्चत्वारो द्वीपा भवन्ति, एवं शेषचतुष्काण्यपि विभजनीयानि यावत् सप्तमो द्वीपः शतानि नवावगाह्य लवणजलधिं नवयोजनशतायामविष्कम्भो विदिशि विदिशि भवतीति,आदर्शमुख-मेषमुख-हयमुख-गजमुखाः अश्वमुख-हस्तिमुख-सिंहमुख-व्याघ्रमुखाः अश्वकर्ण-सिंहकर्ण-हस्तिकर्ण-कर्णप्रावरणाः उल्कामुख-विद्युज्जिह्व-मेषमुख-विद्युद्दन्ताः धनदन्त-गूढदन्त-विशिष्टदन्त-शुद्धदन्ताख्याः।एते च युग्मप्रसवाः पल्योपमासङ्ख्येयभागायुषोऽष्टधनुःशतोच्चाः पुरुषा भवन्ति । एवमेवाष्टाविंशतिरन्तरद्वीपकानां हिमवद्गिरिप्रागपरपर्यन्तप्रवाहा भवन्त्युक्तेन न्यायेन । तथैरावतक्षेत्रविभागकारिणः शिखरिणोऽप्येवमेव पूर्वोत्तरादिविदिक्षु क्रमेणामुनैव नामकलापेन चान्तरद्वीपकानामष्टविंशतिर्भवत्येकत्र षट्पञ्चाशदन्तरद्वीपका भवन्ति । एतच्चान्तरद्वीपकभाष्यं प्रायो विनाशितं सर्वत्र कैरपि दुर्विदग्धैर्येन षण्णवतिरन्तरद्वीपका भाष्येषु दृश्यन्ते । अनार्षं चैतदध्यवसीयते जीवाभिगमादिषु षट्पञ्चाशदन्तरद्वीपकाध्ययनात्, नापि वाचकमुख्याः सूत्रोल्लङ्घनेनाभिदधत्यसम्भाव्यमानत्वात्, तस्मात् सैद्धान्तिकपाशैर्विनाशितमिदमिति ॥ १५ ॥

तदेतस्मिन्नार्यानार्यविकल्पे मनुष्यक्षेत्रे काः कर्मभूमयोऽकर्मभूमयो वेत्यत आह—

**सूत्रम्—भरतैरावतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः ॥ ३–१६ ॥**

भा०—मनुष्यक्षेत्रे भरतैरावतविदेहाः पञ्चदश कर्मभूमयो भवन्ति । अन्यत्र देवकुरूत्तरकुरुभ्यः ।

---

१ 'आभाषिक' इति क-पाठः ।

टी०—मनुष्यक्षेत्र इत्यादि भाष्यम् । अर्धतृतीयद्वीपाभ्यन्तरे पञ्च भरतानि पञ्चैरावतानि पञ्च विदेहाः पञ्चदश कर्मभूमयो भवन्ति, कात्स्न्र्येन प्राप्ते कर्मभूमित्वे विदेहानामपवादः क्रियते—देवकुरूत्तरकुरुवर्जा विदेहाः कर्मभूमयो भवन्तीति, तदन्तःपातित्वान्निषेधः ॥

अथ कः कर्मभूमिशब्दार्थ इत्यत आह—

कर्माकर्मभूमिस्वरूपम्

**भा०—संसारदुर्गान्तगमकस्य सम्यग्दर्शनज्ञानचारित्रात्मकस्य मोक्षमार्गस्य ज्ञातारः कर्तार उपदेष्टारश्च भगवन्तः परमर्षयस्तीर्थकरा अत्रोत्पद्यन्ते । अत्रैव जाताः सिद्ध्यन्ति नान्यत्र, अतो निर्वाणाय कर्मणः सिद्धिभूमयः कर्मभूमय इति। शेषास्तु विंशतिर्वंशाः सान्तरद्वीपा अकर्मभूमयो भवन्ति ।**

टी०—संसारदुर्गान्तगमकस्येत्यादि । मोक्षमार्गो विशिष्यते, संसारो नारकादिभेदः स एव दुर्ग-गहनमनेकजातिप्रमुखत्वाद् दुःखात्मकत्वाच्च तस्यान्तः-पारः संसारदुर्गान्तस्तं संसारदुर्गान्तं गमयति—प्रापयति यस्तस्य संसारदुर्गान्तगमकस्य **मोक्षमार्गस्य**—सम्यक्त्वज्ञानचरणात्मकस्येति मोक्षाङ्गानामियत्तामावेदयति, एवंविधस्य मोक्षपथस्य, **ज्ञातारस्तीर्थकरा** यथावदवगन्तार इत्यर्थः । **कर्तार** इति प्रणेतारः प्रदर्शयितार इतियावत् नित्यत्वात् प्रवचनार्थस्येति, सम्यक्त्वाद्यात्मकं तीर्थं तत्प्रणयनात् तीर्थकरा भवन्ति, गणधरादिप्रव्राजनाद् वा, वाग्योगेन चोपदिशन्ति भगवन्त इत्युपदेष्टारः श्रुतज्ञानाभावादिति सूचयति, यशोलक्ष्म्यादियोगाद् **भगवन्तः**, **परमर्षयः** कृतार्थत्वे सति सन्मार्गोपदेशेन भव्यसत्त्वाभ्युद्धरणात् तीर्थकरणहेतवस्तच्छीलास्तदनुलोमवृत्तयो वा **तीर्थकरा अत्रोत्पद्यन्ते** पञ्चदशसु क्षेत्रेषु, एतेष्वेव च पुनः सकलकर्मक्षयं विधाय सिद्धिधामाभिधावन्ति **नान्यत्र** क्षेत्र इति । **अतो निर्वाणाय कर्मणः सिद्धिभूमयः कर्मभूमय** इति । अतः सकलकर्माग्निर्विध्यापनाय सिद्धिप्राप्त्यै भूमयः कर्मभूमयोऽभिधीयन्त इति । परिशेषलब्धमकर्मभूमिशब्दार्थमाख्याति—**शेषास्त्वि**त्यादि । जम्बूद्वीपे हैमवत-हरिवर्ष-रम्यक-हैरण्यवताख्याश्चत्वारो वंशाः, एत एव धातकीखण्डेऽष्टौ द्विगुणाः पुष्करार्धे चाष्टावेकत्र **विंशतिर्वंशाः** सहान्तरद्वीपैरेकोरुकादिभिः षट्पञ्चाशद्भिरकर्मभूमयो भवन्ति, तीर्थकरजन्मादिरहितत्वात् । पूर्वापोदितमर्थमुपसंहरति—

**भा०—देवकुरूत्तरकुरवस्तु कर्मभूम्यभ्यन्तरा अप्यकर्मभूमय इति ॥ १६॥**

टी०—सर्वदाचरणप्रतिपत्तेरभावादित्यवगमयति ॥ १६ ॥

अथैते मनुष्या आर्यादिभेदवर्तिनः कियन्तं कालमनुपाल्यायुःप्राणान् विजहतीत्याह--

## सूत्रम्-नृस्थिती परापरे त्रिपल्योपमान्तर्मुहूर्ते ॥ ३-१७ ॥

भा०—नरो नरा मनुष्या मानुषा इत्यनर्थान्तरम् । मनुष्याणां परा स्थितिस्त्रीणि पल्योपमानि, अपरा अन्तर्मुहूर्तेति ॥ १७ ॥

टी०—नरो नरा इत्यादि भाष्यम् । पर्यायाख्यानेन व्याख्यातमेतत् नृशब्दस्य, परा-

नरायुषोमानम्

उत्कृष्टा स्थितिरायुषोऽवस्थानं जीवितकालः त्रीणि पल्योपमानि मनुष्याणाम्, एतानि चाद्धापल्योपमेन जीवानामायूंषि गण्यन्ते, अपरा अन्तर्मुहूर्ता जघन्या स्थितिरायुषोऽन्तर्मुहूर्तपरिमाणा भवतीति ॥ १७ ॥

## सूत्रम्—तिर्यग्योनीनां च ॥ ३-१८ ॥

तिर्यगायुर्मानम्

भा०—तिर्यग्योनीनां च परापरे स्थिती त्रिपल्योपमान्तर्मुहूर्ते भवतः यथासङ्ख्यमेव । पृथक्करणं यथासङ्ख्यदोषविनिवृत्त्यर्थम्, इतरथा ह्येकमेव सूत्रमभविष्यत् । उभयत्र चोभे यथासंख्यं स्यातामिति ।

टी०—तिर्यग्योनीनामप्यत्रैवोच्यते स्थितिरायुषः समानप्रक्रमत्वात् । तिर्यग्योनीनां चेत्यादि भाष्यम् । तिर्यग्योनयः—पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियाः तेषामपि परापरे स्थिती जीवितव्यस्य त्रिपल्योपमान्तर्मुहूर्ते भवतः यथासङ्ख्यम् उत्कृष्टजघन्ये स्थिती बोद्धव्ये, पृथग्योगकरणं यथासङ्ख्यदोषविनिवृत्त्यर्थमित्यादि । नृतिर्यग्योनीनां स्थिती परापरे त्रिपल्योपमान्तर्मुहूर्ते इत्येवं न्यासे सति त्रिपल्योपमा परा स्थितिर्मनुष्याणाम्, अपरा स्थितिस्तिरश्चामन्तर्मुहूर्तप्रमाणेति एवं स्यात् सूत्रार्थ इत्याचार्याभिप्रायः। न खल्वेवमपि न्यस्यमाने कश्चिद् दोषः, स्थिती परापरे इति समुदितमेवेदं समासपदत्वादभिसम्भन्त्स्यते, नृणां स्थिती परापरे त्रिपल्योपमान्तर्मुहूर्ते तिरश्चां च परापरे त्रिपल्योपमान्तर्मुहूर्ते, व्याख्यानतो वा विच्छेदः आर्षानुवादित्वाद् वाऽस्य सूत्रप्रबन्धस्येति ।

भा०-द्विविधा चैषां मनुष्यतिर्यग्योनिजानां स्थितिः-भवस्थितिः कायस्थितिश्च । मनुष्याणां यथोक्ते त्रिपल्योपमान्तर्मुहूर्ते परापरे भवस्थिती । कायस्थितिस्तु परा सप्ताष्टौ वा भवग्रहणानीति । तिर्यग्योनिजानां च यथोक्ते समासतः परापरे भवस्थिती ।

टी०-द्विविधा चैषामित्यादि भाष्यम् । नृतिरश्चां द्विप्रकारा स्थितिः-भवस्थितिः कायस्थितिश्च । तत्र भवस्थितिर्मनुष्यजन्म लब्ध्वा तिर्यग्जन्म वा कियन्तं कालं जीवति

प्राणी जघन्येनोत्कर्षेण वेति। कायस्थितिर्मनुष्यो भूत्वा तिर्यग्योनिर्वा मरणमनुभूय पुनर्मनुष्येष्वेव मनुष्यः तिर्यक्ष्वेव तिर्यग्योनिर्नैरन्तर्येण कतिकृत्वः समुत्पद्यते। तत्र मनुष्याणां यथोक्ते त्रिपल्योपमान्तर्मुहूर्ते परापरे भवस्थिती, कायस्थितिः सप्ताष्टौ वा भवग्रहणानि प्रकर्षतः सप्ताष्टौ वेति नैरन्तर्येण मानुषः स्यात्, कथं पुनरिदं भाव्यते-पूर्वकोट्यायुर्मनुष्यो मृत्वा पुनः पुनः पूर्वकोट्यायुरेव मनुष्यः सप्तकृत्वः प्रादुरस्तीति, अष्टमभवे तु देवकुरूत्तरकुरुषु उत्पद्यते पश्चाद् देवलोकं गच्छति। तिर्यग्योनिजानां चेत्यादि। उक्ते भवस्थिती सङ्ग्रहतः।

पृथ्व्यादीनामायुर्मानम्

भा०—व्यासतस्तु शुद्धपृथिवीकायस्यपरा द्वादश वर्षसहस्राणि,खरपृथिवीकायस्य द्वाविंशतिः,अपकायस्य सप्त,वायुकायस्य त्रीणि,तेजःकायस्य त्रीणि रात्रिंदिनानि,वनस्पतिकायस्य दश वर्षसहस्राणि। एषां कायस्थितिरसङ्ख्येयाः अवसर्पिण्युत्सर्पिण्यः वनस्पतिकायस्यानन्ताः। द्वीन्द्रियाणां भवस्थितिर्द्वादश वर्षाणि। त्रीन्द्रियाणामेकोनपञ्चाशद् रात्रिंदिनानि। चतुरिन्द्रियाणां षण्मासाः । एषां कायस्थितिः सङ्ख्येयानि वर्षसहस्राणि। पञ्चेन्द्रियतिर्यग्योनिजाः पञ्चविधाः। तद्यथा—मत्स्याः उरगाः परिसर्पाःपक्षिणश्चतुष्पदा इति। तत्र मत्स्यानामुरगाणां भुजगानां च पूर्वकोट्येव। पक्षिणां पल्योपमासङ्ख्येयभागः। चतुष्पदानां त्रीणि पल्योपमानि गर्भजानां स्थितिः। तत्र मत्स्यानां भवस्थितिः पूर्वकोटिस्त्रिपञ्चाशदुरगाणां द्विचत्वारिंशत् भुजगानां द्विसप्ततिः पक्षिणां स्थलचराणां चतुरशीतिर्वर्षसहस्राणि सम्मूर्च्छिमानां भवस्थितिः। एषां कायस्थितिः सप्ताष्टौ भवग्रहणानि। सर्वेषां मनुष्यतिर्यग्योनिजानां कायस्थिति रप्यपरा अन्तर्मुहूर्तैवेति ॥ १८ ॥

टी०—व्यासतस्तु शुद्धपृथिव्या द्वादश वर्षसहस्राणि खरधरणेर्द्वाविंशतिरित्यवमादि सुज्ञानम्, एषां पृथिव्यप्तेजोवायुप्रत्येकवनस्पतीनां कायस्थितिरसङ्ख्येया अवसर्पिण्युत्सर्पिण्यः साधारणवनस्पतेरनन्ता अवसर्पिण्युत्सर्पिण्यः। द्वीन्द्रियाणामित्यादि सुज्ञाना भवस्थितिः। एषां कायस्थितिः सङ्ख्येयानि वर्षसहस्राणि पञ्चेन्द्रियेत्यादि सुज्ञानम्। सप्ताष्टौ वा भवग्रहणानि मनुष्यवद् भावनीयानि। सर्वेषामित्यादि मनुष्यतिरश्चामपरा कायस्थितिर्जघन्याऽन्तर्मुहूर्तप्रमाणैव भवतीति ॥ १८ ॥

ग्रन्थाग्रमङ्कतः ८२१२ (?)

॥ इति श्रीतत्त्वार्थसूत्रेऽर्हत्प्रवचने भाष्यानुसारिण्यां टीकायां लोकप्रज्ञप्तिर्नामाध्यायस्तृतीयः॥ ३ ॥

## ॥ इति तृतीयोऽध्यायः॥

---

॥ श्रीपरमात्मने नमः ॥

# चतुर्थोऽध्यायः ४

अध्यायोपोद्घातः

भा०—अत्राह–उक्तं भवता 'भवप्रत्ययोऽवधिर्नारकदेवानाम्' ( अ० १, सू० २२ ) इति ॥ तथौदयिकेषु भावेषु देवगतिरिति ( अ० २, सू० ६ )॥ 'केवलिश्रुतसङ्घधर्मदेवावर्णवादो दर्शनमोहस्य' (अ० ६, सू० १४ ) ॥ सरागसंयमादयो देवस्य ( अ० ६, सू० २० )॥ 'नारकसम्मूर्च्छिनो नपुंसकानि, न देवाः' ( अ० २, सू० ५०–५१ ) । तत्र के देवाः कतिविधा वेति ?। अत्रोच्यते—

टी०–अत्राह–उक्तं भवतेत्यादि सम्बन्धग्रन्थः। उक्तमिदं प्रथमे ( सू० २२ ) भवप्रत्ययोऽवधिर्नारकदेवानामिति । तथा द्वितीये (सू०६) औदयिकभावविचारप्रस्तावे देवगतिरित्युक्तम्। तथा षष्ठे(सू०१४)वक्ष्यति-केवलिश्रुतसङ्घधर्मदेवावर्णवादो दर्शनमोहस्यास्रवो भवति, तथा तत्रैव सरागसंयमसंयमासंयमाकामनिर्जरा[विरत] बालतपांसि (च) देवस्य (अ० ६, सू० २०) आयुष आस्रवो भवति, तथा द्वितीये (सू० ५०-५१) नारकसम्मूर्च्छिनो नपुंसकानि, न देवा इति, एवमनेकसूत्रोपात्तदेवशब्दश्रवणाद् आहिततद्विषयजिज्ञासः प्रश्नयति–तत्र के देवाः कतिविधा वेति। तेषु-सूत्रस्थानेषु, के देवाः प्रतिपत्तव्याः–किंस्वरूपाः ? क्रीडाद्यर्थबहुत्वादिति, निरूपितस्वभावाश्च ते किमेकरूपा उत भेदभाज इति द्वितीयः प्रश्नः प्रावृतत्, एवं प्रश्नद्वयोपन्यासानन्तरं सूरिराह–अत्रोच्यते–प्रश्नद्वयेऽप्यनुरूपं प्रतिवचनमिति, प्रश्नद्वयप्रतिवचनदिदित्सया सूत्रमुपन्यस्यति–देवाश्चतुर्निकाया इति। अथवा उक्तं लोकद्वयविधानं भूद्वीपसागरविन्यासेन। अधुनोर्ध्वलोकाभिधानावसरस्तदभिधित्सया सूत्रप्रणयनम्।

## सूत्रम्—देवाश्चतुर्निकायाः ॥ ४–१ ॥

टी०– नन्वधोलोकतिर्यग्लोकयोरपि देवाः सन्ति, तत् कथमूर्ध्वलोक एवाभिधास्यते चतुर्थाध्याय इति ?। उच्यते–वैमानिकानधिकृत्येदमुच्यते ऊर्ध्वलोकावसर इति, प्रधानत्वात्, अन्यथा भवनपतयोऽधोलोके, व्यन्तरज्योतिष्कास्तिर्यग्लोक इति।

देवानां भेदप्रतिपादनम्

भा०—देवाश्चतुर्निकाया भवन्ति। तान् पुरस्ताद् वक्ष्यामः॥१॥

टी०—देवाश्चतुर्निकाया इत्यादि भाष्यम् । दीव्यन्तीति देवाः, स्वच्छन्दचारित्वात्, अनवरतक्रीडासक्तचेतसः क्षुत्पिपासादिभिर्नात्यन्तमाघ्राता इति भावार्थः। द्योतन्ते वा भास्वरशरीरत्वादस्थिमांसासृक्प्रबन्धरहितत्वात् सर्वाङ्गोपाङ्गसुन्दरत्वाच्च देवाः । अथवा विना विद्यामन्त्राञ्जनादिभिः पूर्वकृततपोऽपेक्षजन्मलाभसमनन्तरमेवाकाशगतिभाजो देवाः, सा ह्यतिशयवती गतिस्तेषामनालम्ब्राकाशचारिणाम्, यथोक्तमागमे ( भग० सू०५८४ )—"[1]केमहालए णं भंते ! लोए पन्नत्ते ? गोयमा ! अयं च णं जम्बुद्दीवे दीवे सव्वदीवसमुद्दाणं मज्झे खुड्डुलए पण्णत्ते । तेणं कालेणं तेणं समएणं छद्देवा[2] महिड्ढिया जंबुद्दीवे दीवे मन्दरपव्वए मंदरचूलियं सव्वओ समन्ता संपरिक्खिवित्ताणं[3] चिट्ठेज्जा, अहे णं चत्तारिदिसाकुमारीमहयरियाओ चत्तारि बलिपिंडे गहाय जंबुद्दीवस्स दीवस्स चउसुवि दारेसु बहियाभिमुहीओ ठिच्चा ते चत्तारि बलिपिंडे जमगसमगं बहियाभिमुहे पवाहेज्ज । पभू णं गोयमा ! ततो एगमेगे देवे ते चत्तारिवि बलिपिंडे धरणितलमसंपत्ते खिप्पामेव पडिसाहरित्तए । ते णं गोयमा ! उक्किट्ठाए जाव देवगतीए एगे पुरत्थाभिमुहे पयाते, एवं छस्सुवि दिसासु पयाता । तेणं कालेणं तेणं समएणं वाससहस्साउए दारए पयाते, तए णं तस्स दारगस्स अम्मापियरो पहीणा भवन्ति, नो चेव णं ते देवा लोयंतं संपाउणंति, तए णं तस्स दारगस्स आउए पहीणे भवति, नो चेव णं ते देवा लोयंतं संपाउणंति, तए णं तस्स दारगस्स अट्ठिमिंजे पहीणा भवन्ति, नो चेव णं ते लोअंतं संपाउणंति, तए णं तस्स दारगस्स सत्तमेऽवि कुलवंसे पहीणे भवति, नो चेव णं ते लोयंतं संपाउणंति, तते णं तस्स दारगस्स नामगोत्तेऽवि पहीणे भवति, नो चेव णं संपाउणंति, तेसि णं भंते ! देवाणं किं गए बहुए अगए बहुए ? गोयमा ! गए बहुए, नो अगए बहुए, गतातो से अगते असंखिज्जतिभागे, अगतातो से गए असङ्खेज्जगुणे, एवं महालए गोयमा ! लोए पण्णत्ते" । तथा विमानमहत्त्वं प्रज्ञापना-

---

१ कियन्महान् भदन्त ! लोकः प्रज्ञप्तः ? गौतम ! अयं च जम्बूद्वीपो द्वीपः सर्वद्वीपसमुद्राणां मध्ये क्षुल्लकः प्रज्ञप्तः । तस्मिन् काले तस्मिन् समये षड् देवा महर्द्धिका जम्बूद्वीपे द्वीपे मन्दरपर्वते मन्दरचूलिकां सर्वतः समन्तात् संपरिक्षिप्य तिष्ठेयुः, अथ चतस्रः दिक्कुमारीमहत्तरिकाः चतुरो बलिपिण्डान् गृहीत्वा जम्बूद्वीपस्य द्वीपस्य चतुर्ष्वपि द्वारेषु बहिरभिमुख्यः स्थित्वा तान् चतुरो बलिपिण्डान् युगपद् बहिरभिमुखान् प्रवाहयेयुः । प्रभुर्गौतम! ततः एकैकः देवः तान् चतुरोऽपि बलिपिण्डान् धरणीतलमसंप्राप्तान् क्षिप्रमेव प्रतिसंहर्तुम् । ते गौतम ! उत्कृष्टया यावद् देवगत्या एको देवः पूर्वाभिमुखः प्रयातः, एवं षट्स्वपि दिक्षु प्रयाताः, तस्मिन् काले तस्मिन् समये वर्षसहस्रायुष्को दारकः प्रजातः। ततः तस्य दारकस्य मातापितरौ प्रहीणौ भवतः, नैव ते देवा लोकान्तं संप्राप्नुवन्ति, ततः तस्य दारकस्य आयुः प्रहीणं भवति, नैव ते देवा लोकान्तं संप्राप्नुवन्ति, ततः तस्य दारकस्य अस्थिमज्जाः प्रहीणा भवन्ति, नैव ते ( देवा ) लोकान्तं संप्राप्नुवन्ति, ततः तस्य दारकस्य सप्तमोऽपि कुलवंशः प्रहीणो भवति, नैव ते लोकान्तं संप्राप्नुवन्ति, ततः तस्य दारकस्य नामगोत्रमपि प्रहीणं भवति, नैव संप्राप्नुवन्ति, तेषां भदन्त ! देवानां किं गतं बहुकं अगतं बहुकं ? गौतम ! गतं बहुकं, न अगतं बहुकं, गतात् तद् अगतं असंख्येयभागे, अगतात् तद् गतं असंख्येयगुणं, एवंमहान् गौतम ! लोकः प्रज्ञप्तः ।

२ 'बलदेवा' इति क-पाठः । ३ 'वेत्ताणं' इति क-पाठः ।

याप्युक्तम्–के[1]महालया णं भंते ! विमाणा पण्णत्ता ? गोयमा ! अयण्णं जंबुद्दीवे दीवे सव्व-दीवसमुद्दाणं मज्झे खुड्डुलए, देवे महिड्ढिए जाव महाणुभागे जाव इणामेवत्तिकट्टु केवलकप्पं जंबुद्दीवं दीवं तिहिं अच्छराणिवातेहिं तिसत्त[2]खुत्तो अणुपरियट्टित्ता णं हव्वमागच्छेज्जा, से णं देवे ताए उक्किट्ठाए तुरियाए चंडाए चवलाए सीहाए उद्धुताए जयणाए छेयाए दिव्वाए देवगतीए जाव एगाहं वा बियाहं वा तियाहं वा उक्कोसेणं छम्मासे वीतिवएज्जा अत्थेगइयं विमाणं वीइवएज्जा, अत्थेगइयं नो वीतिवएज्जा, एमहालया णं गोयमा ! विमाणा पण्णत्ता ''। एवंविधाः किल गतयो विमध्यमा देवानाम्, अन्येषां उत्कृष्टतमाः सन्ति। एवमन्येऽपि यथासम्भवं विजिगीषादयो धात्वर्था वाच्याः। अनेन प्रथमप्रश्नार्थप्रतिवचनमादर्शितम्, यतो नामकर्मोदयजनिता देवगतयः सातिशयक्रीडागद्युतितिस्वभावाः प्रतिविशिष्टस्थानाध्यासिनः सुखप्राया देवा भवन्तीति। चतुर्निकाया देवा भवन्तीत्यनेन द्वितीयप्रश्नप्रतिवचनं प्रथयति, चत्वारो निकाया-वासा येषां ते चत्वारो वा सङ्घास्ते चतुर्निकायाः, वा[3]सो ह्युत्पादस्थानमेषां विभिन्नः, भवनपतयो रत्नप्रभायामासादयन्ति जन्मोर्ध्वमधश्च सहस्रमपहाय व्यन्तरास्त्वस्यामेवोपरि यत् परित्यक्तं सहस्रं तस्याध ऊर्ध्वं च योजनशतमेकैकमपहाय मध्येऽष्टासु योजनशतेषु जन्म प्रतिलभन्ते, ज्योतिष्कास्तु समतलाद् भूभागात् सप्त शतानि नवत्यधिकानि योजनानामारुह्य दशोत्तरयोजनशतपृथौ नभोदेशे लोकान्तात् किञ्चिन्न्यूने जन्मागृह्णन्ति। वैमानिका रज्जुमध्यर्धामधिरुह्यामुतः सौधर्मादिषु कल्पेषु सर्वार्थसिद्धिविमानपर्यवसानेषूत्पद्यन्ते जन्मतः। तदेवमुत्पादनिवासभेदात् चतुर्विधा निकायाः, स्वधामसूत्पन्ना भवनपत्यादयोऽन्यत्रापि लवणजलधिमन्दरवंशधराद्रिद्रुमगहनप्रभृतिषु वसन्त्युक्तस्थानव्यतिरेकेण। अत्रैषामुत्पादो न जन्मनाऽस्तीति निवासार्थः।समूहार्थोऽपि प्रकृष्टाप्रकृष्टतद्योग्यास्रवासेवनाद् बहुलीकृतकर्मोदयापेक्षः आर्यानार्यमनुष्यसमूहभेदवद्,अतः स्वधर्मापेक्षजातिविशेषसामर्थ्यान्निकाया इति ॥ तानेतान् निकायभिन्नान् देवान् पुरो वक्ष्यामः क्रमेण, अमुनाऽत्र सूत्रेण सामान्यमात्रस्वरूपाख्यानं परिस्थूरभेदकथनं च कृतमवसेयम्॥ननु च भगवत्यां(श०१२,उ०९,सू०४६१) पञ्चविधा देवा इत्युक्तम्–''[4]कतिविधा णं भंते! देवा पण्णत्ता?गोयमा! पञ्चविधा देवा पण्णत्ता,तं-जहा–भवियदव्वदेवा नरदेवा धम्मदेवा देवाहिदेवा भावदेवा य''। तत्र भव्य-

चतुर्विधदेवानां जन्मनिवासभूमयः

देवानां पञ्चविधत्वम्

---

१ कियन्महान्तो भदन्त ! विमानाः प्रज्ञप्ताः ? गौतम ! अयं जंबूद्वीपो द्वीपः सर्वद्वीपसमुद्राणां मध्ये क्षुल्लकः, देवो महर्द्धिको यावत् महानुभागो यावत् इदमेवेतिकृत्वा केवलकल्पं जम्बूद्वीपं द्वीपं त्रिभिः अक्षरनिपातैः त्रिसप्तकृत्वः अनुपरिवर्त्य शीघ्रमागच्छेत्। स देवस्तया उत्कृष्टया त्वरितया चण्डया चपलया शीघ्रया उद्धुतया यतनया छेकया दिव्यया देवगत्या यावत् एकाहं वा द्व्यहं वा त्र्यहं वोत्कृष्टतः षण्मासं व्यतिवर्तेत कियदेकं विमानं व्यतिवर्तेत कियदेकं न व्यतिवर्तेत , इयन्महान्तो गौतम ! विमानाः प्रज्ञप्ताः।

२ 'तिहिसत्त' इति **क-ख**-पाठः। ३ 'निवासो' इति **ग**-पाठः। ४ कतिविधा भदन्त ! देवाः प्रज्ञप्ताः ? गौतम ! पञ्चविधा देवाः प्रज्ञप्ताः, तद्यथा--भव्यद्रव्यदेवा नरदेवा धर्मदेवा देवाधिदेवा भावदेवाश्च।

देवः पञ्चेन्द्रियतिर्यग्योनिजो मनुष्यो वा देवायुषि बद्धेऽनन्तरागामिजन्मनि यो देवतयोत्पत्स्यते स त्वागामिनीवृत्तिमाश्रित्य देव इति प्रज्ञायते तद्लिकत्वाद् दारुच्छेदप्रज्ञापनवत्, नरदेवाः—चक्रवर्तिनो रत्नचतुर्दशकाधिपतयः शेषमनुजोत्कृष्टत्वात्, धर्मदेवाः—साधवो यथोक्तप्रवचनार्थानुष्ठायिनः सद्धर्मप्रधानव्यवहारत्वात्, देवाधिदेवाः-तीर्थकरनामकर्मोदयवर्तिनः कृतार्थाः सदुपदेशेन भव्यसत्त्वानामनुग्राहकत्वाच्छेषदेवपूज्यत्वाच्च, भावदेवाः पुनः भवनवनचरज्योतिष्कवैमानिका देवगतिनामकर्मोदयलक्षिताः देवायुषो वेदकाः क्रीडाद्यतिशयवर्तित्वादिति, एवं पञ्चभेदेषु सत्सु देवेषु किमर्थं चतुर्निकाया इति ? उच्यते—भावदेवानामेवात्र विवक्षितत्वाच्चतुर्निकायत्वम्, तथा च पातनिकाग्रन्थे सर्वत्र भावप्रस्तावः सूरिणा दर्शितः । अपि चाद्याश्चत्वारो मनुष्या एव कश्चिदतिशयमङ्गीकृत्य देवा इति यथा तथा प्रतिपादितमेव, तस्माद् भावदेवाश्चतुर्निकाया इति युक्तमुक्तं आचार्येण, ऊर्ध्वलोकस्वरूपाख्यानप्रस्तावे च तदधिकारादिति ॥ १ ॥

अथ कथमेतत् प्रतिपत्तव्यं देवाश्चतुर्निकायाः सन्तीति ? उच्यते—तदेकदेशनिकायप्रत्यक्षत्वात् तत्सद्भावावगमकोऽयमनुमानभूत उपलभ्यते—

## सूत्रम्—तृतीयः पीतलेश्यः ॥ ४-२ ॥

**भा०—तेषां चतुर्णां देवनिकायानां तृतीयो देवनिकायः पीतलेश्य एव भवति । कश्चासौ ? ज्योतिष्क इति ॥ २ ॥**

**टी०—तृतीयः पीतलेश्यः**, नहि प्रत्यक्षमपह्नोतुं शक्यम्, प्रमाणज्येष्ठत्वात्, चन्द्रादित्यादिविमानानि हि प्रत्यक्षप्रमाणसमधिगम्यानि, तानि च कदाचित केनचिदधिष्ठितान्यपि कर्त्रा, निवासत्वान्नगरग्रामगेहादिवत्, ये च तेषामधिष्ठातारस्ते ज्योतिष्का देवा इति प्रतीयताम्, तच्छेषास्तु तदेकदेशदृष्टेः सेनावनादिवत् प्रतिपत्तव्या इति । तृतीय इति क्रमसन्निवेशमार्षमङ्गीकृत्येदमुच्यते, अथवा वक्ष्यमाणमिहत्यमेवाभिसन्धाय—ज्योतिष्कदेवनिकायस्तृतीय इत्युक्तम् । पीता लेश्या यस्यासौ पीतलेश्यः, इह च द्रव्यलेश्या—शरीरवर्णः प्रतिनियम्यते, नाध्यवसायविशेषः, लेश्याः षडपीष्यन्ते देवानां प्रतिनिकायमिति । **तेषां चतुर्णामित्यादि** भाष्यम् । **तेषां**—पूर्वसूत्रोपन्यस्तानां चतुःसङ्ख्यानियतानां देवसमूहानां **तृतीयो देवनिकायः पीतलेश्य एव भवतीति**, सामर्थ्यादवधारणोपपत्तेरेवशब्दो नोपात्तः, साक्षाद् दर्शितश्च सामर्थ्याल्लभ्यो विवृण्वतेति । **कश्चासौ** तृतीय इत्यविज्ञातक्रमसन्निवेशस्य नामग्राहमाचष्टे—**ज्योतिष्क इति** ॥ २ ॥

ते च निकाया यथासङ्ख्यं भवनपतिव्यन्तरज्योतिष्कवैमानिकाख्याः ।

## सूत्रम्—दशाष्टपञ्चद्वादशविकल्पाः कल्पोपपन्नपर्यन्ताः ॥ ४-३ ॥

**टी०**—स्वनिकायापान्तरालभेदनियमः क्रियतेऽमुना योगेन, अमी च दशादयो भेद-

वक्ष्यमाणाः भवनपत्यादीनाम्, अधिवासवाची चायं कल्पशब्दः । अन्ते परिगताः पर्यन्ताः, कल्पोपपन्नाः पर्यन्ता येषां त इमे कल्पोपपन्नपर्यन्ताः कल्पाश्च द्वादश वक्ष्यमाणाः सौधर्मादयोऽच्युतपर्यवसानाः, तत्पर्यन्तमेतच्चतुष्टयं भवतीत्यावेदयति, परे तु द्विविकल्पाः-ग्रैवेयकवासिनो विजयादिविमानपञ्चकनिवासिनश्च ।

भवनपत्यादिदेवानां भेदविचारः

भा०—ते च देवनिकाया यथासङ्ख्यमेवंविकल्पा भवन्ति । तद्यथा-दशविकल्पा भवनवासिनः असुरादयो वक्ष्यन्ते । अष्टविकल्पा व्यन्तराः किन्नरादयः । पञ्चविकल्पा ज्योतिष्काः सूर्यादयः । द्वादशविकल्पा वैमानिकाः कल्पोपपन्नपर्यन्ताः सौधर्मादिष्वपि[1] ॥ ३ ॥

टी०—ते च देवनिकाया इत्यादि भाष्यं सुज्ञानमेव ॥ ३ ॥

अनुधा दशादिभेदान् प्रत्येकं पुनर्विभित्सुराह—

प्रतिकल्पमिन्द्राद्या भेदाः

**सूत्रम्—इन्द्रसामानिकत्रायस्त्रिंश[2]पारिषद्यात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्बिषिकाश्चैकशः॥४–४॥**

भा०—एकैकशश्चैतेषु देवनिकायेषु देवा दशविधा भवन्ति । तद्यथा-इन्द्राः, सामानिकाः, त्रायस्त्रिंशाः, पारिषद्याः, आत्मरक्षाः, लोकपालाः, अनीकाधिपतयः, अनीकानि, प्रकीर्णकाः, आभियोग्याः, किल्बिषिकाश्चेति । तत्रेन्द्रा भवनवासिव्यन्तरज्योतिष्कविमानाधिपतयः । इन्द्रसमानाः सामानिकाः अमात्यपितृगुरूपाध्यायमहत्तरवत् केवलमिन्द्रत्वहीनाः । त्रायस्त्रिंशाः-मन्त्रिपुरोहितस्थानीयाः। पारिषद्याः-वयस्यस्थानीयाः। आत्मरक्षाः-शिरोरक्षस्थानीयाः । लोकपाला आराक्षि(क्ष)कार्थचरस्थानीयाः। अनीकाधिपतयो-दण्डनायकस्थानीयाः। अनीकानि-अनीकस्थानीयान्येव । प्रकीर्णकाः-पौरजनपदस्थानीयाः । आभियोग्याः-दासस्थानीयाः । किल्बिषाः[3]-अन्तस्थस्थानीया इति ॥ ४ ॥

टी०—एकैकशश्चैतेष्वित्यादि भाष्यम् । दशानामेकैकस्मिन् भेदे एकशो दश दशेन्द्रादयो भवन्ति भेदाः, एवमितरेष्वप्यष्टादिषु । तत्रेन्द्रा इत्यादि । इन्द्राः सामानिकादिभेदानां नवानामधिपतयः परमैश्वर्ययुक्ताः । सामानिकास्त्विन्द्रतुल्या भवन्त्यायुष्कादिभिः, केवलमिन्द्रत्वं सकलकल्पाधिपत्वं नास्ति, शेषं समानम्, अतः समानस्थाने भवाः सामानिकाः समानस्य तदादेश्चेति वचनादौपसङ्ख्यानिकष्ठक् । अन्यस्यानिर्देशादिन्द्रैः सह समानभावः प्रत्यासन्नै( त्ते ? )श्चेति, ते चामात्यपितृगुरूपाध्यायमहत्तरवद्

1 'दिष्विति' इति घ-पाठः । २ '०शत्पा०' इति ग-पाठः । ३ 'किल्बिषिका' इति घ-पाठः ।

द्रष्टव्याः, अमा सहार्थे, सह भवन्तीत्यमात्याः-कार्यालोचनसमर्थाः पिता गुरुरुपाध्यायो महत्तरश्च सर्व एते पूजनीयास्तद्वत् तेऽपि सामानिका इति। त्रयस्त्रिंशदेव **त्रायस्त्रिंशाः** स्वार्थेऽण् 'तद्धिताः' (पा० अ० ४,पा० १,सू० ७६ ) इति बहुवचननिर्देशादनुक्ततद्धितोत्पत्तिर्दृष्टशब्दान्वाख्यानाच्च, एते **मन्त्रिपुरोहितस्थानीयाः**,मन्त्रिणः-राज्यचिन्ताभराधिरूढमानसाः, पुरोहिताः-शान्तिकपौष्टिकाभिचारिककर्मकारिणः। **पारिषद्या वयस्यस्थानीयाः**,परिषदि साधवः पारिषद्याः मित्रसदृशाः। **आत्मरक्षाः शिरोरक्षस्थानीयाः** उद्यतप्रहरणा रौद्राः पृष्ठतोऽवस्थायिनः, अपायाभावात् कल्पनावैयर्थ्यमिति चेत् तद् न स्थितिमात्रपरिपालनात् प्रीतिप्रकर्षहेतुत्वाच्च। **लोकपाला आरक्षकार्थचरस्थानीयाः** स्वविषयसन्धिरक्षणनिरूपिता आरक्षकाः, अर्थचराश्चौरोद्धरणिकराजस्थानीयादयस्तत्सदृशा लोकपालाः। **अनीकाधिपतयो दण्डनायकस्थानीयाः** दण्डनायको विक्षेपाधिपतिः सेनापतिरितियावत्, अनीकान्यनीकान्येव सैन्यानीत्यर्थः, हयगजरथपदातिवाहनस्वरूपाणि प्रतिपत्तव्यानि, सूत्रे चानीकान्येवोपात्तानि सूरिणा, नानीकाधिपतयः, भाष्ये पुनरुपन्यस्तास्तदेतदेकत्वमेवानीकानीकाधिपत्योः परिचिन्त्य विवृतमेवं भाष्यकारेण, अन्यथा वा दशसङ्ख्या भिद्येत। **प्रकीर्णकाः पौरजनपदस्थानीयाः** प्रकृतिसदृशा इत्यर्थः। **आभियोग्या दासस्थानीयाः** आभिमुख्येन योगोऽभियोगः-परारिराधयिषयाभिमुखीकृतकर्मविशेषः, अभियोगकर्म आभियोग्यं तद् येषां विद्यते ते भवन्त्याभियोग्याः-कर्मकरस्थानीयाः। **अन्तस्थस्थानीयाः किल्बिषिका** इति अन्तस्थाः-चण्डालादयस्तद्वत् **किल्बिषिका** देवानां मध्य इति ॥ ४ ॥

चतुर्ष्वपि निकायेषु दशविधेन्द्रादिभेदप्रसक्ताविदमपोद्यते ।

## सूत्रम्—त्रायस्त्रिंशलोकपालवर्जा व्यन्तरज्योतिष्काः ॥ ४–५ ॥

**भा०—व्यन्तरज्योतिष्काश्चाष्टविधा भवन्ति, त्रायस्त्रिंशलोकपालवर्जा इति ॥ ५ ॥**

**टी०**—न यथासङ्ख्यमत्र प्रतिपत्तव्यम्, अनन्तरसूत्रे त्वेकशो ग्रहणाद्, अतो व्यन्तराणां त्रायस्त्रिंशा लोकपालाश्च न सम्भवन्ति ज्योतिष्काणां चेत्यतोऽष्टप्रकारा एव ॥ ५ ॥

अथ य एते विकल्पा दशादयश्चतुर्षु निकायेषूक्तास्तत्र किमेकैक इन्द्र उतान्यथेत्यत आह-पूर्वयोर्द्वीन्द्राः। अथवा निकायपारमैश्वर्याच्चतुरिन्द्रप्रसङ्गे सतीदमुच्यते—

## सूत्रम्—पूर्वयोर्द्वीन्द्राः ॥ ४–६ ॥

**भा०—पूर्वयोर्देवनिकाययोर्भवनवासिव्यन्तरयोर्देवविकल्पानां द्वौ द्वाविन्द्रौ भवतः। तद्यथा-भवनवासिषु तावद् द्वावसुरकुमाराणां इन्द्रौ भवतः-चमरो**

१ 'चेत् न' इति क-पाठः। २ 'मापाद्यते' इति क-पाठः। ३ '०शल्लोक०' इति ग-पाठः।

बलिश्च । नागकुमाराणां धरणो भूतानन्दश्च । विद्युत्कुमाराणां हरिर्हरिसहश्च । सुपर्णकुमाराणां वेणुदेवो वेणुदारी च । अग्निकुमाराणां अग्निशिखोऽग्निमाणवश्च । वातकुमाराणां वेलम्बः प्रभञ्जनश्च । स्तनितकुमाराणा सुघोषो महाघोषश्च । उदधिकुमाराणां जलकान्तो जलप्रभश्च । द्वीपकुमाराणां पूर्णो वसिष्ठश्च । दिक्कुमाराणाममितगतिरमितवाहनश्चेति ॥ व्यन्तरेष्वपि द्वौ किन्नराणामिन्द्रौ–किन्नरः किंपुरुषश्च । किंपुरुषाणां सत्पुरुषो महापुरुषश्चेति । महोरगाणामतिकायो महाकायश्च । गन्धर्वाणां गीतरतिर्गीतयशाश्च । यक्षाणां पूर्णभद्रो माणिभद्रश्च । राक्षसानां भीमो महाभीमश्च । भूतानां प्रतिरूपोऽतिरूपश्च । पिशाचानां कालो महाकालश्चेति ॥ ज्योतिष्काणां तु बहवः सूर्याश्चन्द्रमसश्च ॥ वैमानिकानामेकैक एव । तद्यथा–सौधर्मे शक्रः । ई(ऐ)शाने ईशानः । सनत्कुमारे सनत्कुमार इति । एवं सर्वकल्पेषु स्वकल्पाह्वाः । परतस्त्विन्द्रादयो दश विशेषा न सन्ति । सर्वे एव स्वतन्त्रा इति ॥ ६ ॥

(भवनपत्यादिदेवानामिन्द्राः)

टी०—पूर्वयोर्देवनिकाययोरित्यादि भाष्यम् । दशाष्टसङ्ख्यापरिच्छिन्नौ पूर्वशब्देन भवनपतिव्यन्तरनिकायौ परिगृह्येते, तत्र देवविकल्पानामसुरादीनां किन्नरादीनां च प्रत्येकं द्वौ द्वाविन्द्रौ भवतः, द्वौ द्वाविन्द्रौ एषु विकल्पेषु ते द्वीन्द्राः, पूर्वयोर्निकाययोर्विकल्पा भवन्तीत्यन्तर्णीतवीप्साको बहुव्रीहिः । शेषं सुज्ञानम्, ज्योतिष्काणां त्वित्यादि । इन्द्राधिकारप्रस्तावमुपजीव्यलाँघवार्थमाह—ज्योतिष्कदेवानां सूर्याः शशिनश्चेन्द्राः, ते च बहवोऽसङ्ख्येयद्वीपसमुद्रवर्तित्वात् । वैमानिकानां सौधर्मादिष्वेकैक इन्द्रः, सौधर्मे शक्रः ऐशाने ईशानः, सनत्कुमारे सनत्कुमारः, इत्येवं सर्वविमानेषु सर्वकल्पमध्यवर्तिषु स्वकल्पाह्वा इन्द्रा भवन्ति । माहेन्द्रे माहेन्द्रः, ब्रह्मलोके ब्रह्म, लान्तके लान्तकः, महाशुक्रे महाशुक्रः, सहस्रारे सहस्रारः, आनतप्राणतयोर्द्वयोरप्येक एवेन्द्रः प्राणताभिधानः, आरणाच्युतयोर्द्वयोरपि कल्पयोरेक एवेन्द्रः अच्युतः, अच्युतकल्पात् परत इन्द्रादयो विकल्पा ग्रैवेयकेषु विजयादिषु च न भवन्ति । सर्वे एव हि ते स्वतन्त्रत्वादहमिन्द्रा गमनागमनरहिताश्च प्राय इति ॥ ६ ॥

(वैमानिकानां कल्पाः)

अनयोस्तु खलु निर्ज्ञातदेवेन्द्रयोरुत्तरत्र देवनिकाययोर्लेश्याभिधाने ग्रहणं पुनर्मा कार्यमित्यतः पूर्वयोरित्यधिकृत्याह—

## सूत्रम्–पीतान्तलेश्याः ॥ ४–७ ॥

भा०—पूर्वयोर्निकाययोर्देवानां पीतान्ताश्चतस्रो लेश्या भवन्ति ॥ ७ ॥

---

१ 'जलभवश्च' इति क–पाठः । २ 'अवशिष्टश्च' इति घ–पाठः ।

टी०—पूर्वयोरित्यादि भाष्यम् । शास्त्रीयमानुपूर्व्यमाश्रित्य निर्देशः, पीता अन्ते यासां लेश्यानां ताः पीतान्ताः—कृष्णनीलकापोततैजस्यः, पीतान्ता लेश्या येषां ते पीतान्तलेश्याः, पूर्वयोर्निकाययोर्देवा भवन्ति, शरीरवर्णमात्रत्वाद् द्रव्यलेश्या एताः, भावलेश्यास्तु षडपि भवेयुरिति ॥ ७ ॥

देवानां त्रैविध्यम्

एते च पुनः सर्वे त्रिविधा देवा भवन्ति—सदेवीकाः सप्रवीचाराः, अदेवीकाः सप्रवीचाराः, अदेवीका अप्रवीचारा इति । तत्र ये सदेवीकाः सप्रवीचारास्तानधिकृत्येदमुच्यते—

## सूत्रम्—कायप्रवीचारा आ ऐशानात् ॥ ४–८ ॥

भा०—भवनवास्यादयो देवा आ ऐशानात् कायप्रवीचारा भवन्ति । कायेन प्रवीचार एषामिति । कायप्रवीचारो नाम मैथुनविषयोपसेवनम् ।

प्रवीचारविचारः

ते हि सङ्क्लिष्टकर्माणो मनुष्यवन्मैथुनसुखमनुप्रलीयमानास्तीव्रानुशयाः कायसङ्क्लेशजं सर्वाङ्गीणं स्पर्शसुखमवाप्य प्रीतिमुपलभन्त इति ॥८॥

टी०—कायः—शरीरं, प्रवीचारो मैथुनोपसेवा, कायेन प्रवीचार एषामिति कायप्रवीचाराः—पुरुषवन्मैथुनमासेवन्ते भवनवास्यादयः आ ऐशानात्, अभिविधावयमाङ्, न मर्यादायां, यस्माद् भवनवासिव्यन्तरज्योतिष्कसौधर्मैशानकल्पेषु जन्मनोत्पद्यन्ते देव्यः, न परत इति, भाष्यं सुज्ञानमेव ॥ ८ ॥

अथ ये अदेवीकाः सप्रवीचारास्तेषां कथं मैथुनोपसेवेत्याह—

## सूत्रम्—शेषाः स्पर्श-रूप-शब्द-मनःप्रवीचारा द्वयोर्द्वयोः ॥ ४–९ ॥

भा०—ऐशानादूर्ध्वं शेषाः कल्पोपपन्ना देवा द्वयोर्द्वयोः कल्पयोः स्पर्शरूपशब्दमनःप्रवीचारा भवन्ति यथासङ्ख्यम् । तद्यथा—सनत्कुमारमाहेन्द्रयोर्देवान् मैथुनसुखप्रेप्सूनुत्पन्नास्थान् विदित्वा देव्य उपतिष्ठन्ते । ताः स्पृष्ट्वैव च ते प्रीतिमुपलभन्ते विनिवृत्तास्थाश्च भवन्ति ॥ तथा ब्रह्मलोकलान्तकयोर्देवान् एवंभूतोत्पन्नास्थान् विदित्वा देव्यो दिव्यानि स्वभावभास्वराणि सर्वाङ्गमनोहराणि शृङ्गारोदाराभिजाताकारविलासान्युज्ज्वलचारुवेषाभरणानि स्वानि रूपाणि दर्शयन्ति । तानि दृष्ट्वैव ते प्रीतिमुपलभन्ते निवृत्तास्थाश्च भवन्ति ॥ तथा महाशुक्रसहस्रारयोर्देवानुत्पन्नप्रवीचारास्थान् विदित्वा देव्यः श्रुतिविषयसुखानत्यन्तमनोहरान् शृङ्गारोदाराभिजातविलासाभिलाषच्छेदतलतालाभरणरवमिश्रान् हसितकथितगीतशब्दानुदीरयन्ति । तान् श्रुत्वैव प्रीतिमुपलभन्ते निवृ-

१ टीकाकारमतमेतत् यदुत शरीरवर्णरूपा लेश्या, अन्ये तु योगपरिणामो लेश्या, लेश्यापुद्गलास्तु अन्य एवागमेषु निर्दिश्यन्ते ।

त्तास्थाश्च भवन्ति ॥ आनतप्राणतारणाच्युतकल्पवासिनो देवाः प्रवीचारायोत्पन्नास्था देवीः संकल्पयन्ति, सङ्कल्पमात्रेणैव च ते परां प्रीतिमुपलभन्ते विनिवृत्तास्थाश्च भवन्ति ॥ एभिश्च प्रवीचारैः(०रादिभिः) परतः परतः प्रीतिप्रकर्षविशेषोऽनुपमगुणो भवति, प्रवीचारिणामल्पसङ्क्लेशत्वात् । स्थितिप्रभावादिभिरधिका इति वक्ष्यते ( अ० ४, सू० २१ ) ॥ ९ ॥

टी०—ऐशानादूर्ध्वं शेषा इत्यादि भाष्यम् । सनत्कुमारमाहेन्द्रयोर्देवान् मैथुनप्राप्तीच्छाभिमुखीकृतानुत्पन्नास्थान् प्रादुर्भूतादरानवबुध्य सौधर्मैशानदेव्य उपतिष्ठन्ते, तत्प्रभावादेव परिज्ञाताभिप्रायाः, अपरिगृहीता गणिकास्थानीयाः अप्सरसः, तासां जघन्येन सौधर्मकल्पनिवासिनीनां स्थितिरेकं पल्योपममुत्कर्षेण पञ्चाशत् पल्योपमानि, ऐशाने त्वपरिगृहीतानां जघन्येन सातिरेकं पल्योपममुत्कर्षेण पञ्चपञ्चाशत् पल्योपमानि । तत्र सौधर्मनिवासिनीनामप्सरसां पल्योपमं समयाद्यधिकं स्थितिः यासां यावद् दश पल्योपमानि ताः सनत्कुमारकल्पवासिदेवभोग्या भवन्ति, यासां च सौधर्मे दश पल्योपमानि समयाधिकानि यावद्विंशतिपल्योपमानि स्थितिरप्सरसां ता ब्रह्मलोककल्पवासिदेवभोग्याः, तथा सौधर्म एव यासां स्थितिरप्सरसां विंशतिपल्योपमानि समयाद्यधिकानि यावत्त्रिंशत्पल्योपमानि ता देव्यो शुक्र( कल्प )वासिदेवभोग्याः, तथा सौधर्म एव यासामप्सरसां स्थितिस्त्रिंशत्पल्योपमानि समयाद्यधिकानि यावच्चत्वारिंशत्पल्योपमानि ता देव्य आनतकल्पवासिदेवभोग्याः, तथा सौधर्म एव यासामप्सरसां स्थितिः चत्वारिंशत्पल्योपमानि समयाद्यधिकानि यावत् पञ्चाशत् ता आरणकल्पवासिदेवोपभोग्याः, ऐशानकल्पे यासां सातिरेकपल्योपमं समयाद्यधिकं स्थितिर्यावत् पञ्चदश पल्योपमानि ता माहेन्द्रकल्पवासिदेवभोग्याः, तथैशान एव यासां पञ्चदश पल्योपमानि स्थितिः समयाद्यधिकानि यावत् पञ्चविंशतिपल्योपमानि ता लान्तककल्पवासिदेवभोग्याः, अस्मिन्नेवैशाने यासां पञ्चविंशतिः पल्योपमानि समयाद्यधिकानि स्थितिः यावत् पञ्चविंशतिपल्योपमानि ताः सहस्रारकल्पवासिनां भोग्याः, तथैशान एव यासां पञ्चत्रिंशत् पल्योपमानि समयाद्यधिकानि यावत् पञ्चचत्वारिंशत्पल्योपमानि स्थितिस्ताः प्राणतकल्पवासिदेवोपभोग्याः, तस्मिन्नेवैशाने यासां स्थितिः पञ्चचत्वारिंशत्पल्योपमानि समयाद्यधिकानि यावत् पञ्चपञ्चाशत्पल्योपमानि ता देव्योऽच्युतकल्पवासिदेवोपभोग्या भवन्ति । यासां पल्योपमं स्थितिर्देवीनां समयाद्यधिकं यावत् सप्त पल्योपमानि ताः सौधर्मकल्पवासिनां परिग्रहः, ऐशानकल्पे तु यासां सातिरेकं पल्योपमं समयाद्यधिकं स्थितिर्यावन्नव पल्योपमानि तास्तन्निवासिदेवपरिग्रह इति । अत्र चापरिगृहीता वेश्यास्थानीया अधस्तनकल्पद्वयोत्पन्ना अपि उपरितनकल्पान् गच्छन्ति तद्देवप्रभावादेवेति ॥

देवीभोगाधिकारः

१ 'शुक्रदेवभोग्याः' इति क-पाठः, 'महाशुक्रवासि०' इति तु ग-पाठः ।

एभिश्च प्रवीचारादिभिरित्यादि । स्पर्शादिभिः सूत्रोपन्यस्तैरुपरिष्टात् परिहसद्भिरल्पसङ्क्लेशत्वाच्चेतसोऽनुपमः प्रीतिप्रकर्ष उपजायते, इदं हि कायादिकर्म सङ्क्लिष्टचित्तत्वाद् दुःखमावहति, यथाऽऽह—

" नग्नः प्रेत इवाविष्टः क्वणन्तीमुपगृह्य ताम् ।
क्लेशायासितसर्वाङ्गः, सुमुखीं रमते किल ॥ "

स्थित्यादिभिरेवोपरिष्टाद् वक्ष्यन्तेऽधिका देवाः, चित्तक्लेशेन तु परिहीयमानस्वभावा भवन्त्युपर्युपरीति । अत्र च पुनः प्रवीचारग्रहणमुत्तरसूत्रे किल विस्पष्टार्थमाश्रितं, अन्यथा तुल्यत्वात् संहितयोः सन्देहः स्यादिति ॥ ९ ॥

अदेवीकाश्चाप्रवीचाराश्चाधुनाऽभिधीयन्ते—

## सूत्रम्---परे अप्रवीचाराः ॥ ४--१० ॥

कल्पातीतानाम-प्रवीचारत्वम्

**भा०—कल्पोपपन्नेभ्यः परे देवा अप्रवीचारा भवन्ति, अल्पसङ्क्लेशत्वात् । स्वस्थाः शीतीभूताः[1] । पञ्चविधप्रवीचारोद्भवादपि प्रीतिविशेषादपरिमितगुणप्रीतिप्रकर्षाः परमसुखतृप्ता एव भवन्ति ॥**

टी०—परे अप्रवीचाराः, अविद्यमानप्रवीचाराः अप्रवीचाराः, कल्पोपपन्नेभ्यः परे ये देवा ग्रैवेयकवासिनोऽनुत्तरविमानवासिनश्चाप्रवीचारा भवन्ति, अल्पसङ्क्लेशत्वाद्धेतोरन्तः शुद्धत्वात् च, ते स्वसमाधिजमेव सुखमुपभुञ्जते, अधिकतरं चैषां तद् भवत्यल्पमोहत्वात् कायक्लेशरहितम्, स्वस्थाः प्रतनुकमोहनीयकर्मपटलानुरञ्जितस्वरूपत्वात् मन्ददेवाग्नित्वाच्छीतीभूताः, पञ्चविधाः प्रवीचारा-रूपरसगन्धस्पर्शशब्दाः प्रवीचारहेतवो मनोहराः कारणे कार्योपचाराध्यारोपादुक्ताः तत्समुदायजादपि सुखविशेषाद् परिमितगुणप्रीतिप्रकर्षा बहुगुणप्रीतिप्रकर्षयुजः परमसुखतृप्ता एव भवन्ति । दुर्लभं हि तादृक् संसारे सुखमन्यनिवासेषु शब्दादिविषयनिरपेक्षत्वात् सहजम्, अतस्तेन जन्मप्रभृत्या स्थितिक्षयात् सततमेव तृप्तास्त इति । न परे इति सूत्रे कर्तव्ये यदाचार्येण पुनरप्रवीचारग्रहणमकारि तज्ज्ञापनार्थमस्यार्थस्य—अल्पः सङ्क्लेशस्तेषु, न बहुरिति । सूत्रत्रये[2] यत् प्रवीचारग्रहणं अप्रवीचारग्रहणं च तज्ज्ञापनायामुष्यार्थस्य संसारः किल प्रवीचारसमुद्भव इति । सामान्याभिधाननिकायविकल्पसङ्ख्याविधिरुक्तः पुरस्तात्, तेषां विशेषसंज्ञानिकायविकल्पान्[3] प्रति व्याचिख्यासुरनियमप्रसङ्गे पौरस्त्यनिकायविकल्पसंज्ञानिर्देशार्थमिदमवोचत्—भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ( सू० ११ ) । तत्र—

---

१ 'शीतभूताः' इति क-ख-पाठः । २ सूत्रत्रये प्रथमे तावत् कायप्रवीचारशब्दो रूढस्तादृशे मैथुने यादृशं नरतिरश्चामिति स उपात्तः, द्वितीये स्पर्शादिमात्रमेव प्रवीचारतया न विवक्षितं, किन्तु स्पर्शादिविशेषा इति ज्ञापनाय स्पर्शप्रवीचारा इत्यादि प्रतिपादितं, तृतीये तु यदि न परे इत्येवोच्येत तर्हि न ते स्पर्शादिभिः प्रवीचारका इत्येवार्थो गम्येत, परं सर्वथा भावो न ज्ञायेत इष्टं च तज्ज्ञापयितुमिति अप्रवीचारा इति सर्वथा प्रवीचारनिषेधं चक्रुः सूक्ष्मधियो वाचका इति । ३ 'विकल्पौ प्रति' इति क-पाठः ।

भा०—अत्राह-उक्तं भवता—'देवाश्चतुर्निकायाः' ( अ० ४, सू० १), 'दशाष्टपञ्चद्वादशविकल्पाः' ( अ० ४, सू० ३ ) इति, तत् के निकायाः के चैषां विकल्पा इति ? । अत्रोच्यते-चत्वारो देवनिकायाः । तद्यथा-भवनवासिनो व्यन्तरा ज्योतिष्का वैमानिका इति ॥ १० ॥ तत्र-

टी०—अत्राह-उक्तं भवतेत्यादिपातनिकाग्रन्थः । देवाश्चतुर्निकाया इत्युक्तमध्यायादौ, तथा दशादिभेदाश्चाधीताः, तदेतन्निर्दिश्यतामञ्जसा के पुनस्ते निकायाः के चैषां निकायानां दशादयो विकल्पा इति ? । अत्रोच्यते-चत्वारस्तावन्निकायाः-भवनवासिनो व्यन्तरा ज्योतिष्का वैमानिका इति ॥ १० ॥

तत्र तेषु चतुर्षु निकायेषु भवनवासिनामेव तावद् भेदप्रतिपादनं क्रियते, तत्र-

## सूत्रम्-भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ॥ ४-११ ॥

भा०-प्रथमो देवनिकायो भवनवासिनः । इमानि चैषां विधानानि भवन्ति । तद्यथा-असुरकुमाराः, नागकुमाराः, विद्युत्कुमाराः, सुपर्णकुमाराः, अग्निकुमाराः, वातकुमाराः, स्तनितकुमाराः, उदधिकुमाराः, द्वीपकुमाराः, दिक्कुमारा इति ।

भवनवासिनां विधानानि

टी०-भूमिष्ठत्वात् भवनानि, तेषु वस्तुं शीलं येषां ते भवनवासिनः, प्रथमो निकायोऽसुरादयो भेदाः । तत्कुमारशब्दः प्रत्येकमभिसम्बध्यते । कः पुनः कुमारशब्दार्थ इत्याह-

भा०-कुमारवदेते कान्तदर्शना असुरकुमारा[1] मृदुमधुरललितगतयः शृङ्गाराभिजातरूपविक्रियाः कुमारवच्चोद्धतरूपवेषभाषाभरणप्रहरणावरणपातयानवाहनाः[2] कुमारवच्चोल्बणरागाः क्रीडनपराश्चेत्यतः कुमारा इत्युच्यन्ते । असुरकुमारावासेष्वसुरकुमाराः प्रतिवसन्ति, शेषास्तु भवनेषु ॥

टी०-कुमारवदेते कान्तदर्शना इति सुज्ञानम् । असुरकुमारावासेष्वसुरकुमाराः प्रतिवसन्ति, आवासाः कायमानस्थानीया महामण्डपा नानारत्नप्रभासितोल्लोचाः, तेषु तादृशेषु भूयसा वसन्त्यसुरकुमाराः कदाचित् भवनेष्वपीति । शेषास्तु नागादयो भवनेष्वेव प्रायो वसन्ति, नावासेष्विति । तानि च भवनानि बहिर्वृत्तान्यन्तश्चतुरस्राण्यधः पुष्करकर्णिकासंस्थानानि ॥ क्व पुनस्ते आवासा भवनानि चेत्याह-

भा०-महामन्दरस्य दक्षिणोत्तरयोर्दिग्विभागयोर्बह्वीषु योजनशतसहस्र-

---

१ 'सुकुमारा' इति घ-पाठः । २ 'प्रहरणचरणपातवाहनाः' इति क-पाठः, 'प्रहरणावरणयानवाहनाः' इति तु घ-पाठः ।

कोटीकोटीषु आवासाः । भवनानि च दक्षिणार्धाधिपतीनामुत्तरार्धाधिपतीनां च यथास्वं भवन्ति ।

टी०—महामन्दरस्येत्यादि । धातकीखण्डादिमन्दरव्यावृत्त्यर्थं महामन्दरग्रहणम्, चिह्नमात्रं महामन्दरग्रहणमत्र, योजनसहस्रमात्रावगाहित्वात्, तस्य दक्षिणस्यां दिशि तिर्यग्द्वीपु योजनलक्षकोटीनां कोटीषु भवन्त्यावासाः, भवनानि च दक्षिणार्धाधिपतीनां चमरादीनामुत्तरार्धाधिपतीनां च बलिप्रभृतीनां यथायथमसुरादीनां इति । आर्षे तु रत्नप्रभाया बाहल्यात् सहस्रमुपर्यधश्च सन्त्यज्य मध्येऽष्टसप्ततिसहस्राधिकलक्षायां कुसुमप्रकरवत् प्रकीर्णानि भवनानि सर्वत्र ॥ भाष्यकाराभिप्रायस्तु--

भा०—तत्र भवनानि रत्नप्रभायां बाहल्यार्धमवगाह्य[2] मध्ये[3], भवनेषु वसन्तीति भवनवासिनः । भवप्रत्ययाश्चैषामिमा नामकर्मनियमात् स्वजातिविशेषनियता विक्रिया भवन्ति । तद्यथा–गम्भीराः श्रीमन्तः काला महाकाया रत्नोत्कटमुकुटभास्वराश्चूडामणिचिह्ना असुरकुमारा भवन्ति । शिरोमुखेष्वधिकप्रतिरूपाः कृष्णाः श्यामा मृदुललितगतयः शिरस्सु फणिचिह्ना नागकुमाराः । स्निग्धा भ्राजिष्णवोऽवदाता वज्रचिह्ना विद्युत्कुमाराः । अधिक[4]प्रतिरूपग्रीवोरस्काः श्यामावदाता गरुडचिह्नाः सुपर्णकुमाराः । मानोन्मानप्रमाणयुक्ता भास्वन्तो[5]ऽवदाताः घटचिह्नाः अग्निकुमारा भवन्ति । स्थिरपीनवृत्तगात्रा निम्नोदरा[6] अश्वचिह्ना अवदाता वातकुमाराः । स्निग्धाः स्निग्धगम्भीरानुनादमहास्वनाः कृष्णा वर्धमानचिह्नाः स्तनितकुमाराः । उरुकटिष्वधिकप्रतिरूपाः कृष्णश्यामा मकरचिह्ना उदधिकुमाराः । उरःस्कन्धबाह्वग्रहस्तेष्वधिकप्रतिरूपाः श्यामावदाताः सिंहचिह्ना द्वीपकुमाराः । जङ्घाग्रपादेष्वधिकप्रतिरूपाः श्यामा हस्तिचिह्ना दिक्कुमाराः । सर्वेऽपि च विविधवस्त्राभरणा भवन्तीति ॥ ११ ॥

असुरकुमारादीनां वर्णनम्

टी०—तत्र भवनानीत्यादि भाष्यम् । रत्नप्रभायां बाहल्यार्धमवगाह्य मध्ये भवनानि भवन्ति, तस्मिन्नेव स्थाने नवतिसहस्राण्यधोऽवगाह्य, आवासास्तु सहस्रद्वयपरिवर्जितायां रत्नप्रभायां सर्वत्रेत्यभिप्रायः । भवप्रत्ययाश्चैषामिमा नामकर्मनियमात् स्वजातिविशेषनियता विक्रिया भवन्ति । भवहेतुकास्ता जन्मतपोनुऽष्ठाननिरपेक्षा विक्रियाः सम्बध्यन्ते । नामकर्मनियमाच्च स्वजातिविशेषनियता विक्रिया भवन्ति । अङ्गोपाङ्गनामकर्मो-

---

१ नावासानां स्थितौ क्रमः कोऽपि असुरादीनां यथा भवनेषु तेषामिति । २ “अर्धः खण्डेऽर्धं समांशे” इत्यनेकार्थोक्तेः तुल्यभागेऽर्धं इति अर्धसुदर्शनदेवनमिति च लिङ्गानुशासन[क]श्चे खण्डार्थोऽर्धोऽत्र । ३ ‘मध्ये भवन्ति’ इति घ-पाठः । ४ ‘अधिकरूप’ इति क-घ-पाठः । ५ ‘भास्वतः’ इति ग-पाठः । ६ ‘निमग्नोदरा’ इति ग-घ-पाठः ।

दयान्निर्माणनामकर्मोदयाद् वर्णादिनामोदयाच्च प्रतिजातिविशेषकारिण्यो विक्रिया जायन्ते। **गम्भीरा** घनशरीराः **श्रीमन्तः** सर्वाङ्गोपाङ्गसुन्दराः कृष्णवर्णा महाशरीरा इत्येतत् सर्वं नामकर्मोदयजनितमेषामसुराणाम्, एवं नागादीनामपि योजनीयं स्वजातिविशेषनियतवचनात्, शेषं भाष्यमेव सुज्ञानम्। एषां च भवनसङ्ख्या सामान्यतः सप्त कोट्यः सप्ततिर्लक्षा लक्षद्वयाधिकाः, विशेषेण तु दक्षिणदिग्व्यवस्थितासुराणां चतुस्त्रिंशत् लक्षाः, उत्तरदिग्भाजां त्रिंशदेकत्र चतुष्षष्टिः,

भवनसङ्ख्या

दक्षिणदिग्नागानां चतुश्चत्वारिंशदुत्तरदिग्नागानां चत्वारिंशदेकत्र चतुरशीतिः, दक्षिणविद्युत्कुमाराणां चत्वारिंशदुत्तरवासिनां षट्त्रिंशदेकत्र षट्सप्ततिः। एषैव सङ्ख्या दक्षिणोत्तरभिन्नानामग्निस्तनितोदधिद्वीपदिक्कुमाराणामिति, दक्षिणसुपर्णानामष्टात्रिंशदुत्तरनिवासिनां चतुस्त्रिंशदेकत्र सप्ततिर्द्व्युत्तरेति। दक्षिणमरुतां पञ्चाशदुत्तरवासिनां षट्चत्वारिंशदेकत्र षण्णवतिः। लक्षाः सर्वत्र सम्बन्धनीया इति ॥ ११ ॥

अधुना भवनचरनिलयानन्तरदेवनिकायोद्देशभाजो येऽष्टविधास्तेऽभिधीयन्ते—

व्यन्तर-भेदाः

**सूत्रम्—व्यन्तराः किन्नर-किंपुरुष-महोरग-गान्धर्व-यक्ष-राक्षस-भूत-पिशाचाः ॥ ४-१२ ॥**

**भा०—अष्टविधो द्वितीयो देवनिकायः। एतानि चास्य विधानानि भवन्ति। अधस्तिर्यगूर्ध्वं च त्रिष्वपि लोकेषु भवननगरेषु[1] आवासेषु च प्रतिवसन्ति।**

**टी०**—अथ किमर्थं व्यन्तरा उच्यन्ते, तत्र भाष्यमधस्तिर्यगूर्ध्वं चेत्यादि। रत्नप्र-

व्यन्तरशब्दार्थः

भारत्नकाण्डे योजनशतद्वयवर्जितेऽष्टासु योजनशतेषूत्पन्नाः सन्तस्त्रिलोक्यां स्वभवनेषु स्वनगरेषु स्वावासेषु च प्रतिवसन्ति बालवत् स्वभावानवस्थानात्, अतो विविधमन्तरम्—आवसनमेषामिति व्यन्तराः। एतदेव स्पष्टयति भाष्यकारः—

**भा०—यस्माच्चाधस्तिर्यगूर्ध्वं च त्रीनपि लोकान् स्पृशन्तः स्वातन्त्र्यात् पराभियोगाच्च प्रायेण प्रतिपतन्त्यनियतगतिप्रचाराः, मनुष्यानपि केचिद् भृत्यवदुपचरन्ति। विविधेषु च शैलकन्दरान्तरवनविवरादिषु प्रतिवसन्ति, अतो व्यन्तरा इत्युच्यन्ते ॥**

**तत्र किन्नरा दशविधाः। तद्यथा—किंपुरुषाः किंपुरुषोत्तमाः किन्नराः**

किंपुरुषादि-भेदाः

**किन्नरोत्तमा हृदयङ्गमा रूपशालिनोऽनिन्दिता मनोरमा रतिप्रिया रतिश्रेष्ठा इति ॥ किंपुरुषा दशविधाः। तद्यथा—पुरुषाः सत्पुरुषाः महापुरुषाः पुरुषवृषभाः पुरुषोत्तमाः अतिपुरुषोत्तमाः[2]**

---

१ भूमिष्ठानि नगराणि भवननगराणि, यद्वा भवनानि भूमिष्ठानि नगराणि प्राकारादिविशेषरचनावन्ति तिर्यक् आवासा यथार्हं सर्वत्र योग्यस्थाने। २ 'अतिपुरुषाः' इति घ-पाठः।

मरुदेवाः मरुतो मरुत्प्रभा यशस्वन्त इति ॥ महोरगा दशविधाः । तद्यथा—भुजगा भोगशालिनो महाकायाः अतिकायाः स्कन्धशालिनो मनोरमा महावेगा महेष्वक्षाः मेरुकान्ताः भास्वन्त इति ॥ गान्धर्वा द्वादशविधाः । तद्यथा—हाहा हूहू तुम्बुरवो नारदा ऋषिवादका भूतवादिकाः कादम्बा महाकादम्बा रैवता विश्वावसवो गीतरतयो गीतयशस इति ॥ यक्षास्त्रयोदशविधाः । तद्यथा—पूर्णभद्राः माणिभद्राः श्वेतभद्राः हरिभद्राः सुमनोभद्राः व्यतिपातिकभद्राः सुभद्राः सर्वतोभद्राः मनुष्ययक्षा वनाधिपतयो वनाहारा रूपयक्षा यक्षोत्तमा इति ॥ सप्तविधा राक्षसाः । तद्यथा-भीमा महाभीमा विघ्ना विनायका जलराक्षसा राक्षसराक्षसा ब्रह्मराक्षसाः ॥ भूता नवविधाः । तद्यथा—सुरूपाः प्रतिरूपाः अतिरूपाः भूतोत्तमाः स्कन्दिकाः महास्कन्दिकाः महावेगाः प्रतिच्छन्ना आकाशगा इति ॥ पिशाचाः पञ्चदशविधाः । तद्यथा-कूष्माण्डाः पटका जोषा आह्नकाः कालाः महाकालाश्चोक्षा[1] अचोक्षाः तालपिशाचा मुखरपिशाचा अधस्तारका देहा महाविदेहाः तूष्णीका वनपिशाचा इति ॥

किन्नरादीनां वर्णनम्

तत्र किन्नराः प्रियङ्गुश्यामाः सौम्याः सौम्यदर्शना मुखेष्वधिकरूपशोभा मुकुटमौलिभूषणा अशोकवृक्षध्वजा अवदाताः ॥ किंपुरुषा ऊरुबाहुष्वधिकशोभा मुखेष्वधिकभास्वरा विविधाभरणभूषणाश्चित्रस्रगनुलेपनाश्चम्पकवृक्षध्वजाः ॥ महोरगाः श्यामावदाता महावेगाः सौम्याः सौम्यदर्शना महाकायाः पृथुपीनस्कन्धग्रीवा विविध[2]विलेपना विचित्राभरणभूषणा नागवृक्षध्वजाः॥गान्धर्वा रक्तावदाता गम्भीराः प्रियदर्शनाः सुरूपाः सुमुखाकाराः सुस्वरा मौलिधरा हारविभूषणाः तुम्बरुवृक्षध्वजाः ॥ यक्षाः श्यामावदाता गम्भीरास्तुन्दिला वृन्दारकाः प्रियदर्शना मानोन्मानप्रमाणयुक्ता रक्तपाणिपादतलनखतालुजिह्वोष्ठा भास्वरमुकुटधरा नानारत्नविभूषणा वटवृक्षध्वजाः ॥ राक्षसा अवदाता भीमा भीमदर्शनाः शिरःकराला रक्तलम्बौष्ठाः तपनीयविभूषणा नानाभक्तिविलेपनाः खट्वाङ्गध्वजाः ॥ भूताः श्यामाः सुरूपाः सौम्या आपीवरा नानाभक्तिविलेपनाः सुलसध्वजाः कालाः ॥ पिशाचाः स्व[3]रूपाः सौम्यदर्शना हस्तग्रीवासु मणिरत्नविभूषणाः कदम्बवृक्षध्वजाः ॥ इत्येवंप्रकारस्वभावानि वैक्रियाणि रूपाचिह्नानि व्यन्तराणां भवन्तीति ॥ १२ ॥ तृतीयो देवनिकायः ।

टी०—यस्माच्चाधस्तिर्यगूर्ध्वं चेत्यादि भाष्यम् । स्वातन्त्र्यात्-स्वेच्छया, पराभियोगाच्च शक्रादिदेवेन्द्राज्ञया चक्रवर्त्यादिपुरुषाज्ञया वा प्रायोऽनियतगतिप्रचारा भव-

१ 'वैक्षाः' इति क-पाठः, 'चौक्षाः' इति तु घ-पाठः २ 'धातुविले०' इति घ-पाठः । ३ 'सुरूपाः' इति घ-पाठः ।

न्तीति । तथा मनुष्यानपि केचिद् भृत्यवदुपचरन्ति चक्रधरादीनतो विगतान्तरा मनुष्येभ्योऽविशिष्टाः केचिद् व्यन्तराः। विविधेषु वा शैलकन्दरान्तरादिषु प्रतिवसन्ति तिर्यग्लोक इति व्यन्तराः, निकायद्वयान्तरस्थायित्वाद् व्यन्तराः प्रसिद्धत्वाद्, गोसंज्ञावदिति । रत्नप्रभायां त्वेषां तिर्यगसङ्ख्येयानि भवनानि भवन्ति यथोद्दिष्टावगाहलक्षणक्रमाद् दक्षिणोत्तरदिग्भेदावस्थायिनोऽष्टास्वपि भेदेषु वक्तव्याः । भेदाश्चैषां किन्नरादीनां स्वस्थाने भाष्यकृता बहवो निदर्शितास्ते चार्षे सूचिता लेशतो न प्रतिपदमधीताः । शेषं पठितसिद्धमिति ॥ १२ ॥

अधुना तृतीयो देवनिकायोऽवसरप्राप्त उच्यते–

**सूत्रम्----ज्योतिष्काः--सूर्याश्चन्द्रमसो ग्रहनक्षत्रप्रकीर्णतारकाश्च ॥४--१३॥**

भा०—ज्योतिष्काः पञ्चविधा भवन्ति । तद्यथा—सूर्याश्चन्द्रमसो ग्रहा नक्षत्राणि प्रकीर्णतारका इति पञ्चविधा ज्योतिष्का इति । असमासकरणमार्षाच्च सूर्यःचन्द्रमसोः क्रमभेदः कृतः, यथा गम्येत एतदेवैषामूर्ध्वनिवेशे आनुपूर्व्यमिति । तद्यथा—सर्वाधस्तात् सूर्यास्ततश्चन्द्रमसस्ततो ग्रहास्ततो नक्षत्राणि ततो विप्रकीर्णताराः । ताराग्रहास्त्वनियतचारित्वात् सूर्यचन्द्रमसामूर्ध्वमधश्च चरन्ति, सूर्येभ्यो दशयोजनावेलाम्बिनो भवन्तीति । समाद् भूमिभागादष्टासु योजनशतेषु सूर्याः, ततो योजनानामशीत्यां चन्द्रमसः, ततो विंशत्यां तारा इति । द्योतयन्त इति ज्योतींषि[1]-विमानानि तेषु भवा ज्योतिष्काः ज्योतिषो वा देवा ज्योतिरेव वा ज्योतिष्काः । मुकुटेषु शिरोमुकुटोपगूहिभिः प्रभामण्डलकल्पैरुज्ज्वलैः सूर्यचन्द्रतारामण्डलैर्यथास्वं चिह्नैर्विराजमाना द्युतिमन्तो ज्योतिष्का भवन्तीति ॥ १३ ॥

ज्योतिष्कभेदाः

टी०–ज्योतिष्काः पञ्चविधा भवन्तीत्यादि भाष्यम् । असमासकरणे पारमर्षप्रवचनक्रमभेदे च प्रयोजनमाह—असमासकरणात् तावत् तिर्यङ्मण्डलिकयाऽवस्थानं निषिध्यते, उपर्युपर्यवस्थानं कथं नाम गम्येत ? क्रमभेदोऽप्यमुनैव क्रमेणोर्ध्वमेषां सन्निवेश इत्यनेनाभिप्रायेण, आर्षे तु प्राक् चन्द्रः पठ्यते पश्चात् सूर्य इति । न चैवमुपरि सन्निवेशः । तत्र समतलाद् भूमिभागादारुह्योपरि सप्त योजनशतानि नवत्यधिकानि प्रथमो ज्योतिष्कविमानप्रस्तारः, तदुपरि दशयोजनशतान्यारुह्य भानोर्विमानप्रस्तारः, तदुपर्यशीतियोजनान्यारुह्य चन्द्रमसो विमानप्रस्तारः, तदुपरि विंशतियोजनान्यारुह्य ताराग्रहाणां विमानप्रस्तारः, एवमयं ज्योतिर्लोको दशोत्तरयोजनशतबहुल एकादश-

ज्योतिष्काणां विमानप्रस्तारः

1 'द्योतींषि' इति घ-पाठः ।

भिर्योजनशतैरेकैकविंशत्युत्तरैर्जम्बूद्वीपकमेरुमस्पृशन् सर्वासु दिक्षु मण्डलिकया व्यवस्थितः, लोकान्तं चैकादशभिरेव योजनशतैरेकादशोत्तरैरस्पृशन् सर्वतोऽवगन्तव्यः, **ताराग्रहास्त्वनियतचारित्वादित्यादि** । अनियता चैषां गतिरूर्ध्वमधस्तिर्यक् चेत्यतोऽधस्तात् तावल्लम्बन्तेऽङ्गारकादयो यावत् सूर्याद् दश योजनानि भवन्त्यनवस्थितचारित्वात्, एवं चाधस्ताद् दशयोजनावलम्बकसंयोगादष्टासु योजनशतेषु सूर्य इति । अत्र च सर्वोपरि किल स्वातिनक्षत्रं, नक्षत्रमण्डलिकायाः सर्वाधस्ताद् भरण्यः, सर्वदक्षिणतो मूलः, सर्वोत्तरतश्चाभीचिरिति । **द्योतयन्त इति ज्योतींषि–विमानानीत्यादि** । अत्यन्तप्रकाशकारित्वाज्ज्योतिःशब्दाभिधेयानि विमानानि तेषु विमानेषु भवा ये देवास्ते **ज्योतिष्काः** । व्युष्टगादिसूत्रात्[3] टक् । अपरे ब्रुवते– भाष्यकृता सवृद्धिकः शब्दो नोच्चरित इत्यतः परिहारो वृद्धेः प्राप्ताया वक्तव्यः, स चायम्–एकानुबन्धकृतस्यानित्यत्वाद् दंष्ट्राशब्दे ङीप्प्रत्ययाभाववद् वृद्ध्यभावः॥**ज्योतिषो वा देवाः**, विमानगतज्योतिषः सम्बन्धिनो देवाः तेन दीव्यन्ति, वपुःसम्बन्धिना वा ज्योतिषा ज्वलन्तीति ज्योतिष्काः, **ज्योतिरेव वा** भास्वरशरीरत्वात् समस्तदिग्मण्डलद्योतनत्वादतः स्वार्थे कन् । **ज्योतिष्काः** । **मुकुटेष्वित्यादि** । मुकुटेषु चिह्नानि भवन्ति–**शिरोमुकुटोपगूहीनि प्रभाम**ण्डलस्थानीयान्युज्ज्वलानि सूर्यादीनि, सूर्यस्य सूर्याकारं चिह्नम्, एवं चन्द्रादीनामपीति ॥ १३ ॥

त एते पञ्चविधा अपि ज्योतिष्काः—

## सूत्रम्---मेरुप्रदक्षिणा नित्यगतयो नृलोके ॥ ४--१४ ॥

**भा०–मानुषोत्तरपर्यन्तो मनुष्यलोक इत्युक्तम्** (अ० ३, सू० १४), **तस्मिन्**

ज्योतिष्काणां गतिः

**ज्योतिष्का मेरुप्रदक्षिणा नित्यगतयः भवन्ति[4], मेरोः प्रदक्षिणा नित्या गतिरेषामिति मेरुप्रदक्षिणानित्यगतयः । एकादशसु एकविंशेषु योजनशतेषु मेरोश्चतुर्दिशं प्रदक्षिणं चरन्ति ।**

**टी०–मानुषोत्तरपर्यन्त** इत्यादि भाष्यम्, उक्तलक्षणो मानुषोत्तरगिरिः स पर्यन्तः-अवसानं यस्यासौ मानुषोत्तरपर्यन्तो **मनुष्यलोको** विष्कम्भायामाभ्यां पञ्चचत्वारिंशल्लक्षप्रमाणस्तस्मिन्नेते ज्योतिष्काः सूर्यादयो **मेरुप्रदक्षिणा नित्यगतयो भवन्ति** । **मेरोः प्रदक्षिणा मेरुप्रदक्षिणा** नापसव्येति कथयति, नित्यशब्दोऽभीक्ष्णवचनः । **नित्या गतिरेषामिति नित्यगतयो**ऽनवरतभ्रमणा इत्यर्थः । **नित्यग्रहणाद्** गतेरुपरमाभावं प्रतिपादयति, **साऽपि गतिः**

---

१ 'एकोनविंशत्यु' इति ग-पाठः । यद्यपि सर्वेष्वादर्शेषु एकोनविंशतीत्यादिक एव पाठस्तथापि एकादशस्वेकविंशेषु इत्याद्युत्तरभाष्यात् इक्कारसजोयणसय इगवीसिक्कारेत्यादिवचनप्रामाण्याच्च एकविंशतीत्यादिक एव न्याय्यः' इति ग-टी-पाठः । अयं च जैनानन्दपुस्तकालयप्रतिपाठः । २ 'वमन्तव्यः' इति ग-पाठः । ३ 'सूत्रात् क्' इति ग-पाठश्चिन्तनीयः । ४ 'भवन्ति' इति घ-पाठः ।

प्रादक्षिण्येन नापसव्येन मेरोः, लोकस्थित्यनुभवाद् विमानान्येव नृलोके भ्रमणशीलानि भवन्ति, न पुनरभ्रमन्त्यपि। ये वा प्रेरयन्ति। तानि च पृथिवीकायनिर्माणान्यातपनामकर्मोद्यात् स्फटिकमणिप्रकाशानि भ्राजिष्णूनि कपित्थफलार्धसंस्थानानि भवन्ति॥ ननु च ध्रुवः सर्वदा ध्रुवस्तत्रैवोपलभ्यते, नहि तस्य मेरुप्रदक्षिणा नित्या गतिरस्ति, स च ज्योतिष्कस्तदेतत् कथमिति? उच्यते-पञ्चप्रकारा सूर्यादयो ज्योतिष्काः, तत्रैको भेदस्तारकाख्यस्तस्याप्येकदेशो ध्रुवो यदि मेरोः प्रादक्षिण्येन (प्र)व्रज्यां न प्रतिपद्यते ततस्तदगत्या किमवशेषाणां नानुशासितव्या गतिः?। यथा हि राजादिप्रधानपुरुषप्रयाणकप्रदाने तिष्ठत्स्वपि केषुचित् प्रयाणकं दत्तं स्कन्धावारेणेति लोकः प्रभाषते तथा प्रधानेषु सूर्यादिषु प्रयात्सु तद्भेदैकदेशागमनेऽपि ज्योतिष्का नित्यगतयोऽभिधास्यन्ते। अथवा नित्यगतय इति तत्रैव स्थाने स ध्रुवः परिभ्राम्यति, न तु मेरोः प्रादक्षिण्येन गतिं प्रतिपद्यते, तथाहि-तदद्यापि ध्रुवताराचक्रमाक्रान्तोत्तरदिक्कं परिवर्तमानमुपलभ्यते प्रत्यक्षप्रमाणेनैव, अतो मेरुप्रदक्षिणाः केचिन्नित्यगतयश्च, अपरे नित्यगतयो न मेरुप्रदक्षिणा इति। अथवा मेरुप्रदक्षिणा अनित्या गतिर्येषां ते मेरुप्रदक्षिणानित्यगतय इत्ययं वाक्यार्थो भवति, न सर्वेषामवश्यंभाविनी गतिर्मेरोः प्रादक्षिण्येन, किन्तु केषांचिद् भवति केषांचिन्न, गतिः पुनरवश्यंभाविनी तथाऽन्यथा वा, न तस्या निषेध इति। एकादशस्वेकविंशेष्वित्यादि गतार्थं प्रायः। **मेरोश्चतुर्दिशमिति** दिक्शब्देन समानार्थो दिशाशब्दस्तमनुसन्धाय भाष्यकारेणोक्तं चतुर्दिशमिति।

अधुना अर्धतृतीयद्वीपान्तर्वर्तिनां सूर्यादीनामियत्तामावेदयितुमाह-

**भा०—तत्र द्वौ सूर्यौ जम्बूद्वीपे। लवणे चत्वारः। धातकीखण्डे द्वादश। कालोदधौ द्विचत्वारिंशत्। पुष्करार्धे द्विसप्ततिः। इत्येवं मनुष्यलोके द्वात्रिंशत् सूर्यशतं भवति। चन्द्रमसामप्येष एव विधिः। अष्टाविंशतिर्नक्षत्राणि। अष्टाशीतिर्ग्रहाः। षट्षष्टिसहस्राणि नव शतानि पञ्चसप्ततीनि ताराकोटाकोटीनामेकैकस्य चन्द्रमसः परिग्रहः। सूर्याचन्द्रमसो ग्रहा नक्षत्राणि च तिर्यग्लोके, शेषास्तूर्ध्वलोके ज्योतिष्का भवन्ति।**

सूर्यादीनां संख्या

**टी०-तत्र द्वौ सूर्यावित्यादि**। एते तु स्वतापच्छेदतः प्रकाशयन्तः प्रदक्षिणं चरन्ति, तापक्षेत्रं चैषामन्तः सङ्कुटं बहिर्विशालं नालककुसुमाकृतिः सप्तचत्वारिंशद्योजनसहस्राणि त्रिषष्ट्यधिकानि शतद्वयोत्तराणि योजनैकषष्टिभागाश्चैकविंशतिः( ४७२६३ $\frac{२१}{६१}$ ) प्रत्येकं सूर्याणां, मनुष्यक्षेत्रे च द्वात्रिंशदुत्तरं सूर्यशतमवगन्तव्यं, चन्द्रमसोऽप्येतावन्त एव बोद्धव्याः। अष्टाविंशतिर्नक्षत्राण्यभिजिता सह, ग्रहाणामष्टाशीतिर्भस्मराश्यादीनाम्, एकस्य खलु चन्द्रमसस्ताराः कोटीनां कोट्य एतावत्यो भवन्ति षट्षष्टिसहस्राणि नव च शतानि पञ्चसप्तत्यधिकानि।

सवितुश्च द्वियोजनान्तरितमार्गाणां त्र्यशीतं मण्डलशतम् । तेषां हि पूर्वविदेहदिवसान्तात् पूर्वदक्षिणविदिग्भाजो मार्गान् मार्गान्तरगामिनस्त्रिषष्टिरुदयान्निषधमस्तके दक्षिणक्षेत्रवर्तिमनुष्यचक्षुर्दृश्या द्वौ हरिवर्षज्याकोट्यां, शेषमष्टादशोत्तरं शतं लवणोदधाविति, अपरविदेहान्तेऽप्येवं, द्वितीयस्य तु पश्चिमोत्तरविदिग्भाजो नीलमस्तके रम्यके लवणोदधौ चोत्तरक्षेत्रजानां दृष्टिपथस्थायिन इति, उदयविधानात् त्वस्तमयं विद्यात् । चन्द्रमसः पञ्चदश मण्डलानि । सर्वोत्तरोदयस्य सर्वदक्षिणोदयस्य चान्तरं पञ्च योजनशतानि दशोत्तराणि सवितुः, तत्राशीतं योजनशतं जम्बूद्वीपे लभ्यते, त्रीणि योजनशतानि त्रिंशदुत्तराणि लवणोदधौ लभ्यन्तेऽर्कस्य । **सूर्या** इत्यादि भाष्यम् । एते किल तिर्यग्लोकव्यवस्थिताः । **शेषास्तु** प्रकीर्णतारका ऊर्ध्वलोके **भवन्ति** इति । आचार्य एवेदमवगच्छति, नत्वार्षमेवमवस्थित, सर्वज्योतिष्काणां तिर्यग्लोकव्यवस्थानादिति ।

**भा०—अष्टचत्वारिंशद् योजनैकषष्टिभागाः सूर्यमण्डलविष्कम्भः, चन्द्रमसः षट्पञ्चाशत्, ग्रहाणामर्धयोजनम्, गव्यूतं नक्षत्राणाम्, सर्वोत्कृष्टायास्ताराया अर्धक्रोशः, जघन्यायाः पञ्च धनुःशतानि, विष्कम्भार्धबाहल्याश्च भवन्ति सर्वे सूर्यादयः, नृलोक इति वर्तते । बहिस्तु विष्कम्भबाहल्याभ्यामतोऽर्धं भवति ॥**

सूर्यादीनां विष्कम्भः

**टी०—अष्टचत्वारिंशदि**त्यादि । आयामविष्कम्भाभ्यामिदमादित्यमण्डलप्रमाणम्, तथा चन्द्रमसः सुज्ञानम्, अर्धयोजनप्रमाणं ग्रहविमानम्, नक्षत्रविमानं गव्यूतप्रमाणम्, आयुषा **सर्वोत्कृष्टायास्तारकाया अर्धक्रोश**प्रमाणं विमानम्, सर्व**जघन्यायाः पञ्च धनुःशतानि**, शेषा विमध्यमा प्रतिपत्तिर्वक्तव्येति । एषामेव सूर्यादिविमानानां बहलत्वनिर्दिदिक्षया आह— **विष्कम्भार्धबाहल्याश्च भवन्ति** नृलोकान्तर्वर्तिसूर्यादिविमानानि स्वविष्कम्भार्धेन बहलानि भवन्ति । तद्यथा—सवितुर्विमानमण्डलं चतुर्विंशतिरेकषष्टिभागा योजनस्य, एवं शेषाणामपि वाच्यम्[2] । अथ मानुषोत्तरात् परतः कथमित्यत आह—**बहिस्तु विष्कम्भबाहल्याभ्यामतोऽर्धं भवति** नृलोकान्तर्वर्तिनां सवित्रादिविमानानां यो विष्कम्भोऽभिहितस्तस्यार्धं बहिर्वर्तिनामुष्णकरादिविमानानां विष्कम्भो भवति, यथाऽन्तर्वर्तिनः आदित्यस्याष्टचत्वारिंशदेकषष्टिभागा योजनस्य विमानविष्कम्भस्तदर्धं चतुर्विंशतिरेकषष्टिभागा योजनस्य बहिर्वर्तिनः सवितुर्विमानविष्कम्भ इत्येवं शेषाणामपिवाच्यम्, तथाऽन्तर्वर्तिनः सवितुश्चतुर्विंशतिरेकषष्टिभागा योजनस्य विमानबाहल्यमुक्तं बहिर्वर्तिनस्तदर्धं द्वादशैकषष्टिभागा योजनस्य विमानबाहल्यम्, एवं शेषाणा-

---

१ अशीत्यधिकाष्टाशत्यामवस्थितात् चन्द्राद् ऊर्ध्वभागीये लोके, ततः विंशत्यामवस्थानाभ्युपगमात्, नवशत्याश्च तिर्यग्लोकत्वेनास्वीकारात्, प्राक् तिर्यग्लोके इत्युक्तिस्तूर्ध्वभागे सूर्यादीनां तारादिवदनियततावारणार्थम् । २ 'वाच्या' इति क-पाठः ।

मपि वाच्यम् । सूर्ययोश्चन्द्रमसोश्च जम्बूद्वीपे सर्वाभ्यन्तरमण्डलस्थयोरन्तरं नवनवतिर्योजन-सहस्राणि षट् च शतानि चत्वारिंशदधिकानि ।

**भा०—एतानि च ज्योतिष्कविमानानि लोकस्थित्या प्रसक्तावस्थितगतीन्यपि ऋद्धिविशेषार्थमाभियोग्यनामकर्मोदयाच्च नित्यगतिरतयो देवा वहन्ति । तद्यथा–पुरस्तात् केशरिणः। दक्षिणतः कुञ्जराः । अपरतो वृषभाः । उत्तरतो जविनोऽश्वा इति ॥ १४ ॥**

ज्योतिष्कविमान वाहकाः

टी०—एतानि च ज्योतिष्कविमानानीत्यादि, नेश्वरादीच्छातः, किन्तु लोकानुभावादेव, एतानि विमानानि ज्योतिषां **प्रसक्तावस्थितगतीन्यपि** प्रसक्ता-सम्बद्धा अवस्थिता-आभीक्ष्ण्येन गतिर्येषां तानि प्रसक्तावस्थितगतीन्यपि सन्ति समृद्धिविशेषप्रकटनायाभियोग्यनामकर्मोदयभाजः सर्वदैव गतिरतयो गमनक्रीडाशीला **देवा वहन्ति** । चशब्दः समुच्चये । **ऋद्धिविशेषार्थमाभियोग्यनामकर्मोदयाच्चे**त्यनेनैतद् भाष्येण प्रतिपादयति—न च तेषां वोढॄणां भारजनितं दुःखं समस्ति, ते हि गमनक्रीडाप्रियत्वाल्लोकानुभावादेव तेषु भ्रमत्स्वधस्तात् स्थिता नानावेषधारिणो श्रज्यां प्रतिपद्यन्ते, अवन्ध्यफलत्वादाभियोग्यकर्मणः, तद्यथा–नखदंष्ट्राटोपकेसरभासुरसटाप्रकीर्णकिरणसमूहानुरञ्जिताः कपिलनयनतारकाः **केसरिणः पुरस्ताद्** वहन्तीति । **दक्षिणतो** मदप्रसेकार्द्रगण्डा मदावघूर्णितप्रसारितकराः षड्दन्तोपशोभिताननाः दन्तिनः, **अपरतः** प्रशस्ताङ्गोपाङ्गोपचितमूर्तयो **वृषभाः, उत्तरतो जविनोऽश्वा इति** । सर्वे चैते षोडशसहस्रसङ्ख्या देवाः सवितुर्विमानं वहन्ति, तथा चन्द्रमसः । ग्रहविमानमष्टौ सहस्राणि वहन्ति, नक्षत्रविमानं चत्वारि सहस्राणि, ताराविमानं सहस्रद्वयमिति । सर्वबहिर्मण्डलस्थयोरन्तरं योजनलक्षं षट् च शतानि षष्ट्यधिकानि सूर्ययोः, चन्द्रमसोरप्येतदेव बहिर्मण्डलस्थयोरन्तरं षोडशैकषष्टिभागहीनं, पञ्च शतानि नवोत्तराणि त्रिपञ्चाशच्चैकषष्टिभागाश्चन्द्रमसः काष्ठान्तरमवसेयम्, मण्डलान्तरं तु पञ्चत्रिंशद् योजनानि त्रिंशदेकषष्टिभागाश्चत्वारश्च सप्तभागा योजनस्येति ॥ १४ ॥

येयं ज्योतिषां गतिः सातत्येनैनामन्ये काल इत्यध्यवस्यन्ति, तत् कथमिति ? उच्यते—न गतिशब्दवाच्यः कालः, तत्साध्यः किन्तु योऽयमतीतानागतवर्तमानभेदः सः ।

## सूत्रम्—तत्कृतः कालविभागः ॥ ४–१५ ॥

**भा०—कालोऽनन्तसमयः वर्तनादिलक्षण इत्युक्तम् (अ० ५, सू० ३९, २२)। तस्य विभागो ज्योतिष्काणां गतिविशेषकृतश्चारविशेषेण हेतुना । तैः कृतस्तत्कृतः ।**

टी०—अथवा यत एव ज्योतिष्काः सदा नियतगतयो नान्ये, अत एवायं नृलोके **तत्कृतः कालविभागः । कालोऽनन्तसमय** इत्यादि भाष्यम् । मुख्यवृत्तिसमाश्रयणात् सक-

लमनुष्यक्षेत्रव्यापी समय एको वर्तमानकालः, स च परस्ताद् वक्ष्यते स्वरूपतः। अत्र च प्रवचने सङ्ग्रहव्यवहारापेक्षयोभयथा प्रस्थानम्। एके मन्यन्ते–जीवाजीवद्रव्ययोरेव पर्यायः कश्चिद् विशिष्टो वर्तनापरिणामक्रियापरापरत्वलक्षणः काल इति व्यपदिश्यते, न पुनर्जीवाकाशधर्माधर्मपुद्गलद्रव्यव्यतिरिक्तोऽतिस्पष्टलिङ्गः कश्चिद् द्रव्यविशेषः समस्ति, यमुररीकृत्येदमभिधानं प्रवर्तिष्यते–कालोऽयमिति। अपि च–पञ्चास्तिकाया उक्ताः प्रवचने, यदि कालोऽपि पृथक् स्यात् षडस्तिकायाः प्रसज्येरन्, अनिष्टं चैतत्। आगमश्च—"[1]किमिदं भंते! कालेत्ति वुच्चत्ति ?। गोयमा! जीवा चेव अजीवा चेव" ( भग० )। अपरे मन्यन्ते–पञ्चास्तिकायव्यतिरिक्तं कालद्रव्यं षष्ठमस्ति कार्यानुमेयत्वादण्वादिवत्, असति हि नियामकद्रव्ये किसलयकलिकाफलप्रसवपरिणतयः सहकारतरोर्युगपदाविर्भवेयुः, क्रमभाविनी चैषां किसलयादिपरिणतिरुपलभ्यते, ततः शक्यमनुमातुं–यदनुरोधादेताः कार्यव्यक्तयस्तारतम्येनात्मातिशयमासादयन्ति सोऽस्त्यत्र कोऽपि कालः। तथादृष्टस्य स तरोरेव कार्याविर्भाव इति चेन्न सततसन्निहितत्वात् समकमेव सकलकार्याविर्भावप्रसङ्गः स्यात्॥ ननु यस्यापि कालद्रव्यमेकं विविक्तं तस्यापि तत्सन्निधानात् सर्वाः कार्यावस्थाः किमिति युगपन्नानुवर्तन्ते ?। उच्यते–तद्धि शिशिरवसन्तादिभेदेन भिद्यमानमनेकधा कार्यव्यक्तीः सृजति, ते च भेदाः प्रतिविशिष्टपरिणतिमनुरुध्यमाना विविक्तकार्यहेतवस्तस्मादस्तु द्रव्यान्तरं कालः। तथा चागमः–"[2]कइ णं भंते! दव्वा पण्णत्ता ? गोयमा! छ दव्वा पण्णत्ता, तंजहा–धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए जीवत्थिकाए पुग्गलत्थिकाए अद्धासमए" (भग०)। तथा निर्युक्तिकारेणाप्यावश्यके द्रव्याद्धायथायुष्कादिभेदं कालं व्याचक्षाणेन पृथग्द्रव्यादिभ्यः कालो व्याख्यात इति। पञ्चमेऽध्याये च यदत्र वक्तव्यं तद् वक्ष्यामः। सम्प्रति प्रकृतमनुस्रियते। स एष कालोऽनन्तसमय इति समूहाध्यारोपादुच्यते—वर्तनादीनि लक्षणानि यस्यासौ वर्तनादिलक्षण इत्युक्तं ( २२ ) सूत्रमात्रेण पञ्चमेऽध्याये, तस्यैवंविधस्य कालस्य, **विभागाः समयावलिकादयो ज्योतिष्काणां गतिविशेषकृताः** स्वतः सोऽभिन्नः परोपाधिकं भेदमापद्यते, ते चास्य भेदाः सवितृगतिविशेषेणोपलक्ष्यन्ते, **चारविशेषेण हेतुना नक्तंदिवादयः** परिस्थूराः, न तु समयादयोऽत्यन्तसूक्ष्माः। केन ह्याकारेण समयप्रज्ञापनायामादित्यगतिरुपलक्षणं स्यात्। तस्मादतिस्थूलः कालः कालभेदेन भिद्यमानो भिद्यमानः परां काष्ठामनुप्राप्तः समय उच्यते। तैर्ज्योतिष्कचारविशेषैः कृतः–उपलक्षितस्तत्कृतः कालस्यायं विभागकलापः परिज्ञेयः, तत्र समयस्यैकत्वाद् विभागाभावः, समूहस्य चामुख्यत्वादेव न विभागः, तस्माद् विभागशब्द [3]उपचारार्थः कल्पितो विभाग इत्यर्थः॥

(मार्जिन: कालस्य द्रव्यताविचारः)

---

१ कोऽयं भदन्त! काल इत्युच्यते ? गौतम! जीवाश्चैव अजीवाश्चैव। २ कति भदन्त! द्रव्याणि प्रज्ञप्तानि ? गौतम! षड् द्रव्याणि प्रज्ञप्तानि, तद्यथा–धर्मास्तिकायः अधर्मास्तिकायः आकाशास्तिकायः जीवास्तिकायः पुद्गलास्तिकायः अद्धासमयः।

३ 'उपचारः' इति ग-पाठः।

**भा०—तद्यथा-अणुभागाश्चारा अंशाः कला लवा नालिका मुहूर्ता दिवसा रात्रयः पक्षा मासा ऋतवः अयनानि संवत्सरा युगमिति लौकिकसमो विभागः । पुनरन्यो विकल्पः प्रत्युत्पन्नोऽतीतोऽनागत इति त्रिविधः । पुनस्त्रिविधः परिभाष्यते—सङ्ख्येयोऽसङ्ख्येयोऽनन्त इति ॥**

लौकिकसमकालविभागः

टी०-**तद्यथा अणुभागाश्चारा अंशाः कला लवा** इत्यादि । सर्व एते कालविशेषाभिधायिनः शब्दा इति, एष च **लौकिकैः समः**-तुल्यो **विभागः** कालस्य, वैशेषिकपौराणिकादिनिरूपितकालविभागसदृश इत्यर्थः । **पुनरन्यो** लौकिकसम एव विभागः **प्रत्युत्पन्नोऽतीतोऽनागत इति त्रिविधः** । प्रत्युत्पन्नो-वर्तमानः, समय एव निश्चयात्, स चातीतानागताभ्यां विना वर्तमानव्यपदेशमेव नाश्नुत इत्यवश्यं तौ तदवधिभूतावेषितव्यौ, सम्बन्धिशब्दत्वादिति । व्यावहारिकस्तु स्वपरिकल्पवशात् प्रत्युत्पन्नादिस्त्रिविधः, प्रत्युत्पन्नो मुहूर्तादिरनेकभेदः, अनागतो द्विधा-भावतो विषयतश्च, भावतो घटाद्यनुत्पादकालः, अप्राप्तदर्शनो विषयतः, अतीतोऽपि द्विधा-भावविषयभेदतः, भावतः कुम्भादिविलयः, दर्शनादूर्ध्वं विषयत इति, भावो विषयो वाऽत्रोपलक्षणमात्रमवगन्तव्यमिति । **पुनस्त्रिविधः** स्वसमये **परिभाष्यते-सङ्ख्येयोऽसङ्ख्येयोऽनन्त इति** ॥ तत्र सङ्ख्येयादित्रिविधकालस्वरूपपरिज्ञानाय सकलकालभेदादित्वात् समय एव तावत् प्रज्ञाप्यत इत्याह—

प्रत्युत्पन्नादीनां भेदान्तरम्

**भा०-तत्र परमसूक्ष्मक्रियस्य सर्वजघन्यगतिपरिणतस्य परमाणोः स्वावगाहनक्षेत्रव्यतिक्रमकालः समय इत्युच्यते परमदुरधिगमोऽनिर्देश्यः । तं हि भगवन्तः परमर्षयः केवलिनो विदन्ति, न तु निर्दिशन्ति, परमनिरुद्धत्वात्, परमनिरुद्धे हि तस्मिन् भाषाद्रव्याणां ग्रहणनिसर्गयोः करणप्रयोगासम्भव इति ।**

समयस्य स्वरूपम्

टी०-**तत्र परमसूक्ष्मक्रियस्ये**त्यादि । तत्र-एतस्मिन् त्रिविधकालव्याख्याप्रस्तावे समयस्तावदयं भवति, परमसूक्ष्मा क्रिया-गतिपरिणामो यस्य, अत्यन्तजघन्य इति प्रसिद्धतरेण ध्वनिना विवृणोति, **परमाणोर्**निर्विभागस्य पुद्गलद्रव्यस्य, **स्वावगाहनक्षेत्रव्यतिक्रमकाल** इति स्वावगाहक्षेत्रम्-आकाशपरमाणुस्तस्य व्यतिक्रमो-लङ्घनं परित्यागस्तदनन्तरप्रदेशसङ्क्रान्तिरित्यर्थः, स्वावगाहक्षेत्रव्यतिक्रमस्तस्य यः कालः स **समय उच्यते** । एतदुक्तं भवति-परमाणोः स्वावगाहक्षेत्रात् तदनन्तरवर्तिस्वावगाहक्षेत्रसङ्क्रान्तिक्रियोपलक्षितः कालः समयोऽभिधीयते, स चाविभागः परमनिरुद्धोऽत्यन्तसूक्ष्मत्वात् **परमदुरधिगमः** परमैरप्यतिशयसम्पन्नैः दुःखेनाधिगम्यते इति । अनिर्देश्यश्चासौ-न स कालो निर्देष्टुं शक्यते, परमर्षीणां तु स्वप्रत्यक्षत्वात् स्वसुखादिवत्, न निर्लुठितस्वरूपः परेभ्यः प्रतिपादयितुं शक्यते घटादिवत्,

१ 'स च मुखादिविनिर्लुठित' इति क-पाठः ।

अतः कयाऽपि काका निदर्शनरूपया प्रज्ञाप्यत इत्यावेदयति, **तमेवंप्रकारं समयं** यस्मादनुपमलक्ष्मीप्रयत्नभाजः **परमर्षयः** परिहीणच्छद्मानः समस्तज्ञेयग्राहिणा केवलज्ञानेनावगच्छन्ति स्वरूपतो न पुनर्निर्दिशन्त्यन्यस्मै, **परमनिरुद्धत्वादिति** अल्पत्वादित्यर्थः। यावत् तत्स्वरूपप्रतिपादनाय भाषाद्रव्याण्यादीयन्ते तावदसङ्ख्येयास्तेऽतिक्रामन्तीत्यर्थः। **परमनिरुद्धे हि तस्मिन् भाषाद्रव्याणां ग्रहणनिसर्गयोः करणप्रयोगासम्भव इति।** कायकरणप्रयोगेण भाषाद्रव्याण्यादाय वाक्पर्याप्तिकरणव्यापारेण निसृजति, तयोश्च निसर्गग्रहणविषययोः करणं व्यापारयितुं न शक्यतेऽत्यल्पत्वात्, अतः परमनिरुद्धे तस्मिन् भाषाद्रव्याणां ग्रहणनिसर्गासम्भवादवगतिरेव केवला न प्रज्ञापनमस्तीति। अथवाऽऽर्षप्रसिद्ध्या तुन्नागदारकपट्टशाटिकापाटननिदर्शनात्[1] समयप्रज्ञापना कार्या। एवं तावत् समयः सर्वकालभेदादिरवसेयः।

**भा०–ते त्वसङ्ख्येया आवलिका। ताः सङ्ख्येया उच्छ्वासः, तथा निःश्वासः। तौ बलवतः पट्विन्द्रियस्य कल्पस्य मध्यमवयसः स्वस्थमनसः पुंसः प्राणः। ते सप्त स्तोकः। ते सप्त लवः। तेऽष्टात्रिंशदर्धं च नालिका। ते द्वे मुहूर्तः। ते त्रिंशदहोरात्रम्। तानि पञ्चदश पक्षः। तौ द्वौ शुक्लकृष्णौ मासः। तौ द्वौ मासावृतुः। ते त्रयोऽयनम्। ते द्वे संवत्सरः। ते पञ्च चन्द्रचन्द्राभिवर्धितचन्द्राभिवर्धिताख्या युगम्। तन्मध्येऽन्ते चाधिकमासकौ। सूर्यसावनचन्द्रनक्षत्राभिवर्धितानि युगनामानि। वर्षशतसहस्रं चतुरशीतिगुणितं पूर्वाङ्गम्। पूर्वाङ्गशतसहस्रं चतुरशीतिगुणितं पूर्वम्। एवं तान्ययुतकमलनालिनकुमुदतुट्यडडाववाहाहाहूहूचतुरशीतिशतसहस्रगुणाः सङ्ख्येयः कालः।**

आवलिकादिविचारः

**टी०–** ते चासङ्ख्येयाः समया **आवलिका** भण्यते, सा च जघन्ययुक्तकासङ्ख्येयकसमयप्रमाणा[3] भवति। **ताः सङ्ख्येयाः**($४४४६\frac{२४५८}{३७७३}$) सत्य आवलिका एक **उच्छ्वासो निःश्वासो** वा ऊर्ध्वाधोगमनभेदात्। तावुच्छ्वासनिःश्वासावित्थंप्रमाणौ शारीरबलयुक्तस्यानुपहतकरणग्रामस्य नीरुजस्य मध्यंवयोऽनुप्राप्तस्य मनोदुःखेनानभिभूतस्य पुरुषस्य **प्राणो** नाम कालविशेषो भवति, बलवदादिविशेषणानि च प्रतिविशिष्टोच्छ्वासपरिग्रहणाय, अन्यथा कर्तृभेदादनेकरूपाः समुच्छ्वासनिःश्वासा इति न शक्येत प्राणस्वरूपं निरूपयितुमनवस्थितत्वात्, अत एवंप्रकारस्य पुंसो यावुच्छ्वासनिःश्वासाविति। उक्तलक्षणाः प्राणास्ते सप्तसङ्ख्याकाः **स्तोको** नाम कालविशेषः। ते स्तोकाः सप्त **लवो**ऽभिधीयते। लवानामष्टाधिका त्रिंशल्लवार्धं[2] च **नालिका** भवति। नालिकाद्वयं **मुहूर्तः**। त्रिंशन्मुहूर्तमहोरात्रम्। पञ्चदशभिरहोरात्रैः **पक्षः**। शुक्लकृष्णौ द्वौ पक्षौ **मासः**। मासद्वयमृतुर्वसन्तादिभेदः। ऋतुत्रयमयनम्। अयनद्वयं **संवत्सरः**। ते

१ 'तुशगदारुक् पदशाटिका' इति क–पाठः। २ 'ऽष्टाधिकात्रिंश' इति क–पाठः।
३ जघन्यमध्यमोत्कृष्टपरीत्तयुक्तासंख्यातासंख्यातभेदेनासंख्यातस्य नवविधत्वात्, चतुर्थं चैतत्।

**संवत्सराः पञ्च चन्द्रचन्द्राभिवर्धितचन्द्राभिवर्धिताख्या युगम्।** तत्र चन्द्रसंवत्सरपरिज्ञानाय चन्द्रमासपरिमाणमेव तावदाख्यायते–एकोनत्रिंशद् दिनानि द्वात्रिंशच्च द्विषष्टिभागा ($२९\frac{३२}{६२}$) दिवसस्य चन्द्रमासः। एवंप्रकारेण मासेन द्वादशमासपरिमाणश्चान्द्रः संवत्सरः। स चायं–त्रीणि शतान्यह्नां चतुष्पञ्चाशदुत्तराणि द्वादश द्विषष्टिभागा ( $३५४\frac{१२}{६२}$ ) इति। एतेन शेषाणि चन्द्रसंवत्सराणि व्याख्यातानि॥ अधुनाऽभिवर्धितसंवत्सरपरिज्ञानायाभिवर्धितमासोऽभिधीयते–एकत्रिंशद् दिनानि एकविंशत्युत्तरशतं चतुर्विंशत्युत्तरशतभागा ( $३१\frac{१२१}{१२४}$ ) नामभिवर्धितमासः। एवंविधेन मासेन द्वादशमासप्रमाणोऽभिवर्धितसंवत्सरः, स चायं–त्रीणि शतान्यह्नां त्र्यशीत्यधिकानि चतुश्चत्वारिंशच्च द्विषष्टिभागाः ( $३८३\frac{४४}{६२}$ )। एतैश्चान्द्रादिभिः पञ्चभिः संवत्सरैरेकं युगं भवति। तन्मध्येऽन्ते **चाधिकमासकौ** तेषां पञ्चानां संवत्सराणां मध्येऽभिवर्धिताख्ये संवत्सरेऽधिकमासकः पतति, अन्ते च अभिवर्धित एव, सूर्यमासस्त्वयमवगन्तव्यः–त्रिंशद् दिनान्यर्धं च($३०\frac{१}{२}$), एवंविधद्वादशमासनिष्पन्नः संवत्सरः सावित्रः, स चायं–त्रीणि शतान्यह्नां षट्षष्ट्यधिकानि(३६६), अनेन च मानेन सर्वकालः सर्वायूंषि समा विभागाश्च गण्यन्ते। सावनमासस्त्रिंशदहोरात्र एव, एष च कर्ममास ऋतुमासश्चोच्यते, एवंविधद्वादशमासनिष्पन्नः सावनसंवत्सरः, स चायं–त्रीणि शतान्यह्नां षष्ट्यधिकानि ( ३६० )। चन्द्राभिवर्धितावुक्तौ। नक्षत्रमासस्त्वयं–सप्तविंशतिदिनान्येकविंशतिः सप्तषष्टिभागाः ( $२७\frac{२१}{६७}$ ), एवंविधद्वादशमासनिष्पन्नो नक्षत्रसंवत्सरः। स चायं–त्रीणि शतान्यह्नां सप्तविंशत्युत्तराण्येकपञ्चाशच्च सप्तषष्टिभागा ($३२७\frac{५१}{६७}$) इत्येवं स्वस्वमासनामनिष्पन्नानि **युगनामानि** भवन्ति। विंशतिभिर्युगैर्वर्षशतं भवति। दशभिर्वर्षशतैर्वर्षसहस्रम्। वर्षसहस्रं शतगुणं **वर्षशतसहस्रम्।** तच्चतुरशीतिगुणितमेकं **पूर्वाङ्गम्।** पूर्वाङ्गलक्षाः चतुरशीतिगुणिताः[१] **पूर्वम्।** पूर्वतः पूर्वतो विकल्पात् परः परो विकल्पश्चतुरशीतिलक्षगुणो वेदितव्यः तुट्यङ्गाद्यावच्छीर्षप्रहेलकेति, तुट्यङ्गं तुटिका, अडडाङ्गं अडडा, अववाङ्गं अववा, (हाहाङ्गं हाहा ), हूहङ्गं हूहुका, उत्पलाङ्गं उत्पलम्, पद्माङ्गं पद्मम्, नलिनाङ्गं नलिनम्, अर्थनियूराङ्गं अर्थनियूरम्, चूलिकाङ्गं चूलिका, शीर्षप्रहेलिकाङ्गं शीर्षप्रहेलिका,[२] प्रावचनक्रमोऽयम्, आचा-

चन्द्रमासादीनां तन्नामसंवत्सराणां च स्वरूपम्

पूर्वाङ्गादिस्वरूपम्

१ 'तिलक्षगु०' इति ग-पाठः, स च चिन्तनीयः।

२ शीर्षप्रहेलिकानुपादनात् उपलक्षणं, वाचनाभेदेनाभिधानभेदस्तु नासंभवी।

र्येण त्वन्यथोपात्तः स्वल्पस्थानश्चेति, सर्वथा शीर्षप्रहेलिकान्तः सङ्ख्येयः कालो भवति समयादिरिति। सूर्यप्रज्ञप्तौ तु पूर्वादुपरि लताङ्गादिक्रमः शीर्षप्रहेलिकान्त इति, एतावान् गणितशास्त्रविषयोऽपीति।

भा०—अत ऊर्ध्वमुपमानियतं वक्ष्यामः। तद्यथा हि नाम योजनविस्तीर्णं योजनोच्छ्रायं वृत्तं पल्यमेकरात्राद्युत्कृष्टसप्तरात्रजातानामङ्गलोम्नां गाढं पूर्णं स्याद्, वर्षशताद् वर्षशतादेकैकस्मिन्नुद्ध्रियमाणे शुद्धिनियमतो यावता कालेन तद् रिक्तं स्यादेतत् पल्योपमम्। तद् दशभिः कोटाकोटिभिर्गुणितं सागरोपमम्। तेषां कोटाकोट्यश्चतस्रः सुषमसुषमा। तिस्रः सुषमा। द्वे सुषमदुष्षमा। द्विचत्वारिंशद् वर्षसहस्राणि हित्वा एका दुष्षमसुषमा। वर्षसहस्राणि एकविंशतिर्दुष्षमा। तावत्येव दुष्षमदुष्षमा॥

पल्योपमादिविचारः

टी०—अत ऊर्ध्वमुपमानियतं वक्ष्याम इति। सङ्ख्येयादनन्तरमसङ्ख्येयः कालो भण्यते। स च गणितविषयातीतत्वादुपमया कयाचिन्नियम्यते, सर्वश्चैष बौद्धो व्यवहारः परप्रतिपत्तयेऽभ्युगम्यते, बाह्यार्थशून्यत्वात्, अन्यथा परमार्थविचारणायामतिदुष्करं स्यादिदं सर्वम्, तद्यथा हीत्यादि यावदेतत् पल्योपममिति सुज्ञानम्, तच्च त्रिविधम्—उद्धारपल्योपममद्धापल्योपमं क्षेत्रपल्योपमं चेति। पुनर्बादरसूक्ष्मभेदादेकैकं द्विधा, तत्रोक्तलक्षणं भाष्ये बादराद्धापल्यं सङ्ख्येयवर्षकोटिव्यतिक्रान्तिसमकालम्। तान्येव वालाग्राण्येकैकशोऽसङ्ख्येयान्यदृश्यानि खण्डानि कृत्वा बुद्ध्या स एव पल्यो भ्रियते। ततः प्रतिवर्षशतमेकैकवालाग्रोद्धारे वर्षाण्यसङ्ख्येयानि व्यतिक्रामन्त्येतत् सूक्ष्माद्धापल्योपमम्। अस्य च प्रयोजनमुत्सर्पिण्यादिविभागपरिज्ञानम्, ज्ञानावरणादिकर्मस्थितयः कायभवस्थितयश्च पृथिव्यादिकायानां निरूप्यन्त इति। उद्धारपल्योपमं तु बादरं स्थूलवालाग्रापहारे प्रतिसमयमेकैकस्मिन् सति भवति, तच्च सङ्ख्येयसमयपरिमाणं वेदितव्यम्। एतान्येव वालाग्राण्येकैकशोऽसङ्ख्येयखण्डीकृतानि। ततः प्रतिसमयमेकैकवालाग्रोद्धारे वर्षकोटिभिः सङ्ख्येयाभिः सूक्ष्मोद्धारपल्यं भवति। अस्य च प्रयोजनमर्धतृतीयसागरोपमोद्धारसमयराशिप्रमाणतुल्या द्वीपसमुद्रा इति। क्षेत्रपल्योपममपि बादरसूक्ष्मभेदाद् द्विविधम्, बादरलोमखण्डभृतक्षेत्रप्रदेशराश्यपहारे प्रतिसमयं बादरक्षेत्रपल्योपमम्, सूक्ष्मलोमखण्डभृतक्षेत्रप्रदेशराश्यपहारे प्रतिसमयं सूक्ष्मक्षेत्रपल्योपमम्, असङ्ख्योत्सर्पिणीभिश्च परिनिष्ठानमस्य भवति। एतेन च पृथिव्यादिजीवपरिमाणमानीयत इति प्रवचनविदो वर्णयन्ति प्रयोजनम्। एषां च त्रयाणामपि पल्योपमानां प्रत्येकं कोटीनां कोटी दशगुणिता सती सागरोपममिति व्यपदिश्यते त्रिविधमेव। एषां सागरोपमाणां चतस्रः कोटीकोट्यः सुषमसुषमानामकालविशेषः। तिस्रः कोटीकोट्यः सागरोपमाणां

पल्योपमस्यावान्तरभेदाः, तेषां प्रयोजनानि च

१ इतः परं सद्भावेऽपि गणितस्य न तद्व्यावहारिकमिति नोक्तम्। २'माणे यावता' इति क-पाठः।

सुषमा। द्वे सागरोपमकोटीकोट्यौ सुषमदुष्षमा। द्विचत्वारिंशद् वर्षसहस्राणि हित्वा चैका कोटीनां कोटी दुष्षमसुषमा। एकविंशतिर्वर्षसहस्राणि दुष्षमा। तावत्येव दुष्षमदुष्षमा, एकविंशतिवर्षसहस्राणीत्यर्थः।

भा०—एताः अनुलोमप्रतिलोमा अवसर्पिण्युत्सर्पिण्योर्भरतैरावतेष्वनाद्यनन्तं परिवर्तन्ते अहोरात्रवत्। तयोः शरीरायुःशुभपरिणामानामनन्तगुणे हानिवृद्धी। अशुभपरिणामानां[3] वृद्धिहानी। अवस्थिताऽवस्थितगुणाश्चैकैकाऽन्यत्र। तद्यथा—कुरुषु सुषमसुषमा, हरिरम्यकवासेषु सुषमा, हैमवतहैरण्यवतेषु सुषमदुष्षमानुभावः, विदेहेषु सान्तरद्वीपेषु दुष्षमसुषमा इति, एवमादिमनुष्यक्षेत्रे पर्यायापन्नः कालविभागो ज्ञेय इति॥ १५॥

क्षेत्रापेक्षया कालविचारः

टी०—एताः सुषमदुष्षमाद्या यथोपन्यस्ता आनुलोम्येन षडप्यवसर्पिणीनामकालः शरीरोच्छ्रायायुष्ककल्पवृक्षादिपरिहाणेर्दशसागरोपमकोटीकोट्यः परिमाणतः। तथा प्रातिलोम्येनोत्सर्पिणीनामकालः शरीरोच्छ्रायादिपरिवृद्धेर्दशसागरोपमकोटीकोट्य एव परिमाणतः। एतच्चोत्सर्पिण्यवसर्पिणीकालचक्रकं पञ्चसु भरतेष्वैरावतेषु पञ्चस्वनाद्यन्तं परिवर्तते, यथाऽहोरात्रे-वासरो रजनी वा न शक्यते निरूपयितुमादित्वेनान्तत्वेन वाऽनादित्वादहोरात्रचक्रकप्रवृत्तेस्तथैतदपीति। तत्रावसर्पिण्यां शरीरोच्छ्रायादेरनन्तगुणपरिहाणिः परतः परतः। सुषमसुषमायां गव्यूतत्रितयं शरीरोच्छ्रायो मनुष्याणामायुस्त्रीणि पल्योपमानि शुभपरिणामोऽपि कल्पवृक्षादिरनेकः। सुषमायां गव्यूतद्वयं पल्योपमद्वयं कल्पवृक्षादिपरिणामश्च शुभो हीनतरः। सुषमदुष्षमायामेकं गव्यूतमेकं पल्योपमं हीनतरश्च कल्पवृक्षादिपरिणामः। दुष्षमसुषमायां पञ्चधनुःशतप्रभृति सप्तहस्तान्तं शरीरप्रमाणमायुरपि पूर्वलक्षपरिमाणं परिहीनश्च कल्पवृक्षादिपरिणामः। दुष्षमायामनियतं शरीरप्रमाणमायुरप्यनियतं वर्षशतादर्वाक् पर्यन्ते विंशतिवर्षाणि परमायुः शरीरोच्छ्रायो हस्तद्वयं औषधिवीर्यपरिहाणिरनन्तगुणेति। अतिदुष्षमायामप्यनियतं शरीरोच्छ्रायादि सर्वं पर्यन्ते तु हस्तप्रमाणं वपुः परमायुः षोडश वर्षाणि निरवशेषौषधिपरिहाणिश्चेति, एवं वृद्धिः प्रातिलोम्येन वक्तव्या। अशुभानां परिमाणविशेषाणामवसर्पिण्यां वृद्धिरुत्सर्पिण्यां हानिरिति। अवस्थिता स्वरूपेण न भ्रमति। ये च गुणास्तस्यां ते चावस्थिताः कल्पवृक्षादिपरिणामविशेषाः अतोऽवस्थिता (वस्थितगुणा) चान्यत्रैकैका सुषमसुषमादिर्भवति, तद्यथा-देवकुरूत्तरकुरुषुसुषमसुषमानुभावाःसर्वदावस्थिताः, हरिरम्यकवास्येषु सुषमानुभावोऽवस्थितः, हैमवतहैरण्यवतेषु सुषमदुष्षमानुभावोऽवस्थितः, विदेहक्षेत्रेषु षट्पञ्चाशत्सु चान्तरद्वीपेषु दुष्षमसुषमानुभावोऽवस्थितः। एवमादिर्मनुष्यक्षेत्रे पर्या-

कालचक्रे शरीरोच्छ्रायादिविचारः

१ 'ताः' इति घ-पाठः। २ '०गुण' इति घ-पाठः। ३ '०णामवृद्धि०' इति घ-पाठः।

यापन्नः कालविभागो ज्ञेय इति । एवमादिरित्यनेनानेकभेदत्वमादर्शयति । कालस्य पुद्गलपरावर्तादेः, सर्वाद्धादिश्चानन्तः काल इति । मनुष्यक्षेत्रपर्यायापन्न इति परिमितदेशवर्तित्वं कालस्यावगमयति । इह प्रसिद्धेनान्यत्रापि वर्तमाना देवतादयो व्यवहरन्ति, कालस्य समूहबुद्ध्याऽङ्गीकृतस्य समयादिर्विभागो वेदितव्यः इति, असङ्ख्येयत्वमनन्तत्वं च कालस्य भाष्यादेव परिगन्तव्यम् । गणितविषयातीतोऽसङ्ख्येयः, अविद्यमानोऽन्तोऽनन्त इति ॥ १५ ॥

अत्राह—यदि ज्योतिष्का **मेरुप्रदक्षिणा नित्यगतयो नृलोके** ( अ० ४, सू० १४ ) भवन्ति अथ ये बहिर्नृलोकात् ते कथमित्यत्रोच्यते—

## सूत्रम्—बहिरवस्थिताः ॥ ४-१६ ॥

नृलोकबहिर्ज्योतिष्कविचारः

**भा०—नृलोकाद् बहिर्ज्योतिष्काः अवस्थिताः, अवस्थिता इत्यविचारिणः, अवस्थितविमानप्रदेशा अवस्थितलेश्याप्रकाशा इत्यर्थः । सुखशीतोष्णरश्मयश्चेति ॥ १६ ॥**

**टी०—**नृलोकाद् बहिरवस्थिता ज्योतिष्का इत्यादि भाष्यम् । नृलोकादित्यर्थवशाद् विभक्तिपरिणतिः । मानुषोत्तरगिरेर्बहिर्ये सूर्यादयस्तेऽवस्थिताः—न परिभ्रमन्ति स्वभावादेवाविचारिणो देवाः । **अवस्थितविमानप्रदेशा** इति विमानानां प्रदेशा—बुध्नाः प्रतिष्ठास्थानानि, अवस्थिता विमानप्रदेशा येषां तेऽवस्थितविमानप्रदेशाः निश्चलत्वान्न देवाः परिभ्रमन्त्येवं न विमानानि यथा नृलोक इति प्रतिपादयति, **अवस्थितलेश्याप्रकाशा इत्यर्थः** । अवस्थितौ लेश्याप्रकाशौ येषां तेऽवस्थितलेश्याप्रकाशाः, लेश्या-वर्णः,स नृलोकान्तर्वर्तिनामुपरागादिभिरन्यत्वमपि प्रतिपद्यते, तद्बहिर्वर्तिनां तु तदभावादवस्थितपीतवर्णत्वम्, प्रकाशोऽप्यवस्थितस्तेषां योजनशतसहस्रपरिमाणो निष्कम्पत्वादस्तमयोदयाभावाच्चेति, अवस्थितशब्दव्याख्यानाविच्छेदाभिप्रायेण सूरिरित्यर्थ इति प्रयुक्तवान् । **सुखशीतोष्णरश्मयश्चेति** । सुखाः शीतोष्णरश्मयो येषां ते सुखशीतोष्णरश्मयः चन्द्राः सवितारश्च, नात्यन्तशीताः शिशिरत्विषः, नात्यन्तोष्णाः किरणमालिनः किरणाः, किन्तु द्वयोरपि साधारणाः स्वभावादेवेत्यतः सुखहेतुत्वात् सुखाः, सर्वेशशाङ्काश्च बहिरभिजिता युक्ताः, सवितारश्च पुष्यैरिति ॥ १६ ॥

उक्ता ज्योतिष्काः स्थानादिप्रक्रमेण । अथ तुरीयो देवनिकायः किंनामा कतिभेदो वेत्यत्रोच्यते—**वैमानिकाः** । अथवा तत्राभिहितलक्षणाधिवासविशेषेभ्यस्तुर्यो देवनिकायो यस्तस्य विकल्पव्याख्याप्रसङ्गे लघ्वर्थमादितः प्राक् स्थितेः प्रतिसूत्रमिदमवोचमित्यध्यकार्षीत्, स्थानसम्बन्धेन यानुपदेक्ष्यामः, सर्वे एवैते—

## सूत्रम्—वैमानिकाः ॥ ४-१७ ॥

**भा०—चतुर्थो देवनिकायो वैमानिकाः,तेऽत ऊर्ध्वं वक्ष्यन्ते । विमानेषु भवा वैमानिकाः ॥ १७ ॥**

**टी०**—चतुर्थो देवनिकाय इत्यादि भाष्यम् । चतुर्णां पूरणश्चतुर्थः देवनिकायः—सुर-समूहः नामतो **वैमानिकाः**, तेऽतः—इतः प्रभृत्यूर्ध्वं प्राक् स्थितेः वक्ष्यन्ते, विशेषेण सुकृतिनो मानयन्ति विमानानि तेषु **भवा वैमानिका** देवा इत्यतः प्रतिसूत्रमवचनमधिकारात्, अथवा परस्परस्य भोगातिशयं तत्रस्थं मिमत इति मन्यते वा हिताहितविज्ञानात्, तानि च त्रिविधान्येव भवन्ति—इन्द्रकश्रेणिपुष्पप्रकीर्णकानि । सर्वत्रान्वर्था पारिभाषिकी व्याख्या, तेषु भवा वैमानिका इति ॥ १७ ॥

ते पुनरनेकविशेषर्द्धियुक्ता विमानवासिनो देवा मूलभेदतो द्विविधाः—

## सूत्रम्—कल्पोपपन्नाः कल्पातीताश्च ॥ ४-१८ ॥

वैमानिकानां द्वैविध्यम्

**भा०—द्विविधा वैमानिका देवाः—कल्पोपपन्नाः कल्पातीताश्च । तान् परस्तात् वक्ष्याम इति ॥ १८ ॥**

**टी०**—**कल्पोपपन्नाः** इन्द्रादिदशतया कल्पनात् कल्पाः—सौधर्मादयोऽच्युतान्ताः तेषूपपन्नाः कल्पोपपन्नाः, कल्पानतीताः **कल्पातीताः** उपरिष्ठाः सर्वे ग्रैवेयकविमानपञ्चकाधिवासिनः । **द्विविधा वैमानिका** इत्यादि भाष्यं सुज्ञानं प्रायः । **तान्** द्विप्रकारानपि **परस्तात्** प्रभेदतो **वक्ष्याम** इति ॥ १८ ॥

एतेषु पुनः कल्पाः कथं सन्निविष्टा इत्याह—

## सूत्रम्—उपर्युपरि ॥ ४-१९ ॥

**भा०—उपर्युपरि च यथानिर्देशं वेदितव्याः । नैकक्षेत्रे नापि तिर्यगधो वेति ॥ १९ ॥**

**टी०—उपर्युपरि** चेत्यादि भाष्यम् । कल्पाः सम्बध्यन्ते, न देवा विमानानि वा, योऽयं निर्देशः करिष्यते सौधर्मादिस्तदङ्गीकरणेन **वेदितव्याः यथानिर्देशं, नैकक्षेत्रे** वर्तिनः कल्पाः, नैकस्मिन् प्रदेशे वर्तन्त इत्यर्थः । **नापि तिर्यक्** प्रतिसन्निवेशेन व्यवस्थिताः, नाधस्तादिति ॥ १९ ॥

ते चामी क्रमात्—

## सूत्रम्—सौधर्मैशान-सनत्कुमार-माहेन्द्र-ब्रह्मलोक-लान्तक-महाशुक्र-सहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजय-वैजयन्त-जयन्तापराजितेषु सर्वार्थसिद्धे च ॥ ४-२० ॥

**भा०—एतेषु सौधर्मादिषु कल्पविमानेषु वैमानिका देवा भवन्ति । तद्यथा—**

१ 'उपर्युपरि न तिर्यग् नाप्यसमञ्जसं ज्योतिष्कविमानवत्' इति ग-टी-पाठः ।

**सौधर्मस्य कल्पस्योपरि ऐशानः कल्पः । ऐशानस्योपरि सनत्कुमारः । सनत्कुमारस्योपरि माहेन्द्र इत्येवमा सर्वार्थसिद्धादिति ॥**

टी०—एतेषु **सौधर्मादिष्वित्यादि** भाष्यम् । कल्पः समुदायः सन्निवेशो विमानमात्रपृथिवीप्रस्तारः, स निमित्तभेदाद् द्वादशधा उपर्यवस्थितः । तद्यथा—ज्योतिष्कोपरितनप्रस्तारादसङ्ख्येययोजनमध्वानमारुह्य मेरूपलक्षितदक्षिणभागार्धव्यवस्थितः प्राक् तावत् सौधर्मः कल्पः प्राचीप्रतीच्यायत उदग्दक्षिणविस्तीर्णोऽर्धचन्द्राकृतिरर्चिर्मालीव भास्वरोऽसङ्ख्येययोजनकोटीकोट्य आयामविष्कम्भाभ्यां परिक्षेपतश्च सर्वरत्नमयो लोकान्तविस्तारो मध्यव्यवस्थितसर्वरत्नमयाशोकसप्तपर्णचम्पकचूतसौधर्मावतंसकोपशोभितशक्रावासः, तस्यैवंरूपस्योपरि सौधर्मस्य ऐशानकल्पः । सोऽप्येवंविध एवोदग्र्व्यवस्थितः ईषदुपरितनकोट्या समुच्छ्रिततरो मध्यव्यवस्थिताङ्कस्फटिकरजतजातरूपैशानावतंसकविभूषितः । सौधर्मस्योपरि बहूनि योजनान्यतिक्रम्य समश्रेणिव्यवस्थितः **सनत्कुमारः** कल्पः सौधर्मवद् द्रष्टव्यः, एवमैशानस्योपरि माहेन्द्रसमुच्छ्रिततरोपरितनकोटिरैशानवदवगन्तव्यः । सनत्कुमारमाहेन्द्रकल्पयोरुपरि बहूनि योजनान्यतीत्य मध्यवर्ती सकलनिशाकराकृतिर्ब्रह्मलोकनामकल्पः । अत्र लोकग्रहणं लोकान्तिकदेवप्रतिपत्त्यर्थम् । ते हि किल भक्तिप्रवणीकृतचेतसः सर्वदा जिनेन्द्रजन्मादिप्रलोकनपराः शुभाध्यवसायप्रायाः परिवसन्तीति । एवमुपर्युपरि लान्तकमहाशुक्रसहस्रारास्त्रयः कल्पाः प्रतिपत्तव्याः । अत्र च सूत्रे सूरिणा सप्त सप्तम्य उपात्ताः, ताश्च लघीयस्त्वावस्थितेरधःक्रमप्रदर्शनार्था इति, तत उपरि बहूनि योजनान्यतिलङ्घ्य सौधर्मैशानकल्पद्वयवदानतप्राणतनामानौ द्वौ कल्पाववस्थिताविति, तदुपरि समश्रेणिव्यवस्थितौ सनत्कुमारमाहेन्द्रवदारणाच्युताविवत्येवं द्वादश कल्पाः । तत उपरि ग्रैवेयकानि नवोपर्युपरि, तदुपरि च पञ्च महाविमानानि, इत्येष वैमानिकदेवानामवच्छेद इति ॥

सौधर्मकल्पादीनां वर्णनम्

**भा०—सुधर्मा नाम शक्रस्य देवेन्द्रस्य सभा, सा तस्मिन्नस्तीति सौधर्मः कल्पः । ईशानस्य देवराजस्य निवास ऐशानः, इत्येवमिन्द्राणां निवासयोगाभिख्याः सर्वे कल्पाः । ग्रैवेयकास्तु लोकपुरुषस्य ग्रीवाप्रदेशाविनिविष्टा ग्रीवाभरणभूता ग्रैवा ग्रीव्या ग्रैवेया ग्रैवेयका इति ॥**

टी०—कल्पमध्यवर्तिनी **सुधर्मा नाम शक्रस्य** तन्निवासिसुराधिपतेः **सभा, सा तस्मिन्** कल्पेऽस्तीति **सौधर्मः**, चातुरर्थिकोऽण् । **ईशानस्य देवराजस्य निवासः ऐशान** इति, तस्य निवाससम्बन्धेनाण् । एवमुपरितनाः **सर्वे**ऽपीन्द्राणां **निवासयोगाभिख्याः कल्पाः । ग्रैवेयकास्तु लोकपुरुषस्य ग्रीवाभरणभूताः** उपचाराल्लोक एव पुरुषस्तस्य ग्रीवेव ग्रीवा तस्यां भवा ग्रैवा ग्रैवेया च 'ग्रीवाभ्योऽण्च' ( पा० अ०४, पा०३, सू०५७ ) इति । तथा

'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु'[1] (पा० अ०४, पा०२, सू० ९६ ) वदत्र ग्रीवायां प्रायो भवा ग्रैवेयकाः, तथा ग्रीव्या इति भाष्यकृतोपन्यस्तं ग्रीवायां साधवो ग्रीव्या इति स्याद् व्युत्पत्तिः ॥

**भा०—अनुत्तराः पञ्च देवनामान एव । विजिता अभ्युदयविघ्नहेतवः एभिरिति विजयवैजयन्तजयन्ताः । तैरेव विघ्नहेतुभिर्न पराजिता अपराजिताः ।** अनुत्तराणां पञ्चविधत्वम् **सर्वेष्वभ्युदयार्थेषु सिद्धाः सर्वार्थैश्च सिद्धाः सर्वे चैषामभ्युदयार्थाः सिद्धा इति सर्वार्थसिद्धाः । विजितप्रायाणि वा कर्माण्येभिरुपस्थितभद्राः परीषहैरपराजिताः सर्वार्थेषु सिद्धाः सिद्धप्रायोत्तमार्था इति विजयादय इति ॥ २० ॥**

टी०—**अनुत्तराः** पञ्चेत्यादि । विमानविशेषाः पञ्च सर्वोपर्यनुत्तराः अविद्यमानमुत्तरमन्यद् विमानादि येषां तेऽनुत्तराः **देवनामान एव** ते विमानविशेषाः । **विजिता** अभिभूताः, अभ्युदयः—स्वर्गस्तस्य विघ्नहेतवो निरस्ता **एभि**र्देवैरि**ति विजयवैजयन्तजयन्ताः**, ते हि सकलानभ्युदयविघातहेतूनपास्य हस्तेकृत्य स्वर्गसुखसन्दोहरसमुपभुञ्जते । **तैरेव** चाभ्युदयविघातहेतु**भिर्न पराजिता** इत्य**पराजिताः** । **सर्वेष्वभ्युदयार्थेषु सिद्धाः सर्वार्थसिद्धाः** आभ्युदयिकसुखप्रकर्षवर्तित्वात् सर्वप्रयोजनेष्वव्याहतशक्तयः सर्वार्थसिद्धाः । अथवा **सर्वार्थैश्च सिद्धाः** । **च**शब्दो वाशब्दार्थः । सर्वैर्वाऽतिशयवद्भिः शब्दादिभिरतिमनोहरैः सिद्धाः—प्रख्याताः सर्वार्थसिद्धाः, **सर्वे चैषामभ्युदयार्थाः सिद्धाः** सर्वार्थसिद्धा इति निरवशेषमभ्युदयप्रयोजनप्रतिष्ठत्वाद् **वा सर्वार्थसिद्धा** इति । अयमपरः कल्पः—**विजितप्रायाणि** वेत्यादि, प्रतनुकर्मपटलावच्छन्नत्वात् प्रत्यासन्नानवद्यसुखनिर्भरसिद्धिवधूसमागमत्वादुपस्थितपरमकल्याणाः साधुजन्मनि **परीषहैरपराजिताः** सन्तो मरणादुत्तरमपराजिता एव देवाः समुत्पन्नाः, तत्र वा सततत्रस्तत्वान्न क्षुदादिभिः पराजीयन्त इत्यपराजिताः, तथा सर्वकर्तव्यतायाः परिसमाप्तेः सांसारिक्याः सर्वार्थसिद्धाः, सिद्धप्राय उत्तमार्थो येषां सकलकर्मक्षयलक्षणो मोक्षोऽनन्तरागामिजन्मभावित्वात् ते सर्वार्थसिद्धाः । **एवं विजयादय इति** । एवम्-एतेन प्रकारेण विजयादयोऽपि सर्वार्थसिद्धा एव । तथापि तु काचित् कचित् प्रसिद्धतरा भवति गमनाद् गौर्यथेति ॥ २० ॥

तत्राधिगतानुपूर्वीकाः दिवौकसः प्रकृताः—

## सूत्रम्—स्थितिप्रभावसुखद्युतिलेश्याविशुद्धीन्द्रियावधिविषयतोऽधिकाः ॥ ४–२१ ॥

**भा०-यथाक्रमं चैतेषु सौधर्मादिषु उपर्युपरि देवाः पूर्वतः पूर्वत एभिः स्थित्या**

---

१ 'स्वास्यलङ्कारेवुढवुल्' इति ग–पाठः ।

दिभिरथैँरधिका भवन्ति। तत्र स्थितिरुत्कृष्टा जघन्या च परस्ताद् (सू० २९-४२) वक्ष्यते। इह तु वचने प्रयोजनं येषामपि समा भवति तेषामप्युपर्युपरि गुणतोऽधिका भवतीति यथा प्रतीयेत ॥ प्रभावतोऽधिकाः। यः प्रभावो निग्रहानुग्रहविक्रियापराभियोगादिषु सौधर्मकाणां सोऽनन्तगुणाधिक उपर्युपरि, मन्दाभिमानतया तु अल्पतरसंक्लिष्टत्वादेते न प्रवर्तन्त इति ॥ क्षेत्रस्वभावजनिताच्च शुभपुद्गलपरिणामात् सुखतो द्युतितश्चानन्तगुणप्रकर्षेणाधिकाः ॥ लेश्याविशुद्ध्यधिकाः।लेश्यानियमः परस्तादेषां वक्ष्यते (सू० २३)। इह तु वचने प्रयोजनं यथा गम्येत यत्रापि विधानतस्तुल्यास्तत्रापि विशुद्धितोऽधिका भवन्तीति। कर्मविशुद्धित एव वा अधिका भवन्तीति ॥

स्थितिप्रभावादिभिरुत्तरोत्तरदेवानामाधिक्यम्

टी०—यथाक्रमं चैतेष्वित्यादि भाष्यम्। येन क्रमसन्निवेशेन वैमानिकाः सौधर्मादिषु कल्पेषु व्यवस्थिताः उपर्युपरि तेनैव क्रमसन्निवेशविशेषेण पूर्वस्माद् पूर्वस्माद् विमानप्रस्तारात् कल्पाद् वा एभिः स्थित्यादिभिः सप्तभिरथैँरधिका भवन्ति। तत्र स्थितिरायुषो द्विविधाऽप्युपरिष्टाद् (सू० २९-४२) वक्ष्यते। इहोपन्यासे तु प्रयोजनं येषामप्यधस्तनैरौपरिष्ठानां तुल्यास्थितिर्भवति तेषामप्युपर्युपरि गुणतोऽधिका भवतीति यथा प्रतीयेत, गुणाः सुखाहारग्रहणाल्पशरीरत्वादयस्तैरुपरितनानामधिका अवगन्तव्याः। अचिन्त्या शक्तिः प्रभावः, सोऽधिको भवत्युपरीति, निग्रहानुग्रहौ प्रसिद्धौ विक्रिया-अणिमादिपरिणामशक्तिः, पराभियोगो यदाक्रम्य बलात् परः कारयितव्य इति। प्रतनुकर्मत्वादल्पाभिमाना अक्लिष्टा अक्लिष्टचित्ताश्चोपरितना इति। अनादिपारिणामिकशुभपुद्गलपरिणामात् क्षेत्रस्वभावजनितादुपर्युपरि सुखोदयेनानन्तगुणप्रकृष्टेनाधिकाः, द्युतिर्विग्रहसृजा तयाप्युपरितनाः समभ्यधिकाः। शरीरवर्णो लेश्या तद्विशुद्ध्या चोपरिष्टादधिकाः, तं च लेश्यानियममेषामग्रे (सू० २३) वक्ष्यामः। इह तु वचने प्रयोजनं यत्रापि तुल्यभेदत्वमुपरितनानामाधस्त्यैर्लेश्याभिस्तत्रापि विशुद्धित उपर्युपरि समधिका भवन्ति, प्रतनुकर्मत्वात् शुभबहुलत्वाच्च ॥

भा०-इन्द्रियविषयतोऽधिकाः। यदिन्द्रियपाटवं दूरादिष्टविषयोपलब्धौ तत्प्रकृष्टतरगुणत्वादल्पतरसङ्क्लेशत्वाच्चाधिकमुपर्युपरीति ॥ अवधिविषयतोऽधिकाः सौधर्मैशानयोर्देवाः अवधिविषयेणाधो रत्नप्रभां पश्यन्ति तिर्यगसङ्ख्येयानि योजनशतसहस्राणि[3] ऊर्ध्वमास्वभवनात्। सनत्कुमारमाहेन्द्रयोः शर्कराप्रभां पश्यन्ति तिर्यगसङ्ख्येयानि योजनशतसहस्राणि ऊर्ध्वमास्वभवनात् इति, एवं शेषाः क्रमशः। अनुत्तरविमानवासिनस्तु कृत्स्नां लोकनाडीं

सौधर्मदेवानां इन्द्रियावधिविषयाधिकतोत्तरोत्तरदेवानाम्

१ 'गुणाधिका' इति घ-पाठः। २ 'रिष्ठात्तना०' इति ग-पाठः। ३ 'जनसहस्राणि' इति घ-पाठः।

पश्यन्ति । येषामपि क्षेत्रतस्तुल्योऽवधिविषयस्तेषामप्युपर्युपरि विशुद्धितोऽधिको भवतीति ॥ २१ ॥

टी०—इन्द्रियाणि श्रोत्रादीनि तेषां विषयः—शब्दादिर्योग्यदेशव्यवस्थितस्तद्ग्रहणप्रवृत्तावुपर्युपर्याहितपाटवा भवन्ति, अवधिविषयेण चोपर्युपरि समधिकाः, अधस्ताद् रत्नप्रभां पृथिवीं पश्यन्ति सौधर्मैशानयोर्देवास्तिर्यगसङ्ख्येयान् द्वीपसागरान्, ऊर्ध्वमास्वभवनस्तूपिकाग्रात् सर्व एवोपरि देवाः पश्यन्ति । सनत्कुमारमाहेन्द्रयोरवधिना शर्कराप्रभामधस्तिर्यग् बहुतरकानसङ्ख्येयान् द्वीपसमुद्रान् । एवं सर्वत्र वक्तव्यमिति । ब्रह्मलान्तकयोर्वालुकाप्रभां पश्यन्ति, शुक्रसहस्रारयोः पङ्कप्रभां, आनतप्राणतयोरारणाच्युतयोश्च धूमप्रभां, अधस्तात्तनमध्यमग्रैवेयकास्तमःप्रभां, उपरितनग्रैवेयकास्तु महातमःप्रभामिति । अनुत्तरविमानपञ्चकनिवासिनस्तु समस्तां लोकनाडीं पश्यन्ति लोकमध्यवर्तिनीं, न पुनर्लोकमिति । येषामपि देवानां तुल्यविषयमवधिज्ञानमुपर्युपरि तेषामप्युपरिष्टाद् विशुद्धतरमवसेयमिति ॥ २१ ॥

एते चोपर्युपरि वैमानिकाः—

## सूत्रम्—गतिशरीरपरिग्रहाभिमानतो हीनाः ॥ ४–२२ ॥

भा०—गतिविषयेण शरीरमहत्त्वेन महापरिग्रहत्वेनाभिमानेन च उपर्युपरि हीनाः । तद्यथा—द्विसागरोपमजघन्यस्थितीनां देवानामासप्तम्यां गतिविषयः तिर्यगसङ्ख्येयानि योजनकोटीकोटीसहस्राणि, ततः परतो जघन्यस्थितीनामेकैकहीना भूमयो यावत् तृतीयामिति । गतपूर्वाश्च गमिष्यन्ति च तृतीयायां देवाः, परतस्तु सत्यपि गतिविषये न गतपूर्वा नापि गमिष्यन्ति । महानुभावक्रियातः औदासीन्याच्चोपर्युपरि देवा न गतिरतयो भवन्ति ॥

गत्यादिभिरुत्तरोत्तरदेवानां हीनत्वम्

टी०—गतिशरीरपरिग्रहाभिमानतो हीनाः, द्वन्द्वात् तृतीयार्थे तसिः । गतिविषयेणेत्यादि भाष्यम् । गतिर्देशान्तरगमनम्, येषां द्वे सागरोपमे जघन्या स्थितिस्ते किल देवाः सप्तमधरां प्रयान्ति, ते च सनत्कुमारकल्पात् प्रभृति लभ्यन्ते, शक्तिमात्रं चैतद् वर्ण्यते, न पुनः कदाचिदगमन् तिर्यगसङ्ख्येयानि योजनकोटीनां कोटीसहस्राणि, ततः परत इत्यादि सागरोपमद्वयादधो जघन्या स्थितिर्येषां न्यूनतरा न्यूनतमा चेति, ते त्वेकैकहीनां भुवमनुप्राप्नुवन्ति यावत् तृतीया पृथिवी, तां च तृतीयां पूर्वसङ्गतिकाद्यर्थं गता गमिष्यन्ति, परतस्तु सत्यामपि शक्तौ न गतपूर्वा नापि गमिष्यन्ति, औदासीन्यात्—माध्यस्थ्यादुपर्युपरि न गतिरतयो देवा जिनाभिवन्दनादीन् मुक्त्वेति ॥

---

१ 'तृतीयेति' इति घ-पाठः ।

**भा०—सौधर्मैशानयोः कल्पयोर्देवानां शरीरोच्छ्रायः सप्त रत्नयः। उपर्युपरि द्वयोर्द्वयोरेकैका रत्निर्हीना आ सहस्रारात्। आनतादिषु तिस्रः। ग्रैवेयकेषु द्वे। अनुत्तरे एका इति ॥**

**टी०—सौधर्मैशानयोः** सप्तहस्ततनुषो देवाः, **उपर्युपरि द्वयोर्द्वयोरेकैका रत्निर्हीना आ सहस्रारात्** द्वयोः कल्पयोरेकैकः शयोऽपैति, सनत्कुमारमाहेन्द्रयोः षड् रत्नयः,

वैमानिकदेवानां शरीरोच्छ्रायः

ब्रह्मलोकलान्तकयोः पञ्च रत्नयः, महाशुक्रसहस्रारयोश्चतुर्हस्ताः, आनतप्राणतारणाच्युतेषु हस्तत्रयोच्छ्रिताः, ग्रैवेयकेषु हस्तद्वयम्, अनुत्तरविमानवासिनामेका रत्निरिति ॥

अधुना परिग्रहहानिरुपदिश्यते। तत्र सौधर्मैशानयोर्विमानप्रस्तारास्त्रयोदश, सनत्कुमारमाहेन्द्रयोर्द्वादश, ब्रह्मलोके षट्, लान्तके पञ्च, महाशुक्रे चत्वारः, सहस्रारेऽपि चत्वारः,

सौधर्मादीनां प्रस्ताराः

आनतप्राणतयोश्चत्वारः, आरणाच्युतयोश्चत्वारः, अधस्तनग्रैवेयकेषु त्रयः, मध्यमग्रैवेयकेषु त्रयः, उपरितनग्रैवेयकेषु त्रयः, उपरि पञ्चसु विमानेष्वेकः, वृत्तास्तत्र द्विषष्टिर्विमानेन्द्रकास्तानङ्गीकृत्यैव दिक्ष्वावलिकाः प्रवृत्ताः, न विदिक्षु, सौधर्मैशानयोश्च त्रयोदशानां प्रस्ताराणामधस्तनप्रस्तारे द्विषष्टिविमानप्रमाणैवावलिका, त्र्यस्रचतुरस्रक्रमेण चतुर्दिक्षु, ततः परमुपर्युपरि प्रतिप्रस्तारं सर्वत्र विमानचतुष्कहान्या तावदारुह्यते यावत् पञ्च विमानानि सर्वोपरीति, यावन्ति च लोके सम्भवन्तीष्टनामानि वैमानिकानामेतेषु प्रस्तारेषु भवन्ति। तेषां परिसङ्ख्यानमिदम्—

**भा०—सौधर्मे विमानानां द्वात्रिंशच्छतसहस्राणि। ऐशानेऽष्टाविंशतिः। सनत्कुमारे द्वादश। माहेन्द्रेऽष्टौ। ब्रह्मलोके चत्वारि शतसहस्राणि। लान्तके पञ्चाशत् सहस्राणि। महाशुक्रे चत्वारिंशत्। सहस्रारे षट्। आनतप्राणतारणाच्युतेषु सप्त शतानि। अधो ग्रैवेयकाणां शतमेकादशोत्तरम्। मध्ये सप्तोत्तरं शतम्, उपर्येकमेव शतम्। अनुत्तराः पञ्चैवेति ॥**

**टी०—सौधर्मे** त्वावलिकाप्रविष्टानां सप्तदश शतानि सप्तोत्तराणि, पुष्पावकीर्णानामेकत्रिंशल्लक्षाः सहस्राण्यष्टानवतिः द्वे शते त्रिनवत्यधिके, एकत्र **द्वात्रिंशल्लक्षाः**[1], **ऐशाने** द्वादश शतान्यष्टादशोत्तराण्यावलिकाप्रविष्टानां, पुष्पावकीर्णानां सप्तविंशतिर्लक्षाः सहस्राण्यष्टानवतिः सप्त शतानि द्व्यशीत्यधिकानि, एकत्राष्टाविंशतिर्लक्षाः[2], **सनत्कुमारे** त्वावलिकाप्रविष्टानां द्वादश शतानि षड्विंशत्युत्तराणि, पुष्पावकीर्णानामेकादश लक्षाः सहस्राण्यष्टानवतिः सप्त शतानि चतुःसप्तत्यधिकानि, एकत्र **द्वादश** लक्षाः[3], **माहेन्द्रे**ऽष्टौ शतानि चतुःसप्तत्यधिकान्याव-

१ १७०७+३१९८२९३=३२०००००. २ १२१८+२७९८७८२=२८०००००.
३ १२२६+११९८७७४=१२०००००.

सौधर्मादिष्वावलिकाप्रविष्टानां पुष्पावकीर्णानां च विमानानां सङ्ख्या

लिकाप्रविष्टानां, पुष्पावकीर्णानां सप्त लक्षा नवनवतिसहस्राणि शतं च षड्विंशत्युत्तरम्, एकत्रा[1]ष्टौ लक्षाः, ब्रह्मलोकेऽष्टौ शतानि चतुस्त्रिंशदुत्तराण्यावलिकाप्रविष्टानां, पुष्पावकीर्णानां तिस्रो लक्षा नवनवतिसहस्राणि चत्वारि शतानि पञ्चदशोत्तराणि(?), एकत्र च[2]तस्रो लक्षाः, लान्तके पञ्च शतानि पञ्चाशीत्यधिकान्यावलिकाप्रविष्टानां, पुष्पावकीर्णानामेकोनपञ्चाशत्सहस्राणि चत्वारि शतानि पञ्चदशोत्तराणि,एकत्र प[3]ञ्चाशत् सहस्राणि, महाशुक्रे त्रीणि शतानि षण्णवत्यधिकान्यावलिकाप्रविष्टानां, पुष्पावकीर्णानामेकोनचत्वारिंशत्सहस्राणि षट् च शतानि चतुरुत्तराणि, एकत्र च[4]त्वारिंशत् सहस्राणीति, सहस्रारे त्रीणि शतानि द्वात्रिंशदधिकान्यावलिकाप्रविष्टानां, पुष्पावकीर्णानां षट्पञ्चाशच्छतान्यष्टषष्ट्यधिकानि, एकत्र ष[5]ट् सहस्राणि, आनतप्राणतयोरावलिकाबद्धानां शतद्वयमष्टषष्ट्यधिकं, पुष्पावकीर्णानां द्वात्रिंशदुत्तरं शतम्, एकत्र च[6]त्वारि शतानि, आरणाच्युतयोरावलिकावबद्धानां द्वे शते चतुरुत्तरे,पुष्पावकीर्णकानां षण्णवतिः, एकत्र त्री[7]णि शतानि, अधस्तनग्रैवेयकेष्वावलिकाप्रविष्टानामेकादशोत्तरं शतं, पुष्पावकीर्णानि तु न सन्त्येव, मध्यमग्रैवेयकेषु पञ्चसप्ततिरावलिकाप्रविष्टानि, पुष्पावकीर्णानि द्वात्रिंशद्, एकत्र स[8]प्तोत्तरं शतम्, उपरितनग्रैवेयकेष्वेकोनचत्वारिंशदावलिकाप्रविष्टानि, पुष्पावकीर्णकानामेकषष्टिः, एकत्र श[9]तं च, अनुत्तरविमानानि तु पञ्चैव ॥

इदानीं सकलवैमानिकविमानपरिसङ्ख्या—

**भा०—एवमूर्ध्वलोके वैमानिकानां सर्वविमानपरिसङ्ख्या चतुरशीतिः शतसहस्राणि सप्तनवतिश्च सहस्राणि त्रयोविंशानीति (८४९७०२३) ॥ स्थानपरिवारशक्तिविषयसम्पत्स्थितिष्वल्पाभिमानाः परमसुखभागिन उपर्युपरीति ॥ २२ ॥**

टी०—**चतुरशीतिर्लक्षाः सप्तनवतिः सहस्राणि** त्रयोविंशतिश्च विमानानीत्येवमुपर्युपरि हीनतरपरिग्रहा भवन्ति ॥ अधुनाऽभिमानतो हीना इति प्रतिपादयति—अहंकारपर्ययोऽभिमानः, स्थानं कल्पादि, परिवारो देवाः देव्यश्च, शक्तिः सामर्थ्यमचिन्त्यम्, विषयोऽवधेरिन्द्रियाणां वा, सम्पद्–विभूतिः, स्थितिरायुष इयत्ता, अथवा विषयसम्पत्–शब्दादिसमृद्धिः, इत्येतासु परिपेलवगर्वाः **परमसुखभाजः उपर्युपरीति** ॥ २२ ॥

सूत्रेणानुपात्तमुपर्युपरिहीनमुच्छ्वासाद्युपन्यस्यति भाष्यकारः—

**भा०—उच्छ्वासाहारवेदनोपपातानुभावतश्च साध्याः । उच्छ्वासः सर्वजघ-**

---

१ ८७४ +७९९१२६=८००००० . २ ८३४+३९९१६६ ( टीका-पाठश्चिन्तनीयः )=४००००० .
३ ५८५ +४९४१५=५०००० . ४ ३९६ +३९६०४ =४०००० .
५. ३३२ +५६६८=६००० . ६ २६८ +१३२=४०० . ७ २०४+९६=३०० .
८ ७५+३२=१०७. ९ ३९+६१=१०० .

न्यस्थितीनां देवानां सप्तस्तोकः[1] आहारश्चतुर्थकालः । पल्योपमस्थितीनामन्तर्दिवसस्योच्छ्वासो दिवसपृथक्त्वस्याहारः । यस्य यावन्ति सागरोपमाणि स्थितिस्तस्य तावत्सु अर्धमासेषु उच्छ्वासः, तावत्स्वेव वर्षसहस्रेष्वाहारः ॥

देवानामुच्छ्वासाहारौ

टी०—दश वर्षसहस्राणि येषां स्थितिस्तेषां स्तोकसप्तकातिक्रान्तावुच्छ्वासः एकदिवसान्तरितश्चाहाराभिलाषः, पल्योपमस्थितीनां दिवसाभ्यन्तरे समुच्छ्वासो दिवसपृथक्त्वस्याहारः, द्विप्रभृत्यानवभ्यः पृथक्त्वसंज्ञा पारिभाषिकी । यस्य यावन्तीत्यादि सुज्ञानम् ॥

भा०-देवानां सद्वेदनाः प्रायेण भवन्ति, न कदाचिदसद्वेदनाः । यदि चासद्वेदना भवन्ति ततोऽन्तर्मुहूर्तमेव भवन्ति, न परतः, अनुबद्धसद्वेदनास्तूत्कृष्टेन षण्मासान् भवन्ति ॥ उपपातः । आरणाच्युतादूर्ध्वमन्यतीर्थानामुपपातो न भवति । स्वलिङ्गिनां भिन्नदर्शनानामा ग्रैवेयकेभ्य उपपातः । अन्यस्य सम्यग्दृष्टेः संयतस्य भजनीयं[2] आ सर्वार्थसिद्धात् । ब्रह्मलोकादूर्ध्वमा सर्वार्थसिद्धाच्चतुर्दशपूर्वधराणामिति ॥ अनुभावो विमानानां सिद्धि[3]क्षेत्रस्य चाकाशे निरालम्बस्थितौ लोकस्थितिरेव हेतुः । लोकस्थितिर्लोकानुभावो लोकस्वभावो जगद्धर्मोऽनादिपरिणामसन्ततिरित्यर्थः । सर्वे च देवेन्द्रा ग्रैवेयादिषु च देवा भगवतां परमर्षीणामर्हतां जन्माभिषेकनिष्क्रमणज्ञानोत्पत्तिमहासमवसरणनिर्वाणकालेष्वासीनाः शयिताः स्थिता वा सहसैवासनशयनस्थानाश्रयैः प्रचलन्ति, शुभकर्मफलोदयाल्लोकानुभावत एव वा । ततो जनितोपयोगास्तां भगवतामनन्यसदृशीं तीर्थकरनामकर्मोद्भवां धर्मविभूतिमवधिनाऽऽलोक्य[4] सञ्जातवेगाः[5] सद्धर्मबहुमानाः[6] केचिदागत्य भगवत्पादमूलं स्तुतिवन्दनोपासनहितश्रवणैरात्मानुग्रहमवाप्नुवन्ति । केचिदपि तत्रस्था एव प्रत्यु[7]त्थानाञ्जलिप्रणिपातनमस्कारोपहारैः परमसंविग्नाः सद्धर्मानुरागोत्फुल्लनयनवदनाः समभ्यर्चयन्ति ॥ २२ ॥

देवानां वेदनोपपातानुभावविचारः

अत्राह-त्रयाणां देवनिकायानां लेश्यानियमोऽभिहितः । अथ वैमानिकानां केषां का लेश्या इति ? । अत्रोच्यते—

टी०—देवानां सद्वेदना इत्यादि भाष्यम् । यदा नाम केनचिन्निमित्तेनाशुभा वेदना देवानां प्रादुरस्ति तदाऽन्तर्मुहूर्तमेव स्यात्, ततः परं नानुबध्नाति, सद्वेदनाऽपि सन्ततं

१ 'सप्तसु स्तोकेषु' इति घ-पाठः । २ 'भजनीयः' इति क-पाठः । ३ '०द्धि०' इति घ-पाठः । ४ '०च्य०' इति घ-पाठः । ५ 'तसवेगाः' इति घ-पाठः । ६ 'मानात्' इति घ-पाठः । ७ 'त्युपस्थापना' इति घ-पाठः ।

षाण्मासिकी भवति, ततः परं विच्छिद्यन्तेऽन्तर्मुहूर्तं, ततः पुनरनुवर्तते । उपपातोऽधुना, अच्युतात् परमन्यलिङ्गेन नोपपातोऽस्ति मिथ्यादृष्टेः, **स्वलिङ्गिनामिति** साधुवेषधारिणां भिन्नदर्शनानां मिथ्यादृशां यावदुपरितनग्रैवेयाणि तावदुपपातः, सम्यग्दृशस्तु साधोः सौधर्मादारभ्य यावत् सर्वार्थसिद्धविमानं तावदुपपातः । अयं चापरो नियमः-ब्रह्मलोकादधश्चतुर्दशपूर्वधरो नोपपद्यते, परतस्तु सर्वार्थसिद्धविमानावधिक उत्पादः । शेषं सुज्ञानम् ॥ २२ ॥

अत्राह-त्रयाणामित्यादिसम्बन्धग्रन्थः । भवनवासिव्यन्तरज्योतिष्काणां द्रव्यलेश्यानियमोऽभिहितः, वैमानिकानां तु केषां का द्रव्यलेश्या ? तत आह—

**सूत्रम्—पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥ ४-२३ ॥**

**भा०—उपर्युपरि वैमानिकाः सौधर्मादिषु द्वयोस्त्रिषु शेषेषु च पीतपद्मशुक्ललेश्या भवन्ति यथासङ्ख्यम् । द्वयोः पीतलेश्याः सौधर्मेशानयोः, त्रिषु पद्मलेश्याः सनत्कुमारमाहेन्द्रब्रह्मलोकेषु । शेषेषु लान्तकादिषु आ सर्वार्थसिद्धाच्छुक्ललेश्याः । उपर्युपरि तु विशुद्धतरेत्युक्तम् ॥ २३ ॥**

वैमानिकानां लेश्याः

**अत्राह-उक्तं भवता-द्विविधा वैमानिका देवाः-कल्पोपपन्नाः कल्पातीताश्च (सू०१८) इति । ततः के कल्पा इत्यत्रोच्यते—**

**टी०—पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु** । पूर्वत्र बहुव्रीहिरुत्तरत्र द्वन्द्वः, यथासङ्ख्यं चाभिसम्बन्धः कार्यः । **उपर्युपरि वैमानिका** इत्यादि भाष्यम् । समानत्वे सत्यप्युपर्युपरि विशुद्धिप्रकर्षः, सौधर्मेशानयोः कनकवच्छुचयः सुराः, सनत्कुमारमाहेन्द्रब्रह्मलोकेषु पद्मदलत्विषः । लान्तकादिषु धवलरुचयः[1] सर्वार्थसिद्धपर्यवसानेषु, भावलेश्याः पुनरध्यवसायरूपत्वात् षडपि वैमानिकानां सन्तीत्यवगन्तव्यम् । अपरे वर्णयन्ति-भावलेश्यानियमोऽयम्, स तु न सुष्ठु सङ्गच्छत इति नाद्रियते, एकप्रदेशे सर्वदेवानां लेश्याविधानं किमिति न कृतं चेत्, तन्न, सुखप्रबोधत्वाद् व्यतिकरनिवृत्त्यर्थत्वाच्चेति ॥ २३ ॥

अत्राह-उक्तं भवतेत्यादिपातनिकाग्रन्थः । द्विविधा वैमानिका इति प्रागभिहितं-कल्पवासिनः कल्पातीताश्च, तत् के पुनः कल्पा इति ? अत्रोच्यते—

**सूत्रम्-प्राग् ग्रैवेयकेभ्यः कल्पाः ॥ ४-२४ ॥**

**भा०—प्राग् ग्रैवेयकेभ्यः कल्पा भवन्ति, सौधर्मादय आरणाच्युतपर्यन्ता इत्यर्थः । अतोऽन्ये कल्पातीताः ॥ २४ ॥**

**टी०**—विविधविमानाश्रया व्याख्यातसङ्ख्याविशेषा ग्रैवेयकेभ्य आरात् कल्पा भवन्ति, शेषविषयसम्बन्धे दिग्लक्षणा पञ्चमी, कल्पशब्द उक्तार्थः । इन्द्रादिदशकल्पनात्मकत्वात् कल्पाः, **सौधर्मादयोऽच्युतपर्यवसाना इति** ॥ शेषाः कल्पातीता इति ॥ २४ ॥

1 'रुचः' इति क-पाठः ।

भा०—अत्राह–किं देवाः सर्वे एव सम्यग्दृष्टयो यद् भगवतां परमर्षीणामर्हतां जन्मादिषु प्रमुदिता भवन्तीति? । अत्रोच्यते—न सर्वे सम्यग्दृष्टयः, किन्तु

देवानां दृष्टिः

सम्यग्दृष्टयः सद्धर्मबहुमानादेव तत्र प्रमुदिता भवन्त्यभिगच्छन्ति च । मिथ्यादृष्टयोऽपि च लोकचित्तानुरोधादिन्द्रानुवृत्त्या परस्परदर्शनात् पूर्वानुचरितमिति च प्रमोदं भजन्तेऽभिगच्छन्ति च । लौकान्तिकास्तु सर्वे एव विशुद्धभावाः सद्धर्मबहुमानात् संसारदुःखार्तानां च सत्त्वानामनुकम्पया भगवतां परमर्षीणामर्हतां जन्मादिषु विशेषतः प्रमुदिता भवन्ति । अभिनिष्क्रमणाय च कृतसङ्कल्पान् भगवतोऽभिगम्य प्रहृष्टमनसः स्तुवन्ति सभाजयन्ति चेति ॥ २४ ॥

अत्राह–के पुनर्लोकान्तिकाः कतिविधा वेति? अत्रोच्यते—

टी०—अत्राह–किं देवाः सर्वे एवेति भाष्यम् । कल्पवासिनस्तावत् सुखासक्ता अपि सन्तो भगवतां त्रिलोकबन्धूनामर्हतां जन्मनिष्क्रमणज्ञानोत्पत्तिमहासमवसरणनिर्वाणकालेष्वनुभावतो ज्ञानाच्चासीनाः शयिताः स्थिताः प्रस्थिता वा सहसैवासनचलनाद् दर्शनविशुद्धिभक्त्यनुवृत्त्यनुरागानन्यसदृशतीर्थकरनामकर्मोदयविभूतिजनितकुतूहलसद्धर्मबहुमानसंशयच्छेदापूर्वप्रश्नानुभावाद्यनेककारणनोदिताः प्रायस्तीर्थकरपादान्तिकमत्यन्तैकान्तहितमभ्येत्य स्तुतिवन्दनपूजनोपासनधर्मश्रवणैः स्वपरश्रद्धासंवेगजननैरात्मानमपनीतकल्मषं कुर्वन्ति । ग्रैवेयकादयस्तु यथावस्थिता एव कायवाङ्मनोभिरभ्युत्थानाञ्जलिप्रणिपाततथागुणवचनैकाग्र्यभावनाभिर्भगवतोऽर्हतो नमस्यन्ति । न च सर्वे देवाः सम्यग्दृष्टयः, किन्तु मिथ्यादृष्टयोऽपि वि(अभि)हितानेककारणाः पूजामर्हतां विदधत इति । लौकान्तिकास्तु सर्वे सम्यग्दृष्टयोऽवश्यं चार्हच्चरणमूलमायान्त्यर्हदादिसंवेगप्रशंसार्थमात्महितार्थं चेति ॥ २४ ॥

अत्राहेत्यादिपातनिकाग्रन्थः । कस्मिन् पुनः कल्पे विमाने वा लोकान्तिका देवाः प्रतिवसन्ति कतिविधा [ भेदा ] वा इति ? । अत्रोच्यते—

## सूत्रम्—ब्रह्मलोकालया लोकान्तिकाः ॥ ४–२५ ॥

भा०—ब्रह्मलोकालया एव लोकान्तिका भवन्ति नान्यकल्पेषु, नापि परतः । ब्रह्मलोकं परिवृत्याष्टासु दिक्षु अष्टविकल्पा भवन्ति ॥ २५ ॥ तद्यथा—

टी०—ब्रह्मलोकालया एव लोकान्तिका भवन्तीत्यादि भाष्यम् । सामर्थ्यलभ्यमेवकारं दर्शयति, अवधारणफलं च, नान्यकल्पेषु नापि परतो ग्रैवेयकादिष्विति । लोकान्ते भवाः लोकान्तिकाः, अत्र प्रस्तुतत्वात् ब्रह्मलोक एव परिगृह्यते, तदन्तनिवासिनो लोकान्तिकाः, सर्वब्रह्मलोकदेवानां लोकान्तिकत्वप्रसङ्ग इति चेत्, न, लोकान्तोपश्लेषात्, जराम-

१ 'लौका०' इति ग-पाठः ।

रणाग्निज्वालाकीर्णो वा लोकस्तदन्तवर्तित्वात् लोकान्तिकाः कर्मक्षयाभ्यासभावाच्च । **ब्रह्मलोकं परिवृत्याष्टासु दिक्ष्वष्टविकल्पा भवन्ति ।** अत्र दिग्ग्रहणं सामान्येन दिग्विदिक्प्रतिपत्त्यर्थम् । ब्रह्मलोकाऽधोव्यवस्थितरिष्ठविमानप्रस्तारवर्तिन्योऽक्षपाटकसंस्थिता अरुणवरसागरे समुद्भूता अतिवहलतमःकायप्रभवाः कृष्णराज्योऽष्टौ भवन्ति, यासां मध्येन प्रयान् देवोऽप्येकः सङ्क्षोभमापद्येतेति । तत्र द्वयोर्द्वयोः कृष्णराज्योर्मध्यभाग एते भवन्ति । स्थापना ॥ २५ ॥

तद्यथा—

## सूत्रम्—सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधमरुतोऽरिष्ठाश्च ॥ ४-२६ ॥

**भा०—एते सारस्वतादयोऽष्टविधा देवा ब्रह्मलोकस्य पूर्वोत्तरादिषु दिक्षु प्रदक्षिणं भवन्ति यथासङ्ख्यम् । तद्यथा—पूर्वोत्तरस्यां दिशि सारस्वताः, पूर्वस्यामादित्या इत्येवं शेषाः ॥ २६ ॥**

टी०—विमानसाहचर्याद् देवानां सारस्वतादिसंज्ञाः । **एते सारस्वतादयोऽष्टविधा देवा** इत्यादि सुगमम् । **पूर्वोत्तरस्यां दिशि सारस्वताः**, **पूर्वस्यामादित्याः**, पूर्वदक्षिणस्यां वह्नयः, दक्षिणस्यामरुणाः, दक्षिणापरस्यां गर्दतोयाः, अपरस्यां तुषिताः, अपरोत्तरस्यामव्याबाधाः, उत्तरस्यां मरुतः, मध्येऽरिष्ठाः॥

लोकान्तिकानां व्यवस्था

नन्वेवमेते नव भेदा भवन्ति, भाष्यकृता चाष्टविधा इति मुद्रिताः । उच्यते—लोकान्तवर्तिन एतेऽष्टभेदाः सूरिणोपात्ताः, रिष्ठविमानप्रस्तारवर्तिभिर्नवधा भवन्तीत्यदोषः । आगमे तु नवधैवाधीता इति ॥ एवमयं कार्मणशरीरप्रणालिकयास्रवापेक्षयाऽऽपादितसुखदुःखानां भव्याभव्यभेदाहितद्वैविध्यानां प्राणिनां संसारोऽनादिरपर्यवसानः, अन्येषां मोहोपशमनक्षपणं प्रत्याद्दतानामप्रतिपतितसम्यग्दर्शनानां परीतविषयत्वात् सप्ताष्टानि भवग्रहणान्युत्कर्षेणानुबन्धीनि, जघन्येन द्वित्राण्यतिवाह्योच्छिद्यते, इत्यविशेषे सत्यन्ये भाज्याः ॥ २६ ॥

अमी पुनरुत्कर्षेण—

## सूत्रम्—विजयादिषु द्विचरमाः ॥ ४-२७ ॥

टी०—द्वौ चरमावेषां द्विचरमाः । चरमशब्द उक्तार्थः, चरमद्विदेहा इतियावत् । चरमत्वमेकस्मिन्निति चेत्, न, औपचारिकत्वात् ।

**भा०—विजयादिष्वनुत्तरेषु विमानेषु देवा द्विचरमा भवन्ति । द्विचरमा इति ततश्च्युताः परं द्विर्जनित्वा सिध्यन्तीति । सकृत् सर्वार्थसिद्धमहाविमानवासिनः, शेषास्तु भजनीयाः ॥ २७ ॥**

---

१ 'व्याबाधारिष्टामरुतः' इति क--पाठः ।

अनुत्तरदेवानां भवोच्छेदः

टी०—विजयादिष्वित्यादि भाष्यम्। विजयादिषु चतुर्षु विमानेषु, अन्यविजयादिव्यावृत्त्यर्थमनुत्तरग्रहणम्, अनुत्तरशब्दस्पर्शादियोगादनुत्तरविमानानि तेषु देवा द्विचरमा भवन्ति, द्विचरमत्वं स्पष्टयति—ततो विजयादिभ्यश्च्युताः परम्—उत्कर्षेण द्विर्जनित्वा मनुष्येषु सिद्धिमनुगच्छन्ति, विजयादिविमानाच्च्युतो मनुष्यः पुनरपि विजयादिषु देवस्ततश्च्युतो मनुष्यः सन् सिध्यतीति। अपरे वर्णयन्ति—विजयादिभ्यश्च्युताः परतो मनुष्याः सर्वार्थसिद्धजन्मलाभं लब्ध्वा तृतीये भवे सिध्यन्तीति द्विचरमाः। एतत्त्वयुक्तं व्याख्यानम्। सर्वार्थसिद्धविमानोत्पादे सति तत्प्रच्युतिसमनन्तरजन्मनि सिद्धिगतिश्रवणात् कोऽतिशयस्तत्र विजयादीनामिति?। सर्वार्थसिद्धविमानवासिनस्तु सकृज्जनित्वा मनुष्येषु सिद्धिमधिगच्छन्ति—मुक्तिमासादयन्ति, सर्वे चानुत्तरोपपातिनः किल देवाः प्रतनुकर्माणो भवन्तीति। यथाऽऽहागमे—"अणुत्तरोववादियाणं देवा णं! भंते! केवइएणं कम्मावसेसेणं अणुत्तरोववादियत्तेण उववन्ना? गोयमा! जावतिअन्नं छट्ठभत्तीए समणे निग्गंथे कम्मं निज्जरेइ एवतिएणं कम्मावसेसेण अणुत्तरोववाइयत्ताए उववन्ना"[1]। शेषास्तु भजनीयाः। वैमानिकप्रतिपत्त्यर्थं वा शेषग्रहणम्। अथवा समस्तदेवप्रतिपादनार्थमध्यवसातव्यम्, अतः शेषाः कदाचित् कचित् सकृद् द्वित्रिचतुःप्रभृति वा मनुष्येषु जन्मासाद्य सिद्ध्यन्तीति॥ २७॥

तिर्यक्प्रस्तावः

भा०—अत्राह उक्तं भवता—जीवस्यौदयिकेषु भावेषु तिर्यग्योनिगातिरिति, तथा स्थितौ 'तिर्यग्योनीनां च' (अ० ३, सू० १८) इति, आस्रवेषु 'माया तैर्यग्योनस्य' (अ० ६, सू० १७) इति। तत् के तिर्यग्योनय इति?। अत्रोच्यते—

टी०—अत्राह—उक्तं भवतेत्यादिसम्बन्धग्रन्थः। द्वितीयेऽध्याये (सू० ६) औदयिकभावव्याख्याप्रस्तावे तिर्यग्योनिगतिरुक्ता, तृतीयाध्यायपरिसमाप्तौ (सू० १८) तिर्यग्योनिजानां चेति स्थितिरायुषोऽभिहिता, षष्ठे चास्रवप्रस्तावे (सू० १७) माया तैर्यग्योनस्येति वक्ष्यते, तत् के तिर्यग्योनय इति?। अत्रोच्यते—

## सूत्रम्—औपपातिकमनुष्येभ्यः शेषास्तिर्यग्योनयः॥ ४–२८॥

तिरश्चां निर्देशः

भा०—औपपातिकेभ्यश्च नारकदेवेभ्यो मनुष्येभ्यश्च यथोक्तेभ्यः शेषा एकेन्द्रियादयस्तिर्यग्योनयो भवन्ति॥ २८॥

टी०—औपपातिकेभ्यश्चेत्यादि भाष्यम्। औ[2]पपातिका नारकदेवास्तेभ्यो मनुष्ये-

१ अनुत्तरोपपातिका देवा भदन्त! कतिपयेन कर्मावशेषेण अनुत्तरोपपातिकत्वेन उपपन्नाः? गौतम! यावत् षष्ठभक्तिकः श्रमणः निर्ग्रन्थः कर्म निर्जरयति एतावता कर्मावशेषेण अनुत्तरोपपातिकतया उपपन्नाः (भग०)।

२ 'उपपातिका' इति क-पाठः।

भ्यश्च गर्भव्युत्क्रान्तिभ्यः सम्मूर्च्छनजेभ्यश्च ये शेषाः एकद्वित्रिचतुष्पञ्चेन्द्रियास्ते सर्वेऽपि तिर्यग्योनिव्यपदेशभाजो भवन्ति । देवादिवत् तदाधारनिर्देश इति चेत्, न, सर्वलोकव्यापित्वात्, तिर्यग्लोके चैते भूयांस इति तिर्यग्योनिसंज्ञा प्रतिपत्तव्येति ॥ २८ ॥

भा०—अत्राह-तिर्यग्योनिमनुष्याणां स्थितिरुक्ता । अथ देवानां का स्थितिरिति? । अत्रोच्यते—

टी०—अत्राह-तिर्यग्योनिमनुष्याणामित्यादिपातनिकाग्रन्थः । तृतीयाध्यायपरिसमाप्तौ नृतिरश्चां परापरस्थिती गदिते । अथ देवानां भवनवासिप्रभृतीनां का स्थितिरायुष इति ? । अत्रोच्यते—

## सूत्रम्-स्थितिः ॥ ४-२९ ॥

भा०—स्थितिरित्यत ऊर्ध्वं वक्ष्यते ॥ २९ ॥

टी०—स्थितिरित्यत ऊर्ध्वं वक्ष्यत इति भाष्यम् । इतः प्रभृति स्थितिरित्यधिक्रियते, सा तु द्वयी जघन्योत्कृष्टभेदादिति, यद्येवमुभयसम्भवे भवनवासिनामेव तावदादिनिर्देशभाजामुच्यतां का परा स्थितिरिति, इमेऽभिदध्महे-सत्यपि तेषां विकल्पबहुत्वे महामन्दरावधेर्दक्षिणोत्तरार्धाधिपतिविभाग एवाद्रियते ॥ २९ ॥

## सूत्रम्--भवनेषु दक्षिणार्धाधिपतीनां पल्योपममध्यर्धम् ॥ ४--३० ॥

भवनासिनां स्थितिः भा०—भवनेषु तावद् भवनवासिनां दक्षिणार्धाधिपतीनां पल्योपममध्यर्धं परा स्थितिः, द्वयोर्यथोक्तयोर्भवनवासीन्द्रयोः पूर्वो दक्षिणार्धाधिपतिः पर उत्तरार्धाधिपतिः ॥ ३० ॥

टी०—भवनेषु दक्षिणार्धाधिपतीनां पल्योपममध्यर्धम्, चमरं विहायासुरनिकायपरिवृढं शेषभवनवासिदक्षिणार्धाधिपतीनामर्धाधिकं पल्योपमं स्थितिरायुषो वेदितव्या, उक्तलक्षणं पल्योपमम्, अधिकमर्धमस्मिंस्तदिदमध्यर्धम्, बहुव्रीहिणा पल्योपमाभिसम्बन्धः, सन्देहापनोदनायेदमाख्यायते-पूर्वनिर्दिष्टयोर्द्वयोर्भवनवासीन्द्रयोः प्रथमनिर्दिष्टो यः स दक्षिणार्धाधिपतिरवसेयः, पश्चान्निर्दिष्ट उत्तरार्धाधिपतिरिति ॥ ३० ॥

अथोत्तरार्धाधिपतीनामायुषः का स्थितिरित्याह—

## सूत्रम्—शेषाणां पादोने ॥ ४-३१ ॥

भा०—शेषाणां भवनवासिष्वधिपतीनां (शेषाणां) द्वे पल्योपमे पादोने परा स्थितिः । के च शेषाः? उत्तरार्धाधिपतय इति ॥ ३१ ॥

१ 'द्वयोः' इत्यधिको घ-पाठः ।

टी०—दक्षिणार्धाधिपतीनां व्यतिरिक्ता उत्तरार्धाधिपतयः शेषा बलिव्यतिरिक्ताः तेषां पादोने द्वे पल्योपमे स्थितिरायुषः, पादश्चतुर्थभाग इति ॥ ३१ ॥

अथ किमेषां भवनवास्यधिपतीनां सर्वेषामियं परा स्थितिः ? नेत्युच्यते, किन्त्वाधिपत्यसामान्ये विशेषेणानयोः प्रतिपत्तव्या ॥ ३१ ॥

## सूत्रम्—असुरेन्द्रयोः सागरोपममधिकं च ॥ ४-३२ ॥

भा०—असुरेन्द्रयोस्तु दक्षिणार्धाधिपत्युत्तरार्धाधिपत्योः सागरोपममधिकं च यथासङ्ख्यं परा स्थितिर्भवति ॥ ३२ ॥

टी०—पूर्वा (दक्षिणा ?) र्धाधिपतेश्चमरस्योत्तरार्धाधिपतेश्च बलिराजस्य यथासङ्ख्यमेव, सागरोपमं चमरस्य बलेस्तदेवाधिकं कियताऽपि विशेषेण सागरोपमस्थितिरायुषो भवतीति, । उक्तं च सागरोपमं लक्षणतः प्रागिति, असुरकुमारीणां चत्वारि पल्योपमानि सार्धानि परा स्थितिः, शेषाणां नागवधूप्रभृतीनां सर्वभवनवासिनीनां देशोनं पल्योपममुत्कृष्टा स्थितिरिति ॥ ३२ ॥

आद्यदेवनिकायस्थितिव्याख्यानानन्तरं व्यन्तरज्योतिष्कानवसरप्राप्तानतिलङ्घ्योपरिष्टादेव तावल्लाघवार्थिना वैमानिकनिकायस्थितिराख्यायते—

वैमानिकस्थितिप्रस्तावः

## सूत्रम्—सौधर्मादिषु यथाक्रमम् ॥ ४-३३ ॥

भा०—सौधर्ममादिं कृत्वा यथाक्रममित ऊर्ध्वं परा स्थितिर्वक्ष्यते ॥ ३३ ॥

टी०—सौधर्ममादिं कृत्वा यावत् सर्वार्थसिद्धविमानं तावद् यथाक्रममिति ऊर्ध्वं स्थितिर्वक्ष्यते देवानामायुष इति ॥ ३३ ॥

## सूत्रम्—सागरोपमे ॥ ४-३४ ॥

भा०—सौधर्मे कल्पे देवानां परा स्थितिर्द्वे[1] सागरोपमे इति ॥ ३४ ॥

टी०—इन्द्रसामानिकानां सागरोपमद्वयं सौधर्मे स्थितिरुत्कृष्टा लभ्यत इति ॥ ३४ ॥

## सूत्रम्—अधिके च ॥ ४-३५ ॥

भा०—ऐशाने द्वे सागरोपमे अधिके परा स्थितिर्भवति ॥ ३५ ॥

टी०—अधिके च यथाक्रमग्रहणादैशानोऽभिसम्बध्यते । द्वे सागरोपमे कियताऽपि विशेषेणाधिके ऐशाने कल्पे परा स्थितिरिन्द्रादीनामिति ॥ ३५ ॥

## सूत्रम्—सप्त सनत्कुमारे ॥ ४-३६ ॥

भा०—सनत्कुमारे कल्पे सप्त सागरोपमाणि परा स्थितिर्भवति ॥ ३६ ॥

---

१ 'द्वे' इत्यधिको ग-पाठः ।

टी०—सनत्कुमारे सप्त सागरोपमाणि परा स्थितिरिन्द्रादीनामिति ॥ ३६ ॥

सूत्रम्—विशेषत्रिसप्तदशैकादशत्रयोदशपञ्चदशभिरधिकानि च ॥४--३७॥

भा०—एभिर्विशेषादिभिरधिकानि सप्त माहेन्द्रादिषु परा स्थितिर्भवति। सप्तेति वर्तते। तद्यथा-माहेन्द्रे सप्त विशेषाधिकानि, ब्रह्मलोके त्रिभिरधिकानि सप्त, दशेत्यर्थः। लान्तके सप्तभिरधिकानि सप्त, चतुर्दशेत्यर्थः। महाशुक्रे दशभिरधिकानि सप्त, सप्तदशेत्यर्थः। सहस्रारे एकादशभिरधिकानि सप्त, अष्टादशेत्यर्थः। आनतप्राणतयोस्त्रयोदशभिरधिकानि सप्त, विंशतिरित्यर्थः। आरणाच्युतयोः पञ्चदशभिरधिकानि सप्त, द्वाविंशतिरित्यर्थः ॥ ३७ ॥

माहेन्द्रादीनां परा स्थितिः

टी०—सप्त सागरोपमाणि विशेषेणाधिकानि माहेन्द्रे परा स्थितिः, ब्रह्मलोके सप्त त्रिभिरधिकानि परा स्थितिः,दश सागरोपमाणीत्यर्थः। लान्तके सप्त सागरोपमाणि सप्तभिरधिकानि परा स्थितिश्चतुर्दशसागरोपमेतियावत्। महाशुक्रे सप्त सागारोपमाणि दशभिरधिकानि परा स्थितिः, सप्तदश सागरोपमाणीत्यर्थः। सहस्रारे सप्त सागरोपमाण्येकादशभिरधिकानि परा स्थितिरष्टादशसागरोपमेतियावत्। आनतप्राणतयोः सप्त सागरोपमाणि त्रयोदशभिरधिकानि परा स्थितिर्विंशतिसागरोपमेत्यर्थः। एकेन्द्रोपभोग्यत्वान्न पृथक् कल्पद्वयेऽभिहिता। आरणाच्युतयोः सप्त सागरोपमाणि पञ्चदशभिरधिकानि परा स्थितिर्द्वाविंशतिसागरोपमेत्यर्थः। अत्राप्येकेन्द्रोपभोग्यत्वादेव न विवेकेनाभिधानमिति ॥ ३७ ॥

सूत्रम्—आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च ॥ ४-३८ ॥

भा०—आरणाच्युतादूर्ध्वमेकैकेनाधिका स्थितिर्भवति नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च। आरणाच्युते द्वाविंशतिर्ग्रैवेयकेषु पृथगेकैकेनाधिकास्त्रयोविंशति(प्रभृति)रित्यर्थः। एवमेकैकेनाधिकाः सर्वेषु नवसु यावत् सर्वेषामुपरि नवमे एकत्रिंशत्। सा विजयादिषु चतुर्ष्वप्येकेनाधिका द्वात्रिंशत्। साऽप्येकेनाधिका, सर्वार्थसिद्धे त्वजघन्योत्कृष्टा त्रयस्त्रिंशदिति ॥ ३८ ॥

टी०—आरणाच्युतादिति कृतैकवद्भावो निर्देशः, आरणोपलक्षितो वाऽच्युतः, ऊर्ध्वमेकैकेन सागरोपमेणाधिका नवस्वपि ग्रैवेयकेषु विजयादिषु च चतुर्षु सर्वार्थसिद्धे च परा स्थितिर्वेदितव्येति। शेषं भाष्यं सुज्ञानमेव ॥ ३८ ॥

भा०—अत्राह-मनुष्यतिर्यग्योनिजानां परापरे स्थिती व्याख्याते, अथौपपातिकानां किमेकैव स्थितिः परापरे न विद्यते इति ?। अत्रोच्यते—

टी०—अत्राहेत्यादिसम्बन्धग्रन्थः । नृतिरश्चां परापरे स्थिती व्याख्याते, औपपातिकानां पुनर्नारकदेवानां किमेकैवोत्कृष्टा स्थितिरितरा नास्ति ? । अस्तीत्याह—

## सूत्रम्—अपरा पल्योपममधिकं च ॥ ४–३९ ॥

भा०—सौधर्मादिष्वेव यथाक्रममपरा स्थितिः पल्योपममधिकं च । अपरा जघन्या निकृष्टेत्यर्थः । परा प्रकृष्टा उत्कृष्टेत्यनर्थान्तरम् । तत्र सौधर्मेऽपरा स्थितिः पल्योपमम्, ऐशाने पल्योपममधिकं च ॥ ३९ ॥

टी०—सौधर्मादिषु यथाक्रममित्येतदनुवर्तते, अपरा जघन्या, सौधर्मे कल्पे पल्योपममायुषः स्थितिर्भवति, ऐशाने तदेव पल्योपममधिकं कियतापि विशेषेण जघन्या स्थितिरिति ।

## सूत्रम्—सागरोपमे ॥ ४–४० ॥

भा०—सनत्कुमारे अपरा स्थितिर्द्वे सागरोपमे ॥ ४० ॥

टी०—सनत्कुमारे द्वे सागरोपमे जघन्या स्थितिः ॥ ४० ॥

## सूत्रम्—अधिके च ॥ ४–४१ ॥

भा०—माहेन्द्रे जघन्या स्थितिराधिके द्वे सागरोपमे ॥ ४१ ॥

टी०—द्वे सागरोपमे अधिके जघन्या स्थितिर्माहेन्द्रे ॥ ४१॥

## सूत्रम्—परतः परतः पूर्वा पूर्वाऽनन्तरा ॥ ४–४२ ॥

भा०—माहेन्द्रात् परतः पूर्वा परा(पूर्वा)ऽनन्तरा जघन्या स्थितिर्भवति । तद्यथा-माहेन्द्रे परा स्थितिर्विशेषाधिकानि सप्त सागरोपमाणि सा ब्रह्मलोके जघन्या स्थितिर्भवति । ब्रह्मलोके दश सागरोपमाणि परा स्थितिः सा लान्तके जघन्या । एवमा सर्वार्थसिद्धादिति । [ विजयादिषु चतुर्षु परा स्थितिस्त्रयस्त्रिंशत् सागरोपमाणि, साऽजघन्योत्कृष्टा सर्वार्थसिद्ध इति ] ॥ ४२ ॥

टी०—परतः परतः पूर्वा पूर्वानन्तरा ब्रह्मलोकादिषु पूर्वकल्पस्थितिरुत्कृष्टा सोपरितनानन्तरकल्पे जघन्या वेदितव्या । तद्यथा-माहेन्द्रे सप्त सागरोपमाणि विशेषाधिकानि परा स्थितिः सा ब्रह्मलोके जघन्या । ब्रह्मलोके दश सागरोपमाणि परा सा लान्तके जघन्येत्येवं शेषेष्वप्यायोजनीया यावत् सर्वार्थसिद्धविमानम् । तत्र विजयादिषु चतुर्षु जघन्येनैकत्रिंशदुत्कर्षेण द्वात्रिंशत्, सर्वार्थसिद्धे त्रयस्त्रिंशत् सागरोपमाण्यजघन्योत्कृष्टा स्थितिः । भाष्यकारेण तु सर्वार्थसिद्धेऽपि जघन्या द्वात्रिंशत् सागरोपमाण्यधीता, तन्न विद्मः

१ यद्यपि वर्जनप्रसङ्गे प्राक् चतुर्थ्याः प्राक् ग्रैवेयकेभ्य इत्यादिवत् प्राक्शब्दः प्रयुज्यते, समादानप्रसङ्गे आचतुर्भ्यः इत्यादिवत् आङा निर्देश इत्यत्र आङा निर्देशात् सर्वार्थसिद्धस्यापि ग्रहणमापन्नमिति वृत्त्यभिप्रायः, परं प्राग् अजघन्योत्कृष्टतया त्रयस्त्रिंशतः सागरोपमाणां कथनात् न तत्र जघन्यस्थितिरन्या भाष्यकृतोऽभिप्रेता । एकपुत्रस्य ज्येष्ठकनिष्ठतावत् तु अत्राङोक्तिः ।

केनाप्यभिप्रायेण । आगमस्तावदयम्-"सव्वट्ठसिद्धदेवाणं भंते! केवतियं कालं ठिई पण्णत्ता? गोयमा! अजहण्णुक्कोसेणं तित्तीसं सागरोवमाइं ठिई पन्नत्ता" (प्रज्ञा० प० ४, सू० १०२)। सौधर्मे देवीनां परिगृहीतानां जघन्येन पल्योपममुत्कर्षेण सप्त पल्योपमानि, अपरिगृहीतानां जघन्येन पल्योपममुत्कर्षेण तु पञ्चाशत् पल्योपमानि, ऐशाने तु परिगृहीतदेवीनां सातिरेकं पल्योपममुत्कर्षेण नव पल्योपमानि, अपरिगृहीतानां जघन्येन सातिरेकं पल्योपममुत्कर्षेण पञ्चपञ्चाशत् पल्योपमानीति ॥

परतः परतः पूर्वा पूर्वानन्तरेत्यभिसम्बन्धुकामोऽत्राप्रकृतानामपि लघ्वर्थं पुनर्वक्तव्यगौरवभीत्याऽवतारयति-

## सूत्रम्—नारकाणां च द्वितीयादिषु ॥ ४-४३ ॥

**भा०—नारकाणां च द्वितीयादिषु भूमिषु पूर्वा पूर्वा परा स्थितिरनन्तरा परतः परतोऽपरा भवति । तद्यथा-रत्नप्रभायां नारकाणामेकं सागरोपमं परा स्थीतिः, सा जघन्या शर्कराप्रभायाम् । त्रीणि सागरोपमाणि परा स्थितिः शर्कराप्रभायां, सा जघन्या वालुकाप्रभायामित्येवं सर्वासु । तमःप्रभायां द्वाविंशतिः सागरोपमाणि परा स्थितिः सा जघन्या महातमःप्रभायामिति ॥ ४३ ॥**

नारकाणां स्थितिः

टी०—सुज्ञानमेव भाष्यं प्रायः, सप्तम्यां चतुर्षु नरकेषु जघन्या द्वाविंशतिसागरोपमा स्थितिरुत्कृष्टा त्रयस्त्रिंशत् सागरोपमाणि, अप्रतिष्ठाने तु त्रयस्त्रिंशत् सागरोपमाण्यजघन्योत्कृष्टेति ॥ ४३ ॥

अथ प्रथमायां कथं जघन्या प्रतिपत्तव्येत्याह-

## सूत्रम्—दश वर्षसहस्राणि प्रथमायाम् ॥ ४-४४ ॥

**भा०—प्रथमायां भूमौ नारकाणां दश वर्षसहस्राणि जघन्या स्थितिः ॥४४॥**

**टी०—दश वर्षसहस्राणि प्रथमायां प्रथमवसुधानारकाणां स्थितिर्जघन्यैतावतीति ४४**

## सूत्रम्—भवनेषु च ॥ ४-४५ ॥

**भा०—भवनवासिनां दश वर्षसहस्राणि जघन्या स्थितिरिति ॥ ४५ ॥**

टी०—भवनवासिनामप्येषैव जघन्येति ॥ ४५ ॥

## सूत्रम्—व्यन्तराणां च ॥ ४-४६ ॥

**भा०—व्यन्तराणां च देवानां दश वर्षसहस्राणि जघन्या स्थितिः ॥ ४६ ॥**

टी०—एषामपि जघन्या भवनवासिदेववद् द्रष्टव्येति ॥ ४६ ॥

---

१ सर्वार्थसिद्धदेवानां भदन्त! कियन्तं कालं स्थितिः प्रज्ञप्ता? गौतम! अजघन्योत्कर्षेण त्रयस्त्रिंशत् सागरोपमाणि स्थितिः प्रज्ञप्ता।

अथ व्यन्तराणां परा स्थितिः कीदृशीत्याह—

सूत्रम्—परा पल्योपमम् ॥ ४–४७ ॥

भा०—व्यन्तराणां परा स्थितिः पल्योपमं भवति ॥ ४७ ॥

टी—व्यन्तरदेवानां पल्योपममुत्कृष्टा, व्यन्तरीणामुत्कर्षेण पल्योपमार्धमिति ॥ ४७॥

अथ ज्योतिष्काणामुत्कृष्टस्थित्यभिधित्सया प्राह—

सूत्रम्—ज्योतिष्काणामधिकम् ॥ ४–४८ ॥

भा०—ज्योतिष्काणां देवानामधिकं पल्योपमं स्थितिर्भवति ॥ ४८ ॥

टी०—पल्योपममित्यनुवर्तते, तदधिकं ज्योतिष्कदेवानामुत्कृष्टा स्थितिः सूर्यदेवस्य वर्षसहस्राधिकं पल्योपमम्, चन्द्रमसो वर्षलक्षाधिकं तदेव, ज्योतिष्कदेवीनामुत्कर्षेण पल्योपमार्धं पञ्चाशद्भिर्वर्षसहस्रैरभ्यधिकमिति ॥ ४८ ॥

सूत्रम्—ग्रहाणामेकम् ॥ ४–४९ ॥

भा०—ग्रहाणामेकं पल्योपमं परा स्थितिर्भवति ॥ ४९ ॥

टी०—पल्योपममभिसम्बन्ध्यते, अङ्गारकादीनामिति ॥ ४९ ॥

सूत्रम्—नक्षत्राणामर्धम् ॥ ४–५० ॥

भा०—नक्षत्राणां देवानामर्धपल्योपमं परा स्थितिर्भवति ॥ ५० ॥

टी०—अश्विन्यादीनां पल्योपमार्धं स्थितिः परेति ॥ ५० ॥

सूत्रम्—तारकाणां चतुर्भागः ॥ ४–५१ ॥

भा०—तारकाणां च पल्योपमचतुर्भागः परा स्थितिर्भवति ॥ ५१ ॥

टी०—परा स्थितिः पल्योपमचतुर्भागस्तारकाणामिति ॥ ५१ ॥

सूत्रम्—जघन्या त्वष्टभागः ॥ ४–५२ ॥

भा०—तारकाणां तु जघन्या स्थितिः, पल्योपमाष्टभागः ॥ ५२ ॥

टी०—तारकाणां पल्योपमाष्टभागो जघन्येति ॥ ५२ ॥

सूत्रम्—चतुर्भागः शेषाणाम् ॥ ४–५३ ॥

भा०—तारकाभ्यः शेषाणां ज्योतिष्काणां चतुर्भागः पल्योपमस्यापरा स्थितिरिति ॥ ५३ ॥

टी०—तारकव्यतिरिक्तज्योतिष्काणां ग्रहनक्षत्राणां जघन्या स्थितिः पल्योपमचतुर्भागो वेदितव्येति ॥ ५३ ॥

॥ इति श्रीतत्त्वार्थसङ्ग्रहे अर्हत्प्रवचने भाष्यानुसारिण्यां टीकायां देवगतिप्रदर्शनो नाम चतुर्थोऽध्यायः ॥

॥ इति चतुर्थोऽध्यायः ॥

# पञ्चमोऽध्यायः ५

टी०—निर्देशस्वामित्वादिभिरनुयोगद्वारैर्लक्षणविधानभाजो जीवानभिधायोद्देशसूत्रे तत्समनन्तरोपदिष्टानजीवान् विवक्षुः पञ्चमाध्यायसम्बन्धाभिप्रायेणाह—

भा०—उक्ता जीवाः, अजीवान् वक्ष्यामः ॥

टी०—अभिहिता यथाशक्ति द्रव्यभावप्राणकलापवर्तिनो जन्तवः सुरतिर्यङ्मनुष्यनारकविधानतस्तथा साकारानाकारोपयोगद्वयलाञ्छनाविच्छिन्नचैतन्यशक्तितश्च ।

सूत्रोपन्यासः

अधुना तु लक्षणविधानाभ्यामजीवान् धर्मादींश्चतुरः सहकालानभिधास्याम इति प्रत्यज्ञायि वाचकमुख्येन, अतः प्रकृतप्रतिज्ञास्वतत्त्वप्रचिकाशयिषयेदमाह[1]—

## सूत्रम्—अजीवकाया धर्माधर्माकाशपुद्गलाः ॥ ५-१ ॥

टी०—उक्तलक्षणा जीवाः, 'उपयोगो लक्षणम्' (अ० २, सू० ८) इति न जीवा अजीवाः द्रव्यभावप्राणानभिसम्बन्धादनात्तचैतन्यशक्तयः, वैशेषिकं जीवलक्षणमनुसन्धाय प्रतिषेधः क्रियते, न सत्त्वज्ञेयत्वप्रमेयत्वादि, 'नञ्युक्तमिवयुक्तं चे'त्यादिन्यायात्, अन्यथा व्योमोत्पलादिकल्पाः स्युरजीवा इत्यतो जीवद्रव्यविपर्यया भवन्त्यजीवाः । न चात्र द्रव्यवस्तुतयोर्विपर्यास इष्टः, यस्माद् द्रव्यत्वमेवात्रानुशास्ति शास्त्रकारः, तथा वस्तुताविपर्यासे

प्रतिषेधस्य द्वैविध्यम्

गगनेन्दीवरसमानताऽनुषज्येत धर्मादीनाम्, अतः पारिशेष्याच्चैतन्यगुणविपर्ययः, स च विपर्यासरूपः प्रतिषेधो द्विधा—प्रसज्यपर्युदासभेदात्, तयोर्मूललक्षणमिदम्—

"प्रतिषेधोऽर्थनिर्दिष्ट, एकवाक्यं विधेः परः ।
तद्वानस्वपदोक्तश्च, पर्युदासोऽन्यथेतरः ॥"

जीवादन्योऽजीव इति पर्युदासः सत एव वस्तुनोऽभिमतः, विधिप्रधानत्वात्, अतस्तुल्यास्तित्वेषु भावेषु चैतन्यनिषेधद्वारेण धर्मादिष्वजीवा इत्यनुशासनम् ॥ अपरे वर्णयन्ति—जीवनामकर्मणः[2] प्रतिषेधोऽत्र विवक्षितः, तच्च जीवनाम जीवनात् किल भवति, अतोऽचेतनेष्वकर्मसु च वस्तुषु तुल्येऽस्तित्वे धर्मादिष्वजीवत्वमिति । अत्र द्वयं दुष्यति, प्राक् तावद् वाचोयुक्तिरेवानुपपन्ना जीवनामकर्मेति, नहि किञ्चिज्जीवनामकर्म प्रसिद्धमागमे, आयुर्हि जीवनमुच्यते, न पुनर्नामेति, तथा यद्यकर्मसु वस्तुष्वजीवत्वविधिः, सिद्धानामप्यजीवत्वप्रसङ्गः, ततश्चाजीव-

---

१ '०तिप्रतिज्ञास्य तत्त्व०' इति ग-पाठः ।

२ अजीवन् जीवन्ति जीविष्यन्ति चेति जीवा इतिव्युत्पत्तिर्द्रव्यभावप्राणधारणमाश्रित्य न कर्मणः प्रतिषेधोऽजीवे, यदा च केवलद्रव्यप्राणापेक्षया जीवनं तदा गोशब्दवत् वाच्यनियमनं वाच्यं पारिणामिकं जीवत्वं, तच्च सिद्धेऽपि, ततो नासावजीवः ऋजुसूत्राद्यपेक्षया तस्याजीवत्वेऽपि नैगमाद्यपेक्षया तथात्वात् नात्र तस्याजीवत्वविवक्षा ।

कायाः धर्माधर्माकाशसिद्धपुद्गला इति षडस्तिकायाः प्रसज्येरन् । अथ मतमचेतनेष्वकर्मस्वजीवत्वम्, एवं तर्हि चैतन्यप्रतिषेध एव ज्यायान्, किं जीवनप्रतिषेधेनेति ? । जीवो न भवतीत्यजीव इति प्रसज्यप्रतिषेधः, स च प्रसक्तस्य भवति भूयसेति, अत्र च न कथञ्चित् प्रसक्तश्चैतन्यधर्म इत्यत उपेक्ष्यते । अजीवानां कायाः अजीवकायाः, शिलापुत्रकस्य शरीरमित्यभेदेऽपि षष्ठी दृष्टा, तथा सुवर्णस्याङ्गुलीयकम्, अन्यत्वाशङ्काव्यावृत्त्यर्थो वा कर्मधारय एवाभ्युपेयते, अजीवाश्च ते कायाश्चेत्यजीवकायाः । कायशब्दः उपसमाधानवचनः । प्रदेशानामवयवानां च सामीप्येनान्योन्यानुवृत्त्या सम्यग्मर्यादया धारणमवस्थानमुपसमाधानम् । अथवा काया इवैते कायाः, शरीराणि यथा प्रदेशावयवित्वात् कायशब्दवाच्यान्येवमेतेऽपीति । कृतद्वन्द्वाश्चैते

धर्मादीनां विचारः

धर्मादयो निर्दिष्टाः, तत्र धर्मो वक्ष्यमाणगत्युपग्रहकार्यानुमेयः, स्थित्युपग्रहकार्यानुमेयश्चाधर्मः ।। अथादृष्टौ धर्माधर्मौ शुभाशुभफलदायिनौ कस्मान्न गृह्येते? ।। उच्यते–द्रव्यप्रस्तावापास्तत्वाद्, गुणत्वे सति तयोरप्रसङ्गः । अपि च–जैनानां धर्माधर्मौ शुभाशुभफलप्रसवसमर्थौ मूर्तावेव पुद्गलात्मकत्वादतः पुद्गलग्रहणेनैव तयोर्ग्रहणमिति नास्ति तद्विषया मनागप्यारेका । अवगाहोपकारानुमेयमाकाशम् । अलोकाकाशं कथमिति चेत् अनवगाह्यत्वादिति, उच्यते–तद्धि व्याप्रियेतैवावकाशदानेन यदि गतिस्थितिहेतू धर्माधर्मौ तत्र स्याताम्, न च तत्र स्तस्तौ, तदभावाच्च विद्यमानोऽप्यवगाहनगुणो नाभिव्यज्यते किलालोकाकाशस्येति । पूरणाद् गलनाच्च पुद्गलाः, संहन्यमानत्वाद् विसंहतिमत्त्वाच्च । पुरुषं वा गिलन्ति पुरुषेण वा गीर्यन्ते इति पुद्गलाः, मिथ्यादर्शनादिहेतुवर्तिनं पुमांसं बध्नन्ति वेष्टयन्तीति गिरणार्थः, इतरत्रादानार्थो गिरतिः, पुरुषेणादीयन्ते कषाययोगभाजा कर्मतयेति पुद्गलाः । सत्यजीवत्वे कालः कस्मान्न निर्दिष्ट इति चेत् उच्यते—स त्वेकीयमतेन द्रव्यमित्याख्यास्यते द्रव्यलक्षणप्रस्ताव एव, अमी पुनरस्तिकायाः व्याचिख्यासिताः, न च कालोऽस्तिकायः, एकसमयत्वादिति ।

अजीवकायभेदाः

**भा०—धर्मास्तिकायोऽधर्मास्तिकाय आकाशास्तिकायः पुद्गलास्तिकाय इत्यजीवकायाः । तान् लक्षणतः परस्ताद् वक्ष्यामः । कायग्रहणं प्रदेशावयवबहुत्वार्थमद्धासमयप्रतिषेधार्थं च ॥ १ ॥**

**टी०—धर्मास्तिकाय** इत्यादि भाष्यम् । सूत्रे धर्मादयः कायग्रहणं च साक्षात्कृतं तदप्यजीवपदसम्बद्धं भाष्यकारः सामानाधिकरण्यनिर्देशे सति धर्मादिभिः सह संघटयति प्रत्येकं–धर्मास्तिकाय इति ।। ननु च धर्मकाय इति भाष्यम्, एवमस्तिशब्दोऽन्तरालवर्ती कुतोऽतर्कितः

---

१ स्वरूपविशेषणमेतत्, तेन नात्र गत्यादिना विशिष्टप्रतिषेधः, तत्त्वतः जीवपुद्गलानां गतिस्थितिहेतू धर्माधर्मौ न तत्र, तथा च शेषचतुष्टयास्तित्वाभावस्तत्रेति मनस्याधायैव वक्ष्यति तदभावेत्यादि ।

२ अजीवकाया इति सुवचम् । यद्वा अस्तीत्यस्योभयत्रापि अव्ययीभूताख्यातता । यद्वा पदैकदेशे पदसमुदायोपचार इति मूले कायशब्देनास्तिकायग्रहणं, तथा च भाष्ये धर्मास्तीत्यादिव्याख्या न विरोधिनी ।

पतित इति ?। उच्यते—ज्ञानशब्दयोर्निबन्धमुभयमर्थविदः प्रचक्षते स्वभावरूपमापत्तिरूपं च, तत्र प्रत्यस्तमितनिरवशेषविशेषणः स्वभावरूपः सर्वदाऽप्यविकार्यो येनांशेन ध्रौव्यपदव्यपदेशमश्नुतेऽसौ, यथा चैतन्यमात्मनोऽकृत्रिमम्, मूर्तत्वं वा पुद्गलद्रव्यस्य, धर्मादीनाममूर्तत्वं सकललोकव्यापिता गत्याद्युपग्रहादिलक्षणानि च ध्रुवाण्येतानि। आपादनमापत्तिः -आविर्भावतिरोभावौ, वस्तुनः उत्पादविनाशावितियावत्, तत्र मृन्मूर्तिरूपादिस्वभावमजहद् वस्तु घटकपालशकलाकारमास्कन्दन्नु(दु?)त्पद्यत इति व्यपदिश्यते, यथा हि महतः सरसस्तरङ्गमालाः पटुमारुतवेगायासिताः प्रादुष्ष्यन्ति जलद्रव्यात्मिकाश्च ताः, एवं घटादयोऽपीति। तथा विनाशोऽपि घटाद्याकारप्रलयः कारणापेक्षः स्थूलतरङ्गसन्ततीनामिव स्तिमितवारितयाऽवस्थानमुज्झितसमीरणप्रबलवेगसम्पर्काणामित्येवमुत्पादप्रलयध्रौव्यलक्षणः प्रवचनेऽस्त्यर्थः प्रासिधत्। तत्रैतत्त्रितयदिदर्शयिषयाऽऽचार्येणास्तिशब्दोऽव्ययसंज्ञः सकलधर्मादिद्रव्यध्रौव्यप्रतिपादनायाकारि, कायशब्दस्तु सूत्रे[2]पात्त आपत्त्यर्थः। एवं तर्हि सूत्र एवोपादानमस्तिशब्दस्य न्याय्यम्, विशिष्टार्थप्रतिपत्त्यर्थत्वात्, कायशब्दवत्, कायशब्दो वा नोपादेयस्तत एव हेतोरस्तिशब्दवदिति। उच्यते—अन्यतरोपादाने ह्यत्रान्यतरसम्प्रत्ययो भवतीत्यभिप्रायः सूरेः, संसर्गादीनि कारणानि शब्दस्यान्यस्य सन्निधाने भवन्ति व्यवच्छेदे च[3]—

"संसर्गो विप्रयोगश्च, साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं, शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः, कालो व्यक्तिः स्वरादयः।
शब्दस्यार्थव्यवच्छेदे, विशेषस्मृतिहेतवः ॥" ( **श्रीहेमचन्द्रकृतकाव्यानुशासनवृत्तौ** पृ० ३९ )

एषामनन्तरोक्तानां मध्ये संसर्गो गृह्यते, अत्र संसर्गमङ्गीकृत्य ध्रौव्यार्थप्रतिपत्तयेऽस्तिशब्दप्रक्षेपः, उत्पादविनाशौ हि ध्रौव्याविनाभूतौ संसृष्टौ ध्रौव्येण, अन्यथा हि ध्रौव्यात्मकताभावेऽन्वयिशून्यत्वादसन्निहितभवितृकत्वादुत्पादविनाशौ निर्बीजौ न स्याताम्। नापि ध्रुवता आविर्भावतिरोभावरहिता, ततस्त्र्यात्मकं वस्तु जैनेन्द्राणां बुद्धिव्यवस्थापितप्रविभागं प्रज्ञापनोपायत्वान्नरसिंहादिवत्, अतः कायशब्देनापत्तिरभिधित्सिताऽस्तिशब्देन ध्रौव्यमिति। कथं पुनः कायग्रहणादापत्तिरुद्भवप्रलयात्मिका प्रतीयत इति ?। उच्यते—प्रचीयमानाकारता हि कायः समुदायः, स च विभागे सति भवति, विभक्ताश्च[4] धर्मादिद्रव्यप्रदेशाः, न

१ कायशब्दस्तावत् निरुपचारेण कायादेरुपचारेण चास्तिकायस्य वाचकः, अत्र धर्मादिना संसर्गादस्तिकायार्थस्य ग्रहः, यद्वा धर्मादिशब्दा एव धर्मास्तिकायाद्यर्थाः, पञ्चमांगे तदनेकार्थेषु धर्मं इत्यादेर्निर्देशात्, अजीवतायाः कायतायाश्च व्यक्तये अजीवकाया इति, आद्येन जीवास्तिकायस्य परेण कालस्य च व्यवच्छेदः।

२ 'तत्रोपात्त' इति **क**-पाठः। ३ 'वा' इति **क**-पाठः।

४ पुद्गलपरमाणूनामप्यस्त्येव विभागः, पूरणगलनधर्मत्वात्, नेत्यादि तु विशिष्टविभागताख्यापनाय।

यत्रैकः स्थितो धर्मप्रदेशः तत्रापरोऽपि तत्प्रदेशः प्रतिष्ठित इति, तेषां विभक्तप्रदेशानां योऽसौ परस्पराविच्छेदलक्षणः समुदायः सोऽवश्यंतया तथोत्पन्नः समुदायशब्दवाच्यत्वात् ॥ नन्वेवमादिमत्त्वं धर्मादीनां प्रसज्यते तन्त्वादिसमुदायवत् । उच्यते—तेऽपि हि नादिमन्तः पुद्गलद्रव्यस्यानेकशक्तित्वात्, सा च शक्तिः शक्तिमतो भेदाभेदाभ्यां त्रिसूत्र्यामेव वक्ष्यते, यत्र चोत्पादस्तत्रावश्यं विनाशेन भवितव्यम्, तत्सहचारित्वात्, स च विनाशः पूर्वावस्थाप्रच्युतिलक्षणः समुदायादेवोन्नीयत इति । अथवाऽधुना गतिपरिणतिभाजश्चैत्रस्य धर्मद्रव्यमुपग्रहं कुरुते, तच्चोपग्रहकारितया प्रागजिगमिषति चैत्रे न व्यापारमगमत्, उत्तरकालं तु कोऽप्यतिशयः समुदपादि येन गतेरुपग्रहकृद् भवति कयाऽपि विक्रियावस्थयेत्यतस्तेनाकारेणोत्पादः समुपरतगतिव्यापारे च चैत्रे तया गत्युपग्रहव्यापारावस्थया तत्पुनरपैत्यतो विनाश एव । अधर्माकाशयोरपि स्थित्यवगाहनामुखेनोत्पादविनाशौ वाच्यावतः कायग्रहणात् सुगम आपत्तिशब्दार्थ इत्यतोऽस्ति चासौ कायश्चेत्यस्तिकायः, ध्रुवश्चासावुत्पादविनाशवांश्चेत्यर्थः, धर्मश्चासावस्तिकायश्च धर्मास्तिकायः, एवमधर्माकाशावपीति । पुद्गलास्तिकाये तूत्पादव्ययध्रुवताः प्रकाशा एव प्रायः ॥ एवमेतांश्चतुरोऽप्यजीवान् सूत्रेण परिगणय्याह—**तान् लक्षणतः परस्ताद् वक्ष्यामः** । तान् धर्मादीनेतावतः परस्ताद्—उपरि लक्षणतो गतिस्थित्युपग्रहावगाहशरीराद्युपकाररूपाद् वक्ष्यामः, इदं तूद्देशमात्रमारचितममुना सूत्रेण, अवश्यंतया च पदार्थभेदमभ्युपयता विविक्तमेव लक्षणमासञ्जनीयम्, अन्यथा भेद एव दुरुपपादः स्याद्, अतस्तान् प्रत्येकं लक्षणभेदेनाग्रे प्रतिपादयिष्याम इति ॥ अथ कायग्रहणं किमर्थमित्यत आह—**कायग्रहणं प्रदेशावयवबहुत्वार्थमद्धासमयप्रतिषेधार्थं चेति** ॥ ननु च कायग्रहणस्य प्रयोजनं वर्णितमापत्तिः कायशब्दार्थ इति, सत्यमुक्तं भाष्याक्षरानपेक्षम्, अधुना तमेवार्थं भाष्याक्षरैर्दर्शयति, विनाऽपि कायग्रहणेन धर्मादीनामजीवता गम्यत एव, तस्मात् तस्योपादाने प्रयोजनमेषां धर्माधर्माकाशानां प्रदेशबहुत्वमिष्यते, प्रकृष्टो देशः प्रदेशो निर्विभागः खण्डमनपायि स्वस्थानाद् अनादिकालपरिणामापादिततथास्थितिः, तेषामेवंविधप्रदेशानां बहुत्वं धर्माधर्मयोरसङ्ख्येयप्रदेशता प्रत्येकम्; आकाशस्यानन्तप्रदेशता बहुत्वार्थः, एवंविधासङ्ख्येयप्रदेशसमुदायो धर्मास्तिकायस्तथैवाधर्मास्तिकायः, आकाशमपि लोकपरिमाणमेतावत्प्रदेशसङ्ख्यम्, समस्ताकाशं त्वनन्तप्रदेशमित्येवं समुदितिरूपत्वाद् गत्याद्युपग्रहविक्रियापत्तिद्वारेण स्फुटैवापत्तिरिति । पुद्गलद्रव्यमङ्गीकृत्यावयवबहुत्वमुक्तम्, अवयूयन्त इत्यवयवाः परमाणुद्व्यणुकादयः, परमाणवो हि समुदायपरिणतिमनुभूय भेदमपि प्रतिपद्यन्ते, ततश्चैकका अपि भवन्ति, न त्वेवं धर्मादिप्रदेशाः, अत एव च नावयवास्तेऽभिधीयन्ते, तस्माद् भेदेनोपादानं प्रदेशावयवयोः, बह्ववयवं हि पुद्गलद्रव्यमवगन्तव्यम्, सङ्ख्येयप्रदेशः स्कन्धोऽसङ्ख्येयप्रदेशोऽनन्तप्रदेशोऽनन्तानन्तप्रदेशश्चेति ॥ ननु चैकोऽपि परमाणुः पुद्गलद्रव्यमेव स कथं बह्ववयवो भवेत् ? किमत्र प्रतिपाद्यम् ? ननु प्रसिद्धमेवेदमेकरसगन्धवर्णो द्विस्पर्शश्चाणुर्भवति, भा-

१ अजीवप्रकरणायाजीवशब्द इत्यर्थः ।

वावयवैः सावयवो द्रव्यावयवैर्निरवयव इति। आगमश्च–"[1]कइविहे णं भंते! भावपरमाणू पण्णत्ते? गोयमा! चउव्विहे भावपरमाणू पण्णत्ते, तंजहा–वण्णमंते रसमंते गंधमन्ते फासमन्ते इति"। (भग० सू० ६७०) मतुबिह संसर्गे द्रव्यपरमाण्वपेक्षो वा तस्माद् वर्णाद्यवयवैर्बहुत्वं द्रव्याणोः। यच्च तत् तथा प्रयतते संयुज्यते वियुज्यते श्वेत इत्यादिकारणं तत् परमाणुद्रव्यम्, अत्राप्यापत्तिः स्पष्टा। तथा द्वितीयं कायग्रहणे प्रयोजनमद्धासमयः कायो न भवति, अद्धा चासौ समयश्चाद्धासमयः, स चार्धतृतीयद्वीपान्तर्वर्ती समय एकः परमसूक्ष्मो निर्विभागस्तस्य न कायता, समुदायश्च कायशब्दवाच्य इति, वक्ष्यत्यस्य द्रव्यप्रस्तावे द्रव्यतामेकीयमतानुसारिणीम्, द्रव्यं च प्रदेशप्रचितमवयवप्रचितं वा स्याद् आशङ्कमानो न्यषेधीत् कायग्रहणात् कायतामद्धासमयस्य। एवं तर्हि कायप्रतिषेधादनुत्पादविनाशः स्यात् समयः, तदभावाच्च ध्रौव्यमप्यपेयात्, ततश्च मण्डूकजटाभारकृतकेशालङ्कारवन्ध्यापुत्रखपुष्पमुण्डमालाख्यानवत् सकलमिदमनालम्बनं समयव्यावर्णनं स्यादिति। उच्यते–नायं नियमो यत्कायशब्देनाक्षिप्यते तदेवोत्पादविनाशवदितरन्न, कथं तर्हि प्रतिपत्तव्यमेवम्? ननु यत्र कायशब्द उपात्तस्तत्रायमर्थोऽस्य यदुतोत्पादविनाशौ स्वरससिद्धावेव च कायशब्देन प्रकाश्येते, न पुनरभूतावपि शब्दसामर्थ्यात् सन्निधानं कल्पयतः, यत्र तु कायग्रहणं नास्ति तत्र स्वरससिद्धावेवोत्पादविनाशौ तत्सहचरितत्वाच्च ध्रौव्यमपीत्येतत् समस्तमेव द्रव्यप्रस्तावे भावयिष्यामः। कारणसमुच्चयार्थश्चशब्दो भाष्ये प्रतिपत्तव्यः। प्रशस्ताभिधानाद् धर्मग्रहणमादौ लोकव्यवस्थाहेतुत्वाद् विपरीतत्वादेकद्रव्यत्वाद् वाऽधर्मग्रहणमनन्तरं, तत्परिच्छेद्यमाकाशं लोकत्वात् तदनन्तरममूर्तसाधर्म्याच्च, तदवगाढत्वात् तदनन्तरं पुद्गला इति विशिष्टक्रमसन्निवेशप्रयोजनमेतदेवमवसेयमिति ॥ १ ॥

धर्मादीनां द्रव्यगुणपर्यायत्वेनानुपदेशे सति सन्देहः स्यात्, अतः सन्देहव्यावृत्त्यर्थमिदमुच्यते–

## सूत्रम्—द्रव्याणि जीवाश्च ॥ ५–२ ॥

**टी०**—उपरिष्टाद् वक्ष्यते लक्षणं 'गुणपर्यायवद् द्रव्यम्' (अ० ५, सू० ३७) इति। तत्र द्रव्याणीति सामान्यसंज्ञा, धर्मादिका च विशेषसंज्ञा, अतः सामान्यविशेषसंज्ञाभाञ्जि धर्मादीनि, द्रव्यसंज्ञा च द्रव्यत्वनिमित्ता द्रव्यास्तिकनयाभिप्रायेण जातिश्च शब्दार्थः, तच्च द्रव्यत्वं परमार्थविचारणायां व्यतिरिक्ताव्यतिरिक्तपक्षावलम्बि, नैकान्तेनान्यद्धर्मादिभ्यो नान्यदिति पुरो वक्ष्यते त्रिसूत्र्याम्, अत एतानि धर्मादीनि मयूराण्डकरसवत् संमूर्च्छितसर्वभेदप्रभेदबीजानि देशकालक्रमव्यङ्ग्यभेदसमरसावस्थैकरूपाणि द्रव्याणि गुणपर्यायकलापपरिणामयोनित्वाद् भेदप्रत्यवमर्शेनाभिन्नान्यपि भिन्नानीव भासन्ते, "द्रव्यं च भव्ये" (पा० अ०५, पा०३, सू० १०४) इति वचनाद् भावे कर्तरि च निपात्यते। इह तु भावे, द्रव्यं भव्यं भवनमिति, गुणाः पर्यायाश्च भवनसमवस्थानमात्रका

(द्रव्यशब्दार्थः)

---

१ कतिविधो भदन्त! भावपरमाणुः प्रज्ञप्तः? गौतम! चतुर्विधः भावपरमाणुः प्रज्ञप्तः। तद्यथा—वर्णवान्, रसवान्, गन्धवान्, स्पर्शवान् इति।

एवोत्थितासीनोत्कुटकशयितपुरुषवत्; तदेव च वृत्त्यन्तरव्यक्तिरूपेणापदिश्यते जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति, पिण्डातिरिक्तवृत्त्यन्तरावस्थाप्रकाशतायां तु जायत इत्युच्यते, सव्यापारे च भवनवृत्तिः, अस्तीत्यनेन निर्व्यापारात्मसत्ताख्यायते भवनवृत्तिरुदासीना, अस्तिशब्दस्य निपातत्वात्, विपरिणमत इत्यनेनापि तिरोभूतात्मरूपस्यानुच्छिन्नतयाऽनुवृत्तिकस्य रूपान्तरेण भवनम्, यथा क्षीरं दधिभावेन परिणमते विकारान्तरवृत्त्या भवनमवतिष्ठते, वृत्त्यन्तरव्यक्तिवृत्तिर्हेतुभाववृत्तिर्वा विपरिणामः । वर्धत इत्यनेन तु स एव परिणामः उपचयरूपः प्रवर्तते, यथाऽङ्कुरो वर्धते, उपचयवत्परिणामरूपेण भवनवृत्तिर्व्यज्यते, अपक्षीयत इत्यनेन तु तस्यैव परिणामस्यापचयवृत्तिराख्यायते दुर्बलीभवत्पुरुषवदपचयरूप[1]भवनवृत्त्यन्तरव्यक्तिरुच्यते, विनश्यतीत्यनेनाविर्भूतभवनवृत्तितिरोभवनमुच्यते, यथा विनष्टो घटः प्रतिविशिष्टसमवस्थानात्मिका भवनवृत्तिस्तिरोभूता, न त्वस्वभावतैव जाता, कपालाद्युत्तरभवनवृत्त्यन्तरक्रमावच्छिन्नरूपत्वादित्येवमादिभिराकारैर्द्रव्याण्येव भवनलक्षणान्यपदिश्यन्ते । अपरे सूत्रद्वयमेतदधीयते–"द्रव्याणि, जीवाश्च", तदयुक्तम्, अस्तिकायता द्रव्यता च प्रतिपिपादयिषिता जीवानाम्, सा चैकयोगेऽपि सति प्राणिनामव्याहतैव चशब्दोपादानसामर्थ्यादतः क एष निर्विशेषो योगद्वयादरः? । सम्प्रति भाष्यमनुस्रियते—

**भा०—एते धर्मादयश्चत्वारो जीवाश्च[2] पञ्च द्रव्याणि च भवन्तीति । उक्तं हि–'मतिश्रुतयोर्निबन्धा द्रव्येष्वसर्वपर्यायेषु, सर्वद्रव्यपर्यायेषु केवलस्य' (अ० १, सू० २७, ३०) इति ॥ २ ॥**

**टी०—एते धर्मादय** इत्यादि । एत इति प्रथमसूत्रोपदिष्टाः **धर्मादयश्च**तुःसङ्ख्यावच्छिन्नाः प्राणिनश्चास्तिकायाः **द्रव्याणि**, चशब्दादुभयमभिसम्बध्यते प्राणिषु, द्रव्यता चैषां स्वपरनिमित्तद्वयोपलक्षिता, तत्र स्वनिमित्तं स्वधर्मव्याप्तिर्ययाऽसाववष्टब्धस्तथा गृह्यते स्वधर्मव्याप्त्यैव द्रव्यं, प्रतिषिध्यते प्रत्याय्यते च, यथाभूतं वा ज्ञायते । स्वधर्मप्राप्तिश्च व्याप्तिलक्षणा तादात्म्येन व्यवस्थानम्, ततश्च स्वभावावस्थानमेव द्रव्यलक्षणम् । परनिमित्तं चक्षुर्ग्राह्यं रूपमित्यादि योज्यम् । द्रव्यमेव हि तत् तथा व्यपदिश्यते रूपादितया गत्याद्युपग्रहकृत्तया च विशेषणापेक्षम्, पितापुत्रभ्रातृभागिनेयमातुलादिसम्बन्धिदेवदत्तवत् परनिजनिमित्तोपलक्षणदर्शनाभिप्रायेण चाह–**उक्तं** ही**त्यादि** । प्रथममभिहितं मतिज्ञानश्रुतज्ञानयोर्ग्रहणता द्रव्येषु धर्मादिष्वसकलपर्यायेषु, चक्षुरादिभिरिन्द्रियैस्तान्युपलक्ष्यन्ते, श्रुतेन चेत्यविशुद्धग्रहणमेतद्, विशुद्धं तु **सर्वद्रव्यपर्यायेषु केवलस्ये**ति, तेनापास्तसकलविशेषणेन केवलज्योतिषा द्रव्याणां याथात्म्यं स्वनिमित्तलक्षितमागृह्यते, अतः स्वपरनिमित्तोपलक्षितानि धर्मादीनि द्रव्याणि द्रव्यास्तिकायाभिप्रायवशात् प्रतिपत्तव्यानीति ॥ २ ॥

---

१ 'भवनरूप' इति क–पाठः । २ 'प्राणिनश्च' इति घ–पाठः ।

अथैतानि पञ्चसङ्ख्यावच्छिन्नानि धर्मादीनि द्रव्याणि किं कदाचित् स्वभावात् प्रच्यवन्ते ? पञ्चत्वसङ्ख्यां वा व्यभिचरन्ति ? मूर्तान्यमूर्तानि वेति प्रश्नत्रितयम् । अतः संशीतिव्यवच्छेदायेदमुच्यते—

## सूत्रम्—नित्यावस्थितान्यरूपाणि च ॥ ५–३ ॥

टी०—यथासङ्ख्यमनेन सूत्रेण प्रश्नत्रितयं प्रत्युच्यते । नित्यग्रहणाद् धर्मादीनां स्वभावादप्रच्युतिराख्यायते, अवस्थितग्रहणादन्यूनानधिकत्वमाविर्भाव्यते, अनादिनिधनेयत्ताभ्यां न स्वतत्त्वं व्यभिचरन्ति ॥ ननु च पृथिव्यादीनि नव द्रव्याणि, तत् कथं पञ्चत्वसङ्ख्यां न व्यभिचरन्तीति ? । उच्यते–पृथिव्यप्तेजोवायुमनांसि तावत् पुद्गलद्रव्यमेव मूर्तक्रियावत्त्वाद् आत्मपरिणमिता वा वसुधादयः पुद्गला जीवा एव मनुष्यादिवत्, कालश्चैकीयमतेन द्रव्यमिति वक्ष्यते, वाचकमुख्यस्य पञ्चैवेति । दिशश्चाकाशान्न द्रव्यान्तरम्, आकाशप्रदेशा एव विशिष्टरचनाभाजो दिग्व्यपदेशमवरुन्धन्ति, न च तद्व्यतिरेकेण तत्स्वरूपोपलब्धिर्दिशामस्तीति । अरूपिग्रहणाद् धर्माधर्माकाशजीवानाममूर्ततामाविष्करोति, रूपरसगन्धस्पर्शपरिणामबहिर्वर्तित्वादमूर्तान्युच्यन्ते । अपरे द्विधा भिन्दन्ति सूत्रम्, 'नित्यावस्थितानि' पञ्चापि धर्मादीनि नित्यावस्थितानि भवन्ति, ततो'ऽरूपाणि'[2], एतान्येव धर्मादीन्यविद्यमानरूपरसादीनि द्रष्टव्यानि, चत्वारीति पृथग्योगकरणात् किल पञ्चानामप्यवस्थितत्वमरूपत्वं चतुर्णामिति । एतच्च शक्यमेकयोगेऽपि हि, अरूपि[3]ग्रहणात् सम्भवतो धर्मादय एव सम्भत्स्यन्ते, न पुद्गलाः । अथवाऽप्यरूपग्रहात् पञ्चानामपि प्रसङ्गे अपवदिष्यते 'रूपिणः पुद्गला' (अ० ५, सू० ४) इति । न च पृथग्योगेऽप्येषोऽर्थः शक्यो लब्धुमतो वृथा वाञ्छेति । अपरे वर्णयन्ति—एकयोग एव नित्यावस्थितान्यरूपाणि, अत्राद्ययोः समस्तपदयोः पाठः कृतः, अरूपग्रहणं तु न समस्तमाभ्यां सहातो[4] विभक्तिद्वयश्रवणमेतस्मादुन्नीयते—नित्यावस्थितग्रहणं समस्तद्रव्यविशेषणमरूपग्रहणमेककं पुद्गलद्रव्यव्युदासेन धर्मादिचतुष्टयविशेषणम् ॥ अत्रापरे व्याचक्षते–यत्किञ्चिदेतत् नित्यावस्थितारूपाणीत्येवमपि पाठे लभ्यत एवाभिलषितोऽर्थ उत्तरसूत्रोपादानात्, तस्मात् समस्यैव त्रीण्यपि पदानि सूत्रमध्येयम् । अस्मिन् पक्षे सूरिविरचितसूत्र[5]विन्यासभङ्गापत्तिर्न तु प्रक्रिया दुष्यति । अपरे नित्यग्रहणमवस्थितविशेषणं कल्पयन्ति, नित्यमवस्थितानि नित्यावस्थितानि, "सह सुपा" (पा० अ० २, पा०, १ सू० ४) इति समासो नित्यप्रजल्पितवत्, अस्मिन् विकल्पे भाष्यमगमितं स्यात्, भाष्यकारेण त्वेतानि त्रीण्यपि स्वतन्त्राण्येव व्याख्यातानि, तत् कथं नित्यग्रहणमवस्थितविशेषणं स्यात् ? भाष्यभेदे

सूत्रपाठविचारः

---

१ नैतानि कदाचिदपि न सन्ति, न चान्ये तत्तया परिणमन्ति ।

२ 'अरूपीणि' इति क–पाठः । ३ 'अरूपिग्रहणात्' इति क–पाठः । ४ 'असो भक्तिद्वय' इति ग–पाठः ।

५ विधाय अपवादनापेक्षया विभक्तेर्गौरवतामपेक्ष्य सूरिविन्यासः, एवमेवासर्वपर्यायः ।

सतीति ॥ अपरे त्वाहुः–किलाचार्येण सूत्रमेवमधीतम्–नित्यावस्थितान्यरूपीणीति, अत्र च बहुव्रीहिणोक्तत्वान्मत्वर्थीयानुपपत्तिरिति । अत्रोच्यते–क्वचिद् बहुव्रीहिं बाधित्वा तत्पुरुषवृत्तौ मत्वर्थीयो भवति, तद्यथा–"इङ्ध्यार्योः शत्रकृच्छ्रिणि" ( पा० अ० ३, पा० २, सू० १३० ), तथा अनरवन्ति चक्राणि, सर्वधनादित्वाद् वा ॥ अपरे ब्रुवते–भवतु मत्वर्थीयोऽत्रार्हः, स च मतुरेव रसादिपाठान्नत्विनिरिति, उक्तं तत्रान्यतरस्यांग्रहणं समुच्चयार्थमित्यदोषः ॥

भाष्यमधुनाऽऽश्रियते—

**भा०—एतानि द्रव्याणि नित्यानि भवन्ति । 'तद्भावाव्ययं नित्यम्' (अ० ५, सू० ३० ) इति च वक्ष्यते । अवस्थितानि च, न हि कदाचित् पञ्चत्वं भूतार्थत्वं च व्यभिचरन्ति ॥ [2]अरूपाणि च, नैषां रूपमस्तीति । रूपं मूर्तिः, मूर्त्याश्रयाश्च स्पर्शादय इति ॥ ३ ॥**

**टी०—एतानि द्रव्याणि नित्यानीत्यादि** भाष्यम् । एतानि-अनन्तराविष्कृतानि पञ्चापि धर्मादीनि, द्रव्याणीति द्रव्यास्तिकनयाभिप्रायेण, न तु पर्यायसमाश्रयणात्, द्रव्यास्तिको हि ध्रौव्यमेवेच्छति, नोत्पादविनाशौ, अतः तदभिप्रायेणैषामाचार्यः शास्ति नित्यताम्, अन्यथा द्रव्यास्तिकनयनिरपेक्षनिरूपणायामेकान्तवादः स्यात्, स च बहुविधदोषाघ्रातत्वात् सामीक्षिकाभिप्रायवदसमञ्जसः स्यात् ॥ ननु चैवमेकनयनिरूपणा न जैनेन्द्रदर्शनप्रतिपूरणायालम्, सत्यमेतत्, किन्तु द्रव्यास्तिकपर्यायास्तिकयोः प्रधानगुणभावविवक्षावशाद् वस्तुतत्त्वमुपनीयते ज्ञातपुत्रीयैः, अन्यथा हीत्थं वस्तुप्रज्ञापनाऽतिदुष्करा स्यात्, अतः प्रज्ञापनेयमभिन्नांशस्य वस्तुनो नरसिंहस्येव नरकेसरिशब्दभेदेन । तत्र हि द्रव्यास्तिकस्य प्राधान्यमाश्रित्येतरस्य च गुणभावं नित्यता प्रज्ञाप्यते, यथा चैतानि नयद्वयोपसंगृहीतानि तथा प्रथमसूत्रेऽभिहितमभिधास्यते च त्रिसूत्र्यामिति । तमेव च ध्रौव्यांशं द्रव्यास्तिकनयप्रज्ञाप्यमादर्शयितुमाह–**नित्यानि भवन्ति** 'नेर्ध्रुवे त्यब्' ( सिद्ध० अ० ६, पा० ३, सू० १७ ) इति नित्यानि ध्रुवाणि, नोत्पादविनाशवन्तीतियावत्, भवन्तीत्यनेन सकलकालाविकारिणी सत्ताऽऽख्यायते धर्मादीनाम्, तच्च नित्यलक्षणं वक्ष्यमाणमुद्घट्टयति–**तद्भावाव्ययं नित्यमिति** । यत् सतो भावात् न व्येति न व्येष्यति तन्नित्यमिति भवतीति भावः । योऽसौ भवति स कर्ता द्रव्यम्, स च तस्मात् स्वरूपान्न विगमेन युज्यते योक्ष्यते वाऽतो नित्य उच्यते, न कदाचित् सद्रूपतां परित्यक्ष्यतीत्यर्थः ॥ अधुनाऽवस्थितशब्दार्थं निरूपयति नित्यावस्थितयोरभेदभ्रान्तिमपनयन्–मा भूत् सङ्करोऽनयोः, अन्यन्नित्यलक्षणमन्यच्चावस्थितलक्षणमिति, **अवस्थितानि च, न हि कदाचित् पञ्चत्वं भूतार्थत्वं च व्यभिचरन्ति** । नित्यत्वानुज्ञापेक्षया चशब्दोपादानम्, अवस्थितानि भवन्ति धर्मादीनि द्रव्याणि, तच्चावस्थानमेषां वाक्यान्तरेण निरूप्यते–न कदाचित् पञ्चत्वं व्यभिचरन्ति, तद्भावाव्ययतायां सत्यामियत्तैषां निर्धार्यतेऽवस्थितशब्दोपादानात्,

१ 'इन्द्रार्योः शक्रकृच्छ्रीणि' इति ग-पाठः । २ 'अरूपाणि' इति घ-पाठः, 'अरूपीणि' इति तु ख-पाठः ।

पञ्चैव भवन्त्येतानि न न्यूनान्यधिकानि वेति सङ्ख्यानियमोऽभिप्रेतः, सर्वदा पञ्चास्तिकायात्मकत्वाज्जगतः, कालस्य चैतत्पर्यायत्वादिति। नापि भूतार्थत्वं व्यभिचरन्त्येतानि, अतोऽवस्थितान्युच्यन्ते। अन्योन्यावबन्धितायां सत्यामपि धर्मादीनि न स्वतत्त्वं भूतार्थत्वं वैशेषिकं लक्षणमतिवर्तन्ते, तच्च धर्माधर्मयोर्गतिस्थित्युपग्रहकारिता, नभसोऽवगाहदानव्यापारः, स्वपरप्रकाशिचैतन्यपरिणामो जीवानाम्, अचैतन्यशरीरवाङ्मनःप्राणापानसुखदुःखजीवितमरणोपग्रहमूर्तत्वादयः पुद्गलानाम्। अथवाऽसङ्ख्येयादिप्रदेशानादिपरिणामस्वभावता वा भूतार्थता मूर्तताऽमूर्तता चेति, तां न जातुचिदनादिकालप्रसिद्धिवशोपनीतां मर्यादामतिक्रामन्ति, स्वलक्षणव्यतिकरो हि निर्भेदताहेतुः पदार्थानाम्, अतः स्वगुणमपहाय नान्यदीयगुणसम्परिग्रहमेतान्यातिष्ठन्ते, तस्मादवस्थितानीति। **अरूपाणि च, नैषां रूपमस्तीति**। न समुदायविशेषणमेतदरूपाणीत्यसम्भवाद् धर्माधर्माकाशजीवेषु चतुर्ष्वेव सम्भवत्यमूर्तत्वं, न पुनः पुद्गलेषु, अत एव प्रसक्तौ सत्यामुत्तरसूत्रेण निषेधः करिष्यते, चक्षुर्ग्रहणलक्षणं रूपं तदविद्यमानं येषां तान्यरूपाणीत्यरूपत्वाच्चक्षुषा नैतानि गृह्यन्ते, न तु चक्षुषैषामगृह्यमाणत्वमरूपत्वे कारणमुच्यते, परमाण्वादिभिरनेकान्तात्, तस्मादरूपिग्रहणं द्रव्यस्वतत्त्वनिर्ज्ञापनार्थं मूर्तिमत्त्वनिवृत्तिप्रकाशनाय, प्रात्ययिकोत्पादवत्त्वे तु भाज्यमङ्गुल्याकाशादिवत्, स्वतस्तु नैषां रूपमस्तीति। किं पुना रूपं नामेत्यत आह—**रूपं मूर्तिः**, मूर्तिर्हि रूपादिशब्दाभिधेया, सा च रूपादिसंस्थानपरिणामा, नासर्वगतद्रव्यपरिमाणलक्षणा, व्यभिचारदर्शनात्, सर्वतः परिमितत्वे लोकस्य आत्मनोऽपि मूर्तिमत्त्वप्रसङ्गः, **काणभुजानां** (?) परिमितत्वं चावश्यमभ्युपेयं विशिष्टसंस्थानत्वादिभिर्लोकस्य, अतो रूपमेवाव्यभिचारित्वान्मूर्तिरुच्यते। अपरेऽभिदधति–रूपशब्दो नीलादिवर्णाभिधायी समस्ति, अस्ति च दीर्घादिसंस्थानप्रतिपादनपरः, तद् यः संस्थानप्रतिपत्तिमाविष्करोति रूपशब्दस्तमुररीकृत्यावोचदाचार्यो रूपं मूर्तिरिति, एवंविधमूर्त्याश्रिताश्च **स्पर्शादयः** किल सर्वदा न कदाचिदसंस्थाना भवितुमर्हन्ति, अन्यथा वान्ध्येयव्योमकुसुममण्डूकशिखण्डकल्पाः स्युरिति। अत्र पक्षे धर्माधर्मसिद्धसंस्थानैरनेकान्तः। तस्माद् रूपमेव मूर्तिरस्तु। एवं तर्हि गुणमात्रं मूर्तिशब्दस्य विषयः प्रसक्तः, न च रूपमेव मूर्तिरिति, उच्यते–द्रव्यास्तिकनयावष्टम्भात् सकलमिदं निरूप्यते, तत्र किमाश्वेव विस्मृतं भवतः, न खलु रूपादयस्तस्य केचिन्मूर्त्या विविक्ताः सन्ति, सैव हि मूर्तिर्द्रव्यस्वभावा चक्षुर्ग्रहणमासाद्य रूपमिति व्यपदिश्यते,

रूपविचारः

अत एव पुनराह सहचराव्यभिचारप्रदिदर्शयिषया–**मूर्त्याश्रयाश्च स्पर्शादय इति**। न खलु मूर्तिं स्पर्शादयो व्यभिचरन्ति, सहचरितत्वात्, यत्र रूपपरिणामः तत्रावश्यन्तया स्पर्शरसगन्धैरपि भाव्यम्, अतः सहचरमेतच्चतुष्टयम्, अतः परमाणावपि विद्यते, न च परमाणवश्चतुर्गुणादिजातिभेदभाजः, सर्वेषामेकरूपत्वात्, इयांस्तु विशेषः–किञ्चिद् द्रव्यमुत्कटं गुणपरिणाममासाद्य तमेव त्यजति, यथा लवणहिङ्गुनी संहतिपरिणामसामर्थ्यवती लोचनस्पर्शनग्रहणगोचरतामुपेत्य जले विलीने सति रसनघ्राणग्रहणयोग्यतामागच्छतः, न च वर्णस्पर्शौ तत्र

सम्भवन्तावपि पुनर्ग्रहीतुं शक्यौ, परिणामविशेषवत्त्वात्, एवं पार्थिवाप्यतैजसवायवीयाणवोऽप्येकजातीयाः कदाचित् काश्चित् परिणतिं बिभ्रतो न सर्वेन्द्रियग्राह्या भवन्ति, अतो रूपरसगन्धस्पर्शा एव विशिष्टपरिणामानुगृहीताः सन्तो मूर्तिव्यपदेशभाजो भवन्ति ॥ अपरेऽन्यथा वर्णयन्ति भाष्यम्–मूर्तिशब्देन रूपमेवाभिधीयते, ये च रूपमाश्रित्य वर्तन्ते स्पर्शादयस्तेऽपि मूर्तिशब्दवाच्याः, तदेतदयुक्तम्, 'द्रव्याश्रया निर्गुणा गुणाः' ( अ० ५, सू० ४० ) इति वक्ष्यते, द्रव्यमाश्रयो भवति स्पर्शादीनां, न पुना रूपमुपपन्नतयेष्यत इति । अथापि पर्यायनयसमाश्रयणादुच्येते न द्रव्यमस्ति रूपादिग्रहे द्रव्यबुद्ध्यभावादतो रूपादय एव परस्परसमाश्रयेण वर्तमानाः सेनावनादिवन्मूर्तिशब्दवाच्या इति, तथापि भाष्यं न सङ्गच्छते, रूपं मूर्तिर्मूर्त्याश्रयाश्च स्पर्शादय इति, न ह्येकः पदातिः करी वा सेना, किन्तु परस्परसमाश्रयेण वर्तमानास्तुरगकरिरथपदातयः सेनेत्येवं न रूपमेव मूर्तिः किन्तु समुदाय इत्यतो यथावर्णितमेवास्तां भाष्यमिति ॥ ३ ॥

नित्यावस्थितान्यरूपाणीत्यविशेषविधाने केषांचिदपवादार्थं लक्षणमारभ्यते—

## सूत्रम्—रूपिणः पुद्गलाः ॥ ५–४ ॥

टी०—विशेषश्रुतेः सामान्यश्रुतिनिषेधमुखेनात्मलाभादागृहीतविशेषत्वादपवादस्य नित्यत्वावस्थितत्वाभ्यनुज्ञानद्वारेणारूपत्वमात्रप्रतिषेधोऽत्र विवक्षितः, अरूपाः पुद्गला न भवन्ति, किं तर्हि ? रूपिणः, तत्स्वभावाव्ययत्वाच्च नित्यता सदा समस्त्येव, रूपादिमत्तया चाव्यतिकीर्यमाणस्वभावतयाऽवस्थितत्वं पुद्गलानाम् ॥ ननु चोत्पादविनाशवत्त्वादनित्यतैवातिस्पष्टैषां, तत् कथं तद्विरोधिनी नित्यतानुबु(ब ?)ध्यत इति ? । अत्रोच्यते–द्विविधा हि नित्यता प्रवचनविद्भिराख्यायते –अनाद्यपर्यवसाननित्यता सावधिनित्यता च, तत्राद्या लोकसन्निवेशवदनासादितपूर्वापरावधिविभागा सन्तत्यव्यवच्छेदेन स्वभावमजहती तिरोहितानेकपरिणतिप्रसवशक्तिगर्भीभवनमात्रकृतास्पदा प्रतीतैव, अपरा श्रुतोपदेशनित्यतावदुत्पत्तिप्रलयवत्त्वेऽप्यवस्थानात् पर्वतोदधिवलयाद्यवस्थानवच्च सावधिका । अनित्यताऽपि द्विविधा-परिणामानित्यता उपरमानित्यता च, तत्र परिणामानित्यता नाम मृत्पिण्डो हि विस्रसाप्रयोगाभ्यामनुसमयमवस्थान्तरं प्रागवस्थाप्रच्युत्या समश्नुते, उपरमानित्यता तु[1] भवोच्छेदवदपास्तगतिचतुष्टयपरिभ्रमक्रियाक्रमपर्यन्तवर्तिनी परिप्राप्तावस्थानविशेषरूपा, नात्यन्ताभावभाविनीति, तत्र परिणामानित्यतया पुद्गलद्रव्यमनित्यमित्याचक्ष्यते, तद्भावाव्ययतया च नित्यम्, उभयथा हि दर्शनात् । न च विरोधोऽस्ति कश्चिदित्येतत् प्रपञ्चतः प्रतिपादयिष्यते परस्तात्, उभयीमेव वाऽवस्थामास्थाय वस्तु सकलां वास्तवीं धियमाधिनोति, अन्यथाऽङ्कुरकितमात्रनियतपलाशस्वतत्त्वग्राहिवन्न प्रधानाराधनसाधीयसीं बुद्धिमा-

नित्यताया द्वैविध्यम्, अनित्यतायाश्च

१ 'नुभव' इति क-पाठः ।

दध्यादतिविकलत्वात्, प्रधानोपसर्जनतया तु कदाचित् किञ्चिद् विवक्ष्यते शिबिकावाहकयानेश्वरयानवत्, अतः प्रत्यक्षप्रमाणप्रसिद्धपदार्थस्वरूपे नातीवायासयति बुद्धिमात्मवन्तः, तस्मान्नित्यानित्ययोरास्पदमेकममी पुद्गला इति न किञ्चित् कस्यचिद् बाध्यते, ते च रूपवन्त इति ॥

अधुना भाष्यमनुश्रियते—

**भा०—पुद्गला एव रूपिणो भवन्ति। रूपमेषामस्त्येषु वाऽस्तीति रूपिणः ॥४॥**

**टी०**—पूरणाद् गलनाच्च पुद्गलाः—परमाणुप्रभृतयोऽनन्तानन्तप्रदेशस्कन्धपर्यवसानास्त एव रूपवत्तामनन्यसाधारणीमनेकरूपपरिणतिसामर्थ्यापादितसूक्ष्मस्थूलविशेषाविशेषप्रकर्षापकर्षवर्तिनीं बिभ्रति, न धर्मादिद्रव्यविशेषा इति रूपवत्त्वमत्रावधार्यते, तद्धि न जातुचिदतिचिरपरिचितपरमाणुद्व्यणुकादिक्रमवृद्धद्रव्यकलापमुज्झति सामर्थ्याच्च पुद्गला अपि न तां विहाय वर्तन्ते, अतः पुद्गला एव रूपिण इति सुष्ठूच्यते। रूपं मूर्तिरिति च प्राक् (सू० ३) प्रतिपादितम्, अतस्तदनुसन्धानाभिप्रायेणाह—**रूपमेषामस्त्येषु वाऽस्तीति रूपिण इति।** एषामिति पुद्गलानां परमाणुद्व्यणुकादिक्रमभाजाम्, उक्तलक्षणं रूपं मूर्तिः सा विद्यत इति रूपिणः, षष्ठीप्रदर्शनात् तु भेदविवक्षावशपरिप्रापितं द्रव्यगुणयोर्नानात्वमध्यवसातव्यम्, अभेदविवक्षोपनीतं च द्रव्यपर्याययोरैक्यम्, अतस्तत्प्रदर्शनाय व्यापकाधिकरणलक्षणा सप्तमी विगृह्णता आचार्येणोपात्ता। अथवा तुल्य एव मत्वर्थोऽयमुभयत्राभेदो भेदश्च पर्यायनयापेक्षो द्रव्यास्तिकनयापेक्षश्च योजनीयः। न मूर्तिव्यतिरेकेण पुद्गलाः सन्ति, भिन्नदेशसम्बन्धित्वेनानुपलब्धेः, व्यतिरेकिणोऽपि गमकत्वादसन्निहितविपक्षकस्येत्यभेदः, तथा यदिदं चन्दनमुपलभ्यते तस्य श्वेतं रूपं, तिक्तो रसः, पटुर्गन्धः, शीतलः स्पर्श इति; यश्चैष प्रत्यक्षेण प्रत्यक्षस्य व्यपदेशः सोऽर्थान्तरे दृष्टः, तद्यथा—अस्य ब्राह्मणस्यायं कमण्डलुरिति ॥ ननु चोपन्यस्तनिदर्शनबलेन द्रव्यमेव द्रव्यादर्थान्तरमिति न गुणेभ्यो द्रव्यमिति, उच्यते—योऽयमुपलभ्यस्य समस्तैरुपलब्धैर्व्यपदेशः सोऽर्थान्तरं गमयति, तच्च द्रव्यं गुणः क्रिया वा स्यादिति कोऽपरितोषः ?। सेनावनादिवदनेकान्त इति चेत्, दृष्टो ह्यनर्थान्तरेऽपि व्यपदेशः सेनायाः कुञ्जरः सहकारः काननस्येति। अत्रोच्यते—न खलु प्रसिद्धमनर्थान्तरत्वं सेनाकाननयोर्यस्मादनियतदिग्देशसम्बन्धिषु करिपुरुषतुरगस्प(स्य?)न्दनेषु परस्परप्रत्यासत्तिजनितोपकारेष्ववधारितानवधारितेयत्तेषु बहुत्वसङ्ख्यैव सेना, तथा काननमपि, एतच्च द्वयमप्यर्थान्तरमेव, यूषपङ्क्त्यादयोऽपि ह्यर्थान्तरतयैवं वक्तव्याः, यूषो ह्युत्पन्नपाकजानां द्रव्याणां कालविशेषानुग्रहे सति द्रव्यान्तरसम्पृक्तानां पाकजोत्पत्तौ यः संयोगः स यूष इत्याख्यायतेऽर्थान्तरभूतश्च, पङ्क्तिरप्येकदिग्देशसम्बन्धिषु परस्परप्रत्यासत्त्युपकृतेष्ववधारितानवधारितेयत्ताकेषु भिन्नाभिन्नजातीयेष्वाधारेषु वर्तमाना बहुत्वसङ्ख्यैवाभिधीयत इति। तस्मात् सापेक्षमिदं नयद्वयं वस्तुनः सद्भावमापादयति नैकान्त इत्यस्यार्थस्योद्भासनार्थमकरोद् भाष्यकारो विभक्तिद्वयेन विग्रहम्, अतोऽयं वाक्यार्थः—पुद्गलेषु मूर्तिर्भेदाभेदवर्तिनी, विवक्षावशादिति ॥ ४ ॥

पुद्गललक्षणम्

पुनरेषां विशेषाभिधित्सया सूत्रमाह—

## सूत्रम्—आकाशादेकद्रव्याणि ॥ ५–५ ॥

टी०—अथवा पुद्गलद्रव्यं परमाणुभेदेनानेकधा जीवद्रव्यं च नारकादिविशेषेण, तत् किमेवं धर्मादिद्रव्याण्यपीत्यारेकानिराकरणायेदमुच्यते—

धर्मादीनां सङ्ख्या

भा०—आ आकाशाद् धर्मादीन्येकद्रव्याण्येव भवन्ति । पुद्गलजीवास्त्वनेकद्रव्याणीति ॥ ५ ॥

टी०—आ आकाशादित्यादि भाष्यम् । अभिविधिवाचित्वादातो द्वित्वं ततश्च संहितया सूत्रपाठस्तं विवृणोति भाष्येण—आ आकाशात् अध्यायादिसूत्रोपात्तक्रममुद्दिश्याकाशाभिव्याप्तिप्रचिकाशयिषया आ आकाशादित्युवाच । धर्मादीनीति प्रथितप्रतिविशिष्टानुपूर्वीप्रदर्शनं धर्माधर्माकाशानि एकद्रव्याण्येवेति, नैषां समानजातीयानि द्रव्यान्तराणि सन्तीति, अविलक्षणोपकारात्, धर्माधर्माकाशानां हि गतिस्थित्यवगाहोत्पत्त्या प्रभावित उपकारः, स्थित्यादित्रययुक्तं हि वस्त्वर्थक्रियासमर्थमभ्युपेयतेऽनेकान्तवादिभिः, धर्मादिद्रव्याणां च गत्यादय उपकाराः स्वस्थाने युक्त्या प्रतिपादयिष्यन्ते, एकशब्दोऽसहायार्थमभिधत्ते, यथा परमाणुः परमाण्वन्तरेण सद्वितीयः, आत्मा आत्मान्तरेण ज्ञानसुखदुःखजीवनादिभेदभाजा, न धर्मद्रव्यं धर्मद्रव्यान्तरेण ससहायम्, अधर्मव्योमनी चैवमाविष्कार्ये, द्रव्यं गुणपर्यायवद् ( सू० ३७ ) वक्ष्यते, तदनेन स्वगतधर्मपरिणामप्राप्तिरापाद्यते मुक्तस्येव, अन्यथा गुणपर्यायशून्यं द्रव्यमेव न स्याद् व्योमोत्पलादिवत्, एवशब्देन नियम्यते एकद्रव्याण्येवैतानि, तुल्यजातीयद्रव्याभावात्, नियमेन चेष्टार्थसिद्धिं प्रदर्शयति—पुद्गलजीवास्त्वनेकद्रव्याणीति, सम्भाव्यानेकतया पुद्गलात्मानो विशेष्यन्ते तुशब्देन, इतिकरणं यस्मादर्थे, यस्मात् तुल्यजातीयभूयस्त्वमेषां तस्मादनेकद्रव्याणि परमाणुप्रभृतीन्यनन्ताणुकस्कन्धावसानानि क्षितिजलज्वलनानिलतरुद्वित्रिचतुष्पञ्चेन्द्रियात्मानश्चेति भावनीयम् ॥ ५ ॥

अयमपरो विशेषस्तेषामेवाभिधीयते—

## सूत्रम्—निष्क्रियाणि च ॥ ५–६ ॥

टी०—अथवा एवं तावदरूपित्वैकद्रव्यत्वे विभज्याख्याते इदमपि विभज्याख्यायत इत्याहचार्थमाचष्टे भाष्यकारः—

धर्मादिषु क्रियाविचारः

भा०—आ आकाशादेव धर्मादीनि निष्क्रियाणि भवन्ति । पुद्गलजीवास्तु क्रियावन्तः । क्रियेति गतिकर्माह ॥ ६ ॥

टी०—आ आकाशादेव धर्मादीनीत्येतावता भाष्येण कथं भाव्यते ? । अनन्तरसूत्रे सामर्थ्यपरिप्रापितानि धर्मादीन्यनुकृष्यन्ते, धर्मादीन्याकाशान्तानि निष्क्रियाणि भवन्ति,

अपेतक्रियाणि निष्क्रियाणि, करणं क्रिया–द्रव्यस्य भावस्तेनाकारेण, स चैषां न समस्ति, यस्माद् धर्माधर्माकाशान्यनासादितातिशयान्येव सर्वदा पूर्वापरावस्थाभेदमनाजिहानानि किल लक्ष्यन्ते, तदेतदपव्याख्यानमवधीरितसमयसद्भावैरकारि, यतः सर्वमेव सदुत्पादव्ययध्रौव्य-धर्मात्मव्यवस्थां नातिक्रामति, तदेतेऽपि धर्मादयो यदि सत्तां नातिलङ्घयन्ति भवितव्यं तदा तर्हि क्रिययैषामुत्पादविगमलक्षणया जीवानामिव। अथ सत्तातिक्रमेणाभ्युपेयन्ते तदानीं द्रव्य-तैवावहीयते गगनेन्दीवरादिवत्, भगवानपि व्याजहार प्रश्नत्रयमात्रेण द्वादशाङ्गप्रवचनार्थ सकलवस्तुसङ्ग्राहित्वात् प्रथमतः किल गणधरेभ्यः–"[1]उप्पण्णेति वा विगमेति वा धुवेति वा"। तदेतदशेषं विशीर्यते । तस्माद् द्रव्यत्वान्मुक्तात्मवदुत्पादव्ययस्थितिमत्त्वमनुमिमते हैतुकाः। तथा चावधृतसिद्धान्तहृदयेन **विशेषावश्यककारेण नमस्कारनिर्युक्तौ** शब्दानि-त्यत्वप्रतिपादनेच्छयाऽवाचि—

"[2]अवगाहणादओ नणु गुणत्तओ चेव पत्तधम्मव्व।
उप्पादादिसभावा तह जीवगुणावि को दोसो? ॥
अवगाढारं च विणा कत्तोऽवगाहोत्ति तेण संजोगो।
उप्पत्ती सोऽवस्सं गच्चुवकारादओ चेवं ॥
ण य पज्जयतो भिण्णं दव्वमिहेगं ततो जतो तेण।
तण्णासंमि कहं वा नभादओ सव्वहा णिच्चा? ॥" ( गा० २८२१–२८२३ )

अयमासामर्थोऽवधार्यः–गुणत्वात् पत्रनीलतावन्नभोऽवगाहोऽप्यनित्यः, नभसोऽवगाहः स्वलक्षणमुपकारः, स चावगाढारमन्तरेण जीवादिकं नाभिव्यज्यत इति अवगाढजीवादिसंयो-गमात्रमवगाह इति, संयोगश्चोत्पादी संयुज्यमानवस्तुजन्यत्वाद् द्व्यङ्गुलसंयोगवत्, यथा चावगाह आकाशस्यैवं गतिस्थित्युपकारावपि धर्माधर्मयोर्गतिमदादिद्रव्यसंयोगमात्रत्वादुत्पादादिस्वभावा इति। कथं तर्हि निष्क्रियत्वमेषामत आह—**पुद्गलजीवास्तु क्रियावन्तः**, **क्रियेति गति-कर्माह** सूत्रकारः, पुद्गलजीववर्तिनी या विशेषक्रिया देशान्तरप्राप्तिलक्षणा तस्याः प्रतिषेधोऽयम्, नोत्पादादिसामान्यक्रियायाः, पुद्गलास्त्वितो देशान्तरमास्कन्दन्तः समुपलभ्यन्ते जीवाश्चेत्यतस्ते क्रियावन्तः, अमुमेवार्थं धात्वन्तरेण प्रसिद्धदेशान्तरप्राप्त्यर्थेन प्रकाशयति–**गतिः** क्रियाशब्दे-

---

1 उत्पन्न इति वा विगत इति वा ध्रुव इति वा।

2 अवगाहनादयो ननु गुणत्वतश्चैव पत्रधर्म इव।
उत्पादादिस्वभावास्तथा जीवगुणा अपि को दोषः? ॥ १ ॥
अवगाढारं च विना कुतोऽवगाह इति तेन संयोगः।
उत्पादी सोऽवश्यं गत्युपकारादयश्चैवम् ॥ २ ॥
न च पर्ययतो भिन्नं द्रव्यमिहैकान्ततो यतस्तेन।
तन्नाशे कथं वा नभआदयः सर्वथा नित्याः? ॥ ३ ॥

नाभिधित्सिता विशिष्टैव, न क्रियासामान्यम्, धर्मादयः पूर्वावष्टब्धप्रदेशात् प्रदेशान्तरमपि विचलितुमनुत्सहमानाः कथमेवैवंविधक्रियाधारतां प्रतिपत्स्यन्ते ? तस्मान्निष्क्रियाणीति निरवद्यं दर्शनम् ॥ ६ ॥

अधुनाऽधिकृतधर्मादिद्रव्याणां सर्वेषामेव प्रदेशावयवेयत्ताविष्करणार्थमिदमुच्यते—

**भा०—अत्राह- उक्तं भवता-प्रदेशावयवबहुत्वं कायसंज्ञमिति । तत् क एष धर्मादीनां प्रदेशावयवनियम इति ? । अत्रोच्यते—**

**टी०—अत्राह**-**उक्त**मित्यादिना सम्बन्धयति, अध्यायादिसूत्रे यस्मादजीवकाया इत्यत्र कायग्रहणं प्रदेशावयवबहुत्वार्थमिति व्याहृतम्, तस्मात् **क एषां**[1] **धर्मादीनां** जीवान्तानां **प्रदेशावयवनियम इ**ति, **अत्रे**ति प्रदेशावयवनियमप्रश्ने यथागममभिधीयते मया, एषोऽभिप्रायः प्रश्नयितुः–अमूर्तेषु धर्मादिष्ववयवव्यवहारो नास्ति, मूर्तेषु चान्त्यभेदावस्थेषु परमाणुषु, अवयवव्यवहारो हि मूर्तेष्वेव प्रतीयत इत्यतो नियमोऽभिधेयः के एषामवयवा इति ।

**भा०—सर्वेषां प्रदेशाः सन्ति, अन्यत्र परमाणोः । अवयवास्तु स्कन्धानामेव । वक्ष्यते हि–'अणवः स्कन्धाश्च, सङ्घातभेदेभ्य उत्पद्यन्ते' (अ० ५, सू० २५-२६ ) ॥**

**टी०—सर्वेषा**मित्यादि भाष्यम् । मूर्तानाममूर्तानां च **प्रदेशाः सन्ति**–विद्यन्ते, संव्यवहारार्थं प्रदिश्यन्त इति प्रदेशाः, तत्र धर्माधर्माकाशजीवानां द्रव्यपरमाणुमूर्तिव्यवच्छिन्नाः प्रदेशाः, यथाऽऽह–"निरवयवः खलु देशः, खस्य क्षेत्रप्रदेश इति दृष्टः" । पुद्गलद्रव्यस्य तु निरंशो द्रव्यात्मना भागः प्रदेश इत्युच्यते, न तु तस्यान्यः प्रदेशोऽस्ति, अतः **परमाणोरन्यत्रे**त्युक्तम्, इदं च द्रव्यांशं प्रदेशध्वनिवाच्यमाधाय चेतसि भाष्यकारेणोक्तमन्यत्र परमाणोः प्रदेशाः सन्ति, न पर्यायांशं रूपादिलक्षणम् । यतः **प्रशमरतौ** (श्लो०२०८) अनेनैवोक्तं–"परमाणुरप्रदेशो, वर्णादिगुणेषु भजनीयः" । अत एव च भेदः प्रदेशानामवयवानां च, ये न जातुचिद् वस्तुव्यतिरेकेणोपलभ्यन्ते ते प्रदेशाः, ये तु विशकलिताः परिकलितमूर्तयः प्रज्ञापथमवतरन्ति तेऽवयवा इत्यत आह—[2]**अवयवा** इत्यादि । विशेषार्थस्तुशब्दः । विस्रसाप्रयोगाभ्यामवयूयन्त इत्यवयवाः पृथक् क्रियन्त इतियावत्, ते च **स्कन्धानामेव** द्व्यणुकादिक्रमवतामनतिक्रान्तरूपादिभेदानाम्, एवशब्दो नियामकः । धर्माधर्माकाशजीवाणूनां न सन्त्यवयवाः, स्कन्धानामेव भवन्ति । कुत एतदेवमित्याह–**वक्ष्यत** इत्यादि । यस्माद् वक्ष्यते सूत्रकारः–संघातभेदजाः स्कन्धाः ( सू० २६ ) । वियुतानामवयवानां संहतिपरिणतौ स्कन्धा जायन्ते, संहतानां च भेदपरिणतौ द्व्यणुकादयः सम्भवन्ति, परमाणवस्तु भेदादेवावयूयमाना अवयवास्तस्मादवयवव्यवहारः पुद्गलद्रव्यविषय एवाध्यवसेयः ॥

१ 'तस्मात् क एषां धर्मा०' इति घ-पाठः ।

२ एवं च सति स्कन्धादिरूपभेदचतुष्टयं पुद्गलास्तिकाये न स्यात् तत्त्वतः स्पष्टोपलभ्याः स्नेहादिकृतसंयोगवियोगभाजः अंशा अवयवास्ते यैः द्रव्यमन्यत् क्रियते भवन्ति वा ते स्कन्धेष्वेव, परेष्वप्रसिद्धत्वादवयवग्रहो न ।

अधुनाऽवसितप्रदेशावयवनियमो धर्मादिद्रव्यप्रदेशानामियत्तामाविष्करोति, तत्र—

धर्माधर्मयोः प्रदेशसङ्ख्या

**सूत्रम्—असङ्ख्येयाः प्रदेशा धर्माधर्मयोः ॥ ५-७ ॥**

**टी०**—तत्रेत्यादि । तेषु धर्मादिषु द्रव्येषु पञ्चसङ्ख्यावच्छिन्नेषु **धर्माधर्मयोरसङ्ख्येयाः प्रदेशा** धर्माधर्मयोः प्रत्येकमसङ्ख्येयाः प्रदेशा भवन्ति, ते च लोकाकाशप्रदेशमानाः सङ्ख्येयानन्तसङ्ख्याद्वयव्युदासेनासङ्ख्येयाः कथ्यन्ते ।

प्रदेशस्वरूपनिर्दिधारयिषुराह—

**भा०—प्रदेशो नामापेक्षिकः**[1] **सर्वसूक्ष्मस्तु**[2] **परमाणोरवगाह इति ॥ ७ ॥**

**टी०—प्रदेशो नामे**त्यादि । प्रकृष्टो देशः प्रदेशः परमनिरुद्धो निरवयव इतियावत्, नामशब्दः किलार्थे, परोक्षत्वात् तस्य, एवं हि सर्वज्ञाः प्रत्यक्षेणोपलभ्य कथयन्ति, अपेक्षाप्रयोजनः अपेक्षानिर्वृत्तो वा **आपेक्षिकः**, स च स्वसिद्ध एवार्वाग्दर्शनैरस्मदादिभिरनेनाभ्युपायेन प्रज्ञाप्यमान आपेक्षिक उच्यते, सर्वेषां धर्माधर्माकाशजीवानामापेक्षिकत्वे सत्यपि सूक्ष्म एव, न स्थूलः । तुशब्दोऽवधारकः । आपेक्षिकत्वं निरूपयति—**परमाणोरवगाह** ति । द्रव्यपरमाणुपरिग्रहेण, प्रदेशपरिमाणोरवगतिः क्रियते, तदेतदुक्तं भवति—तन्मूर्तिमात्राक्रान्तो देशः प्रदेश उच्यते, अवगाहो व्यवस्थानमाक्रान्तिरध्यासनमिति पर्यायाः, न पुनरिहावगाहो गतिः । नन्वेवमाकाशस्यैव प्रदेशो निरूपितः स्यात्, नो धर्मादीनाम्, यतोऽवगाह आकाशस्य लक्षणम् । अस्तु, को दोषः? प्रदेशलक्षणं तावन्निर्ज्ञातम्, लोकाकाशे च यत्राकाशप्रदेशः स च यावांस्तत्रैव धर्मास्तिकायप्रदेशोऽवगाढः स च तावानेवेति, एवमधर्मप्रदेशोऽपि तत्र वाच्योऽतस्तुल्यप्रमाणत्वादेकेनैव प्रघट्टेन प्रदेशनिरूपणम्, तत्राकाशमवकाशदाने व्याप्रियते, गतिपरिणतौ धर्म उपकारकः, स्थितिपरिणामे चाधर्मद्रव्यमुपकरोति, तस्मात् सर्वप्रदेशानामिदमेवापेक्षणीयमव्याहतं लक्षणम् । इतिशब्देनोपसंहरन्ति—धर्माधर्मयोरियती प्रदेशसङ्ख्येति ॥ ७ ॥

अधुना त्वसङ्ख्येयप्रदेशे प्रस्तावमुपजीवन् जीवस्य तत्तुल्यप्रदेशनियतत्वात् प्रदेशनियमं विधत्ते—

जीवस्य प्रदेशसङ्ख्या

**सूत्रम्—जीवस्य च ॥ ५-८ ॥**

**भा०—एकजीवस्य चासङ्ख्येयाः प्रदेशा भवन्तीति ॥ ८ ॥**

---

१ यथा हि स्कन्धेषु संबद्धः प्रदेशः कदाचिदपि आगत्य संलग्नो नैवमयमिति भावः । २ निश्चयपरमाणुज्ञापनाय सर्वेत्यादि, अन्यथा तु एकस्मिन्नपि परमाणुसमूहस्य तन्मयस्य च स्कन्धस्य चावगाहात्, तथापि नैकः परमाणुः प्रदेशद्वयावगाहीति सुष्ठूक्तमिदं, सूक्ष्मावगाहस्य तस्यैव भावात् ।

टी०–एकजीवस्य चेत्यादि भाष्यम् । जीवो ज्ञानदर्शनोपयोगस्वभावः स कदाचित् सामान्येन निर्दिश्यते जीव इत्याक्षिप्तसकलनारकादिभेदो गोशब्दवत् समस्तस्वभेदाक्षेपी, कदाचित् प्रतिविशिष्टोपाधिव्यवच्छिन्नो व्यक्तिपदार्थाश्रयणेन, तत्रैकशब्देन सर्वजीवराशिव्यवच्छेदमादर्शयति, एकजीवस्य एकस्या व्यक्तेरिति, चशब्देनासङ्ख्येयप्रदेशतामात्मन्यनुसन्धत्ते, प्रसिद्धधर्मादिक्रमोल्लङ्घनाभिधानं तुल्यप्रदेशाख्यानलाघवार्थम् । एकयोगाकरणाच्चोन्नीयते सूत्रकाराभिप्रायः सङ्कोचविकासस्वभावास्तुल्येऽप्यसङ्ख्येयप्रदेशत्वे जीवप्रदेशाश्चर्मादिवत्, धर्माधर्मयोस्तु सततमेव विततावस्थिताः, ते च सङ्कोचविकासस्वाभाव्याज्जातुचिन्निकृष्टकुन्थुविग्रहग्राहिणः कदाचित् तामेव सङ्ख्यामजहन्तः स्थूलं करिणः शरीरमाददते विकाशित्वादिति ॥८॥

आकाशस्यापि यथोक्तद्रव्यवत् प्रदेशनियममभिधित्सुराह—

## सूत्रम्–आकाशस्यानन्ताः ॥ ५–९ ॥

टी०—अगवाहदानादाकाशमित्येवं न गृह्यते लोकाकाशमात्रसिद्धेः, नह्यलोकेऽवगाढमस्ति किञ्चिज्जीवपुद्गलादि, तदभावादनाकाशमेव तत् स्यात्, इष्यते च, अतः संज्ञैवेयमनादिकालीना द्रव्यान्तरस्य धर्मादिसंज्ञावत् ॥ अन्ये मन्यन्ते—तस्याप्यवगाहदानशक्तिरस्ति, सा त्ववगाहकाभावान्न व्यज्यते, यदि स्यादवगाहकं तत्र व्यापारं यायात् तदवगाहपरिणत्या, न त्वस्ति, तस्मात् तदप्यवगाहदानशक्तियुक्तत्वादाकाशम् ॥ अपरे पुनरुपचारमाचरन्ति—आकाशवदाकाशं शुषिरदर्शनादिति, एतदप्यसत्, सिद्धान्तापेतत्वात् । अथ ये व्याचक्षते—व्ययोत्पादौ न स्वतो व्योम्नः, किन्तु परप्रत्ययाज्जायेते, अवगाहकसन्निधानासन्निधानायत्तावुत्पादव्ययाविति, तेषां कथमलोकाकाशे ? अवगाहकाभावाद्, अर्धवैशसं च सतो लक्षणं स्याद्, व्यापि चेष्यते स्थित्युत्पादव्ययत्रयमिति । अत्रोच्यते—य एवं महात्मानस्तर्कयन्ति स्वबुद्धिबलेन पदार्थस्वरूपं तेऽत्र निपुणतरमनुयोक्तव्याः—कथमेतत् ? वयं तु विस्रसापरिणामेन सर्ववस्तूनामुत्पादादित्रयमिच्छामः प्रयोगपरिणत्या च जीवपुद्गलानाम्, इत्थं तावदस्मद्दर्शनमविरुद्धसिद्धान्तसद्भावम्, अस्मदुक्तार्थानुगुणमेव च भाष्यकारेणाप्युच्यते ॥

अलोकेऽवगाहदातृतायां विचारः

आकाशस्य प्रदेशसङ्ख्या

**भा०—लोकालोकाकाशस्यानन्ताः प्रदेशाः । लोकाकाशस्य तु धर्माधर्मैकजीवैस्तुल्याः ॥ ९ ॥**

टी०—लोकेत्यादि । यद्याकाशशब्देनाकाशमविशिष्टमभिधित्सितं ततोऽनन्तप्रदेशता समीचीना भवेद्, विभागव्याख्यानं च जीवाजीवाधारक्षेत्रं लोकस्ततः पर-

१ एकयोगकरणे हि जीवास्तिकायस्य जीवसमूहमयस्यासंख्येयप्रदेशत्वं स्यात्, न तु प्रतिजीवं सांकर्यात्, एकजीवेति प्राक्सूत्रे न प्रवेशितम्, यथा दश वर्षसहस्राणि प्रथमायां भवनेषु व्यन्तराणां चेत्यत्र, अन्यथा तत्रापि दश वर्षसहस्राणि रत्नप्रभाव्यन्तरेष्वित्येवं वक्तुं शक्यत्वात्, यथा वा रूपिजीवयोगोपयोगेष्वादिमानित्यपि नोक्तमिति ।
२ आकाशस्यावगाह इति सिद्धस्याकाशस्योपकाराख्यानं; न तु तेनैव सिद्धिः, तस्य साधनत्वेऽपि च व्याप्यत्वात् न तदभावे आकाशाभावः ।

मलोकः, अतः सर्वाकाशस्यानन्ताः अपर्यवसाना इत्यर्थः । अथ योऽयं जीवाजीवाधारावधिना कृतो लोकाकाशविभागस्तत्र कियन्तः प्रदेशा इत्याह—लोकाकाशस्येत्यादि । अन्यूनानधिकप्रतिपत्त्यर्थस्तुशब्दः । धर्माधर्मैकजीवैस्तुल्या एव नोनाधिकभावभाज इति ॥ ९ ॥

अथ पुद्गलानां का प्रदेशसङ्ख्येत्युच्यते—

**सूत्रम्–सङ्ख्येयासङ्ख्येयाश्च पुद्गलानाम् ॥ ५–१० ॥**

**टी०—सङ्ख्येया** इत्यादि सूत्रम् । पूरणगलनपरिणतिलब्धसंज्ञकाः पुद्गलाः परमाणूपक्रमा अचित्तमहास्कन्धपर्यवसाना विचित्ररूपादिपरिणतयस्तेषां प्रदेशाः सम्भवतः सङ्ख्येया असङ्ख्येया अनन्ताश्च भवन्ति, सङ्ख्येयपरमाणूपचितः स्कन्धः सङ्ख्येयप्रदेशः, एवमितरावपि स्वसङ्ख्यावच्छिन्नाणुघटितावसङ्ख्येयानन्तप्रदेशौ वाच्यौ, अनुपात्तानन्तप्रदेशता सूत्रे न लभ्यते, तल्लाभाय यत्नश्चशब्दोपादानं, तदर्थदर्शनार्थमिदमाह—

पुद्गलानां प्रदेशसंख्या

**भा०—सङ्ख्येया असङ्ख्येया अनन्ताश्च पुद्गलानां प्रदेशा भवन्ति–अनन्ता इति वर्तते ॥ १० ॥**

**टी०—अनन्ता इति वर्तते,** तदेतदुक्तं भवति–अनुवर्तन्ते च नाम वि(ध)धेयो न चानुवर्तनादेव भवन्ति, किं तर्हि ? यत्नादिति । नन्वणुरपि पुद्गलशब्देनाक्षिप्तः पूरयति गलति च यतः तस्य चानन्तरसूत्रेण सङ्ख्येयासङ्ख्येयानन्तप्रदेशविकल्पानामन्यतमेन विकल्पेन भवितव्यम्, पुद्गलत्वाभावो वा परमाणोः, यदि च सङ्ख्येयादिप्रदेशभागिष्यते ततोऽणुरेव न स्याद् घटादिवत्, अथाप्रदेशस्ततोऽसन्नसौ गगनोत्पलादिवदिति, अत्रोच्यते–द्वये प्रदेशाः द्रव्यरूपाः पर्यायरूपाः, पर्यायस्वभावाश्च रूपादयस्तदङ्गीकरणेन सप्रदेशः परमाणुः ॥१०॥

अथ यथा द्रव्यात्मकैरणुप्रदेशैः सप्रदेशो घटस्तथाऽणुरित्येवमसिद्धार्थताप्रचिकाशयिषया आह—

**सूत्रम्—नाणोः ॥ ५–११ ॥**

**भा०—अणोः प्रदेशा न भवन्ति ॥**

**टी०—**अणोरापूरकाः परिणामिकारणभावभाजो द्रव्यरूपाः **प्रदेशा न भवन्ति** । अथ सप्रदेशत्वेन परमाणुत्वाभावः साध्यते, ततः स तादृशोऽन्त्यः प्रदेशः परमाणुर्न भवतीति प्रतीतिविरोधः, सप्रदेशत्वं चाव्यापकासिद्धदोषाघ्रातं वनस्पतिचैतन्ये स्वापवत् । नहि पक्षीकृतेऽणौ सर्वत्र सप्रदेशत्वमस्ति, क्षेत्रकालभावाख्ये द्रव्यपरमाणावेव तत् । येऽपि प्रमाणयन्ति मध्यविभागादिरहितत्वाद्व्योमोत्पलादिवदसन्नसौ तद्वत्त्वाद् वा नाणुर्घटादिवदित्यत्रापि पूर्वके प्रमाणे विज्ञानक्षणेनानेकान्तः, दिग्विभागकल्पनाऽप्यनेन प्रत्युक्ता, पाश्चात्त्यप्रयोगे हेत्वसिद्धतोद्भिभावयिषया भाष्यकार आह—

१ परमाणुरपि संयुज्य पूरयति वियुज्य गालयतीति, कश्चिदपि नानादिपरमाणुः ।

भा०—अनादिरमध्योऽप्रदेशो हि परमाणुः ॥ ११ ॥

परमाणोः स्वरूपम्

टी०—यस्मादादिमध्यान्त्यप्रदेशैः परिहीण एव परमाणुरिष्यते, अप्रदेशग्रहणादन्तपरिग्रहः, अथवाऽऽदिमध्यग्रहणादर्थप्राप्तमेवान्त्यग्रहणम्, अस्मिन् पक्षे अप्रदेश इति प्रतिविशिष्टप्रदेशनिराकरणमेव कृतं भवति, आदिमध्यान्तप्रदेशैरप्रदेशो न रूपादिभिरिति। न चादिमध्यान्तावयवनिबन्धनं वस्तुत्वं प्रतीतम्, विनाऽपि तैर्विज्ञानाद्युपलब्धेः, अविभागत्वादेव च व्योमानुप्रवेशोऽपि प्रत्याख्यातः, न च सर्वगतत्वव्याघातो व्योम्नः, सकलवस्तुसम्बन्धित्वेनाभ्युपगम्यमानत्वात् प्रसिद्धविज्ञानक्षणवत्, अतः स्वयमेव प्रदेशोऽसौ, न तस्यापरे प्रदेशाः सन्ति द्रव्यस्वभावाः, सर्वं च साधनं तन्निराकरणेऽभिधीयमानमनुपासितयथार्थगुरुवचसा परेणैवमधिगतद्रव्यपर्यायनयद्वयसद्भावेन स्याद्वादिना विघटनीयमागमयुक्त्यनुसारिणेति॥११॥

अथैतानि धर्माधर्मपुद्गलजीवद्रव्याणि किं व्योमवत् स्वात्मप्रतिष्ठान्याहोस्विज्जलादिवदाधारान्तरप्रतिष्ठानीति ?। उच्यते—निश्चयनयाभिप्रायात् सर्वमेव वस्तु स्वात्मप्रतिष्ठं व्योमवत्, व्यवहाराभिप्रायाद् धर्माधर्मपुद्गलजीवानाम्—

## सूत्रम्—लोकाकाशेऽवगाहः ॥ ५-१२ ॥

अवगाहविचारः

भा०—अवगाहिनामवगाहो लोकाकाशे भवति ॥ १२ ॥

टी०—अवगाहिनाम्-अनुप्रवेशवतामवगाहः-प्रवेशः प्रतिष्ठा पुद्गलादीनां धर्माधर्मद्रव्यद्वयावगाढे व्योम्नि भवति, धर्माधर्मयोश्चाकाशेऽवगाहोऽनादिकालीनः, परस्पराश्लेषपरिणत्या तथासन्निवेशात्, इतरत्राकाशेऽवगाहो नास्ति जीवादीनाम्, धर्माधर्माभावात्, गतिस्थित्युपग्रहकारित्वात् धर्माधर्मयोः, तावेव तत्र कस्मान्न स्तः ? न हि स्वभावे पर्यनुयोगोऽस्तीत्युपेक्ष्य लोकाकाशेऽवगाहो धर्मादीनामेतावदुक्तम्॥१२॥

इदं त्वधुना वाच्यं--किं सर्वात्मनाऽवगाहः सर्वलोकाकाशप्रदेशव्याप्त्या क्षीरोदकविषरुधिरादिवदुत पुरुषहृदवदिति ?। एतद् विभज्योच्यते—

## सूत्रम्--धर्माधर्मयोः कृत्स्ने ॥ ५-१३ ॥

भा०—धर्माधर्मयोः कृत्स्ने लोकाकाशेऽवगाहो भवतीति ॥ १३ ॥

टी०—सर्वत्र लोकाकाशे धर्माधर्मयोरयुतसिद्धावपि चन्द्रमण्डलाधेयचन्द्रिकावदवगाहो न परतः, चेतनावच्छरीर एवोपकारदर्शनाद् बहिरदर्शनाच्च तन्मात्रवर्तित्वमध्यवसीयते, अतः क्षीरोदकवदन्योन्यावगाहपरिणत्या व्यवस्थानं, न पुरुषहृदवदिति व्यवच्छिनत्ति कृत्स्नशब्दोपादानादिति ॥ १३ ॥

---

१ 'धर्मादीनां' इति क-पाठः ।

अथ पुद्गलानां कथमवगाहो लोकाकाश इत्युच्यते—

**सूत्रम्—एकप्रदेशादिषु भाज्यः पुद्गलानाम् ॥ ५-१४ ॥**

**टी०**—एकप्रदेशादिष्वित्यादि सूत्रम् । एकप्रदेशादिष्विति समानाधिकरणगर्भो बहुव्रीहिः, एकश्चासौ प्रदेशश्चेति, प्रदेश उक्तलक्षणः, एकप्रदेश आदिर्येषां तेष्वेकप्रदेशादिषु प्रदेशेषु पुद्गलानामणुप्रभृतीनामवगाहो व्याख्येयः ।

पुद्गलाना-मवगाहः

**भा०—अप्रदेशसङ्ख्येयासङ्ख्येयानन्तप्रदेशानां[1] पुद्गलानामेकादिष्वाकाशप्रदेशेषु भाज्योऽवगाहः । भाज्यो विभाष्यो विकल्प्य इत्यनर्थान्तरम् । तद्यथा—परमाणोरेकस्मिन्नेव प्रदेशे, द्व्यणुकस्यैकस्मिन् द्वयोश्च, त्र्यणुकस्यैकस्मिन् द्वयोस्त्रिषु च, एवं चतुरणुकादीनां सङ्ख्येयासङ्ख्येयप्रदेशस्यैकादिषु[2] सङ्ख्येयेषु असङ्ख्येयेषु च, अनन्तप्रदेशस्य च ॥ १४ ॥**

**टी०**—अप्रदेशेत्यादि भाष्यम् । अविद्यमानद्रव्यान्तरप्रदेशः परमाणुरप्रदेशः, स्वयं च प्रदेशः, प्रचयविशेषात् सङ्ख्येयपरमाणुघटितः सङ्ख्येयप्रदेशः पुद्गलः, एवमसङ्ख्येयानन्तप्रदेशावपि स्कन्धौ पुद्गलाविति वाच्यौ, एकादिष्वाकाशप्रदेशेष्विति सूत्रावयवं स्पष्टतरेण वृत्तिवाक्येन व्याचष्टे—एक आदिर्येषामाकाशप्रदेशानां तेषु भाज्योऽवगाहः अप्रदेशादीनाम्, अनेकार्थत्वाद् धातूनां विभाष्यो विकल्प्य इत्याह, विशेषेणातिशयेन परमाणूपक्रमेण भाषणीयो व्याख्येयः, विकल्पस्तु[3] भेदसम्भवे, यथा द्व्यणुकस्यैकस्मिन् प्रदेशे द्वयोश्चेत्यादि भाष्यं सुज्ञानमेव, परमाणोस्तु भेदाभावादेकस्मिन्नेव प्रदेशेऽवगाह इति विकल्पाभावः, कथं पुनरेकत्रा[4]काशप्रदेशेऽत्यन्तसूक्ष्मेऽसङ्ख्येयादिप्रदेशाः स्कन्धाः प्रतिष्ठां प्रतिपद्यन्ते ? न हि घटे चतुरुदधिजलावस्थानमस्ति, अतिबहुत्वादल्पावकाशत्वाच्च घटस्येति । अत्रोच्यते—ननु प्रचयविशेषाद् दन्तिदन्तशकलमल्पप्रदेशावगाहि दृष्टम्, भेण्डखण्डं तु तावत्परिमाणमेव बहुतराकाशप्रदेशव्यापि दृष्टम्, अथ च बहुतरावयवता कुञ्जरदन्तशकले, तस्माद् परिणतिविशेष एवासौ तादृशः परमसूक्ष्मो येनानन्ता अपि परमाणवः स्कन्धीभूताः प्रदेशमेकमाश्रित्य विहायसो वर्तन्ते, यथा वाऽतिनिबिडेनायस्पिण्डेन व्याप्ते नभोदेशे निरन्तरे भस्त्रासमीरणसमीरिताः पुनर्विभावसोरवयवास्तत्रानुमज्जन्ति, विध्याप्यमाने च विगतरन्ध्रेऽयसि प्रतप्ते वारिलेशाः सूक्ष्मपरिणामवर्तिनो निर्व्याहति प्रविशन्त्येवेत्येवमागोपालाङ्गनादिजनप्रतीतमाकाशस्य दुर्भरत्वमिति मा मुहः, सिकताकणनिकरेण वा परिपूरिते प्रस्थके प्रस्थ एवापरोऽपां[5] विशन् दृष्टः, एकप्रदीपप्रभावितानकावभासिते च गर्भगृहकादौ प्रदीपसहस्रप्रभाजालाकारपरिणतपुद्गलानुप्रवेशः प्रत्यक्षप्रमाणसमधिगतस्तद्वदेवैकाकाशदेशे घनपरिणतिविशेषाभ्युपगमादनन्तपरमाणुघटनाविनिर्मितस्कन्धावस्थानमवसेयमिति ॥ १४ ॥

---

१ 'नन्तानां' इति क-ख-पाठः । २ एकः संख्येयशब्दोऽधिकः ग-पाठः । ३ 'विकल्प्यस्तु' इति ग-पाठः । ४ 'रेकाकाश' इति ग-पाठः । ५ 'एवापरः पयसां प्राविशन्' इति ग-पाठः ।

अथ जीवानां कियति क्षेत्रेऽवगाह इति उच्यते—

**सूत्रम्—असङ्ख्येयभागादिषु जीवानाम् ॥ ५–१५ ॥**

टी०—असङ्ख्येयभागादिष्वित्यादि सूत्रम् । असङ्ख्येयभागादिष्विति समानाधिकरणगर्भो बहुव्रीहिः, लोकाकाश इत्यनुवर्तते सप्तम्यन्तम्, अर्थवशाच्च विभक्तेः परिणाम इति लोकाकाशस्यासङ्ख्येयभागादिष्वित्यभिसम्बन्धनीयम्, असङ्ख्येयश्चासौ भागश्च स आदिर्येषां तेऽसङ्ख्येयभागादयस्तेऽसङ्ख्येया एव भागाः, तत्र कदाचिदेकस्मिन् लोकाकाशप्रदेशासङ्ख्येयभागे कदाचिद् द्वयोरसङ्ख्येयभागयोः कदाचित् त्रिष्वित्यादि जीवानामवगाहो भवति ॥

जीवानामवगाहः

**भा०—लोकाकाशप्रदेशानामसङ्ख्येयभागादिषु जीवानामवगाहो भवति, आ सर्वलोकादिति ॥ १५ ॥**

**अत्राह—को हेतुरसङ्ख्येयभागादिषु जीवानामवगाहो भवतीति ? । अत्रोच्यते—**

टी०—लोकाकाशेत्यादि भाष्यम् । अमुना भाष्येणाधिकारानुवृत्तिं दर्शयति विभक्तिपरिणतिं च । लोकाकाशप्रदेशाः सर्व एवासङ्ख्येयास्ते पुनरसङ्ख्येयैर्भागैर्धिया विभज्यन्तेऽङ्गुलासङ्ख्येयभागप्रमाणैः, तत्रैकस्मिन्नसङ्ख्येयप्रदेशे वियत्खण्डे जघन्यत एकजीवस्यावगाहो भवति कार्मणशरीरानुविधायित्वात्, कश्चित् पुनस्तादृशं खण्डद्वयमाक्रम्य वर्तते, कश्चित् त्रीणि तादृशं, परश्चत्वारीत्यादि यावत् सकललोकाकाशमन्यो व्याप्यावतिष्ठते, समुद्घातकाले केवल्येव, नापरः, लोकमर्यादया, न पुनरलोकाकाशस्यैकमपि देशमाक्रामतीति दर्शयति ॥ १५ ॥

अत्राहेत्यादि सम्बन्धग्रन्थः । एवं मन्यतेऽवधृतासङ्ख्येयप्रदेशपरिमाणस्य कार्मणशरीरापादितौदारिकादिशरीरसम्बन्धादल्पबहुप्रदेशव्यापितायां को हेतुरसङ्ख्येयभागादिष्वित्यादि । नहि तुल्यपरिमाणानां पटादीनामवगाहे वैषम्यं दृष्टम्, अस्यापि तुल्यप्रदेशत्वात् किमिति तथा नाभ्युपेयत इत्याक्षिप्ते, अत्रोच्यत इत्याह । अत्र प्रश्ने प्रतिविधीयते—

**सूत्रम्—प्रदेशसंहारविसर्गाभ्यां प्रदीपवत् ॥ ५–१६ ॥**

टी०—प्रदेशलक्षणमुक्तम्, एकस्यात्मनः प्रदेशा लोकाकाशप्रदेशराशिमानाः तेषां संहारः—सङ्कोचः विसर्गो—विकासस्ताभ्यां संहारविसर्गहेतुभ्यामेतदेवं वैषम्यं प्रदीपवत्, यथा प्रदीपास्तेजोऽवयवा यथावकाशानुविधायिनः स्वल्पेऽवकाशे सङ्कोचमास्थायासते, महति चोपघ्ने विकाशं भजन्ते, तथात्मनोऽपि प्रकर्षप्राप्तसङ्कोचस्यैकस्मिन्नसङ्ख्येयभागे लोकस्यावस्थानमुत्कृष्टविकाशप्राप्तस्य च केवलिनः सर्वलोकेऽवगाहोऽन्या मध्यमावस्थानेकभेदेति । एतदेव विस्तरेण दर्शयति भाष्यकारः—

आत्मप्रदेशानां सङ्कोचविकासौ

**भा०—जीवस्य हि प्रदेशानां संहारविसर्गाविष्टौ प्रदीपस्येव ।**

टी०—जीवस्य हीत्यादि। यस्माज्जीवस्य प्रदेशानां सङ्कोचविकासाविष्येते, पटस्येव पिण्डितविततावस्थायिता, प्रदीपप्रकाशस्येव सङ्कुचनप्रसारणे, चर्ममण्डलस्येव संहारविसर्गाविति ॥ ननु च तद्वदेवानित्यः स्यात्, असाम्प्रतमिदम्, नहि स्याद्वादिभिः प्रदीपादीनामनित्यत्वमेकान्ततोऽभ्युपगम्यते, द्रव्यपर्यायनयद्वयाविष्टत्वात् सर्वस्य वस्तुन इत्यतो नित्यानित्यादिविकल्पभाजः सर्वे पदार्था इति सङ्गरो जैनानाम्। आत्माऽप्येवंधर्मक एवेति चेत्, सिद्धसाध्यता। एतेनैतदपि प्रत्युक्तम्—

"वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम्।
चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फलः॥"

न व्योमैकान्तेन नित्यं नापि चर्मानित्यमुत्पादादित्रययुक्तत्वाद् विश्वस्य वस्तुनः, तच्चोक्तं वक्ष्यते च, एकान्तनित्यानित्ययोश्च कर्मफलसम्बन्धाभावः॥
दीपस्य सङ्कोचविकासप्रदिदर्शयिषया आह—

**भा०—तद्यथा—तैलवर्त्यग्न्युपादानप्रवृद्धः प्रदीपो महतीमपि कूटागारशालां प्रकाशयति, अण्वीमपि[2], माणिकावृतो माणिकां, द्रोणावृतो द्रोणं, आढकावृतश्चाढकं, प्रस्थावृतः प्रस्थं, पाण्यावृतः पाणिमिति॥**

टी०—तद्यथा—तैलवर्तीत्यादि। भास्वत्किरणनिकरः प्रदीपो माणिकाढकप्रस्थाद्यधिकरणसम्बन्धी निरावरणव्योमसमन्धकारावधृतप्रमाणः तेजोऽवयवसंहारादल्पोऽल्पतरोऽल्पतमो वाऽन्यतमश्च लक्ष्यते, स एव चापनीतसकलस्थगनको विद्योतमानमूलमूर्तिरदभ्रं व्योमदेशमवभासयति, तैलवर्त्यग्न्युपादानप्रवृद्ध इत्यनेनाविकलां कारणसामग्रीमाचष्टे, कूटागारशालादिभिरनेकामवस्थामादर्शयति, अपरित्यक्तस्वात्मावयवोऽप्यनेकमाकारमादत्ते प्रदीपः[3]॥

**भा०—एवमेव प्रदेशानां संहारविसर्गाभ्यां जीवो महान्तमणुं वा पञ्चविधं शरीरस्कन्धं धर्माधर्माकाशपुद्गलजीवप्रदेशसमुदायं[4] व्याप्नोतीति, अवगाहत इत्यर्थः॥**

टी०—एवमेव प्रदेशानामित्यादि भाष्यम्। दार्ष्टान्तिके दृष्टान्तार्थमुपसंहरति—पञ्चविधमौदारिकादिशरीरसङ्घातं धर्माधर्माकाशपुद्गलजीवप्रदेशसमुदायम्, अवश्यमेव हि लोकाकाशे धर्माधर्माकाशपुद्गलाः सन्ति, जीवप्रदेशाश्च भजनीयाः, यत्रैकोऽवगाढो जीवस्तत्रान्यस्याप्यवगाहो न विरुद्धयत इति, एवं धर्मादिसमूहं व्याप्नोति, अवगाहत इत्यर्थः॥

**भा०—धर्माधर्माकाशजीवानां परस्परेण पुद्गलेषु च वृत्तिर्न विरुद्धयते, अमूर्तत्वात्।**

---

१ 'असत्फलं' इति क-ख-पाठः। २ '०शयति अथो (?) मणिका०' इति क-ख-पाठः, तत्र अण्वीमपीति नास्ति।

३ अनावृतस्तु स्वावयवमानमाकाशं व्याप्नोति, न तु सर्वं जगत्, आत्मा तु समुद्घातकाले लोकव्यापी, सिद्धिकाले तु त्रिभागोनावशिष्टः, अशुषिरसंभूतशरीरानुकार्यवगाहादनन्तरं निष्प्रयोजनत्वेन अवगाहसंकोचाभावः।

४ एकस्मिन्नाकाशदेशे अनेकजीवानेकप्रदेशावगाहात्।

टी०--धर्माधर्माकाशेत्यादि। धर्मादीनाममूर्तत्वात् परस्परेण वर्तनं न विरोधकारि, नापि पुद्गलविषया वृत्तिर्धर्मादीनां विरुद्ध्यते, तद्बलेन गतिस्थित्यवगाहदर्शनादात्मनश्च कर्मपुद्गलव्याप्तेः, सिद्धमिदं जीवो महान्तमणुं वा संहारविसर्गाभ्यां विग्रहं गृह्णाति ॥

भा०-अत्राह-सति प्रदेशसंहारविसर्गसम्भवे कस्मादसङ्ख्येयभागादिषु जीवानामवगाहो भवति नैकप्रदेशादिष्विति[1]? । अत्रोच्यते—

टी०—अत्राहेत्यादि । इदमिदानीं चोदयति-प्रदेशसंहरणसामर्थ्यमस्त्यात्मनः, तत् किमित्यविकलकारणकलापः सर्वान् प्रदेशानुपसंहृत्य एकस्मिन्नाकाशदेशे नावस्थानं कल्पयति प्रतिबन्धकवस्त्वभावात्? कस्मादसङ्ख्येयभागादिष्ववगाह इष्यते, नैकप्रदेशादिष्विति निरुपपत्तिकमित्याशङ्क्यते, अत्रोच्यत इत्याह, न वयमनुपपत्तिकमर्थं प्रतिजानीमहे, किन्तु।

भा०—सयोगत्वात् संसारिणां, चरमशरीरत्रिभागहीनावगाहित्वाच्च सिद्धानामिति ॥ १६ ॥

टी०—सयोगत्वात् संसारिणामित्यादि । योगाः प्रथिता एव औदारिकविग्रहाः[2], सत्यपि च सामान्योपादाने व्यापित्वात् कार्मणयोग[3] एव परिगृह्यते, सह योगेन सयोगः-कार्मणशरीरीतियावत्, सर्वस्य संसारिणो भवितव्यमवश्यं कार्मणेन वपुषा, ततश्चानन्तानन्तपुद्गलप्रचितसर्वसंसारिकार्मणशरीरोपश्लेपादसङ्ख्येयप्रदेशावगाहितैव नैकादिप्रदेशाव[4]गाहितेति । चरमशरीर इत्यादि। चरमशरीरं त्रिभागहीनमवगाहन्ते सिद्धा इति च, अनेनैतद् दर्शयति-देहे त्रैभागः शुषिरस्तत्पूरणात् त्रिभागहीनावगाहः, स च योगनिरोधकाल एव भवति, अतः सिद्धोऽपि तदवस्थप्रमाण एवेति सामर्थ्याभावान्नातः परमस्ति संहरणमनावरणवीर्यस्यापि भगवतः, किं पुनः शेषसंसारिणः? स्वभावश्चायमेतावानेवोपसंहारः, न चास्ति स्वभावे पर्यनुयोगः । अपि च-सकर्मासौ, ततश्च नास्त्युपसंहृतिरल्पतरा । कर्मवियुक्तः कस्मान्नोपसंहरतीति चेत्, प्रयत्नाभावात्, प्रयत्नाभावश्च करणाभावात्, अनवद्यं दर्शनम् । इदमुक्तं भवति-सङ्क्षिपतो विकसनसङ्कोचनधर्मत्वादात्मप्रदेशसन्तानः पद्मनालतन्तुसन्तानवदविच्छेदेन विकासमासादयति, अविच्छेदश्च प्रदेशानाममूर्तत्वाद् विकासधर्मत्वादेकत्वपरिणतेः जीवाभिवृद्धेर्विकासश्च सिद्धः, छेददर्शनात् सक्रियत्वाच्चारविन्दनालतन्तुसन्तानवदेव च जीवप्रदेशाः सकलमितरद् विशन्त्यल्पमपहाय, छिन्ने तर्हि मूर्धन्यपविध्य शिरः किमिति स प्रदेशसन्तानस्तनुं नाविशतीति चेत्, असदेतत्, वेदनायुषोर्भेदात्, बहवो हि जीवदेशाः समुदायीभूयासते यत्र तदाचक्षते मर्म, बहुमर्मकश्च मूर्धा, महती च वेदना भवति मर्मदेशेषु, आयुर्भेदश्चाध्यवसानादिनिमित्तः सप्तधा प्रसिद्धः,

१ 'प्रदेशेष्विति' इति क-ख-पाठः ।

२ शरीरमात्रे व्यापनात् कार्मणावव्याप्तेः औदारिकादिविग्रहा इति योगव्याख्यायां शरीरमात्राख्यानम् ।

३ औदारिकादिस्थूलशरीराणां कार्मणावगाहानुसारित्वात् कार्मणस्यैव ग्रहः ।

४ असंख्याकाशप्रदेशावगाढस्यैव कार्मणादेर्ग्रहात् आरात् अयोगत्वाद् अग्रहः, एकाकाशप्रदेशावबोधस्तु न केवलमन्तरम्।

तस्मात् संहारविसर्गावात्मनः कर्मानुभावजनितौ, न च नाशः सत्यपि संहारे विकासे वाऽमूर्तत्वात्, न च स्वतत्त्वनाशोऽस्ति वस्तुनः कस्यचित् सर्वथा स्याद्वादिनं प्रति, प्रदेशसङ्ख्यायाश्चात्मनः सङ्कोचविकासयोः सतोरपि ह्रासो वृद्धिर्वा[1] न समस्ति, क्षेत्रतस्तु तावात्मनः स्यातामिति प्रतिपद्यध्वम् ॥ १६ ॥

**भा०—अत्राह-उक्तं भवता ( अ० ५, सू० १ )-धर्मादीनस्तिकायान् परस्ताल्लक्षणतो वक्ष्याम इति । तत् किमेषां लक्षणमिति ? । अत्रोच्यते—**

**टी०—अत्राह-उक्तं भवतेत्यादिसम्बन्धग्रन्थः** । अस्यैवाध्यायस्य प्रथमसूत्रे तॉल्लक्षणतः परस्ताद् वक्ष्याम इत्युक्तं तदिदानीमवकाशप्राप्तमभिधीयते—

## सूत्रम्—गतिस्थित्युपग्रहौ[2] धर्माधर्मयोरुपकारः ॥ ५-१७ ॥

**टी०—गतीत्यादि सूत्रम्** । अथवा तुल्येऽसङ्ख्येयप्रदेशत्वे सति कृत्स्नलोकव्यापित्वमेव **धर्माधर्मयोर्न** पुनरसङ्ख्येयभागादिषु वृत्तिरित्येतत् कथमनपदिष्टहेतुकमवसातुं शक्यमित्यत्र क्रमो वयमवसीयतामसंशयम्, यस्मात् प्रयोगविस्रसापरिणामजनितामनेकप्रकारां सार्वलौकिकीमन्यद्रव्येष्वसम्भवन्तीमात्मपुद्गलानां क्रियामारभमाणानां चक्षुषो दर्शनशक्तेरुपग्राहकादित्यादिरश्मिवद् गतिस्थित्योरुपग्राहकौ धर्माधर्माविति कार्यतो निश्चीयते सकलजगद्व्यापिनाविति, तच्चासाधारणं कार्यं सूत्रेण दर्शयति ॥

**भा०—गतिमतां गतेः स्थितिमतां च स्थितेरुपग्रहो धर्माधर्मयोरुपकारो यथासङ्ख्यम् । उपग्रहो निमित्तमपेक्षाकारणं हेतुरित्यनर्थान्तरम् । उपकारः प्रयोजनं गुणोऽर्थ इत्यनर्थान्तरम् ॥ १७ ॥**

**टी०—गतिमतामित्यादि भाष्यम्** । देशान्तरप्राप्तिहेतुः परिणामो गतिः, तद्विपरीतः परिणामः स्थितिः, तद्वन्तस्तादृशा परिणामेनाविष्टा इति, अत एवंविधक्रियापरिणतद्रव्यमेव गतिस्थितिशब्दाभ्यामुच्यते, तद्व्यतिरेकेण गतिस्थितिक्रियानुपलब्धेः, एकस्यैवोपग्रहद्वयनिवृत्त्यर्थं **यथासङ्ख्यकमुपन्यस्यति-गतिमतामित्यादिना** भाष्येण । जीवपुद्गलाः क्रियावन्तो यत्र च गतिः तत्रावश्यंतया स्थित्याऽपि भवितव्यम् । अथवा धर्मद्रव्यस्य सन्निहितत्वात् किमित्यव्याहता गतिरेव सततं न भवत्यविकलकारणकलापसन्निधाववश्यंभाविनी कार्योत्पत्तिरेवं स्थितिरपि वाच्येत्याक्षिप्ते गतिमतामित्याह । स्वत एव गतिपरिणतिर्येषां द्रव्याणां स्थितिपरिणतिश्च तेषामुपग्राहकौ धर्माधर्मावपेक्षाकारणमाकाशकालादिवन्न निर्वर्तकं[3] कारणम्, निर्वर्तकं हि तदेव जीवद्रव्यं पुद्गलद्रव्यं वा गतिस्थितिक्रियाविष्टम्, धर्माधर्मौ पुनरुपग्राहकावनुपघातकावनुग्राहकावित्यर्थः । स्वभावत एव हि गतिस्थितिपरिणतानि द्रव्याणि तावुपगृह्णीतः,

१ 'वृद्धिर्न समस्ति' इति क-ख-पाठः । २ '०पग्रहो धर्मा०' इति घ-पाठः । ३ ' निवर्तकं ' इति क-ख-पाठः ।

यथा च सरित्तडागह्रदसमुद्रेष्ववगाहित्वे सति मत्स्यस्य स्वयमेव सञ्जातजिगमिषस्योपग्राहकं जलं निमित्ततयोपकरोति, दण्डादिवन्मृदः परिणामिन्याः, नभोवद् वा, अपेक्षाकारणं हेतुरिति कारणसामान्यप्रतिपत्तिकारि, एते हि शब्दा नार्थान्तराभिधायितया प्रवर्तन्ते । तथा चोक्तम्—

"निर्वर्तको निमित्तं, परिणामी च त्रिधेष्यते हेतुः ।
कुम्भस्य कुम्भकारो, वर्ता मृच्चेति समसङ्ख्यम् ॥"—आर्या

न पुनस्तज्जलद्रव्यं गतेः कारणभावं बिभ्राणमगच्छन्तमपि झषं बलात् प्रेर्य गमयति, क्षितिर्वा स्वयमेव तिष्ठतो द्रव्यस्य स्थानभूयमापनीपद्यते, न पुनरतिष्ठद् द्रव्यं बलादवनिरवस्थापयति, व्योम वाऽवगाहमानस्य स्वत एव द्रव्यस्य हेतुतामुपेत्यवगाहं प्रति, न पुनरनवगाहमानमवगाहयति स्वावष्टम्भात्; स्वयमेव च कृषीवलानां कृष्यारम्भमनुतिष्ठतां वर्षमपेक्षाकारणं दृष्टं, न च नूनकुर्वतस्तांस्तदर्थमारम्भयद्वर्षवारि प्रमितम्, प्रावृषि वा नवाम्भोधरध्वनिश्रवणनिमित्तोपाधीयमानगर्भा प्रसूते स्वत एव बलाका, न चाप्रसूयमानां तामभिनवजलधरनिनादः प्रसभं प्रसावयति, प्रतिबुध्य वा पुरुषः प्रतिबोधनिमित्तां विरतिमातिष्ठमानोऽवद्याद् दृष्टः, न च पुमांसमविरमन्तं विरमयति बलात् प्रतिबोधः । यदि तर्हि निमित्तकारणं धर्माधर्मौ दण्डादिवदेवं सत्यपेक्षाकारणतैव हीयते, यतो निर्व्यापारमपेक्षाकारणमुच्यते, नैतदेवम्, अपेतयुक्तित्वात्, नहि निर्व्यापारं कारणं, किं तर्हि ? कुर्वत् कारणम्, अपेक्षाकारणं चैतावतोच्यते, धर्मादिद्रव्यगतक्रियापरिणाममपेक्षमाणं जीवादिगत्यादिक्रियापरिणतिं पुष्णाति, एवं तर्हि निमित्तापेक्षाकारणयोर्न कश्चिद् विशेषः, अस्ति विशेषः, दण्डादिषु प्रायोगिकी वैस्रसिकी च क्रिया, धर्मादिषु वैस्रसिक्येवेति, भाष्यकारेण कारणसामान्यप्रतिपिपादयिषयोपन्यस्तो निमित्तशब्दः, यावता चांशेन स्वतो व्यापारपरिणतिर्दण्डादीनां तदंशप्रदर्शनपरतया निमित्तशब्दोपादानमिति, न च गत्युपकारोऽवगाहलक्षणाकाशस्योपपद्यते, किं तर्हि ? धर्मस्यैवोपकारः स दृष्टः, स्थित्युपकारश्चाधर्मस्य, नावगाहलक्षणस्य व्योम्नः, अवश्यमेव हि द्रव्यस्य द्रव्यान्तरादसाधारणः कश्चिद् गुणोऽभ्युपेयः, द्रव्यान्तरत्वं च युक्तेरागमाद् वा निश्चेयं, युक्तिर्वक्ष्यते । आगमस्तु सर्वज्ञदत्तस्वहस्तः प्रकाशत एवाव्याहतः—"कइ[3] णं भंते ! दव्वा पण्णत्ता ? गोयमा ! छ दव्वा पण्णत्ता, तंजहा—धम्मत्थिकाए, अधम्मत्थिकाए, आगासत्थिकाए, पुग्गलत्थिकाए, जीवत्थिकाए, अद्धासमये" ॥ ननु धर्मद्रव्योपकारनिरपेक्षमेव शकुनेरुत्पतनमूर्ध्वज्वलनमग्नेर्मरुतश्च तिर्यग्गमनं स्वभावादेवानादिकालीनादिति, उच्यते—प्रतिज्ञामात्रमिदं, नार्हतं प्रति हेतुदृष्टान्तावनवद्यौ स्तः, स्वाभाविक्यां गतौ धर्मद्रव्योपकारनिरपेक्षायां, यतः सर्वेषामेव जीवपुद्गलानामासादितगतिपरिणतीनामुपग्राहकं

---

१ 'ष्वेवगवाहित्वे' इति ग-पाठः । २ 'प्रतीतं' इति क-ख-पाठः ।
३ कति भदन्त ! द्रव्याणि प्रज्ञप्तानि ? गौतम ! षड् द्रव्याणि प्रज्ञप्तानि, तद्यथा—धर्मास्तिकायः, अधर्मास्तिकायः, आकाशास्तिकायः, पुद्गलास्तिकायः, जीवास्तिकायः, अद्धासमयः । ४ 'तिर्यग्वलनं' इति क-ख-पाठः ।

धर्ममनुरुध्यन्तेऽनेकान्तवादिनः, स्थितिपरिणामभाजां चाधर्मम्[1], आभ्यां च न गतिस्थिती क्रियेते, केवलं साचिव्यमात्रेणोपकारकत्वं यथा भिक्षा वासयति, कारीषोऽग्निरध्यापयतीति ॥ ननु तवापि लोकव्यापिधर्मद्रव्यास्तित्ववादिनः सन्धामात्रमेव तदुपकारो गत्युपग्रह इति स्थित्युपग्रहश्चाधर्मद्रव्योपकारस्तन्मात्रत्वादिति, अत्र जागर्यते युक्तिरस्माभिरवधत्तां भवान्-गतिस्थिती ये जीवानां पुद्गलानां च ते स्वतः परिणामाविर्भावात् परिणामिकर्तृनिमित्तकारण-त्रयव्यतिरिक्तोदासीनकारणान्तरसापेक्षात्मलाभे, अस्वाभाविकपर्यायत्वे सति कदाचिद् भावात्, उदासीनकारणपानीयापेक्षात्मलाभझषगतिवत्, तद् यद्येतयोरमूर्तयोरपि सतोर्गमकमेकैकस्या-भावे न भवति, न चान्येनोपक्रियते, तल्लक्षणमुपकारः प्रयोजनं सामर्थ्यं गुणोऽर्थ इत्य-नर्थान्तरमित्यत्यन्तप्रसिद्धा एवोपकारादयः समानार्थाभिधायित्वेन, उपकारो-गतिस्थिति-परिणतद्रव्यसामीप्येन व्याप्रियमाणता, तदुपग्राहितयाऽनुष्ठानमिति प्रयोजनमतिशयेनोपकारि गुणः सामर्थ्यमात्मीयशक्तिप्रभावः[2], अर्थस्तु द्रव्यान्तरासम्भवि प्रयोजनमेवेति ॥ १७ ॥

यद्यतीन्द्रिययोर्धर्माधर्मयोरुपकारसम्बन्धेनास्तित्वमवधृतम्, अनन्तरोद्दिष्टस्य नभसो-ऽतीन्द्रियस्याधिगमे क उपकार इति? । उच्यते—

आकाशस्योपकारः

## सूत्रम्—आकाशस्यावगाहः ॥ ५-१८ ॥

टी०—ननु च लोकाकाशेऽवगाह इति प्राग् निरूपितमेव लक्षण-माकाशस्य, पुनः किमयमारम्भो लक्षणाभिधित्सया? । सत्यमुक्तं, प्रागवगाहिनां जीवपुद्-लानां प्राधान्यप्रचिकाशयिषया, इह तु तत्स्वरूपमेव निर्धार्यते, इहैव स्वरूपसिद्धिं बुद्धौ सन्निवेश्य नभसस्तदुक्तं प्राक्, अतोऽवश्यं स्वरूपव्यावर्णनं पदार्थस्य कार्यमिति ॥

**भा०—अवगाहिनां धर्मपुद्गलजीवानामवगाह आकाशस्योपकारः ॥**

टी०—**अवगाहिनामित्यादि** भाष्यम् । विहितनिर्वचनं प्रागाकाशं तस्य लक्षणमवगा-हः-अनुप्रवेशनिष्क्रमणस्वभावः, अवगाहस्य सम्बन्धिशब्दत्वात् सम्बन्धिनामुपादानमवगाहिनां धर्मादीनाम्, **आकाशस्यावगाह उपकारो** लिङ्गं स्वतत्त्वमेव, एषामवकाशदायित्वेनोपकरोति, स चोपकार आत्मभूतोऽस्य लक्षणमुच्यते । एतदुक्तं भवति-अवगाहमानद्रव्याणामवगाहदायि भवति, न पुनरनवगाहमानं पुद्गलादि बलादवगाहयति, अतो निमित्तकारणमाकाशमम्बुवन्मक-रादीनामित्युक्तं प्राग्, अनेकमुदाहरणमिहावर्तनीयम् ॥ नन्वयमवगाहः पुद्गलादिद्रव्यसम्बन्धी व्योमसम्बन्धी चेति उभयोर्धर्मः, स कथमाकाशस्यैव स्वतत्त्वमुभयजन्यत्वात् द्व्यङ्गुलसंयो-गवत्, न खलु द्रव्यद्वयजनितसंयोगो द्रव्येणैकेन व्यपदेष्टुं पार्यते लक्षणं वैकस्येति वक्तुम्, सत्यमेतत्, तथापि लक्ष्यमाकाशमवगाह्यं प्रधानम्, अवगाहनमनुप्रवेशो यत्र तदाकाशमवगाहलक्षणं विवक्षितम्, इतरत् त्ववगाहकं पुद्गलादि

अवगाहगुणत्वम्

---

१ 'चाधर्मः' इति क-पाठः । २ 'शक्तिः प्रभावः' इति क-पाठः ।

सत्यपि संयोगजन्यत्वे न विवक्ष्यते, अत एव च तल्लक्षणमाकाशस्य, यस्माद् व्योमैवासाधारणकारणतया तथोपकरोति, अतो द्रव्यान्तरसम्भविनोपकारेणातीन्द्रियमप्यनुमेयमात्मवद् धर्मादिवद् वा, यथा पुरुषहस्तदण्डसंयोगभेर्यादिकारणः शब्दो भेरीशब्द इति व्यपदिश्यते यवाङ्कुरश्चासाधारणकारणत्वादेवमवगाहोऽप्यम्बरस्य प्रतिपत्तव्यः । यदप्याहुः–अवगाहतेऽणुरवगाहते जीव इति सामानाधिकरण्यदर्शनादवगाहकद्रव्यविषय एवावगाह इति आस्ते देवदत्त इत्यासनवत्, एतदप्येतेनैव प्रत्युक्तं वेदितव्यम् ॥ ननु प्रागिदमुक्तमलक्षणमवगाहः खस्याव्याप्तेरिति, उच्यते–नैवेदमशेषाकाशलक्ष्म प्रतिजानते समयवेदिनः, किं तर्हि ? लोकाकाशस्य, अत एवोक्तं–लोकाकाशेऽवगाह इति, आकाशं शुषिरलक्षणमेकरूपं तस्य धर्मादिद्रव्यैरवगाहिभिर्विभागः कृत इत्यतो लोकाकाशमुच्यते, अन्यथा तुल्ये शौषिर्ये निर्लक्षणमेव लोकाकाशं स्यादितरद् वा । कथं केषामुपकरोतीति व्याख्यायते–

**भा० – धर्माधर्मयोरन्तःप्रवेशसम्भवेन पुद्गलजीवानां संयोगविभागैश्चेति ॥ १८**

**टी० – धर्माधर्मयो**रित्यादि । धर्माधर्मप्रदेशा ह्यालोकान्ताल्लोकाकाशप्रदेशनिर्विभागवर्तित्वेनावस्थितास्तस्मादन्तरवकाशदानेन धर्माधर्मयोरुपकरोति, आकाशप्रदेशाभ्यन्तरवर्तित्वात् धर्माधर्मप्रदेशानाम्, अलोके तदसम्भवादिति, स्वल्पतरासङ्ख्येयप्रदेशव्यापित्वात् क्रियावत्त्वाच्च **पुद्गलजीवानां संयोगैर्विभागैश्चो**पकरोति, अन्यत्रावगाढाः सन्तो मृन्मनुष्यलोष्ठशकलादयः पुनरन्यत्रोपलभ्यन्ते, सर्वत्र चाभ्यन्तरेऽवकाशदानादेकोऽप्यवगाहोऽवगाह्योपाधिभेदान्नानेव लक्ष्यते, चशब्दादन्तःप्रवेशसम्भवेनोपकारः संयोगविभागैश्चेति योजनीयम्, न चाभाव उपकारको दृष्टः शशविषाणादिवदित्यनावरणमात्रताव्युदासोऽवगाह्यत्वाज्जलादिवल्लोकसंव्यवहारप्रतीतेः । अथाविद्यमाना आवृतिर्यस्य यत्रेति वा बहुव्रीहावन्यपदार्थप्रधानत्वाद् भावरूपतैव, आवरणादन्यदनावरणं चेत् आवरणं न भवतीति वा पर्युदासप्रसज्यप्रतिषेधान्यतराभ्युपगमे च सदोपतैवानिच्छतोऽपि बलात् पदार्थान्तरत्वप्राप्तेः ॥

अपरे शब्दलिङ्गमाकाशं सङ्गिरन्ते, गुणगुणिभावेन व्यवस्थानात्, तदयुक्तं, रूपादिमत्त्वाच्छब्दस्य, प्रतिघाताभिभवाभ्यां च रूपादिमत्ता विनिश्चेया । अन्ये प्रधानविकारमाचक्षते, तदप्यसमीचीनम्, असिद्धत्वात् प्रधानस्य, कथं वा प्रधानं नित्यनिरवयवनिष्क्रियत्वादिस्वभावं सद् अनित्यादिभिराकारैः परिणंस्यत इति ? । अथैवं मन्येथाः–प्रधानविकारो विज्ञानं दृष्टं सक्रियं, न चापह्नवः प्रत्यक्षसमधिगते समस्तीति, सत्यमिदं दृष्टं, न तु प्रधानविकारतया, न च सत्त्वं प्राधान्येन

आकाशलिङ्गसम्बन्धिमन्तातरम्

१ आकाशस्य द्रव्यत्वेऽपि शुषिरतया प्रतिपादनं परप्रसिद्धेः अवगाहकतागुणप्राधान्यता ।

२ नहि तेषां कुतोऽपि प्रवेशः किन्तु सदा अरूपितया तदनतिरिक्तवृत्तितयावस्थानं, जीवादीनां विभुत्वाभावात् संयोगादिभावः, चकारो जीवपुद्गललक्षणोपकार्यसंग्रहार्थं, अन्वयश्चोपकारेण, अन्तःप्रवेशस्यान्यूनानतिरिक्तवृत्त्यर्थत्वात्, जीवादीनां प्रतिप्रदेशसमानावगाहाभावात् न स तेषाम् ।

ज्ञानाधि( नवि ? )कारेण परिणमते गुणत्वात् तमोवत्, अभेद एव वा चैतन्यविज्ञानयोश्चेतयते जानीते बुध्यते इति च प्रयोगदर्शनात्, तच्च चैतन्यं विज्ञानरूपमात्मनः स्वभावः, न च मूर्तादिधर्मरहितत्वान्मुक्तात्मन इव परपरिकल्पितात्मान्तः करणयोः प्रतिबिम्बोदयहेतुतेत्यलं प्रसङ्गेन ॥ १८ ॥

परपरिकल्पितप्रधानादिपरिणामप्रतिषेधार्थमुपकारप्रकरणाभिसम्बन्धेनेदमुच्यते—

## सूत्रम्—शरीरवाङ्मनःप्राणापानाः पुद्गलानाम् ॥५-१९॥

पुद्गलानामुपकारः

टी०—शरीरे सत्युत्तरेषां प्रवृत्तिदर्शनादादौ तद् वचनं, तदनन्तरं वागभिधानं, द्वीन्द्रियादिषु दर्शनाच्च सर्वशरीरिषु । अन्येन्द्रियग्रहणमपि तर्हि कर्तव्यं चेत्, न आत्मप्रदेशत्वात् तेषाम्[३], अयं तु पुद्गलजनितोपकारप्रख्यापनायारम्भः, तदनन्तरं मनः पञ्चेन्द्रियविषयत्वात्[४], अन्ते प्राणापानाभिधानं सकलसंसारिप्राणिकार्यत्वात्, शरीरादीनामितरेतरयोर्द्वन्द्वः, प्राण्यङ्गत्वान्नपुंसकलिङ्गैकवद्भावप्रसङ्ग इति चेत्, न, अङ्गशब्दस्यावयवाभिधायित्वे सति अङ्गाङ्गिद्वन्द्वे तस्यासम्भवात्, पुद्गलानामित्युपग्रहप्रकरणात् कर्तरि षष्ठी, पौद्गलिकत्वाच्छरीरादिचतुष्टयं गमनादानव्याहरणचिन्तनप्राणनादिभावेन परिणामविशेषाहितमनुग्राहकं शरीरादिभाजाम् ॥

**भा०—पञ्चविधानि शरीराण्यौदारिकादीनि वाङ्मनः प्राणापानाविति पुद्गलानामुपकारः ॥**

टी०—**पञ्चविधानी**त्यादि भाष्यम् । पञ्चप्रकाराणि **शरीराणि** विशरारूण्यौदारिकवैक्रियाहारकतैजसकार्मणाख्यानि पुद्गलानामुपकाराः, तथा **वाङ्मनः प्राणापानौ** च, **इति**करणश्चार्थे गदितः, उच्यत इति वाक्, असावपि पौद्गलिकी, सा च भाषापर्याप्तिभाजां वीर्यान्तरायज्ञानावरणक्षयोपशमाङ्गोपाङ्गनामनिमित्ता रणनस्वभावा, भाषायोग्यान् स्कन्धान् काय्यापारेणादाय वीर्यवानात्मा भाषात्वेन परिणमय्य वाक्पर्याप्तिकरणेन निसृजति स्वपरात्मोपकाराय, सत्यपि च मूर्तत्वे न चक्षुर्ग्राह्या, जलमध्यप्रकीर्णलवणशकलवत्, न चावश्यं रूपादिमत् समस्तमेव चक्षुरादिग्राह्यं, परमाण्वादिविचित्रपरिणामावेशात्[६] पुद्गलानाम्, तस्मान्नामूर्ता वाक् पौरस्त्यसमीरणवेगाभ्याहता परदिग्भागावस्थितश्रवणपरिणतोपलभ्यत्वात् प्रतिघाताभिभवसद्भावाच्च, मनश्चानन्तपुद्गलस्कन्धमनोद्रव्यप्रायोग्योपचितमूर्तित्वात् पौद्गलिकं, तच्च मनः पर्याप्तिभाजां पञ्चेन्द्रियाणामेव,

वाङ्मनआदीनां पौद्गलिकत्वम्

१ कार्मणे औदारिकादौ वा । २ कपिलमतेनाशङ्का, तन्मते तस्या इन्द्रियत्वात्, पञ्चेन्द्रियाणीति सूत्रे च तत्प्रत्युक्तमेवेति नात्रायासः । ३ स्पर्शनघ्राणादीनामिति । ४ स्पर्शादयः सर्वे एव विषया अस्य । ५ कर्मबन्धनिर्जरादिहेतुतया शरीरादीनभिधाय तदितरकाययोगविशेषाभिधानं प्राणापानेत्यादि, प्राणापाना इति प्रथमान्ततयाऽभिधानं तु पुद्गलानामेव एतत्तया परिणमनात्, नैते धर्मादिवत् औदासीन्येनोपकारका इति भावः ।
६ 'वेशाः' इति क-पाठः ।

छद्मस्थानां श्रुतज्ञानावरणक्षयोपशम(जन)नाय करणं तदवष्टम्भजनितं च गुणदोषविचारणात्मकं सम्प्रधारणं संज्ञाज्ञानं धारणाज्ञानं[1] तद्भावमनः ॥ तथा चाह—

"चित्तं चेतो योगोऽध्यवसानं चेतना परीणामः ।
भावो मन इति चैते ह्युपयोगार्था जगति शब्दाः ॥"

अत्र त्वेवंविधभावमनोनिमित्तेन पौद्गलिकेन सर्वात्मप्रदेशवर्तिना मनसाऽधिकारः, कोष्ठ्यो वायुरुच्छ्वासलक्षणः प्राणस्तद्विधपरिणामापत्तेः, तथा बाह्यो वायुरभ्यन्तरीक्रियमाणोऽपानसंज्ञितः, एतावप्यात्मनोऽनुग्राहकौ[2], रूपिद्रव्यपरिणामात् प्रतिघातदर्शनाद् द्वारानुविधायित्वाच्च मूर्तिमत्ताऽवसेया ॥

**भा०—तत्र शरीराणि यथोक्तानि ( अ० २, सू० ३७ )। प्राणापानौ च नामकर्मणि व्याख्यातौ[3] ( अ० ८, सू० १२ ) ॥**

टी०—द्वितीयाध्याये शरीराण्यौदारिकादीनि यथा व्याख्यातानि तथैवेह प्रतिपत्तव्यानि, प्राणापानावष्टमेऽध्याये नामकर्माणि गतिजात्यादिसूत्रे पञ्चप्रकारपर्याप्तिकर्मणि प्राणापानक्रियायोग्यद्रव्यग्रहणशक्तिः निर्वर्तनक्रियापरिसमाप्तिः प्राणापानपर्याप्तिरित्यत्र भाष्ये व्याख्यास्येते, कथं तर्हि व्याख्यातौ आशंसायामर्थे भूतवद् वर्तमानवच्च प्रत्यया भवन्ति, उपाध्यायश्चेद् आगमिष्यति तद्व्याकरणमधीतमेवमिहापि नामकर्माशंसितमित्यदोषः ॥

**भा०—द्वीन्द्रियादयो जिह्वेन्द्रियसंयोगाद् भाषात्वेन गृह्णन्ति नान्ये, संज्ञिनश्च मनस्त्वेन गृह्णन्ति, नान्य इति ।**

टी०—द्वीन्द्रियादि भाष्यम् । द्वित्रिचतुःपञ्चेन्द्रियाः पर्याप्त[4]रसनेन्द्रियसम्बन्धतो भाषात्वेनेति भाषापरिणामयोग्याननन्तप्रदेशान् स्कन्धानाददते काययोगेन, भाषापर्याप्तिकरणेन निसृजति, अनेनैतद् दर्शयति—यत्रैव जिह्वेन्द्रिययोगस्तत्रैव भाषापर्याप्तिः जिह्वाश्रयत्वाद्,अतोऽन्ये व्यवच्छिद्यन्ते पृथिव्यादयो वायुपर्यन्ता एकेन्द्रियाः, तेषां रसनेन्द्रिययोगाभावादजिह्वत्वाद् भाषाभावः, द्वीन्द्रियादयश्च तद्युक्ताः सन्तः स्वभाषात्वेन तान् पुद्गलान् परिणमय्यार्यम्लेच्छवत् प्रतिनियता एव भाषाः प्रयुञ्जते, संज्ञिनश्चेत्यादि गुणदोषविचारणात्मिका सम्प्रधारणा संज्ञा तद्योगात् संज्ञिनः, चशब्द एवार्थे, त एव मनःपरिणामेन मनोवर्गणायोग्यान् स्कन्धाननन्तान् मन्तुकामाः सर्वाङ्गीणानाददते, ततस्तद्बलेन पुनर्गुणदोषविचारणाभावेन परिणमन्ते, ये त्वेवंविधसंज्ञाभाजो न भवन्त्येकेन्द्रियादयोऽसंज्ञिपञ्चेन्द्रियान्तास्ते नैव मन्यन्ते,मनःपर्याप्तिकरणाभावात्,

---

१ 'धारणसंज्ञानं' इति क-ख-पाठः ।

२ प्राणापानरोधेन मरणादिभावात्, अत एव च कायोत्सर्गेऽपि नोच्छ्वासादिरोधानुज्ञा, आकारता च तत्र तेषाम् ।

३ सूत्रावतरणेष्वनेकेषु वक्ष्यते इत्यादिकथनं मूलसूत्रविषयतयोक्तं, अत्र तु व्याख्याताविति कथनं तयोरसिद्धतां कथयति, नहि क्वापि कर्मण्येते श्रूयेते, ततः पारमार्षसिद्धं विषयं मनसिकृत्याहैतत् ।

४ नापर्याप्ते वाग्योग इति पर्याप्तेति, तथा च पर्याप्तस्य यद् रसनेन्द्रियं तस्य संबन्धत इत्यर्थः ।

अतो व्यवच्छिनत्ति नान्य इति । यत् तु तेषां स्वनीडाभिसर्पणं कृमिपिपीलिकादीनां तण्डुलकण-श्यामाकबीजादिसंङ्ग्रहणवन्[1]मनोव्यापारमन्तरेणैव[2] तदवग्रहपाटवात्, तादृशी लब्धिरेव सा, न पुनरीहादिज्ञानभेदविचारयोग्यो द्वीन्द्रियादिः ।

कथं पुनरात्मा शरीरादियोग्यान् पुद्गलानादत्ते कथं वा परस्परेण ते संहतास्तिष्ठन्ति न विशीर्यन्ते इत्याक्षिप्ते आह–

भा०—व[3]क्ष्यते हि–सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्त इति ( अ० ८, सू० २ ) ॥ १९ ॥ किञ्चान्यत्—

टी०—वक्ष्यते हीत्यादि । यस्मादभिधास्यतेऽष्टमेऽध्याये बन्धलक्षणं सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्त इति, कषायाः क्रोधादयः सह तैः सकषायस्तस्मात् प्रत्ययात् कषायाख्यादात्मा ज्ञानावरणादिकर्मयोग्यान् सर्वात्मप्रदेशैर्नोकर्मयोग्यांश्च पुद्गलानादत्ते, आह च—

" ऊष्मगुणः सन्दीपः, स्नेहं वर्त्या यथा समादत्ते ।
आदाय शरीरतया, परिणमयति चापि तं स्नेहम् ॥
तद्वद् रागादिगुणः, स्वयोगवर्त्यात्मदीप आदत्ते ।
स्कन्धानादाय तथा, परिणमयति ताँश्च कर्मतया ॥ "

तस्मात् शरीराद्याकारेणोपकारिणः प्राणिनां पुद्गला एव, न प्रधानविज्ञानस्वभावेश्वरनियतिहठपुरुषकालादयः शरीराद्याकारपरिणतिभाजो, निर्युक्तिकत्वादिति ॥ १९ ॥

एष तावत् पुद्गलकृत उपकारो जीवानां शरीरादि, अधुना निमित्तमात्रताप्रदर्शनार्थं सम्बध्नाति–किञ्चान्यदिति, पूर्वोपकारापेक्षमुच्यते । आकारान्तरेणापि पुद्गलानामुपकारकत्वं निमित्तमात्रतयेत्याह—

## सूत्रम्–सुखदुःखजीवितमरणोपग्रहाश्च ॥ ५—२० ॥

टी०—चशब्देन पुद्गलानामुपकार इत्यनुकृष्यते । शरीरादिसूत्रविन्यासं कृत्वा प्राक् किमर्थमिदं विभागेनाधुना भण्यते ? । उच्यते-सुखादीनामुद[4]यापेक्षत्वात्[5] प्राच्यानां ग्रहण[6]मात्रविषयत्वाद् विभक्तिरिति, द्वन्द्वपूर्वः समानाधिकरणस्तत्पुरुषः, सुखग्रहणं प्राक् तदर्थं चेष्टादर्शनात्, तदनन्तरं दुःखवचनं तत्प्रतिपक्षत्वात्, जीवतस्तदुभयदर्शनात् तदन्ते जीवितग्रहणं, कर्मोपभोग-

१ 'संग्रहं तन्मनो' इति क-पाठः ।

२ विशिष्टमनोव्यापारमपेक्ष्यैतत्, हेतुवादसंज्ञा तु तेषामस्त्येव तत्प्रयोजिका । ईहादि चात्र संप्रधारणरूपं दीर्घकालीनस्मरणादिरूपं वा, प्राप्तेन्द्रियोहादेस्तु तेषां सद्भावोऽविरुद्धः ।

३ सिद्धालयेऽपि पुद्गलसद्भावात् किं न सिद्धानां शरीरादितया पुद्गलोपकार इत्याह—

४ सातवेदनीयोदयादौ अपेक्षाकारणत्वात् इति भावः । ५ शरीरादौ तु परिणामिकारणं पुद्गला इति ग्रहणेत्यादि ।

६ 'ग्रहणविषयत्वाद्' इति क-ख-पाठः ।

परिसमाप्तौ तदसम्भवान्मरणवचनम्, प्रकृतमुपग्रहवचनमनादृत्य यत् पुनरुपग्रहग्रहणं तद् विशिष्टार्थप्रतिपत्त्यर्थं, शरीराद्याकारेण साक्षात् कुर्वन्त्युपकारमात्मनः पुद्गलाः, अत्र पुनरात्मनः सुखाद्याकारेण परिणममानस्योपग्रहे वर्तन्ते पुद्गला इति ।

**भा०—सुखोपग्रहो दुःखोपग्रहो जीवितोपग्रहश्च मरणोपग्रहश्चेति पुद्गलानामुपकारः ॥**

टी०—सुखोपग्रह इत्यादि भाष्यम् । बाह्यद्रव्यसम्बन्धापेक्षसद्वेद्योदयात् संसार्यात्मनः प्रसादपरिणामः सुखम्, इष्टदारापत्यस्रगनुलेपनान्नपानादिद्रव्योपजनितमिति विस्तरः, तदेव च सुखमुपग्रहोऽनुग्रहः पुद्गलानां निमित्ततया परिणतावात्मनः, एवं दुःखादिष्वपि योजनीयम्, असद्वेद्योदयादात्मपरिणामो बाह्यद्रव्यापेक्षः सङ्क्लेशप्रायो दुःखं, भवस्थितिनिमित्तायुर्द्रव्यसम्बन्धभाजः पुरुषस्य प्राणापानलक्षणक्रियाविशेषाव्युपरमो जीवितं, तदशेषोपरतिर्मरणम्, कथं मरणमात्मोपग्रह इति चेत्, निर्विण्णस्य पुरुषस्य तत्प्रियत्वाद् विषादिद्रव्यसम्बन्धे सत्यायुषो यौगपद्येनोपभोगोदयात् कण्टकवेदनावत् ॥

**भा०—तद्यथा इष्टाः स्पर्शरसगन्धवर्णशब्दाः सुखस्योपकाराः । अनिष्टा दुःखस्य । स्थानाच्छादनानुलेपनभोजनादीनि विधिप्रयुक्तानि जीवितस्यानपवर्तनं चायुष्कस्य । विषशस्त्राग्न्यादीनि मरणस्य, अपवर्तनं चायुष्कस्य ॥**

टी०—तद्यथेत्यादिना प्रत्येकमुदाहरणं सुखादीनां दर्शयति—स्पर्शादयः केचित् कदाचिदाशयवशाज्जन्तूनां वल्लभाः सन्तः सुखमात्मपरिणामस्वभावमुपकुर्वन्ति । कर्मणि षष्ठी द्रष्टव्या । त एव चानिष्टा द्वेष्याः सन्तः स्वाशयोत्प्रेक्षया दुःखस्योपकुर्वन्ति । तथा चाह—

"तानेवार्थान् द्विषतस्तानेवार्थान् प्रलीयमानस्य ।
निश्चयतोऽस्यानिष्टं न विद्यते किञ्चिदिष्टं वा ॥"—**प्रशम० श्लो० ५२**

अतः स्वचेतोविकल्पापेक्षमिष्टत्वमनिष्टत्वं वा स्पर्शादीनाम्, तथा स्नानादयो विधिप्रयोगाज्जीवितस्य प्राणधारणलक्षणस्योपकारकाः, विधिप्रयोगो देशकालमात्रासात्म्यद्रव्यगुरुलाघवस्वबलापेक्षः, जन्मान्तरप्रतिबद्धस्य चायुषोऽनपवर्तनम्, अपवर्तनं तु दीर्घस्यायुषोऽध्यवसायादिविशेषसाचिव्यादल्पतापादनं जीवितसंवर्तनमित्यर्थः । अनुग्राहकहेतुसन्निधानात् तु तावन्मात्रतैव, सुबद्धत्वात्, पवनश्लेषवत्, अनपवर्तनमिति, बद्धस्पृष्टनिहितनिकाचितचतुष्करण-

१ 'मरणं' इति क-पाठः ।

२ विप्रियस्य दुःखमरणकारितया पुद्गलानामुपयोजनमध्यक्षसिद्धमेव, स्वरूपख्यापनमेतत्, तेन नैतत्कार्यता ।

३ गतिस्थित्युपग्रहावित्यत्र समस्तत्वादुपग्रहस्य न तस्यानुवृत्तिः सन्नियोगेतिन्यायात्, उपकारशब्दस्त्वत्रापि पुद्गलानामुपकार इति अनुवर्त्यत एव, तत आवश्यकं उपग्रहग्रहणं, अन्यच्च सुखादीनि न पुद्गलरूपाणि किन्तु तज्जन्यानीति युक्तमुपग्रह इति, भावि भाष्यमपि तथैव ।

४ तस्यापि पौद्गलिकत्वात् तद्धारणावधिकत्वादेव जीवितस्येति ।

५ पवनेन-वायुना शुष्यमाणः श्लेषः पवनश्लेषः, स हि गाढतमो न च शक्यते उद्वेष्टयितुम् ।

सङ्गृहीतकर्मणामुपक्रमाभावाज्जीवितसंवर्तनाभाव इत्यर्थः । विषशस्त्राग्निमन्त्रप्रहरणादयो मरणस्य-जीवितोच्छेदलक्षणस्योपकारकाः पूर्वोपात्तायुषश्चापवर्तनकारिणः, कर्म हि पौद्गलिकमिष्टं भेत्तुं बहिः पौद्गलं ( पुद्गलैः ? ) शक्यम् । आह च—

"सोपक्रममायुष्कं, वेदनयाऽऽर्तस्य मूर्च्छतो जन्तोः ।
बन्धप्रायोग्याभ्यां, विगच्छति स्नेहरौक्ष्याभ्याम् ॥ १ ॥—आर्या
निरुपक्रमं तु न तथा-ऽऽयुष्कं दृढसंहितं यदिष्टं तत् ।
नन्वग्न्याद्यैरनुप-क्रम्यं कंकटुकमपरान्नम् ॥ २ ॥
आयुष्कस्यावयवा, बन्धनमुक्ता जटन्ति ते तस्मात् ।
आर्द्राद् वस्त्राद् यद्वत्, प्रशोष्यमाणाज्जलावयवाः ॥ ३ ॥
प्राणाहारनिरोधा-ध्यवसाननिमित्तवेदनाघाताः ।
स्पर्शाश्चायुर्भेदे, सप्तैते हेतवः प्रोक्ताः ॥ ४ ॥"

**भा०—अत्राह-उपपन्नं तावदेतत् सोपक्रमाणामपवर्तनीयायुषाम् । अथान[1]पवर्त्यायुषां कथमिति ? । अत्रोच्यते—**

**टी०**—अत्राहेत्यादिना ग्रन्थेनाशङ्कते, सोपक्रमायुषामनशनरोगादिबाधाभिरुपक्षीणायुषामपवर्तनीयायुषां च भृगुपतनोद्बन्धनादिभिरपवर्तमा[3]नायुषामुपकुर्वन्तु नाम पुद्गलाः, ये पुनरनपवर्तनीयायुषो भवन्त्यौपपातिकचरमदेहोत्तमपुरुषासङ्ख्येयवर्षायुषस्तेषां कथं जीवितमरणोपग्रह इत्याक्षिप्ते अत्रोच्यत इत्याह—

**भा०—तेषामपि जीवितमरणोपग्रहः पुद्गलानामुपकारः । कथमिति चेत्, तदुच्यते ॥**

**टी०—तेषामपीत्यादि** । तेषामप्यनपवर्तनीयायुषां जीवितोपग्रहो मरणोपग्रहश्च पुद्गलजालायत्त एव, पुद्गलकृत एवोपकार इतियावत्, **कथमिति चेत्**, आशङ्कते, केन प्रकारेणानपवर्त्यायुषामुपकुर्वन्ति पुद्गलाः, एवं मन्यते-न तेषामायुर्वर्धयितुं शक्यम्, न ह्रासयितुम्, अतः कमुपकारं पुद्गलाः कुर्युरिति **तदुच्यते** इत्याह—

**भा०—[4]कर्मणः स्थितिक्षयाभ्याम् । कर्म हि पौद्गलमिति । आहारश्च त्रिविधः सर्वेषामेवोपकुरुते । किं कारणम् ? । शरीरस्थित्युपचयबलवृद्धिप्रीत्यर्थं ह्याहार इति ॥ २० ॥**

---

१ अपवर्तनीयायुषां निरुपक्रमत्वाभावात् सोपक्रमेत्यादि । २ आयुषः परानुपग्राह्यत्वात् स्वभावतस्तेषां मरणं, न जातु तेषां पुद्गलोपग्रहो नामेति शङ्कते । ३ शीघ्रमायुःक्षयप्रतिपादनाय भेद इत्याशयः । ४ कर्मशब्देनायुःकर्मैव ग्राह्यं, प्रकरणात् जीवितमरणयोः, अनपवर्तनीयायुषामपि नायुरन्तरेण जीवितं तत्क्षयमन्तरा च मरणमिति युक्तमुक्तं तेषामपीत्यादि ।

टी०—कर्मण इत्यादि । यस्मात् सकलमेव ज्ञानावरणादि कर्म पुद्गलात्मकम्-अनन्तप्रदेशात्मकस्कन्धविकारः, कर्मनिमित्ता च तेषां स्थितिस्तद्द्वारेण जीवितोपग्राहिणः, त एव च कर्मपुद्गलाः क्षीयमाणा मरणोपग्राहिणः सम्पद्यन्त इति, तस्मात् सुष्ठूच्यते-तेषामपि जीवितमरणोपग्रहः पुद्गलानामुपकारः । आहारश्च त्रिविध

पुद्गलेषु सर्वोपकारिता इत्यादि । समुच्चयार्थश्चशब्दः, ओजोलोमप्रक्षेपलक्षणस्त्रिप्रकार आहारोऽभ्यवहरणम्, तत्रौजआहारः सर्वप्रदेशैरात्मनः सर्वस्यापर्याप्तकावस्थायां जन्मकाले घृतमध्यप्रक्षिप्तापूपवत्, पर्याप्तकावस्थायां तु लोमाहारस्त्वगिन्द्रियग्रहणलक्षणः, प्रक्षेपाहारस्तु कावलिकः, सोऽपि पर्याप्तकानामेव पृथिवीकायाद्येकेन्द्रियनारकदेववर्जानामसुमताम्, सर्वेषामित्यनेन संसारिणः परिगृह्यन्ते ॥ ननु संसारिणोऽपि केचिदन्तर्गतावनाहारकाः, केवलिनस्तु समुद्घातकाले शैलेश्यवस्थायां चेति, अतः कथं सर्वेषामुपकुरुत इत्युच्यते ? बाहुल्यमङ्गीकृत्येदमुक्तमल्पकालत्वाच नापेक्षितं भाष्यकारेण । किं कारणमेतदेवमिति प्रश्नयति, शरीरेत्यादिनोपपादयति । यस्मादाहाराधीनाः शरीरस्य स्थित्यादयोऽनपवर्त्यायुषाम्, आहारश्च पुद्गलविकारः, ततः पौद्गलिकत्वादुपकुरुते, तत्र स्थितिः सन्धारणमन्यथा नावतिष्ठेत, उपचयः परिपोषो मांसमज्जादीनाम्, बलं शक्तिः, प्राणः सामर्थ्यम्, वृद्धिरारोहपरिणाहलक्षणा, प्रीतिश्चित्तधर्मः परितोषरूपः, एवमनेकप्रयोजननिवर्तनसामर्थ्यादाहार उपकारक इति ॥ २० ॥

भा०—अत्राह-गृह्णीमस्तावद् धर्माधर्माकाशपुद्गलजीवद्रव्याणामुपकुर्वन्तीति । अथ जीवानां क उपकार इति ? । अत्रोच्यते—

टी०—अत्राहेत्यादिसम्बन्धग्रन्थः । सर्वैर्धर्मादिभिरुपकृतं निमित्तव्यापारविशेषेण जीवानाम्, अथात्मानः किमन्येषामात्मनामेवोपकुर्वन्तीत्युपकारं जीवसम्बन्धिनं पृच्छति । अथवा धर्माधर्माकाशपुद्गलानां परानुग्रहः सान्तिक उक्तः, किमेवमात्मनामप्युतान्यो विधिरिति प्रश्नयति । तत्र जीवद्रव्याणामिति । जीवानां सर्वे धर्मादय उपकुर्वन्ति, धर्माधर्माकाशाः पुद्गलद्रव्याणामुपकारकाः, आकाशं धर्माधर्मपुद्गलानामुपकारकम्, इत्थमेतेऽनुग्रहकारिणः प्रसिद्धा धर्मादय इति बुद्ध्यामहे । अथ जीवानामुपकारः क इत्यनवबोधात् प्रश्निते अत्रोच्यते इत्याह ।

सूत्रम्—परस्परोपग्रहो जीवानाम् ॥ ५-२१ ॥

जीवोपकारः

भा०—परस्परस्य हिताहितोपदेशाभ्यामुपग्रहो जीवानामिति ॥ २१ ॥

---

१ जन्मशब्देन नात्र प्रसवः, किन्तु गर्भावतारः । २ शरीरपर्याप्त्यैव पर्याप्तका ग्राह्याः, अन्यथा अपर्याप्तानां लोमाहारस्याप्यभावसंभवात् । ३ अपवर्तनीयेतरायुष्मतामित्यर्थः, अत एव शरीरेत्यादिहेतुः संगतः ।
४ 'ननु च संसा०' इति ग-पाठः । ५ 'नावतिष्ठते' इति क-ख-पाठः ।

**टी०—परस्परशब्दः** कर्मव्यतिहारविषयः । **अन्योन्योपग्रहो** जीवानामुपकारः । ननु परस्परेति भवितव्यमित्यत्र परस्परा क्रिया सातत्येनेत्यत्रैके व्याचक्षते, वर्णलोपं कृत्वा निरदिक्षदाचार्यः परस्परोपग्रह इति **कात्यायनवचनाद्** वा 'इतरेतरान्योन्योपपदाच्च ( पा० अ० १, पा० ३, सू० १६ ) इत्यत्रोक्तं 'परस्परोपपदाच्चेति ( वक्तव्यं )' ( **वार्तिके** ९०० ) परस्परस्य व्यतिलुनन्ति । **हिताहितोपदेशाभ्यामिति** । हितमायत्यां वर्तमाने च यत् क्षमं युक्तं न्याय्यं वा, तद्विपरीतमहितम्, हितप्रतिपादनेनाहितप्रतिषेधेन चोपग्रहं कुर्वन्ति, पुनरुपग्रहवचनमाभिप्रायिकं दर्शयति, जीवाः परस्परहिताहितोपदेशदायित्वेनानुगृह्णन्ति, न त्वेवं पुद्गलाः । अथवा सुखादीनामेकैकोऽप्यनुग्राहको जन्तोर्भवति समुपजातः, इह तु पुनरुपग्रहमाणोपग्राहकयोः परस्परेण स्त्रीपुंसवदनुग्रहे यौगपद्यार्थं पुनरुपग्रहवचनं प्रतिपत्तव्यम्, सर्वदैव द्विप्रभृतीनामुपकारो नैककानाम्, **उपसर्जनं चोपग्रहः** पूर्वसूत्रे, इह तु स्वतन्त्रः, जीवानामुपदेशस्य भूयस्त्वेनोपकारकत्वाद् ग्रहणम्, न तथा प्राणिनो वित्तादिभिरुपकुर्वन्ति यथोपदेशेनेति, अहितोपदेशोऽहितानुष्ठानं वा कथमुपकारः, न, उपकारवचनस्य निमित्तार्थत्वात्, अन्यथा हीष्टोपग्रह एवोपकारः स्यात्, नानिष्टोपग्रह इत्यव्यापिता भवेत् ॥ ननु जीवानामुक्तं लक्षणमुपयोग इति किं पुनरारम्भेण ? नैतत्, तदस्त्यन्तरङ्गं लक्षणमिदं तु बहिरङ्गम्, एवं तर्हि धर्मादित्रयस्य लक्षणं नास्ति । अत्रोच्यते—गतिस्थित्यवगाहानां स्वाभाव्याद्, यो हि यत्रासाधारणो धर्मः स एव तस्य लक्षणम्, इतिशब्दोऽधिकारपरिसमाप्त्यर्थ इति ॥ २१ ॥

**भा०—अत्राह—अथ कालस्योपकारः क इति ? । अत्रोच्यते—**

**टी०—अत्राहेत्यादिना** सम्बध्नाति—अत्रेति पञ्चास्तिकायपरिसमाप्तिप्रस्तावे पर आह—**अथ कालस्योपकारः क इति ?** ॥ ननु च पूर्वोपन्यस्तेषु धर्मादिषु द्रव्येषूपकारविषयः प्रश्नो घटमानः कालद्रव्यं तु नैवोपन्यस्तम्, अतः कथं तत्कृतोपकारविषयः प्रश्नः सङ्गच्छेत ? । सत्यम्, नोक्तं कालद्रव्यं, किन्तु **कालश्चेत्येके** ( अ० ५, सू० ३८ ) इति वक्ष्यत्येकीयमतेन स कदाचिद् धर्मास्तिकायादिद्रव्यपञ्चकान्तर्भूतस्तत्परिणामत्वात्, कदाचित् पदार्थान्तरं धर्मादिवत्, सर्वथा लक्षणं वक्तव्यमेतच्चेतसि संनिवेश्य प्रश्नयति—**अथ कालस्योपकारः क इति** । असाधारणलक्षणविषयः प्रश्नः । कथं पुनर्धर्मादिपरिणाममात्रं काल इति चेत्, यतस्तद्धर्मविशेषा एवातीतानागतवर्तमाना आख्यातशब्दवाच्याः, ते च बुद्ध्यर्थशब्दास्त्रयः, सर्वं च वस्त्वर्थाभिधानप्रत्ययसङ्गृहीतं, तुल्यव्यपदेशत्वात् शब्दार्थबुद्धीनाम्, तत्रार्थलक्षणः कालोऽर्थवृत्तिभिरेवावध्रियते **इत्यत्रोच्यत** इत्याह ॥

---

१ 'अन्यस्योपग्रहः' इति **ग**-पाठः ।

२ एकेन जीवेन द्वितीयस्य तेन तृतीयस्येत्येवं परम्परार्थे परस्परशब्दः, यथा च धर्मादीनां स्वभावेनैवोपकर्तृता नैवमेषां, किन्तु अनुग्रहधियैव, यद्वा इन्द्रियादिकार्याण्याश्रित्य परस्परेषामुपग्राहकता, तच्छक्तीनां कार्यद्वारावस्थितेः ।

३ 'धर्मादिद्रव्येषु' इति **क**-पाठः ।

## सूत्रम्—वर्तना परिणामः क्रिया परत्वापरत्वे च कालस्य ॥ ५-२२ ॥

टी०—यदा तु पृथक् कालद्रव्यं धर्मादिभ्यस्तदाऽप्यवश्यं सतोपकारिणा भवितव्यम् । संश्च कालोऽभिमतः स किमुपकार इति तस्य खलु वक्ष्यमाणस्वतत्त्वमूर्तेः वर्तना परिणाम इत्यादिनाऽविनाभूतं लिङ्गमुपदर्श्यते । यच्च प्राङ् नोपन्यासि[1] सूत्रकारेण कालस्तदस्तिकायत्वप्रतिषेधाय । आह च—

कालस्योपकारः

" तस्मान्मानुषलोक-व्यापी कालोऽस्ति समय एक इह ।
एकत्वाच्च स कायो, न भवति कायो हि समुदायः ॥ "

स चैकः समयो द्रव्यपर्यायावबद्धवृत्तिरेव द्रव्यार्थरूपेण प्रतिपर्यायमुत्पादव्ययधर्माऽपि स्वरूपानन्त्यभूतक्रमाक्रमभाव्यनाद्यपर्यवसानो[2]ऽनन्तसङ्ख्यापरिणामः, अत एव पर्यायप्रवाहव्यापिनमेकमात्मानमातनोति, अतीतानागतवर्तमानावस्थास्वपि कालः काल इत्यविशेषश्रुतेः सर्वदा ध्रौव्यांशावलम्बनात्, सामान्यः परमार्थत्वात् सन्नेव न कदाचिदप्यसत्त्वं भजत इति यद्यर्धतृतीयद्वीपसमुद्रद्वयाक्रान्तक्षेत्रपरिणामस्तिर्यग्मानेन पञ्चचत्वारिंशद्योजनलक्षप्रमाणः ( ऊ[3]र्ध्वमधश्चाष्टादशयोजनप्रमाणः ) कालो नाम द्रव्यमिति निरूप्यते वर्तनादिलिङ्गसद्भावात्, ततः किमिति मनुष्यलोकादपि परतो नाभ्युपेयते, तल्लिङ्गोपपत्तेः, इह वर्तनालक्षणः कालः उच्यते, सा चास्ति तत्र वृत्तिः, तथा प्राणापाननिमेषोन्मेषायुःप्रमाणादि परत्वापरत्वादिलिङ्गं चेति । अत्रोच्यते—सत्यामपि भावानां वृत्तौ तस्यास्त्वविशेषेण काललिङ्गत्वं नेष्यते, सन्तो हि भावाः स्वयमेवोत्पद्यन्ते व्य[4]यन्त्यवतिष्ठन्ते च, अस्तित्वं च भावानां वस्त्वन्तरापेक्षम्, न च तत्रत्याः प्राणादिवृत्तयः कालापेक्षास्तुल्यजातीयानां सर्वेषां युगपदभवनात्, कालापेक्षा ह्यर्थास्तुल्यजातीयानामेकस्मिन् काले भवन्ति, न विजातीयानाम्, ताश्च प्राणादिवृत्तयस्तद्वतां नैकस्मिन् काले भवन्त्युपरमन्ति चेति, तस्मान्न कालापेक्षास्ताः, न च परत्वापरत्वे तत्र कालापेक्षे, स्थितिविशेषापेक्षे हि परत्वापरत्वे, षष्टिवर्षाद् वर्षशतिकः परोऽपरः षष्टिवर्ष इति षष्टिवर्षाणां शतं वर्षाणामिति स्थितिरेषा, सा च सत्त्वापेक्षास्तित्वादेव, भावानामस्तित्वं चानपेक्षमित्युक्तम् ॥ नन्वेवमेव मनुष्यलोकेऽपि कालनिरपेक्षा वर्तनादयो भविष्यन्ति, किं कालकल्पनयेति चेत्, उच्यते—यदि निर्वर्तककारणं परिणामकारणं वा कालोऽकलयिष्यताऽभविष्यदेतदेवम्, अपेक्षाकारणं हि सः । न ह्यसावधिष्ठाय स्वातन्त्र्येण कुलालवत् करोति । न च मृत्तिकावत् परिणामिकारणं, किन्तु सम्भवतां स्वयमेवार्थानामस्मिन् काले भवितव्यम्, नान्यदेति अपेक्षाकारणं धर्मद्रव्यमिव गता-

कालस्य नृलोकवृत्तिता

---

१ ' नोपन्यासि ' इति क-ख-पाठः । २ ' पर्यवसाने ' इति ग-पाठः । ३ चिह्नान्तर्गतो भागो नास्ति क-ख-योः । ४ ' वियत्यव० ' इति ग-पाठः ।

विति न दोषः, सुखादिदृष्टान्ताश्च पूर्ववद् वाच्याः ॥ अत्र च केचिदाचक्षते–विरोधासम्भवाद् वर्तनादिपदत्रयसमासः, अपरे पुनरसमस्तान्येवाधीयते, परत्वापरत्वयोः पुनः समास एव, अन्योन्यापेक्षत्वात्, वर्तनाग्रहणमादौ पूर्वापरनिरपेक्षप्रत्ययाभिधानहेतुत्वान्निदर्शनार्थत्वात् । तदनु परिणामग्रहणं, क्रियाग्रहणं वर्तनादीनां तज्जातीयत्वात् । तदनु परत्वापरत्वे विशिष्टलिङ्गत्वात् प्रशंसाक्षेत्रकृतव्युदासार्थम् । उपकारानुकर्षणार्थश्चशब्दः ॥

**भा०—तद्यथा–सर्वभावानां वर्तना कालाश्रया वृत्तिः । वर्तना उत्पत्तिः, स्थितिरथ गतिः प्रथमसमयाश्रयेत्यर्थः[2] ॥**

**टी०—तद्यथा—सर्वभावानामित्यादि** भाष्यम् । तद्यथेत्यनेन वर्तनास्वरूपम् वर्तनादीनां सकलभावव्यापितां दर्शयति । तत्र वर्तनैव तावद् भाव्यते—**वर्तना कालाश्रया वृत्तिरिति**, वर्तन्ते स्वयमेव पदार्थास्तेषां वर्तमानानां प्रयोजिका कालाश्रया वृत्तिः, वर्त्यन्ते यया सा वर्तना । 'ण्यासश्रन्थो[3] युच्' (पा० अ० ३, पा० ३, सू० १०७) । अथवा सैव कालाश्रया वृत्तिर्वर्तनशीलेति, 'अनुदात्तेतश्च हलादेः' (पा० अ० ३, पा० २, सू० १४९) इति युच् । वृत्तिर्वर्तनं तथाशीलतेति, सा च वर्तना प्रतिद्रव्यपर्यायमन्तर्णीतैकसमयस्वसत्तानुभूतिलक्षणा उत्पाद्यस्येतरस्य वा भावस्य प्रथमसमयसंव्यवहारोऽनुमानगम्यस्तण्डुलादिविकारवदग्न्युदकसंयोगनिमित्ता विक्रिया प्राथमिक्यतीतानागतविशेषविनिर्मुक्ता, वर्तते पाकः अस्य वा भावाऽनुसमयस्थितेर्वर्तना प्रतीता, सा चातिनिपुणपुरुषबुद्धिगम्या । यथाऽऽह—

"बिसस्य बाला इव दह्यमाना, न लक्ष्यते विकृतिरिहाग्निपाते ।
तां वेदयन्ते[4] मितसर्वभावाः, सूक्ष्मो हि कालोऽनुमितेन गम्यः ॥"

ननु च सवितुरुदयेन वर्तमानेनोपलक्षिता भावानां प्रतिविशिष्टा क्रियैव वर्तते इत्यावेद्यते कोऽन्यस्तद्व्यतिरिक्तः काल इति, तथा ह्यः श्व इत्यतीतानागतोदयलक्षणा ब्रध्नमण्डलभ्रमणानुमेया वस्तुक्रियैवोच्यतेऽवृतद् वर्तिष्यत इति । यथा चोक्तम्—नृलोके, तत्कृतः कालो विभागः (अ० ४, सू० १४, १५) इति, अत्रोच्यते, प्रागुत्पतद्भिरेवास्माभिरिदमुक्तम्–धर्मादिद्रव्यपरिणतिमात्रं कालस्तदन्यो वा, तत्र प्रथमपक्षे सिद्धसाध्यता, तदन्यपक्षेऽपि न दोषः, आदित्यगत्युपलक्षिता नैषा वस्तुक्रिया वर्तत इति, तद्गतावपि सद्भावाद्, वर्तते त्र्ज्या सवितुर्यथा आकाशप्रदेशनिमित्तेति चेत्, तदप्यसमञ्जसम्, तां प्रत्यधिकरणभावात् स्थालीवत्, कथं पुन-

---

१ यदि च तिर्यग्लोकवृत्तिपदार्थानां चन्द्रसूर्यादिगतिक्रिययोपकृतिः तदा स्पष्ट एवोपकारस्तस्य तिर्यग्लोके, सुरलोकादौ न सूर्यादेर्गतिक्रिया न च तया तस्योपकार इति स्पष्ट एवान्यत्र तदनुपकारः, प्रागुक्तमपि च यदुतात्रत्येनैव कालेनान्यत्र व्यवहारः, परमनिरुद्धः समयोऽपि सूर्यादिक्रियाव्यङ्ग्यदिनादेः परमो लव एव, सूर्यादिगतावपि प्राचीना तद्वर्तिर्हेतुरेव, एवंच तिर्यग्लोक एव तस्य वृत्तिर्युक्ता, कथमन्यथा लोकालोकयोर्वर्तनादिसद्भावात् न स सर्वत्र, एवं च पर्यायताऽपि तस्य युज्यत एव ।

२ 'प्रथमसमाश्रयेत्यर्थः' इति **क-ख**-पाठः । ३ 'ण्याश्रयो युच्' इति **ग**-पाठः । ४ 'वेद्यन्ते' इति **ग**-पाठः ।

रिदमभिधातुं पार्यते–कालाश्रया वृत्तिरिति? अवधृते हि काले तदाश्रया वृत्तिर्युज्येत ॥ ननु चात्मादयोऽप्यनवधृतस्वरूपा एव साक्षाद् बुद्धिसुखदुःखादिभिः कार्यैरुभयनिश्चितैरधिगम्यन्ते, दृश्याश्चामी, न चान्यथोपपद्यन्ते, तद्वदेव वर्तना सकलवस्तुव्युपाश्रया, अतोऽस्ति कार्यानुमेयः कालः पदार्थपरिणतिहेतुः, लोकप्रसिद्धाश्च कालद्रव्याभिधायिनः शब्दाः सन्ति, न वस्तुक्रियामात्राभिधायिनः । यथाऽऽह–"युगपदयुगपत् क्षिप्रं चिरं चिरेण परमिदमपरमिदमिति च, वत्स्यति नैतद् वत्स्यति वर्तते तद् वृत्तमपि वर्तत इदमन्तर्वर्तत" इति, कालापेक्षमेव आप्ता यत् सर्वे ब्रुवन्ति, तस्मान्नु सर्वेषां मतः कालः, ह्यः श्वोऽद्य सम्प्रति परुत् परारि नक्तं दिवैषमः प्रातः सायमिति कालवचनानि कथं युक्तान्यसति काले? । तस्याश्च वृत्तेः कालापेक्षायाः कालस्वरूपाया वा भाष्यकारः शब्दानेकार्थान् कथयति—**वर्तनेत्यादि** ॥ **वर्तनो**क्तलक्षणा, **उत्पत्ति**रात्मलाभः, **स्थिति**रप्रच्युतिरिति किञ्चिद्भेदा वर्तनैवोच्यते, निर्विभागः कालः **समयः** स च प्रथम इति वस्तूत्पत्त्या व्यवच्छिन्नस्तदाश्रया समयपरिणतिस्वभावेत्यर्थः ॥

**भा०—परिणामो द्विविधः-अनादिरादिमांश्च । तं परस्ताद्** ( अ० ५, सू० ४२ ) **वक्ष्यामः** ॥

**टी०—परिणामो द्विविध** इत्यादि । द्रव्यस्य स्वजात्यपरित्यागेन परिस्पन्देतरप्रयोगजपर्यायस्वभावः परिणामः, तद्यथा–अङ्कुरावस्थस्य वनस्पतेर्मूल-काण्ड-त्वक् पत्र स्कन्ध-शाखा-विटप-पुष्प-फलसद्भावलक्षणः परिणामः, आसीदङ्कुरः सम्प्रति स्कन्धवानैषमः पुष्पिष्यतीति, पुरुषद्रव्यस्य वा बाल-कुमार-युव-मध्यमाद्यवस्थापरिणामसद्भावलक्षणः, स द्विविधः, अविद्यमानादिरनादिरमूर्तेषु धर्मादिषु, मूर्तेषु पुनरादिमानभ्रेन्द्रधनुरादिषु स्तम्भकुम्भादिषु च । चशब्दोऽवधारणार्थः । परिणामो द्विविध एव, तं चाध्यायपरिसमाप्तौ ( सू० ४१ ) वक्ष्यामः—**तद्भावः परिणाम** इति, स च वस्तूनामृतुविभागवेलानियमकृतः, तत्रर्तवो हेमन्त १ शिशिर २ वसन्त ३ ग्रीष्म ४ वर्षा ५ शरत्संज्ञाः ६ कालस्यैकस्य शक्तिभेदाः प्रतिविशिष्टकार्यप्रसवानुमेयाः । तद्यथा—

परिणामस्वरूपम्

हेमन्ते हिमानीनिपातप्रम्लानानि वृन्ताक[3]कार्पासीवनानि । पथिकाः सङ्कोचितपाणयः [4]क्वणद्न्तवीणिकाः कम्पमानगात्रयष्टयः प्रत्यग्निशलभा इवापतन्तो लक्ष्यन्ते । वायवश्च तुषारलेशसं[5]ङ्गतोऽतिशयशिशिराः शरीराण्या[6]यासयन्तः प्राणभाजामावान्ति । प्रियतमापरिष्वङ्गदुर्ललितेषु युवसु प्रसरमलभमानाः कुङ्कुमारुणाः प्रियतामुपनमन्त्यंशवः सहस्ररश्मेर्जीवलोकस्य । अनवरतशीतपातजनितव्यथाः काष्ठशकलानि डिम्भाः समाहृत्यैकतो हुतभुजमादीप्य तापमासेवन्ते प्रसारितपाणयः सहःसहस्यसंज्ञयोर्मासयोः ॥

हेमन्तवर्णनम्

१ 'युज्यते' इति क-ख-पाठः । २ 'सर्वेषामभिमतः' इति ग-पाठः । ३ 'कर्पासी' इति क-ख-पाठः । ४ 'क्वणद्दवदन्त 'इति ग-पाठः । ५ 'सङ्गिनोऽतिशय' इति क-ख-पाठः । ६ 'ण्यावासयंतः' इति ख-ग-पाठः । ७ '०भासिः समा' इति क-पाठः ।

तथा शिशिरे—अतिदुर्भगशशाङ्ककिरणे परिपाकसुरभिफलसम्पद्विनम्यमानशाखाभराः फलार्थिभिः शिशुकदम्बकैरनुगततला बदरीतरवः, तुहिनशिलाशकलविशदकुन्दमालतीकुसुमवासवाहिनो मारुताः, प्रियङ्गुरोध्रप्रसवसनाथानि दिङ्मुखानि, प्रलीनाः पङ्कजाकराः सायामा यामिन्यः, कश्मीरजागुरुगन्धाढ्यगर्भगेहशायिनः सुखिनस्तपस्तपस्यनाम्नोर्मासयोः ॥

शिशिरवर्णनम्

तथा वसन्ते–समन्ततः किञ्चिद्विभाव्यमानकुसुमाः कुन्दयष्टयः केसरतिलककुरबकशिरीषकोल्लप्रसूनजृम्भमाणपरागभाजः समीरणाः तरुणजनहृदयहारिणः, सहकारमञ्जरीरजःपुञ्जपिञ्जरितविग्रहाः कुसुमासवपानवशगताः सहचरीपक्षपातैराच्छुरन्तः कलगिरो बद्धमण्डलाः कातरजनान् रागपरिवृतः कुसुमधनुषो गोचरीकुर्वन्तः परिपतन्ति वनानि मधुपाः, परभृतकुलकलनिनादकोलाहलप्रतिबध्यमानगमनाः पदे पदे प्रस्खलन्तः पलाशवनानि कुसुमभरभाञ्जि ज्वलदनलकूटानीव पुरः प्रेक्ष्यमाणा मलयवायुवेगावधूतचम्पकरजःपटलैरवकीर्यमाणलोचनपुटाः प्रत्यावर्तन्त एव पथिकसार्थाः, परिणतबिम्बफलच्छविभिरशोकपुष्पप्रकरैरुपशोभिताश्च सर्वतो दिशां भागा मासयोर्मधुमाधवाभिधानयोः ॥

वसन्तवर्णनम्

तथा निदाघसमये–दहनमिव किरणनिकरैः किरन् किरणमाली भुवस्तलमास्तीर्णाङ्गारप्रकरमिव करोति, चीरीविरावद्राघीयांसो दिवसाः कथञ्चिदपवाह्यन्ते पथिकजनैः, आवाहोपकण्ठप्ररूढद्रुमच्छायाधिश्रयितश्रान्तकार्पटिकधोरणध्वानपरिपूरिता दिगाभोगाः, चन्दनपङ्काङ्गरागपरिपाण्डुराः किङ्करकरोत्क्षिप्ततालवृन्तश्वसनशीतलितशरीराः शिशिरेषूपवनेषु सरित्सरसीतीरेषु च विविधधारागृहान्तर्गता भोगिनो निरस्तधर्मप्रसरमभिरमन्ते, करिदशनशकलधवलमल्लिकाकोरकबहलपरिमलहारिणः परिमलितपाटलप्रसवाः सायं प्रातश्च पवना विलासिनां मदनमादीपयन्तः सुरभयो विचरन्ति, अरण्यान्यः कठोरकठिनकन्धरवराहदंष्ट्राकोटिविलेखोत्खातमुस्तादलसुगन्धयः करिमहिषयूथावगाढपल्वलाः कलभचीत्कारपूरितदशदिशो मृगतृष्णाभिरारचितसरस्तरङ्गमालाभिरिव विप्रलब्धमुग्धहरिणव्रजाः शुचिशुक्राभिख्ययोर्मासयोः ॥

ग्रीष्मवर्णनम्

तथा वर्षासु–सौदामिनीवलयविद्योतितोदराभिनवजलधरपटलस्थगितमम्बरमारचितपाकशासनचापलेखमासारधाराप्रपातशमितधूलिजालं च विश्वम्भरामण्डलम्, अङ्गसुखाः समीराः कदम्बकेतकरजःपरिमलसुरभयः, स्फुरदिन्द्रगोपकप्रकरशोभिता शाद्वलवती भूमिः, कूलङ्कषजलाः सरितः, विकासिकुटजप्रसूनकन्दलीशिलीन्ध्रभूषिताः पर्वतोपत्यकाः, पयोदनादाकर्णनोपजाततीव्रोत्कण्ठाः परिमुषितमनीषा इव प्रवासिनः, चातकशिखण्डिमण्डलमण्डूकध्वनिविषमविषवेगमोहिताः पथिक-

वर्षावर्णनम्

१ 'कश्मीरगुरु' इति क-ख-पाठः। २ 'केलगिरौ' इति क-ख-पाठः। ३ 'परिवृतः' इति ग-पाठः। ४ 'अरणान्यः' इति ग-पाठः। ५ 'चितस्तरङ्ग' इति क-ख-पाठः।

जायाः, क्षणं क्षणद्युतिदीपिकाप्रकाशिताशामुखासु क्षणदासु परिभ्रमत्खद्योतकीटकासु सञ्चरन्ति मसृणमभिसारिकाः, पङ्कबहुलाः पन्थानः क्वचिज्जलाकुलाः क्वचिदविरलवारिधाराधौतहारिसैकताः नभोनभस्ययोर्मासयोः ॥

तथा शरदि–दिनकृतो मयूखाः पङ्कमाश्यानयन्तः प्रतापमुग्रतरमातन्वते, विनिद्राम्भोजकुमुदवनानि सरांसि सहंससारसानि स्फटिकमणिभित्तिविमलवारिपूर्णानि, कल्हारकुवलयामोदवाहिनो गन्धवाहाः सप्तच्छदकुसुमरजोधूलिधूसरितवपुषः कलगुञ्जिनो मधुलेहिनः काष्ठाः कृतबन्धुजीवकावतंसाः, सञ्जातदर्पास्तथोक्षाणो मत्तध्वानगम्भीरमुन्नदन्तः श्लिष्टमृत्तिकाखण्डमण्डितशृङ्गकोटयः परिष्वष्कन्ते, कृषीवलहृदयहारीणि हरिणकदम्बकदशनालूनतटस्तम्बाग्राणि कैदार्याणि समधिगतपाककलमानि कलमगोपिकाच्छूत्कारवित्रासितशुकमण्डलानि नितरां चकासति, तुषारदीधितेर्धवलयन्तो मुखानि हरितामभीशवः कामिनां प्रमोदमन्तःकरणेषु शनकैः समेधयन्ति प्रसभमिषोर्जयोर्मासयोः ॥

शरद्वर्णनम्

तथा वेलानियमसमधिगतपाटवानि प्रातः कुशेशयकोशजालानि भास्वत्करसम्पर्काद् विकासमाददते, कुमुद्वतीनाथकिरणकलापपरामृष्टानि च कुमुदकुवलयकुड्मलानि निष्ठ्यूतसुरभिपरिमलं दलन्ति, कोशातकीपुष्पपटप्रावरणाः सन्ध्यासु ग्रामवृत्तयः सुरभिगन्धोद्गारिणः[3] कामिजनजनितसम्मदास्तरुण्य इव बहलाङ्गरागा विराजन्ते, जलधिरपि वेलानियममनुवर्तमानः शिशिरकिरणोदये वलिततुङ्गवीचिबाहुभिरम्भोधरध्वानगम्भीर[4]व्याहारमेलाफलपरिमलपिशुनामालम्बते वेलावधूम्, कौशिकशकुन्तयश्च रजनीषु द्राघीयसा भयानकध्वनिना स्थायं स्थायमारटन्ति, प्रतानितग्रीवाः कृकवाकवोऽपि वेणुपर्यन्तन्यस्तच्छित्वरकृताधिवसतयो दीर्घैः कलगम्भीरध्वनिभिरावेदयन्ते यामच्छेदान्, वनस्पतयश्च केचिदाबद्धपत्रसङ्कोचाश्चिराय नियतवेलासु निद्रां भजन्ते ॥

वेलानियमः

सोऽयमृतुविभागो वेलानियमश्च चित्रपरिणामः कारणं नियामकमन्तरेणानुपपन्नः सकलकारणकलापसन्निधाने[5] सत्यप्यनासादितोपजनत्वात्, अनेकशक्तियुक्तकालद्रव्यापेक्षस्तु प्रादुरस्ति, तस्मात् प्रतिविशिष्टकार्यानुमेयः कालोऽणुवत्, अन्यथा नियामकहेत्वभावे युगपदेते भावा भवेयुरपरायत्तत्वात्, अतः प्रतिनियतकालभावित्वादमीषां परिणामानामस्त्येकमनेकशक्तिकलापान्वितं कारणम्, ताश्च शक्तयः कदाचिदेव स्वकार्यनिष्पादनाय प्रवर्तन्ते समासादितपरिपाका न सर्वदेति । अथ कदाचिदेवमधिगच्छेत् कश्चित् खरविषाणशक्तिरसौ तादृशीति, तदयुक्तम्, अवस्तुत्वापत्तेः, प्रतिवाद्यप्रसिद्धेश्चेति ॥

**भा०—क्रिया गतिः । सा त्रिविधा–प्रयोगगतिः विस्रसागतिः मिश्रिकेति ॥**

---

१ 'धारधौत' इति क-ख-पाठः । २ 'मभीषवः' इति ग-पाठः । ३ '०द्गारिण्य' इति क-पाठः । ४ 'गभीर' इति क-ख-पाठः । ५ 'धानेन' इति क-ख-पाठः ।

**टी०—क्रिया गतिरित्यादिभाष्यम्** । करणं क्रिया–द्रव्यपरिणामस्तस्यानुग्राहकः कालः, तद्यथा–आकाशदेशावल्यामङ्गुली वर्तते अतीताऽनागतेति च, अन्यथाऽतीत एव वर्तमानोऽनागतश्च स्यात्, एवमनागतो वर्तमानश्च सङ्कीर्येत, अनिष्टं चैतत्, तस्मादस्ति कालो यदपेक्षयाऽतीतादिव्यपदेशाः परस्परासङ्कीर्णाः संव्यवहारानुगुणाः प्रथन्ते, तत्रातीतो द्विविधः भाव-विषयभेदात्, विनष्टो घट इति भावातीतः, विषयातीतश्चक्षुरादिग्रहणानन्तरमद्राक्षं घटम्, तथानागतदिदृक्षाभ्यर्णो घटो विषयानागतः, अलब्धात्मभावो भावानागत इति । तत्र **प्रयोगगतिः** जीवपरिणामसम्प्रयुक्ता शरीराहारवर्णगन्धरसस्पर्शसंस्थानविषया, **विस्रसागतिः** प्रयोगमन्तरेण केवलाजीवद्रव्यस्वपरिणामरूपा, परमाण्वभ्रेन्द्रधनुःपरिवेषादिरूपा विचित्रसंस्थाना, **मिश्रिका** प्रयोगविस्रसाभ्यामुभयपरिणामरूपत्वाज्जीवप्रयोगसहचरिताचेतनद्रव्यपरिणामात् कुम्भस्तम्भादिविषया, कुम्भादयो हि तेन तादृशा परिणामेनोत्पत्तुं स्वत एव शक्ताः कुम्भकारसाचिव्यादुपजायन्ते, वर्तनापरिणामयोः क्रियाजातीयत्वादेव पर्यन्ते क्रियोपादानम्, परिणामश्चात्र प्रधानमित्यतो वर्तनाक्रिययोः स मध्येऽधीतः सूत्रकारेण, परिणतिविशेषा एव वर्तनाक्रियाभेदा इति ॥

गति-विचारः

प्रयोगगत्यादिविचारः

**भा०—परत्वापरत्वे त्रिविधे–प्रशंसाकृते क्षेत्रकृते कालकृते इति । तत्र प्रशंसाकृते परो धर्मः परं ज्ञानमपरोऽधर्मः अपरमज्ञानमिति । क्षेत्रकृते एकदिक्कालावस्थितयोर्विप्रकृष्टः परो भवति, सन्निकृष्टोऽपरः । कालकृते द्विरष्टवर्षाद् वर्षशतिकः परो भवति, वर्षशतिकाद् द्विरष्टवर्षोऽपरो भवति । तदेवं प्रशंसाक्षेत्रकृते परत्वापरत्वे वर्जयित्वा वर्तनादीनि कालकृतानि कालस्योपकार इति ॥ २२ ॥**

परत्वापरत्वविचारः

**टी०—परत्वापरत्वे** इत्यादि । प्रशंसाक्षेत्रकालभेदात् त्रैविध्यम्, तत्र प्रशंसायाम्, **परो धर्मः** सर्वोत्तमत्वात् प्रशस्तः सकलमङ्गलनिलयत्वात् प्रकर्षकाष्ठागत इति. **अपरोऽधर्मो** जघन्यः स्वल्पगुणत्वात् निकर्षावस्थाप्राप्तः, तथा **परं ज्ञानं** यथावस्थितवस्तुवेदित्वात्, अपरमन्यथा, तच्चाज्ञानमेवाप्रशस्तत्वात् कुत्सितमसम्यग्दृष्टेरिति । **क्षेत्रकृते** इत्यादि, एकस्यां दिश्येकदा **विप्रकृष्टो** दूरवर्ती **परः** प्रत्यासन्नोऽपरः सन्निकृष्ट इत्यर्थः, दिशः प्राधान्यमविनाभावित्वात् कालोऽप्यत्राक्षिप्यते, कालैकत्वेऽप्यपदेशो भवत्येकदिग्व्यवस्थितयोः परोऽपर इति । **कालकृते** इत्यादि, व्यतिकरेणापरस्मिन् परं परस्मिँश्चापरमिति यन्निमित्ते प्रत्ययाभिधाने स कालः । तद्यथा—षोडशवर्षात् परो वर्षशतायुः वर्षशतायुषोऽपरो द्विरष्टवर्षायुः, प्रशंसाक्षेत्रकृतपरत्वापरत्वे चैते न भवतः, लुब्धकादावपि दर्शनात्, यस्माल्लुब्धकेऽपि देशकुलजातिविद्या-

१ 'सङ्कीर्णतोऽनिष्टं' इति क-ख-पाठः । २ 'जातीयकत्वादेव' इति ग–पाठः । ३ 'धर्मः अपरं ज्ञानमिति' इति क-ख-पाठः ।

परिहीणे परत्वापरत्वप्रत्ययाभिधानसम्भवात्, न च बन्धुजनापेक्षे, एकाकिन्यपि भावात्, न तपश्चरणालम्बने, अतपस्केऽपि दर्शनात्, न कर्मसंस्कारापेक्षे, तयोरनधिकारात्, न चादित्यनिमित्ते, तत्रापि दृष्टत्वात्, परोऽभियोग्यः अपर आदित्यः परः सविताऽपरोऽभियोग्य इति, अतः सामर्थ्यात् कालकृते, तयोर्विशेषणार्थमिदमुच्यते-**प्रशंसाक्षेत्रकृतेऽपि परत्वापरत्वे वर्जयित्वेति,** वर्तनादयः सर्वे कालकृताः **कालस्यापेक्षाकारणस्यानुग्रह उपकार** इति सूत्रार्थः ॥ एवं चायं यत्परत्वापरत्वे सूत्रभेदेन समस्य निर्दिष्टे सूरिणा तदवगमकं-न प्रशंसाक्षेत्रकृतयोरत्र परिग्रहः, वर्तना परिणामः क्रियाश्च द्रव्यस्वभावः कालापेक्षो निरदेशि, परत्वापरत्वे चावधित्वेन काललिङ्गमिति ॥ २२ ॥

**भा०—अत्राह-उक्तं भवता ( अ० ५, सू० १९ भाष्ये )—शरीरादीनि पुद्गलानामुपकार इति । पुद्गला इति च तन्त्रान्तरीया जीवान् परिभाषन्ते । स्पर्शादिरहिताश्चान्ये । तत् कथमेतदिति ? । अत्रोच्यते ॥**

**टी०—अत्राह-उक्तं भवते**त्यादिसम्बन्धग्रन्थः । अत्र प्रस्तावे परोऽभिधत्ते-प्रतिपादितं भवता शरीरादयः सुखादयश्च **पुद्गलानामुपकार** इति । **तन्त्रान्तरीयाश्च** मायासूनवीयाः **पुद्गला** इत्यनेन शब्देन **जीवान् परिभाषन्ते**-पुद्गलशब्दं जीवेषु सङ्केतयन्ति व्यवहारसिद्ध्यर्थमिति ॥ ननु च तेषां जीव एव नास्ति, कथं तद्विषयं पुद्गलध्वनिं परिभाषेरन्निति ? । उच्यते—अस्त्यार्यसम्मितीयानामात्मा, **सौत्रान्तिकानां** तु चित्ततद्युक्तसन्ततौ तत्पुद्गलप्रज्ञप्तिः, चित्तसन्ततौ वेदनासंज्ञा चेतनादिधर्मयुक्तायां चक्षुरादिसहितायां च चित्तेनान्योन्यानुविधानात्[२], इत्येषा चित्ततद्युक्तानां धर्माणां सन्ततिरहङ्कारवस्तुत्वादात्मेत्युपचर्यते, तथा पुनः पुनर्गत्यादानात् पुद्गल इत्युपचर्यते, **योगाचारणां** तु विज्ञानपरिणामः पुद्गलः ॥ यथाऽऽह—

पुद्‌गलशब्दार्थः

"आत्मधर्मोपचारो हि, विविधो यः प्रवर्तते ।
विज्ञानपरिणामोऽसौ, परिणामः स च त्रिधा ॥"

एवं तन्त्रान्तरीयैः पुद्गलो जीव उक्तः, त्वया पुनः शरीराद्युपकारिणः पुद्गला इत्युच्यते तदेतत् कथं विप्रतिषिद्धत्वादिति प्रश्नयति ॥ नन्वनुपपन्नः संशयः, पूर्वमुक्तमेव-रूपिणः पुद्गलाः ( अ० ५, सू० ४ ) इति, न च रूप्यात्मा प्रतीत इति, उच्यते—रूपशब्देन तत्र मूर्तिरुक्ता, सा च मूर्तिरन्यैरसर्वगतद्रव्यपरिमाणमिष्यते, यथा मनः, तच्च स्पर्शादिरहितम्, एतन्निरासार्थमिदमवश्यं वक्तव्यं भवति सूत्रं-स्पर्शादियुक्ता मूर्तिः, तथा चतुस्त्रिद्व्ये-

---

१ धर्मादयस्तावदरूपिणो लक्ष्याश्च गत्यादिद्वारेण जीवानां च लक्षणमुपयोग इति प्रागेवोक्तमिति पुद्गललक्षणानि वक्तुकामः परविप्रतिपत्तिनिरासाय शङ्कते, यद्वा संघातभेदौ वक्तुकाम आरभते हेतूनाख्यातुं तत्राह ।

२ 'चित्तेऽन्योन्या' इति क-ख-पाठः ।

कगुणानि पृथिव्यादीनि कणभुजोक्तानि, तत्प्रतिषेधार्थं चावश्यंतया विधेयं सर्वाण्येतानि चतुर्गुणानीति, एता विप्रतिपत्तीः सर्वाश्चेतस्याधायात्रोच्यत इत्याह ॥

**भा०—एतदादिविप्रतिपत्तिप्रतिषेधार्थं विशेषवचनविवक्षया चेदमुच्यते—**

टी०—एतदादीत्यादि। एषा आदिर्यासां ता एतदादयः, पुद्गलशब्देनात्मोच्यत इत्येषा विप्रतिपत्तिराद्या, कुत्सिता प्रतिपत्तिर्विप्रतिपत्तिः, तथा सर्वगतं द्रव्यं स्पर्शादिरहितं चेति द्वितीया विप्रतिपत्तिः, तन्निषेधाय सूत्रारम्भः, तथा च पृथिव्यादिद्रव्याणि विशेषवचनैर्वक्तुमिष्टानि पृथक् पृथक् चतुर्गुणानीत्येतदभिधीयते—

पुद्गललक्षणम्

**सूत्रम्—स्पर्शरसगन्धवर्णवन्तः पुद्गलाः ॥ ५–२३ ॥**

टी०—प्राङ्निर्दिष्टेन्द्रियक्रमापेक्षः स्पर्शादिविन्यासः, विषयबलवत्त्वात् स्पर्शग्रहणमादौ, सति च तस्मिन् रसादिसद्भावात्। एतदुक्तं भवति—स्पर्शित्वादब्बादीनि चतुर्गुणानि पृथिवीवत्, तथा मनः स्पर्शादिमदसर्वगतद्रव्यत्वात् पार्थिवाणुवत्, कृतद्वन्द्वानां मत्वर्थीयः, स च सम्बन्धापेक्षः, सम्बन्धश्च स्पर्शनादिप्राप्ताः पुद्गलाः स्पर्शाद्याकारेणोपपद्यन्त इति, अथवा सर्वदैव स्पर्शादियुक्ताः पुद्गला इति नित्ययोगे मतुप् विहितः, यस्मादिन्द्रियसम्बन्धात् प्रागपि स्पर्शाद्याकारभाजस्त इति ॥

**भा०—स्पर्शः रसः गन्धः वर्ण इत्येवंलक्षणाः पुद्गला भवन्ति ॥**

टी०—स्पर्श इत्यादि भाष्यम्। कर्मसाधनाः सर्वे स्पर्शादयः। इतिशब्दो यस्मादर्थे। यस्मादित्थंलक्षणाः पुद्गला भवन्ति तस्मान्न जीवाः पुद्गलशब्दवाच्या इति, यथा चैते परमाण्वादिगताः स्पर्शादयो गुणाः परमाण्वादिभ्यो भिन्नाश्चाभिन्नाश्च तथा 'गुणपर्यायवद् द्रव्यम्' इत्यत्र (३७) सूत्रे प्रतिपादयिष्यामः ॥ ननु च नैव केचन विज्ञानाद् बहिः स्पर्शादिमन्तः पुद्गला विद्यन्ते, विज्ञानमेव तथा प्रत्यवभासते, बाह्यार्थनिरपेक्षस्वप्नादाविवेति। अयुक्तमेतत्, अनुभवविरोधात्, यस्माद् देशविच्छेदेन स्वान्तर्वर्तिनोऽनुभवाद् बहिरवभासमानो दृश्यते नीलपीतादिरर्थः। स्वसंवेद्यो हि बुद्धिसन्निवेशी बाह्योर्थाकारानुकारो द्योतते स निह्नोतुमशक्यः, यदा चार्थस्य ज्ञानग्राह्यं स्वरूपं तद् द्योतते कथं सोऽर्थो नास्तीत्युच्यते, स्वप्ने च विपर्ययदर्शनादविपर्ययदर्शनाच्च जाग्रदवस्थायामित्यसमञ्जसमुदाहरणम्, प्रमाणप्रमाणाभासाविशेषाच्च। बाह्यार्थशून्यतायां हि वस्तुस्वलक्षणग्राहि ज्ञानं प्रमाणं प्रत्यक्षमर्थान्तरविकल्पमुखेन प्रवर्तमानं प्रत्यक्षाभासमित्येष विशेषो न स्यात्, तस्माद् विज्ञानं बहिरर्थस्वरूपानुकारितया साकारम्, अनाकारत्वे प्रत्यासत्तिविप्रकर्षाभावात् सर्वार्थग्रहणमग्रहणं वा स्यात्, अतो ग्राहकविशेषादेव ग्राह्यदृष्टिनिबन्धनम्, अन्यथाऽर्थज्ञानमित्येतदपि न स्यात्, व्यपदेशस्यापकारप्रभावितत्वात्, उपकारस्य च जन्यजनकभा[3]वनान्तरीयकत्वात्, अलमतिप्रसङ्गेन, प्रकृतमुच्यते—

---

१ 'पृथग्गुणानी०' इति क-ख-पाठः। २ 'बाह्यार्थाकारो' इति ग-पाठः। ३ 'भावाना०' इति ग-पाठः।

स्पर्शादीनां प्रकाराः

भा०—तत्र स्पर्शोऽष्टविधः–कठिनो मृदुर्गुरुर्लघुः शीत उष्णः स्निग्धो रूक्ष इति । रसः पञ्चविधः–तिक्तः कटुः कषायोऽम्लो मधुर इति । गन्धो द्विविधः–सुरभिरसुरभिश्च[1] । वर्णः पञ्चविधः–कृष्णो नीलो लोहितः पीतः शुक्ल इति ॥ २३ ॥ किञ्चान्यत्—

कठिनप्रमुखस्पर्शादीनां लक्षणानि

टी०—तत्रेत्यादि । स्पर्शादीनामनन्तपर्यायत्वेऽपि मौलभेदप्रसिद्ध्यर्थमिदं प्रक्रियते, कठिनादयो विद्वदङ्गनाबालादिप्रतीतास्तथापि सुप्रयुक्तकारिभिरमूनि लक्षणानि प्रत्येकं प्रकाश्यन्ते, अनमनात्मकः कठिनः, सोन्नतिलक्षणो मृदुः, अधोगमनहेतुर्गुरुः, प्रायस्तिर्यगूर्ध्वगमनहेतुर्लघुः, वैशद्यकृत् स्तम्भनस्वभावः शीतः, मार्दवपाककृदुष्णः, संयोगे सति संयोगिनां बन्धकारणं स्निग्धः, तथैवाबन्धकारणं च रूक्षः, इतिशब्दः परिस्थूरस्पर्शभेदेयत्ताप्रतिपादनार्थः । अत्र च स्निग्धरूक्षशीतोष्णाश्चत्वार एवाणुषु सम्भवन्ति, स्कन्धेष्वष्टावपि यथासम्भवमभिधानीयाः । श्लेष्मशमनकृत् तिक्तः, श्लेष्मभेदपाटवकृत् कटुः, अन्नरुचिस्तम्भनकर्मा कषायः, आश्रवणक्लेदनकृदम्लः, ह्लादनबृंहणकृन्मधुरः, लवणो मधुरान्तर्गत इत्येके, संसर्गज इत्यपरे । सुरभिश्चन्दनोशीरकश्मीरजादीनाम्, असुरभिर्लसुनविष्ठादीनाम्, सौमुख्यवैमुख्यकारित्वात् साधारण इत्येके, तन्न, उभयोरन्तर्णीतविषयत्वात् । कृष्णादयो वर्णाः क्रमेणाञ्जनशुकपत्ररुधिरकाञ्चनशङ्खादिषु विभावनीयाः, संसर्गजाः सारङ्गादयः । एवमेतद् द्रव्यमेव स्पर्शादिभेदेन भिद्यते त्वगादीन्द्रियप्राप्तमनेकशक्तियुक्तत्वाद् द्रव्यनयाभिप्रायः, पर्यायस्य तु स्पर्शादय एव, न द्रव्यं, तदग्रहे तद्बुद्ध्यभावादिति ॥ २३ ॥

किञ्चान्यदित्यनेन सम्बन्धयति । असकलरूपद्रव्यधर्मनिर्देशादनेनेदमुच्यते–किञ्चान्यदिति । पुद्गलानां न केवलं स्पर्शादयो धर्माः, शब्दादयश्चेति दर्शयति—

पुद्गलानां शब्दादिधर्माः

**सूत्रम्—शब्द-बन्ध-सौक्ष्म्य-स्थौल्य-संस्थान-भेद-तमश्छाया-तपोद्योतवन्तश्च ॥ ५–२४ ॥**

टी०—शब्दादयः कृतद्वन्द्वा मतुपा निर्दिश्यन्ते पुद्गलपरिणामप्रदर्शनाय । चशब्दः पुद्गलानुकर्षणार्थः ॥

भा०—तत्र शब्दः षड्विधः–ततो विततो घनः शुषिरः[2] संघर्षो भाषा इति ॥

टी०—तत्र शब्द इत्यादि भाष्यम् । तत्रेति तेषु शब्दादिषु पुद्गलपरिणामेषु शब्दस्तावदेवंस्वरूपः, विवक्षावशादन्वयव्यतिरेकाभ्यां प्रधानगुणभावतया सामान्यविशेषवतोऽर्थस्याभि-

---

१ 'सुरभिश्चासुरभिश्च' इति क-ख-पाठः । २ '०रो घर्षो भाष इति' इति घ-पाठः ।

धायकः प्रत्यर्थनियतसङ्गतवर्णादिविभागवान् ध्वनिरेव शब्दः, न स्फोटः, अनादिवृद्धपरम्परासङ्केतप्रसिद्धिवशात् प्रत्यर्थनियतत्वम्, परस्परापेक्षातः स्वाभिधेयैकार्थकारितया शिबिकोद्वाहकवत् सङ्गतत्वम्, वर्णपदवाक्यानि विभागः, तद्वान् ध्वनिरेव च शब्दः-श्रोत्रग्रहणः, न स्फोटः शालातुरीयमतानुसारिवैयाकरणनिकायपरिकल्पितः, तेषां हि ध्वनिरुच्चरितः स्फोटं किलाभिव्यनक्ति, तस्मादभिव्यक्तादर्थप्रतीतिरिति, असम्बन्धमेतत्, अनित्यत्वापत्तेः, स्फोटस्य अभिव्यज्यमानत्वान्मूलकीलोदकादिवत्, अर्थप्रतीतिहेतुत्वात्, प्रदीपादिवत्, प्रदीपादिनित्यत्वे वा दृष्टान्ताभावः, न च स्फोटमभिव्यञ्जन्ति ध्वनयः, अचाक्षुषप्रत्यक्षत्वात् गन्धवदित्यतो ध्वनिरूपः शब्दः स्मृतेः कारणम्, सर्वस्य शब्दस्य प्राग्व्युत्पन्नसङ्केतवशादर्थप्रत्यायनम्, ततश्च पूर्वोपलब्धार्थानुस्मरणात् स्मार्तं शब्दविज्ञानम्, न चान्यापोहमात्रं शब्दार्थः, विधिनिरपेक्षस्य व्यतिरेकस्यात्राप्रसिद्धेरन्वयस्य च व्यतिरेकशून्यस्यानुपलब्धेः, परस्परापेक्षाभ्यामन्वयव्यतिरेकाभ्यां सर्वत्रार्थाधिगतेः व्यतिरेकस्यैव प्राधान्यमित्ययुक्तम्, तथाचाह दत्तकभिक्षुरेव—"अर्थान्तरापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इत्युच्यते"। हिशब्दो यस्मादर्थे। यथा वृक्षशब्दोऽवृक्षशब्दनिवृत्तिं स्वार्थे कुर्वन् स्वार्थं वृक्षलक्षणं प्रत्याययतीत्युच्यते, एवं च निवृत्तिविशिष्टं वस्तु शब्दार्थः, न निवृत्तिमात्रम्, अलक्षणीयमेव च स्यान्निवृत्तिमात्रमवस्तुत्वात् खरविषाणकुण्ठतीक्ष्णतादिवर्णनावत्, अत्र च न प्राग् विधिना घटं गृहीत्वा पश्चादन्यापोहं करोति, नाप्यन्यापोहं कृत्वा पश्चाद् घटं कालभेदेन गृह्णाति, क्रमेण हि ग्रहणे ह्रसिष्ठत्वात् क्षणिकत्वाच्च सर्वभावानां ध्वनेर्ज्ञानस्य च न युक्तं व्यापारद्वयानुष्ठानम्, सन्तानाच्चेत् तदयुक्तमवस्तुत्वात्, एवं तर्हि घटग्रहणमन्यापोहश्च युगपदुभयं सिद्धम्, यथा सवितुरुदये सन्तमसविदलनं स्वरूपप्रकाशनं च स्वभावात्, एवं सत्युभयमभिधेयं सामान्यं विशेषश्चेत्यवशेनापि प्रतिपत्तव्यमन्यापोहशब्दार्थवादिना, अन्वयव्यतिरेकयोस्तुल्यकक्षत्वाद् विधेयमपि प्रधानमेवास्तु, नहि द्वयोरर्थयोर्धवखदिरवद् युगपदुपात्तयोरेकस्य गुणभावकल्पना श्रेयसी॥ ननु चान्वयस्य प्राधान्येऽभ्युपेयमाने प्रयत्नानन्तरीयकत्वमव्याप्तसपक्षं सन्नैवानित्यत्वं गमयेत्, केन चेदमुक्तं-व्याप्तसपक्षं गमयति अव्याप्तसपक्षं न गमयतीति, एतावत् तु उच्यते-अन्वयनिरपेक्षो न गमयति व्यतिरेकः, नापि व्यतिरेकनिरपेक्षोऽन्वयः प्रतिपादकोऽर्थस्य, परस्परापेक्षतायां च शिबिकोद्वाहकादिवत् सर्वत्र प्राधान्यं, क्वचिद् विवक्षावशात् वाऽन्यतरस्य गुणप्रधानकल्पनेति। यथाऽऽह—द्वादशशतिकायाम् "यदप्युक्तमप्रसक्तस्य किमर्थं प्रतिषेध इति, नैवैतत्, प्रतिषेधमात्रमुच्यते, किन्तु तस्य वस्तुनः कश्चिद् भोगार्थान्तरनिवृत्त्या लोके गम्यते यथा विषाणित्वादनश्व इति, न चार्थाक्षिप्तो विशेषः, साक्षादभिधीयमानत्वात्", यथैव सामान्यमुच्यते तथा विशेषोऽपीत्युभयमत्र मुख्यं वाच्यमित्यतः सामान्यविशेषात्मकमेवाभिधेयम्। शब्दश्च

शब्दस्य स्फोटाद् भिन्नत्वम्

१ 'वृक्षशब्दः' क-ख-योर्नास्ति। २ 'वर्णनवत्' इति क-पाठः।

पुद्गलद्रव्यपरिणामः, तत्परिणामता चास्य मूर्तत्वात्, मूर्तता च द्रव्यान्तरविक्रियापादनसामर्थ्यात् पिप्पलादिवत्, ताड्यमानपटहतलस्थकलिंचादिप्रकम्पनात्, तथा शङ्खादिशब्दानामतिमात्र-

शब्दस्य पुद्गलत्वे हेतवः

प्रवृद्धानां श्रवणबधिरीकरणसामर्थ्यम्, तच्च नाकाशादावमूर्तेऽस्ति, तथा प्रतीपयायित्वात् पर्वतप्रतिहताश्मवत्, द्वारानुविधायित्वादातपवत्, संहारसामर्थ्यादगुरुधूपवत्, वायुना प्रेर्यमाणत्वात् तृणपर्णादिवत्, सर्वदिग्ग्राह्यत्वात् प्रदीपवत्, अभिभवनीयत्वात् तारासमूहादिवत्, अभिभावुकत्वात् सवितृमण्डलप्रकाशवत्, महता हि शब्देनाल्पोऽभिभूयते शब्द इति प्रतीतम्, तस्मात् पुद्गलपरिणामः शब्दः ॥ ननु चाकाशस्य गुणाः–शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाः, आकाशस्य गुणः शब्द इति कणभुङ्मतम्, एकद्रव्यवत्त्वाद्, एकेनाश्रयद्रव्येण द्रव्यवत्त्वमेकद्रव्यवत्त्वम्, अथवा एकं च तत् द्रव्यं चेत्येकद्रव्यं तदस्याश्रयोऽस्तीत्येकद्रव्यवांस्तद्भाव एकद्रव्यवत्त्वं तस्मादेकद्रव्यवत्त्वान्न द्रव्यम्, न च कर्माचाक्षुषप्रत्यक्षत्वात्, अतः परिशेषाद् गुणः, स च क्षणिकः प्रागूर्ध्वं चोच्चारणात् सत्त्वे लिङ्गाभावात्, कारणसामग्र्याः प्रागभूतात्मलाभत्वात्, शब्दाभिव्यञ्जकवस्त्वभावात्, सति चाभिव्यञ्जके कारणजो विकारो न स्यात्, नहि घटस्य प्रदीपादिदिव्यमणि-

शब्दस्य गुणत्वे वैशेषिकविचारः

व्यञ्जकसन्निधाने परिमाणानुविधानं दृष्टम्, तावानेव हि घटकोऽभिव्यञ्जकभेदे सत्यपि, अयं त्वल्पमध्यादिभेद उपलभ्यते, तथा–भेर्यादिसंयोगान्निष्पत्तेर्वेणुपर्वविभागाच्छब्दाच्च शब्दनिष्पत्तेः वीचिसन्तानवत्, न चायं विशेषगुणः स्पर्शवतां द्रव्याणां भूजलानलानिलानामकारणगुणपूर्वत्वात्, यथा शुचौ शङ्खे कारणगुणपूर्वं धवलं रूपमालक्ष्यते, विनष्टेऽपि तस्मिन् जलजे तथालक्षणमेव रूपं शकलेषु गृह्यते, न त्वेवं भेर्यादिशब्दाः प्रध्वस्तेषु भेर्यादिषु तदवयवेषूपलभ्यन्ते, शरीरे वा सामश्लोकादिशब्दाः शरीरावयवेषु वोपलक्ष्यन्ते, तस्मान्न कारणगुणपूर्वः शब्दः, तथा यदि स्पर्शवतो गुणः स्यात् शब्दस्ततो यावत् तानि स्पर्शवद् द्रव्याणि तावद् भवेद् रूपादिवत्, न चैवमुपपद्यते, तस्मादयावद्द्रव्यभावित्वान्न पृथिव्यादिगुणः शब्दः, इतश्च न स्पर्शवद्द्रव्यगुणः शब्दः, आश्रयादन्यत्रोपलब्धेः, अन्यत्र हि शङ्खमुखसंयोगोऽन्यत्र दिगन्तरेऽवस्थितैः श्रोतृभिरुपलभ्यते शब्दः, स्पर्शवद्गुणास्तु रूपादयोऽन्यत्राश्रयान्न गृह्यन्ते, तस्मान्न शब्दः स्पर्शवतां गुणः, बाह्येन्द्रियप्रत्यक्षत्वाच्च नात्ममनोदिक्कालानाम्, पारिशेष्यादाकाशगुणः, लिङ्गमाका-

शब्दस्य गुणत्वनिरासः

शस्यानुपलभ्यमानस्येति । तदेतदघटमानकमेव वैशेषिकैर्वाचालतया स्वमतिविकल्पशिल्परचनामात्रमाविष्क्रियते गगनमहार्शिखरवर्णनवत्, मूर्तत्वं हि प्रत्यपादि प्रागस्यास्माभिर्युक्तितः, तत् कथं मूर्तस्य व्योमगुणत्वोपपत्तयः सङ्गंस्यन्ते? नहि रूपादयो व्योमगुणा इति व्याहारः शोभते, पुद्गलानामेव हि

१ 'कलिम्बादीप्र' इति ग-पाठः । २ 'द्रव्यबन्धात्' इति क-ख-पाठः । ३ 'कारणतो' इति ग-पाठः । ४ 'शिखरवत्' इति क-ख-पाठः ।

तथाविधः परिणामः शब्दव्यपदेशभागित्येकद्रव्यवत्त्वाभावः, ततश्च स्याद् द्रव्यं स्याद् गुणः, परिणामस्य परिणामिनोऽर्थान्तरानर्थान्तरत्वेनाभ्युपेतत्वात्, एतेनानित्यत्वैकान्तः प्रत्युक्तः, सर्ववस्तूनां द्रव्यपर्यायात्मकत्वात्, एवं तर्ह्याकाशस्यापि केनचिदाकारेण गुण एवेति चेत्, नामाकाशादिविवक्षावशाददोषोऽयमनेकान्तवादिनः, द्रव्यपरिणाममात्रत्वाच्च कर्मणोऽचाक्षुषप्रत्यक्षताऽप्यसिद्धा, यदि कथञ्चित् क्षणिकत्वम्, सिद्धसाध्यता, सर्वात्मना चेत्, दृष्टान्ताभावः, सत्त्वमपि केनचित् पुद्गलरूपाद्याकारेणेत्यतः सत्त्वे लिङ्गाभावादित्यसम्बद्धम्, कारणसामग्र्या चाकारान्तरावस्थानमापद्यत इत्युत्थितासीनशयितपुरुषवदित्यभूतात्मलाभत्वमसिद्धम्, शब्दपर्यायेणाभूत इति चेत्, उक्तमसकृन्न वस्तु पर्यायमात्रं, किं तर्हि ? द्रव्यं पर्यायश्चेत्युभयम्, अभिव्यक्तिदूषणान्यप्येकान्तावस्थितवस्तुपक्षेऽवतरीतुमुत्सहन्ते, न तु परिणामायस्य कथञ्चिदनित्यं कथञ्चिन्नित्यमिति, दण्डादिताडनोत्थितभेर्यादिपुद्गलाश्च समासादितशब्दरूपादिमन्तः सन्तोऽपि सूक्ष्मत्वात् कारणगुणपूर्वका अपि नोपलक्ष्यन्ते, विध्यातदीपशिखारूपादिवद् गन्धपरमाणुव्यवस्थितरूपादिवद् वा, न च सर्वदा स पर्यायः शब्दाख्यः प्रादुरस्ति, द्रव्यक्षेत्रकालभावापेक्षत्वात् पित्तादि[१]कोपवत्, भेर्याद्याश्रयाश्च निश्च(स्स)रन्तः स्कन्धाः शब्दपर्यायमजहतो दिगन्तरस्थितैरपि गृह्यन्त इति नाश्चर्यम्, नैव चोपलभ्यते स्वोपघ्नादन्यत्र शब्दपरिणामः, तादृग्विधाकारेषु परमाणुष्वेवावतिष्ठते, आध्यात्मिकश्च शब्दः काययोगात्तशब्दवर्गणायोग्यस्कन्धपरिणतिर्वाग्योगः, प्रयोगविक्षिप्तो रूपादिमत्पुद्गलसङ्घात एवेति, बाह्यस्त्वनेकाकारः सङ्घर्षजादिः । अपि च–शब्दत्वं नित्यमभ्युपयन् कणादः पर्यनुयुज्यते श्रावणत्वान्नित्यः शब्दत्ववच्छब्दः, कृतकत्वस्यानित्यत्वेन व्याप्तेर्विरुद्धाव्यभिचारित्वमिति

नित्यानित्यत्वयोर्विरोधाभावः

चेत्, नित्यानित्यस्वभावसर्वपदार्थवादिनस्तन्न बाधायालम्, अनेकान्तवादिना च न नित्यत्वानित्यत्वयोर्विरोधोऽभ्युपगम्यते, विरोधलक्षणासम्भवात्, एकस्तावद् विरोधोऽहिनकुलाग्निजलादीनामेकस्मिन् काले सति संयोगे द्वित्ववदनेकाश्रयत्वाद् वध्यघातकलक्षणः, नह्यसंयुक्तमुदकमग्निं विध्यापयति, त्रैलोक्येऽप्यग्न्यभावप्रसङ्गात्, संयोगेन तु क्षणमात्रावस्थितत्वात् पश्चादेकस्याऽबलता द्वितीयस्य बलीयस्त्वम्, न चैवं नित्यानित्यत्वयोः क्षणमात्रमप्येकस्मिन् वृत्तिरेकान्तवादिनाऽभ्युपेयते, अतो न वध्यघातकलक्षणो विरोधः समस्ति, नाप्यसहावस्थानलक्षणः, तत्र हि शीतोष्णयोः फले वृन्तसंयोगविभागयोराम्रफले च श्यामतापीततयोर्नैकस्मिन् वस्तुनि एककाला वृत्तिरस्ति, किन्त्वेकस्य प्राग्विद्यमानता द्वितीयस्य चोत्पद्यमानतास्वभाव इत्यसावुत्पद्यमानः पूर्वं विरुणद्धि, यथा सहकारफले पीतता श्यामताम्, न चैवमवस्थितं प्राग्नित्यत्वमनित्यत्वेनोपजायमानेन नाश्यते, तद्धि नित्यमेव न स्यादध्रुवत्वादिति, न च प्रतिबध्यप्रतिबन्धकलक्षणो विरोधः स्याद्वादिनं प्रति घटते, यत एकस्मिन्नात्मद्रव्ये युगपद् धर्माधर्मावुभौ सम्भवतः, तत्र

१ 'लभ्यन्ते' इति क-पाठः ।

त्वेकस्य गुणभूतत्वमन्यस्य प्रधानत्वमेवं चेत्, इष्यते एव द्रव्यपर्याययोरन्यतरस्य गुणप्रधानभावः, त्वयाऽप्येकस्मिन् काले द्रव्ये च धर्माधर्मावश्यमभ्युपगन्तव्यौ, अन्यथा प्रतिबन्ध्यप्रतिबन्धकभाव एव न स्यात्, अतो वाङ्मात्रमेव विरोध इति । न च सामान्यादत्यन्तभिन्ना व्यक्तिरिति जैनसिद्धान्तः । एतेन नादवृद्धिः परेति प्रत्युक्तम्, नादो महान् मध्योऽल्पश्च, न शब्द इति शबरेणोक्तम्, तदसत्, शब्दस्यैव ताथाविध्यात्, तीव्रमन्दमध्यप्रयत्नभेदान्महाञ्छब्दोऽल्पो मध्यश्चेति सामानाधिकरण्येन शब्द एव व्यपदिश्यते, न च शब्दव्यतिरिक्तं श्रोत्रस्य ग्राह्यमस्ति, शब्दधर्म एव नाद इति चेत्, स ततोऽन्योऽनन्य इति वाच्यम्, उभयथा च दोष इति । येऽपि प्रधानपरिणाममुशन्ति शब्दं तैरपि सामान्यविशेषवान् मूर्तश्चाभ्युपेयः, अन्यथा तत्कृतव्यवहारो विच्छिद्येत, येऽपि सङ्गिरन्ते श्रोत्रेन्द्रियविषयमुपात्तानुपात्तोभयमहाभूतहेतुकं शब्दम्, तैरपि न विशेषमात्रमुत्खातसामान्यमूलमवलम्बनीयम्, अयोनयो हि विशेषाः खपुष्पसौरभवदनासादितात्मलाभा एव स्युः, एकान्तक्षणिकता च दृष्टान्ताभावादेवातिदुर्लभेति । तस्मादवस्थितमेतत्—पुद्गलद्रव्यमेव प्रतिविशिष्टपरिणामानुगृहीतं शब्द इति । स द्विधा विस्रसाप्रयोगभेदात्, तत्र वस्रसिको जलधरध्वानादिः, प्रयोगजो जीवव्यापारनिष्पन्नः षोढा ततादिः, ततो मृदङ्गपटहादिसमुद्भवः, विततो वीणात्रिसरिकादितन्त्रीप्रभवः, कांस्यभाजनकाष्ठशलाकादिजनितो घनः, वेणुकम्बुवंशविवराद्युद्भवः शुषिरः, क्रकचकाष्ठादिसङ्घर्षप्रसूतः सङ्घर्षः, व्यक्तवाग्भिर्वर्णपदवाक्याकारेण भाष्यत इति भाषा, प्रतिनियतसंस्थानान्यक्षराणि वर्णाः, वर्णसमुदायः पदम्, पदसमुदायो वाक्यमर्थविशेषप्रतिपत्तिहेतुः, इतिशब्दः शब्दभेदेयत्तापरिसमाप्तिप्रदर्शनपरः ॥

अन्यमतपूर्वकं शब्दस्वरूपम्

शब्दस्य भेदप्रभेदाः

**भा०—बन्धस्त्रिविधः—प्रयोगबन्धो विस्रसाबन्धो मिश्रबन्ध इति । स्निग्धरूक्षत्वाद् भवतीति वक्ष्यते ( अ० ५, सू० ३२ ) ॥**

बन्धस्य त्रैविध्यम्

**टी०—बन्धस्त्रिविध इत्यादि** । बन्धनं बन्धः—परस्पराश्लेषलक्षणः, प्रयोगो—जीवव्यापारस्तेन घटितो बन्धः प्रायोगिकः—औदारिकादिशरीरजतुकाष्ठादिविषयः, विस्रसा—स्वभावः प्रयोगनिरपेक्षो विस्रसाबन्धः, स द्विधा आदिमदनादिमद्भेदात्, तत्रादिमान् विद्युदुल्काजलधराग्नीन्द्रधनुःप्रभृतिर्विषमगुणविशेषपरिणतपरमाणुप्रभवः स्कन्धपरिणामः, अनादिरपि धर्माधर्माकाशविषयः, प्रयोगविस्रसाभ्यां जीवप्रयोगसहचरिताचेतनद्रव्यपरिणतिलक्षणः स्तम्भकुम्भादिर्मिश्रः, अत्र चोभयमपि प्राधान्येन विवक्षितम्, सामान्यलक्षणं च बन्धस्य स्निग्धरूक्षत्वादित्युपरि व्याख्यास्यते, एतच्च बन्धलक्षणमनादौ वैस्रसिके न सम्भवत्यन्यत्र तु सङ्गच्छते, 'सामान्योक्तो विधिर्विशेषेऽवस्थानं लभत ' इति वचनात् ॥

---

१ पौद्गलिकबन्धस्यैव लक्ष्यत्वात् नोपयोगोऽस्य, बन्धसामान्याधिकारे एव विस्रसाबन्धस्यानादितया यामः ।

**भा०—सौक्ष्म्यं द्विविधम्–अन्त्यमापेक्षिकं च । अन्त्यं परमाणुष्वेव, आपेक्षिकं च द्व्यणुकादिषु सङ्घातपरिणामापेक्षं भवति । तद्यथा–आमलकाद् बदरमिति ॥**

सौक्ष्म्यस्य द्वैविध्यम्

**टी०—सौक्ष्म्यं द्विविधमित्यादि ।** सूक्ष्मता सौक्ष्म्यं–पुद्गलपरिणामः, तद् द्विधा, अन्ता–विभागाः परमाणवस्तद्भवमन्त्यमन्यत्रासम्भवात् परमाणुष्वेवेत्युच्यते, अपेक्षा–प्रतीत्यबुद्धिस्तत्प्रयोजनमापेक्षिकम्, द्व्यणुकस्कन्धस्त्र्यणुकाद्यपेक्षया सूक्ष्मः चतुरणुकादीन् प्रतीत्य त्र्यणुकस्कन्धः सूक्ष्म इत्यादि बहुभेदम्, सङ्घातपरिणामः–स्कन्धपरिणामस्तदपेक्षं भवति । तद्यथेत्यनेन निदर्शनोपन्यासं सूचयति, आमलकं प्रतीत्य बदरं सूक्ष्मम्, आदिशब्दार्थ इतिशब्दः ॥

**भा०—स्थौल्यमपि द्विविधम्–अन्त्यमापेक्षिकं च । सङ्घातपरिणामापेक्षमेव भवति । तत्रान्त्यं सर्वलोकव्यापिनि महास्कन्धे भवति । आपेक्षिकं बदरादिभ्य आमलकादिष्विति ॥**

स्थौल्यस्य द्वैविध्यम्

**टी०—स्थौल्यमपीत्यादि ।** स्थूलभावः स्थौल्यं–परमाणुप्रचयपरिणामः, तत्रान्त्यमशेषलोकव्यापिन्यचित्तमहास्कन्धे[1], इह चावयवविकासः स्थौल्यं विवक्षितम्, प्रवचने त्वयं सूक्ष्मपरिणाम एवाधीतः, यदि च बादरः स्थूलपरिणामः स्यात् ततो महामहीध्रवत् समस्तं लोकमुत्सादयेदतः[2] स्थौल्यं विकासितावयवानामचक्षुर्गम्यम्, आपेक्षिकं तु बदरादामलकं स्थूलमामलकाद् दाडिमम्, इह तु विकासे सत्यप्यवयवानां बादरः परिणामः, ततश्चामलकादिर्नयनोपलभ्यम्[3] ॥

**भा०—संस्थानमनेकविधम् । दीर्घह्रस्वाद्यनित्थन्त्वपर्यन्तम् ॥**

**टी०—संस्थानमित्यादि ।** आकृतिः संस्थानं रचना सन्निवेशः, तद् द्विविधमात्मानात्मपरिग्रहात्, तत्रात्मानः पृथिव्यप्तेजोवायुवनस्पतयः द्वित्रिचतुरिन्द्रियाः पञ्चेन्द्रियाश्च, क्रमेणैषां मसूरस्तिबुकसूचीकलापपताकानित्थन्त्वसंस्थानानि, पुद्गलकृतानि शरीराणीतियावत्, विकलेन्द्रियाणां हुण्डकं त्रयाणामपि वपुः, पञ्चेन्द्रियाणां षोढा शरीरसन्निवेशो यथासम्भवं नामकर्मोदयनिर्वृत्तः समचतुरस्र–न्यग्रोधपरिमण्डल–सादि–कुब्ज–वामन–हुण्डलक्षणोऽनया गाथया विभावनीयः—

"[4]तुल्लं वित्थडबहुलं, उस्सेहबहुं च मडहकोट्ठं च ।
हिट्ठिल्लिकायमडहं, सव्वत्थासंठियं हुंडं ॥"—आर्या

अथाजीवपरिगृहीतं वृत्त–त्र्यस्र–चतुरस्रायत–परिमण्डलभेदात् पञ्चधा, तत्र वृत्तं द्विविधं युग्मायुग्मभेदात्, युग्ममपि द्विविधं प्रतरघनभेदात्, तत्र प्रतरयुग्ममिदं जघन्येन द्वादशप्रदेशम्, इदमेव च युग्मं घनवृत्तं भवति द्वादशभिरन्यैः प्रक्षिप्तैर्मध्यमेषु च चतुर्षु धरकेषूपर्य–

---

१ अचित्तमहास्कन्धः स्थूलताऽभावात् अपर उत्कृष्टप्रदेशिको ग्राह्यः, यतस्तस्याष्टस्पर्शवत्ता, न त्वचित्तमहास्कन्धस्य ।
२ प्रचयविशेषेण स्थूलरूपेण धूमादिवत् व्यापकत्वेऽपि नोत्सादनम् । ३ '०कादि नियतोपलभ्यम्' इति क–ख–पाठः ।
४ तुल्यं विस्तृतबहुलं, उत्सेधबहुलं च मडभकोष्ठं च ।
अधस्तनकायमडभं, सर्वत्रासंस्थितं हुण्डम् ॥

धश्चतुर्भिः प्रक्षिप्तैर्द्वात्रिंशत्प्रदेशमिदम्,[1] विषमप्रतरवृत्तं तु जघन्येन पञ्चप्रदेशमिदम्,[1] एतदेव मध्यगेहे प्रदेशद्वयक्षेपादुपर्यधश्च[2] विषमघनवृत्तं सप्तप्रदेशमिति, [3]उत्कर्षेणानन्तप्रदेशमसङ्ख्येयप्रदेशावगाढम्, अधुना त्र्यस्रं द्विधा युग्मायुग्मभेदात्, युग्मं द्विधा प्रतरघनभेदात्, युग्मप्रतरत्र्यस्रं जघन्येन षट्प्रदेशमिदम्,[4] उत्कर्षेणानन्तप्रदेशम्, युग्मघनत्र्यस्रं जघन्येन चतुःप्रदेशम्, उत्कर्षेणानन्तप्रदेशम्। अयुग्ममपि द्विधा प्रतरघनभेदात्, ओजप्रतरत्र्यस्रं जघन्येन त्रिप्रदेशम्,[6] उत्कर्षेणानन्तप्रदेशम्, घनत्र्यस्रं जघन्येन पञ्चत्रिंशत्प्रदेशम्, [7]अत्रैव चान्त्यान्त्यप्रदेशानुज्झित्वा दश षट् त्रय एकश्च क्षेप्यः, उत्कर्षेणानन्तप्रदेशम्, एतदेव प्रदेशचतुरस्रमपि द्विधा युग्मायुग्मभेदात्, युग्मं द्विधा प्रतरघनभेदात्, युग्मप्रतरचतुरस्रं जघन्येन चतुःप्रदेशम्,[8] उत्कर्षेणानन्तप्रदेशम्, एतदेव प्रदेशचतुष्टयक्षेपाद् युग्मघनचतुरस्रं भवत्यष्टप्रदेशम्, उत्कर्षेणानन्तप्रदेशम्, ओजचतुरस्रमपि द्विधा प्रतरघनभेदात्, ओजप्रतरचतुरस्रं जघन्येन नवप्रदेशम्,[9] इदमुत्कर्षेणानन्तप्रदेशम्, एतदेवौजघनचतुरस्रं भवत्युपर्यधश्च नवभिर्नवभिः प्रक्षिप्तैः सप्तविंशतिप्रदेशम्, उत्कर्षेणानन्तप्रदेशम्, आयतमपि द्विधा युग्मायुग्मभेदात्, युग्मं द्विधा श्रेणिप्रतरभेदात्, तत्र युग्मश्रेण्यायतं जघन्येन द्विप्रदेशम्,[10] उत्कर्षेणानन्तप्रदेशम्, युग्मं प्रतरायतं जघन्येन षट्प्रदेशम्,[11] उत्कर्षेणानन्तप्रदेशम्, एतदेव च युग्मघनायतं भवति यथान्यासमुपरिषट्प्रदेशक्षेपाज्जघन्येन द्वादशप्रदेशम्, उत्कर्षेणानन्तप्रदेशम्, अयुग्मायतमपि द्विधा श्रेणिप्रतरभेदात्, तत्रौजश्रेण्यायतं जघन्येन त्रिप्रदेशम्,[12] उत्कर्षेणानन्तप्रदेशम्, ओजप्रतरायतं जघन्येन [13]पञ्चदशप्रदेशम्, उत्कर्षेणानन्तप्रदेशमिदम्, एतदेवौजघनायतं भवत्युपर्यधश्च पञ्चदशभिः क्षिप्तैः जघन्येन पञ्चचत्वारिंशत्प्रदेशम्, उत्कर्षेणानन्तप्रदेशम्, परिमण्डलं द्विधा प्रतरघनभेदात्, तत्र प्रतरपरिमण्डलं जघन्येन विंशतिप्रदेशमिदम्, एतदेव घनपरिमण्डलं भवत्यन्यैर्विंशतिसंख्यैः प्रदेशैर्निहितैर्जघन्येन चत्वारिंशत्प्रदेशम्, उत्कर्षेणानन्तप्रदेशम् ॥ अत्र च भाष्ये दीर्घह्रस्वग्रहणाद्[14]आयतमेव परिगृहीतमादिशब्दाच्छेषाणि, उक्तेन प्रकारेण वृत्तादिना निरूपयितुं यन्न शक्यं तदनित्थं तद्भावोऽनित्थन्त्वं तत्पर्यन्तमनेकधा संस्थानमिति ॥

वृत्तादिसंस्थानानां तद्भेदपूर्विका व्याख्या

**भा०—भेदः पञ्चविधः—औत्कारिकः चौर्णिकः खण्डः प्रतरः अनुतट इति ॥**

**टी०—भेदः पञ्चविध** इत्यादि। एकत्वद्रव्यपरिणतिविश्लेषो भेदः, स च पुद्गलपरि-

---

१ o o o o । २ मध्याणोरुपर्यधश्च एकैकाणुन्यासात्। ३ चतुर्ष्वपि वृत्तभेदेषु समन्वाय्येतत्। ४ o oo ooo ।

५ oo o अत्र यस्य कस्यचिदुपरि न्यस्योऽन्योऽणुः। ६ oo o। ७ ooooo oooo ooo oo o । ८ oo oo। ९ ooo ooo ooo ।

१० oo । ११ ooo ooo । १२ ooo । १३ ooooo ooooo ooooo ।

१४ व्यवहारानुसार्युपदेशात् न कतिपयपरमाणुजन्यसंस्थानोपदेशः, अनित्थं तु संस्थानं दीर्घादिना व्यपदेष्टुं यन्नार्हं नाधिकारश्च जीवसंस्थानैरपि ।

णामो भिद्यमानवस्तुविषयत्वात्, तद्व्यतिरेकेणानुपलब्धेर्भिन्नद्रव्यमेव भेदः, तत्रौत्कारिकः समुत्कीर्यमाणदारुप्रस्थकभेरीबुन्दाघर्षादिविषयः, अवयवशश्चूर्णनं चौर्णिकः क्षिप्तपिष्टमुष्टिवत्, खण्डशो विशरणं खण्डभेदः क्षिप्तमृत्पिण्डवत्, प्रतरभेदोऽभ्रपटलभूर्यपत्रादिषु बहुतिथपुटोच्छोटनलक्षणः, अनुतटभेदस्तु वंशेक्षुयष्टित्वगुत्पाटनम्, इतिशब्देन भेदेयत्तामवधारयति ॥

भेदानां पञ्चविधत्वम्

**भा०—तमश्छायातपोद्योताश्च परिणामजाः ॥ सर्व एवैते स्पर्शादयः पुद्गलेष्वेव भवन्तीत्यतः पुद्गलास्तद्वन्तः ॥**

**टी०—तमश्छाये**त्यादि भाष्यम्। समानविचारत्वादेकप्रघट्टेन निर्देशः, एते च तमश्छायादयः पुद्गलद्रव्यपरिणामजा इति प्रतिपादयति। तमस्तावत् पुद्गलपरिणामो दृष्टिप्रतिबन्धकारित्वात् कुड्यादिवद् आवारकत्वात् पटादिवत्, छायाऽपि शिशिरत्वादाप्यायकत्वाज्जलवातादिवत्, आतपोऽपि तापकत्वात् स्वेदहेतुत्वादुष्णत्वादग्निवत्, उद्योतश्च चन्द्रिकादिराह्लादकत्वाज्जलवत् प्रकाशकत्वादग्निवत्, तथाऽनुष्णाशीतत्वात् उद्योतः पद्मरागोपलादीनाम्, अतो मूर्तद्रव्यविकारस्तमश्छायादिः॥

तमश्छायादीनां मूर्तद्रव्यविकारता

ननु च द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद् भावाभावस्तमः, यदि चेदं द्रव्यं भवेदनित्यत्वाद् घटादिद्रव्यवत् निष्पद्येत, न च द्रव्यवन्निष्पद्यते, अमूर्तत्वादस्पर्शत्वात् प्रकाशविरोधादणुभिरकृतत्वाच्च, नापि गुणः, तदाधारानुपलब्धेः प्रकाशविरोधाच्च, कर्मापि न भवति, तदाश्रयानुपलब्धेः संयोगविभागसंस्काराहेतुत्वात्, अतस्तेजसो यत्राभावस्तत्र तमः, तथा तेजसो द्रव्यान्तरावरणाच्च तमो भवतीति। अत्रोच्यते—व्यवधानक्रियासामर्थ्यात् कुड्यादिवत् तमः पौद्गलम्, अमूर्तत्वास्पर्शत्वपरमाण्वकृतत्वान्यसिद्धानि मूर्तत्वादियोगात् तमसः, सत्यपि च मूर्तत्वादिमत्त्वे न स्पर्शादयोऽस्मदादिभिर्लक्ष्यन्ते, तमसस्तथाविधपरिणतिभाक्त्वाद् वातायनदृश्यरेणुस्पर्शादिवत्। यत् तूक्तं—'प्रकाशविरोधात्' इति, न किल किञ्चित् कार्यद्रव्यं तैजसेन प्रकाशेन विरुध्यते, तमस्तु प्रकाशविरोधि तस्मान्न पृथिव्यादिकार्यं तम इति, एतदयुक्तम्, तेजःप्रकाशयोरेकत्वाभ्युपगमात्, जलद्रव्यं च विरोधकमित्यसिद्धार्थतैव, स्यादारेकानिरन्तरधारं वर्षति बलाहके प्रदीपोऽलिन्दकादिव्यवस्थापितः प्रद्योतत एव बहिः, यदि च विरोधः स्यान्न बहिः प्रकाशो विभाव्येत, जलपातेनापनीतत्वादिति। अत्रोच्यते—प्रादीपाः पुद्गलास्ताथात्म्यमपरित्यजन्तो निःसृताः तथाविधतामुदबिन्दुसम्पर्काद् विजहति, तत्समकालं चापरे प्रदीपशिखया विकीर्णाः कृशानुपुद्गलास्तमाकाशमश्नुवते, न च ते [3]जलपातेन विध्यापयितुं शक्याः, परिणामवैचित्र्याद् वडवानलावयवा इवेति, स्याद्वादिनां च

तमसः पुद्गलत्वम्

---

१ 'कभदीबुन्दाघ' इति क-ख-पाठः। २ 'भावस्तमः' इति क-ख-पाठः।
३ प्रदीपरश्मीनां पुष्करावर्तधाराभिरप्यनुपघातात्, न सर्वथा जलानलयोर्विरोध एव, उत्पत्तिस्थान एव विरोधः।

किञ्चिद् द्रव्यं केनचित् सह विरुध्यते दध्यादि तैलादिना न तु गुडादिना, न च किञ्चिन्न विरुध्यते तैलं दध्यादिना, न च तस्य द्रव्यता हातुं पार्यते, अतः परिणतिक्रमविशेषात् तथाविधं परिणाममपहाय पुद्गलाः परिणामान्तरेण वर्तन्ते पृथिव्यादिपरमाणुजातिनियमश्चासिद्धः, सर्वेषां स्पर्शत्वे सति रूपादिमत्त्वात्, गुणक्रिययोश्च द्रव्यपरिणाममात्रत्वात् तदाधारानुपलब्ध्याद्यप्यसिद्धम्, एतेन छायादयो व्याख्याताः। कथं पुनर्दर्पणतलादिषु प्रतिबिम्बं मुखादीनां सम्मुखमेव छायाकारेण परिणमते न पराङ्मुखम्? कथं वा कठिनमादर्शमण्डलं प्रतिभिद्य मुखतो विनिर्गताः पुद्गलाः प्रतिबिम्बमाजिहत इति? । यत् तावदुच्यते सम्मुखमेव प्रतिबिम्बमुदेति नान्यतोमुखमिति तत्र परिणामः स तादृशः पुद्गलानाम्, नहि तद्विषयः पर्यनुयोगः कर्तुं शक्यः, को हि नामाभिदध्यात् प्रेक्षापूर्वकारी पयः किमिति दध्यादित्वेन परिणमते तृणगोभक्ष्यादयो वा क्षीरादित्वेनेति, किमत्र युक्त्या? तथा हि तं पश्यामः, न च दृष्टे किञ्चिदनुपपन्नम्, उपहास्यश्चैवमाचक्षाणो भवति, केन हेतुना वा चक्षू रूपं गृह्णाति? तस्मान्न परिणामः पर्यनुयोगार्हः, येषामपि न परिणामस्तेषामपि मुखाद्याश्रित्यानेकं कारणं प्रतिबिम्बोत्पादः सम्प्रतिघस्तेनाकारेण भवति नान्येनेति तुल्यः पर्यनुयोगो विधेयः, प्रतिभेदः पुनः कठिनशिलातलपरिश्रुतजलेनायस्पिण्डेऽग्निपुद्गलप्रवेशेन शरीरात् प्रस्वेदवारिलेशनिर्गमनेन च व्याख्येयः प्रतिबिम्बोदयः शुचौ दर्पणेऽन्यत्र वा, तमश्छायादयः पुद्गलपरिणतिविशेषाः ॥

प्रतिबिम्बस्य पर्यालोचना

सम्प्रति निगमयति सूत्रद्वयोपात्तमर्थं **सर्व एवैत** इत्यादिभाष्येण । स्पर्शरसगन्धवर्णशब्दादयः पुद्गलेष्वेव भवन्त्यतः पुद्गलाः स्पर्शादिमन्त इति नित्ययोगार्थं विहितस्तत्परिणामविशेषाविष्कारी मतुप्प्रत्ययः, स्पर्शादिशब्दादिपरिणामो येषामात्मभूतो येषु वा ते तद्वन्त् इत्यनन्यत्वं प्राक्तनपरिणामापेक्षया चान्यत्वमिति ।

**भा०—अत्राह–किमर्थं स्पर्शादीनां शब्दादीनां च पृथक्सूत्रकरणमिति? ॥ अत्रोच्यते—स्पर्शादयः परमाणुषु स्कन्धेषु च परिणामजा एव भवन्ति[1]। शब्दादयश्च स्कन्धेष्वेव[2] भवन्त्यनेकनिमित्ताश्चेत्यतः पृथक्करणम् ॥ २४ ॥**

टी०–अत्राहेत्यादि भाष्यम् । गरीयस्त्वात् पृथग्योगस्य एकयोगप्रतिबन्धाचाभिलषितप्रसिद्धेः प्रश्नयति, आचार्यस्तु विवक्षितार्थप्रतिपत्तेरभावादेकयोगसङ्ग्रहव्युदासायाह—**स्पर्शादय** इत्यादि । प्राक्तनसूत्रोपन्यस्ताः स्पर्शादयः **परमाणुषु स्कन्धेषु** च द्व्यणुकादिषु नानाविधपरिणामोत्पत्तेः प्रादुर्भवन्ति, **शब्दादयः** पुनः स्कन्धविषया एव, नाणुविषयाः, द्व्यणुकादिस्कन्धविषयत्वप्राप्तौ नियमेन विकल्पयति, चशब्देनानेकनिमित्ताश्चेति, शब्दो न द्व्यणुकादिविषयोऽनन्ताणुकस्कन्धविषयत्वात्, एवमन्यदप्यायोज्यं सम्भवात्, अतः पृथग्योगकरणं विवक्षितमर्थं पुष्णाति नैकयोग इति ॥ २४ ॥

१ 'भवन्तीति' इति घ-पाठः।

२ अन्ययोगव्यवच्छेदफलोऽयं तेन न सर्वस्कन्धविषयाः शब्दादय इति।

**भा०—त एते पुद्गलाः समासतो द्विविधा भवन्ति ॥ तद्यथा—**

**टी०**—त एते पुद्गला इत्यादिसम्बन्धग्रन्थः । सत्यपि पुद्गलजातीयत्वे निरवयवसावयवभेदात् परिप्राप्तानन्त्या अपि आहितद्वैविध्या वेदितव्या इत्यभिप्रायः, य एते स्पर्शादिशब्दादिपरिणतिभाजः पुद्गलास्ते संक्षेपाद् द्विविधा भवन्ति, द्वैविध्योपन्यासाय तद्यथेत्याह—

**सूत्रम्—अणवः स्कन्धाश्च ॥ ५-२५ ॥**

पुद्गलानां द्वैविध्यम्

**टी०**—अण्यन्त इत्यणवोऽस्मदादीन्द्रियव्यापारातीतत्वात् केवलसंशब्दनसमधिगम्याः सौक्ष्म्यात्, स्थौल्याद् ग्रहणादानादिव्यापारसमर्थाः प्रायः स्कन्धाः सङ्घाताः इति, चशब्दः समुच्चेता, समस्तपुद्गला एव द्विविधाः-परमाणवः स्कन्धाश्चेति, तत्र परमाणोर्लक्षणमाचार्यैः पूर्वकैरेवावाचि तदुपन्यासाय **उक्तं** चेत्याह—

**भा०—उक्तं च—**

**"कारणमेव तदन्त्यं, सूक्ष्मो नित्यश्च भवति परमाणुः ।**
**एकरसगन्धवर्णो, द्विस्पर्शः कार्यलिङ्गश्च ॥"**—आर्या

**इति ।**

**टी०—कारणमेव तदन्त्यमित्यादि ।** करोतीति कारणं सकलभेदपर्यन्तवर्तित्वादन्त्यं, द्व्यणुकस्कन्धप्रभृति स्थूलसूक्ष्मभेदं कार्यं यावदचित्तमहास्कन्धः, स एष कारणकार्यविभागः कारिकया निरूप्यते—मूर्तस्य वस्तुनः कारणं परमाणवो द्व्यणुकादेः, अमूर्तस्य ज्ञानादेरात्मादयः, तच्चोभयमपि कारणं न सर्वथा नष्टम्, असत्त्वापत्तेः, न च तादृगवस्थं किञ्चिज्जनयति व्योमपुष्पादिवत्, नानष्टमेकान्तेनैवाविकृतत्वात् प्रागवस्थावत्, न चान्यावस्थाऽस्त्येकान्तवादिनः कार्यकारणाभ्युपगतौ ॥ ननु चावक्तव्यपक्षः प्रज्वलति पक्षान्तरत्वात्, इत्ययुक्तम्, अवक्तव्यतायाः सुदुःस्थितत्वात्, वक्तुमशक्यत्वात् तावदवक्तव्यं न भवति, लोके तथा प्रतीतत्वात्, नाज्ञानात्, आप्तस्य तदनुपपत्तेः, नाभावाद् वस्तुनः, तथादृष्टत्वात्, एवं तर्ह्ययमन्यः पक्षः कारणकार्ययोर्नाशोत्पादसमकालत्वात्, एषाऽपि हि व्यवस्था नातिक्रामति पूर्वं विकल्पद्वयम्, यतः कारणं नष्टं कार्यं चोत्पन्नम् । अनष्टे तावत् कारणे न कार्योत्पादः । अथैवं मन्येत—कारणं च विनश्यति कार्यं चोत्पद्यते, तदपि विचाराक्षमम्, तत्र विनश्यतीत्यनेन विनाशक्रियाविष्टमेकं वस्तूच्यते स्वरसभङ्गुरं वर्तमानकालावधिकमनासादितसमस्तनाशमर्धनष्टमतोऽयं बाह्यार्थः किंचिन्नष्टं किञ्चिचानष्टमुभयधर्माघ्रातं विनश्यतीत्यनेन[1] प्राप्तक्रियापवर्गमार्गमभिधीयते वस्तु, न चैवमसम्बद्धबुद्धव्याहारोपहतचेतसः सौगताः सङ्गच्छन्ते, अभिन्नैकतुलादण्डकद्रव्यप्रतिबद्धान्तद्वयस्य वा युक्ते नतोन्नती समकमत्र तु विनश्यति वस्तुनि नैकं किञ्चिदभिन्नमस्त्यन्वयि प्रदीर्घतुलादण्डकाकृति कारणं यत्प्रतिबद्धौ नाशोत्पादौ युगपद् भवेताम्, पूर्वोत्तरक्षणयोश्चात्यन्तभेदे सभागसन्ततिरियं विसभागसन्ततिरेषेति व्यपदेशाभावात् स्वसन्ततौ फलाधानमसाम्प्रतम्, नहि बुद्धसन्तानोऽस्मत्सन्ताने फलमाधातुमुत्सहते, तस्माद् यत् किञ्चिदेतत् ॥ प्रकृतमनुश्रियते—तत्र परमाण्वात्मादि परिणामिकारणम्, तस्मिन्

---

१ 'विनश्यतीत्यप्राप्तः' इति क-ख-पाठः ।

सति भवत्येव कार्यं द्व्यणुकादि ज्ञानादि वा, अन्यथा तु न भवत्येव, यतो[1] यस्मिन् सति भवत्येव यस्य सद्भावस्तदभावे च न भवत्येव यत् तत् कारणमितरत् कार्यम्, एवं च यदृच्छया प्राप्तानां व्योमाराममहीध्रादीनां कारणभावोऽन्यत्र निराकृतोऽवसेयः। एवमप्यनुपपन्नमवधारणं यस्मिन् सति भवत्येव कार्यं न भवत्येव चान्यथेति, यतः करवीरजन्मारुणोत्पलफलात् स्वकाण्डात् स्वबीजाच्च दृष्टम्, दूर्वा च गोलो-[2]

कार्यकारणलक्षणम्

मावि‌लोमादिभ्यः, सरस्तु शृङ्गादिति, अत्रोच्यते—परमाणुषु सत्सु भवत्येवेदमात्मनि चेत्यदोषः, सङ्क्षेपात् परिणामिकारणापेक्षाः परिणामाः प्रतिस्वमासाद्यन्त्युपजननं कारणवैकल्ये तु न प्रादुष्यन्ति मन्त्रप्रतिबद्धविषमारणशक्तिवत्। इत्थं निरवद्यं कार्यकारणलक्षणम्। यान्यपि कर्तृनिमित्तापेक्षाख्यानि कुम्भकारदण्डाकाशादीनि तान्यप्यनयैव दिशा योजनीयानीति न कश्चिद् विरोध इति सूचनीयः सूक्ष्म आगमसमधिगम्योऽस्मदादिभिः, नित्यश्चेति द्रव्यास्तिकनयापेक्षयाऽनुज्झितमूर्तिः, पर्यायापेक्षया तु नीलादिभिराकारैरनित्य एवेति, न ततः परसणीयोऽस्ति द्रव्यमिति परमाणुः, पञ्चानां रसानां द्वयोर्गन्धयोः पञ्चविधस्य वर्णस्यान्यतमेनैकेन रसादिना युक्तः, चतुर्णां स्पर्शानां मध्ये स्पर्शद्वयेनाविरुद्धेन युक्तः कार्येणास्मदादिप्रत्यक्षदृश्येन बादरपरिणामभाजाऽनेकविधेन लिङ्ग्यते—समधिगम्यत इति। अणुस्कन्धभेदप्रतिपादनायेदमाह—

**भा०—तत्राणवोऽबद्धाः, स्कन्धास्तु बद्धा एवेति ॥ २५ ॥**

**टी०—तत्राणव** इत्यादि। **अबद्धाः**—परस्परेणासंयुक्ताः परमाणवः, **स्कन्धाः** पुनर्बादरपरिणामपरिणता अष्टस्पर्शा बद्धा एवाणुसङ्घाताः, सूक्ष्मपरिणामभाजस्तु चतुःस्पर्शा एव भवन्ति बद्धाश्चे(एवे)ति परस्परसंहत्या व्यवस्थिता इति ॥ २५ ॥

**भा०—कथं पुनरेतद् द्वैविध्यं भवतीति? । अत्रोच्यते—स्कन्धास्तावत् ॥**

**अत्राह—**

**टी०**—अत्राहेत्यादिसम्बन्धग्रन्थः। अज्ञः प्रश्नयति—परमाणवः स्कन्धाश्चेति किंकृतोऽयं विशेषस्तुल्ये पुद्गलद्रव्यत्वे? सूरिराह—**स्कन्धास्तावदि**त्यादि। क्रमप्राप्तेषु परमाणुषु वक्तव्येषु स्कन्धास्तावद् बहुवक्तव्यत्वात् प्रथममुच्यन्ते, तावच्छब्दः क्रमभेदावद्योतनार्थः, यथा[3] च ते स्कन्धाः समुद्भवन्ति तथा सूत्रेऽत्र दर्शयति—

## सूत्रम्—सङ्घातभेदेभ्य उत्पद्यन्ते ॥ ५-२६ ॥

सङ्घातोद्भवे त्रिकारणता

**भा०—सङ्घाताद् भेदात् सङ्घातभेदादित्येभ्यस्त्रिभ्यः कारणेभ्यः स्कन्धा उत्पद्यन्ते द्विप्रदेशादयः।**

**टी०**—सङ्घातादित्यादि भाष्यम्। एतदुक्तं भवति—संहतत्वाद् भिन्नत्वात् सङ्घातभेदाच्च स्कन्धानामुद्भवः। इतिशब्दः कारणेयत्ताप्रकाशनार्थः, **द्विप्रदेशादय** इति सकलस्कन्धराशेराद्यस्कन्धोपन्यासभावनयाऽशेषस्कन्धविषयः सङ्घातः सुज्ञान इत्यादिग्रहणमुदचीचरत् ॥

१ 'ततो यस्मिन्' इति क-पाठः। २ 'गोलोमानुलोमा' इति क-पाठः। ३ 'यथा वा' इति क-ख-पाठः।

भा०—तद्यथा-द्वयोः परमाण्वोः सङ्घातात् द्विप्रदेशः, द्विप्रदेशस्याणोश्च सङ्घातात् त्रिप्रदेशः, एवं सङ्[1]ख्येयानामसङ्ख्येयानां च प्रदेशानां सङ्घातात् तावत्प्रदेशाः ॥

टी०—तद्यथेत्यादिना सङ्घातादित्रितयं भावयति, स्कन्धोत्पादकारणं त्रिविधम्, प्रकारान्तराभावप्रदर्शनपरमिदं वचनं मुनेः, द्वयोरित्यादि द्वयोरणुकयोः सङ्घाताद् अन्योन्याश्लेषपरिणामात् द्व्यणुकस्कन्धो निष्पद्यते, वक्ष्यत्युपरिष्टात्(अ०५,सू०३२)-'स्निग्धरूक्षत्वाद् बन्धः' इति, कथं पुनर्निरवयवयोर्द्वयोरणुकयोः संहतौ द्व्यणुकः स्कन्धो निष्पद्यते, एवं मन्यते-तयोर्हि संश्लेषः परस्परेण सर्वात्मनैकदेशेन वा भवेत् ? यदि च सर्वात्मना ततः सकलमपि जगदेकपरमाणुमात्रं स्यात्, एकदेशेन चेत् सावयवोऽणुः प्रसज्यते, सैषोभयतःपाशा रज्जुरिति दुर्घटः सङ्घातः, तस्मात् परमाणवः परस्परेणानाश्लिष्टा एव प्रत्यासत्तिभाजः केशा इवाकाशे समुदिता एवोपलभ्यन्ते न विदूरवर्तिन इति प्रतीतं तथा दर्शनमाविद्वदङ्गनाबालम्, परस्परसङ्घट्टस्त्वसम्बध्यमानकत्वादुपेक्षणीय इति । अयुक्तमेतदुच्यते परेणाप्रेक्षितवस्तुयाथात्म्येनेति यथा तथा विभाव्यते, परमाणवो हि रूपरसगन्धस्पर्शात्मकत्वात् सप्रतिघाः संयोगकाले सव्यवधयो न परस्परव्याप्त्या वर्तन्ते रूपाद्यवयवत्वात्, स्त[2]म्भकुम्भादिवत्, प्रतिपादितश्चायमर्थः प्राक्-स्यान्निरवयवः स्यात् सावयवः परमाणुर्द्रव्यभावभेदात्, अपि च द्रव्यात्मनाऽणुरेकः प्रत्यस्तमितसकलभेदस्तत्र कथं सर्वशब्दः प्रयुज्यमानोऽनेकवस्तुविषयो निरवशेषाभिधायितया लोकेऽविगानेन रूढो नासम्बन्धार्थो भवेत् ? कथं वा नानाध्यवसितस्य वस्तुनः कस्यचिदेवाभिधाय्येकदेशशब्दो निर्भेदपरमाणुविषये प्रसज्यमानः साध्यमानं प्रतिपत्स्यते ? सोऽयमेवंविकल्पद्वयानुसारी वचनप्रयोगः शब्दार्थानभिज्ञानानामत्यन्तप्रसिद्धलोकव्यवहारपराङ्मुखानां जडिमानमातनोति क्षुद्रसत्त्वानाम् । आशङ्कते चैवंप्रकारान् कातरपुरुष एवैकान्तवादी, न पुनः सकलवादपरमेश्वरस्याद्वादसमाश्रयोपपन्नातुलसामर्थ्यः स्याद्वादीति । न च परमाण्वन्तरेण सह [3]घटमानोऽसौ केनचिद् देशेन युज्यते निरवयवत्वात्, किन्तु स्वयमेवावयवो द्रव्यान्तरावयवद्रव्यरहितः परमाणुना सह भेदेन योगमायाति, न चाण्वन्तरमाविशति, स हि सक्रियः परमाणुस्थमाकाशमेवाविशति, अणुस्तिष्ठत्यस्मिन्नित्यणुस्थं करणाधिकरणयोर्घञर्थे कविधानम् । स्थास्नापाव्यधिहतियुध्यर्थसणौ वा तिष्ठतीति विवक्षावशादणुसम्बद्धमुच्यते । यद्यावेशो नास्ति देशे न तर्हि योगः प्रसक्तः, परस्परमनाश्लिष्टत्वाद् द्व्यङ्गुलवदिति, अयमनपदेशः, न वयमावेशतो योगं सङ्गिरामहे, किन्तु निरवयवत्वात्, तस्य द्रव्यप्रदेशान्तरं द्व्यङ्गुलस्येव संयुक्तं नास्ति, स्वयमेवासौ युक्त इत्येतावदभिदध्महे, हेतोश्चानैकान्तिकता, सूक्ष्मक्षेत्रच्छेदप्रविभक्तद्व्यङ्गुलपर्यन्तवर्तिनौ प्रदेशौ निरन्तरावस्थितावनाविशन्तावेव संयुक्तौ, न च देशेन, सूक्ष्मत्वादन्यस्य देशान्तरस्यासम्भवात्, न च नाङ्गुल्यौ युक्ते, निरन्तरत्वात्, न चान्योन्यावेशः प्रदेशानाम्, द्व्यङ्गुलाभावप्रसङ्गादिति ॥ ननु च संस्थानित्वात् सावयव एवाणुः किमिति निरवयवता अभ्युपेयत इति ? उच्यते-द्रव्यावयवकृतं संस्थानम्, तच्चावयविनो घटादेरवयवेषु सत्सु भवति, ते

---

१ 'अनन्तानामनन्तानन्तानां' इत्यधिको घ-पाठः । २ 'स्तम्भादिवत्' इति क-ख-पाठः । ३ 'संघटमानो' इति क-पाठः ।

चाणोर्न सन्त्यतो निरवयवत्वात् संस्थानित्वासिद्धिः, एवं तर्ह्यसंस्थानित्वादसत्परमाणुरिति, उच्यते–व्योमासंस्थानमपि सदेवेत्यनेकान्तः, न च कन्दुकादिवद् दृष्टपरिधित्वेनाभ्युपगम्यते विहायः, सर्वलोकशास्त्रानुमानविरोधादिति । योऽप्याशङ्केत अभूतान्तर्बहिर्भावान्यदेशत्वेन युष्माभिरभ्युपगतत्वान्नास्ति परमाणुः, तस्यापि हेतोर्निरंशैकक्षणवृत्तिविज्ञाने वर्तमानत्वादनैकान्तता । अपि च -योगः सम्प्राप्तिलक्षणः न चासौ प्रदेशैरेव क्रियते, निष्प्रदेशस्यापि स्वयं प्राप्तिरस्त्येवेति । एतेन नास्तित्वं प्रतिषिद्धमप्यवसातव्यम्, अवयवैरकृतत्वात् तस्येति, पिष्टपेषणं चैतत् कार्या( स्या )महे वयम्, उक्तं प्राक्–सर्वमेवं हि स्थूलं प्रविभज्यमानमवश्यन्तया निरवयवनिष्ठमुपजायते द्रव्यं, सूक्ष्मपूर्वकत्वात् स्थूलस्येति । आह च–" सर्वं सविभागमविभागप्रविष्टम्," यत् पुनस्तेषामेकस्मिन्नेवाकाशप्रदेशेऽनन्तानामप्यवगाढत्वं तदप्रतिघातपरिणामपरिणतत्वात् व्याप्तैकापवरके प्रदीपप्रभयेवान्यप्रदीपप्रभाणाम्, शीततमःशब्दत्वपरिणतपुद्गलानां चाप्रतिघातित्वदर्शनात्, तद्वत् परमाणुरेकस्मिन् व्योमप्रदेशे[1] व्यवस्थितोऽन्येषामपि परमाणूनां भूयसामवगाहमानानां विघातं प्रति न निवर्तितुमुत्सहते, कथं तर्हि असति प्रतिघाते महतो द्रव्यस्य निष्पत्तिः ? सङ्घातस्तु सति संयोगे सम्भवति, संयोगश्चाप्राप्तयोः प्राप्तिमात्रं, नान्योन्यावेश इति, उच्यते–महतो द्रव्यस्यारम्भकाले परमाणूनामप्रतिघातित्वमस्मान् प्रत्यसिद्धम्, यतस्त्रिविधं प्रतिघातमामनन्ति भगवन्तः परमाणूनां–बन्धपरिणामोपकाराभाववेगाख्यम्, तत्र बन्धपरिणामप्रतिघातः स्निग्धरूक्षत्वाद् बन्ध इत्यत्र (सू० ३२) वक्ष्यमाणः, उपकाराभावलक्षणप्रतिघातो गतिस्थित्युपग्रहो धर्माधर्मयोरुपकार इत्यत्र (अ० ५, सू० १७ ) सूत्रेऽर्थाक्षिप्तः प्रेक्षणीयः, लोकादन्यत्र जीवानामजीवानां च गतेः प्रतिघातो गत्युपग्रहहेतुरहितत्वाज्झषमकरादेरिवाम्भसोऽन्यत्र, अन्वयः सामान्येन सुशक्यः कर्तुम्, अतः परमाणुर्लोकान्ते प्रतिहन्यत इति उपकाराभावात् प्रतिघातितेति, तथाऽणोरण्वन्तरेणापतता विस्रसासमुद्भूतगतिरंहसा प्रतिघातो दृष्टः, प्राप्तवेगगतिर्हि परमाणुरापतन् जविनमेव परमाणुं प्रतिहन्ति, वेगवत्त्वे सति स्पर्शवत्त्वान्मूर्तिमत्त्वाच्च प्रबलवेगः प्रभञ्जनो वाद्यान्तरमिवेति[2] प्रतिघातित्वं वेगादध्यवसीयत इति, एवमनेकयोपपत्त्या प्रतिघातित्वाप्रतिघातित्वे परमाणुविषये प्रसाधिते, सम्प्रति तेषामेकव्योमप्रदेशास्कन्दिनामणूनामनन्तानामपि कदाचित् संयोगवृत्त्यावस्थानमनारब्धस्कन्धकार्याणामेव जातुचिद् बन्धाकारेण घटितकार्याणाम् । कः पुनरनयोः संयोगबन्धयोर्विशेष इति ?।

**परमाणूनां प्रतिघातस्य त्रैविध्यम्**

**संयोगबन्धयोर्विशेषता**

उच्यते—नैरन्तर्येणावयवप्राप्तिमात्रं संयोगः, बन्धः पुनरन्योन्याङ्गाङ्गिभावपरिणाम इति, विरोधोद्भिभावयिषया कश्चिदाचक्षीताविचक्षणः–कथमेकस्यैवाणोः प्रतिघातित्वाप्रतिघातित्वे परस्परविरुद्धे स्त इति ? उच्यते–विरोधाभावः प्रागुक्तः, अपि च–परिणामविशेषादुभयमपि सम्भाव्यते पुद्गलेषु, शब्दस्तावत् तिरस्कृतोऽपि कुड्यादिभिरप्रतिहन्यमानः श्रवणपथमभ्युपैति, स एव कदाचिदुह्यमानत्वाद् वायुना प्रतिहन्यते, प्रतिवातस्थितेनानुपलभ्यमानत्वादनुवातस्थितेन चोपलभ्यमानत्वाद् गन्धवत्, उह्यते च वायुना शब्दो मा स्म संशयिष्ठाः, तस्मात् सुष्ठूच्यते–सङ्घातादुत्पत्तिः स्कन्धानाम्,

१ ' व्योमदेशे ' इति क-ख-पाठः । २ ' वाय्वन्तरमिवेति ' इति ग-पाठः ।

एकदेशयोगस्तु दूरादुत्सारितः, कृत्स्नसंयोगस्तु कदाचिदुपचारवशादिष्येताप्यनवयवत्वान्न कृत्स्नो योगो नावेशतो ह्येषामिति ॥ अथ यदुक्तमनाश्लिष्टा एवाणवः प्रत्यासत्तिभाजः समुदिता विभाव्यन्ते, तदतितरामसमञ्जसम्, अणुपमवस्थानानामसंहतत्वाच्च दर्शनं न स्यात्, कस्तेषामतिशयोऽतीन्द्रियाणामुपाजनि प्रत्यासत्तावसंहतानां येन ते लोचनादीन्द्रियगोचरतामापद्यन्ते, नहि पूर्वावस्थायामेककाः सन्तोऽदृष्टास्तद्वदुत्तरावस्थायामपि न दृश्येरन्, नहि शक्या विच्छिन्ना अणवोऽनन्ता अपि द्रष्टुम् । केशनिदर्शनादेवं प्रतीयत इति चेत्, तदयुक्तम्, केशा ह्येकका अपि कदाचिद् दृश्या भवन्ति, न कदाचिद् अणवः प्रत्येकं चक्षुरादिग्राह्याः. परस्परमनाश्लिष्टेषु चाणुषु भूयांसो दोषाः सम्भवन्त्यमी, देशे च धार्यमाणे घटस्य कृत्स्नस्य धारणं न स्यात्, उत्क्षेपावक्षेपाकर्षाश्च तथैव न भवेयुः, तस्मादङ्गाङ्गिभावरूपेणाणूनां बन्धपरिणामाभ्युपगमात् सकलस्य संहतस्य महतो द्रवस्याकर्षणादीन्येकदेशेऽपि वर्तमानानि सिद्धान्यतोऽन्यथा न स्युः । संयोगमात्रत्वे बालिकापुरुषादिवदिति बहुलोकसिद्धं विघटेत । तच्च महद् द्रव्यं कणभुक्परिकल्पितावयवीव नास्ति मौनीन्द्रदर्शने, द्रव्यास्तिकनयाभिप्रायान्मुञ्जेषिकावद् भेदेनाग्रहणात्, अतो नावयवी स्वदेशेभ्योऽन्यो भिन्नोऽञ्जसा प्रत्यक्षेणानुमानेन वा ग्रहीतुं शक्येतेत्यर्थान्तरभूतावयविनो निषेधः, नान्यो देहादिरवयवी स्वावयवकलापादबद्धत्वे सक्रियत्वे च सति विभागेनागृह्यमाणत्वादवयवस्वरूपवत् स्थानासनशयनादिक्रियावान् देहस्तदवयवाश्चादानविहरणादिक्रियया सचेष्टाः । परस्परप्रतिबद्धपुरुषद्वयव्यभिचारनिरासार्थमबद्धग्रहणम् । तथा धर्माधर्माकाशानां नानात्वेऽपि विभागेनागृह्यमाणत्वमस्तीत्यनैकान्तिकारेकाव्युदासाय सक्रियत्वविशेषणम्, तस्मादवयवव्यतिरेकेणासत्परिकल्पितोऽवयवी कन्दलीदलव्यतिरिक्तकदलीदलसारवत् । यदपि लोके तस्य दर्शनं तदपि देशेष्वेव, तदेकदेशदृष्टौ सर्वो दृष्ट इति व्यवहारात्, अत्यन्तव्यतिरेकपक्षे चावयविनः प्रत्यवयववृत्तित्वादयोऽप्युद्ग्राहणीया दोषाः, सर्वथा चानुपपद्यमानवृत्तित्वात् खपुष्पवत् असन्नवयवी, उपलब्धिकारणसन्निधाने सत्यवयवरूपादिव्यतिरेकेणानुपलभ्यमानरूपादिगुणत्वात्, हस्त्याद्यवयवव्यतिरेकेण सेनावत्, व्यतिरेके घटबदरादयः, पर्यायनयाभिप्रायेण तु नानात्वमवयविनोऽवयवेभ्यः, अवयवगुणेभ्योऽन्योऽवयविगुणो व्यस्तेषु तेष्ववयवेषु तत्प्रमाणवर्णाकृतिरूपेणादृश्यमानत्वात्, अनेकरत्नसंघातनिष्पन्नरत्नावलीवत् रत्नेभ्यः, येन तेषु देशेषु व्यस्तेषु न चतुर्हस्तः पटश्चित्रः पटः समचतुरस्रः पट इत्यादिविशेषोपलब्धिः. एवं द्रव्यपर्यायनयैकान्ते बहवो दोषाः, स्याद्वादिनस्तु यथापरिणामम् अर्पणानर्पणविशेषोपनिपातिस्याच्छब्दोपपदप्रतिपिपादयिषितधर्मस्वरूपाभिनिवेशादशेषधर्मकलापोपसङ्ग्रहणात् सर्वैकान्तधर्मविनिवृत्त्या सर्वैकान्तवाक्यसमवतारणात् स्यादन्यः स्यादनन्यः स्यादन्यानन्यः स्यादवक्तव्य इत्यादिसप्तभङ्गीप्रतिज्ञानाद् दोषाणामनवकाश एव, यस्मादर्पितानर्पितनयद्वयविवक्षाऽविवक्षाभ्यामन्यत्वानन्यत्वे भाज्ये, पर्यायनयोऽर्पितस्तन्मतेन त्ववयवावयविनोर्भेदः, अनर्पितो द्रव्या-

१ 'मानत्वाद्वृत्तित्वात्' इति क-पाठः । २ 'हस्ताद्यवयव' इति क-ख-पाठः ।

